समाप्तोऽयमपरार्कापराभिधापरादित्यविरचितटीकासमेतया-
ज्ञवल्क्यस्मृतौ प्रथम आचाराध्यायः ।

( राजधर्मप्रकरणम् १२ )

अपराधादि ज्ञात्वा दण्डं दण्ड्येषु पातयेत्प्रयुञ्जीत । अत्र च पूर्ववाक्यप्राप्तत्वादपराधज्ञानमनूद्यते । देशादिज्ञानं तु विधीयते । क्वचिद्धि देशे स्वल्पेनैव शीतेनाऽऽतपेन वा स्वल्पकाली[1]नेन भोजननिवारणेनाधिका पीडा भवति । क्वचित्तु[2] महताऽपि न तावती । तथा काले शरदादौ । तथा दण्डनीयबलं विदित्वा ताडनादिदण्डो विधेयः । तथा वयःकर्मवित्तानि । अन्यथा तत्स्वरूपनाशोऽग्निहोत्रादिकर्मलोपो वित्ताप्राप्तिश्च स्यात् । देशादि विदित्वा तु दण्डप्रणयने योगक्षेमावुपपद्येते इति । एतत्सर्वं क्षत्रियस्य राज्यं कुर्वतः प्रविहितम् । यदा पुनरक्षत्रियः क्षत्रियकार्यं कुर्यात्तदाऽनेनाप्येतत्सर्वमनुष्ठेयम् । “ तत्कार्यापत्त्या तद्धर्मलाभः” इति न्यायात् । करादानप्रयुक्तत्वाच्च प्रजापालनस्य । सर्वो हि धनं प्रयच्छन्नात्मसमवायि प्रयोजनमुद्दिशति । न च करदानस्य स्वगुप्तेरन्यत्प्रयोजनमस्ति । तस्मात्करमाददानेन प्रजापालनं विधेयमिति सिद्धम् ॥ ३६६ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धेऽपरार्के राजनीतिप्रकरणं समाप्तम् ॥ १२ ॥

---

समाप्तश्चायमाचाराध्यायः प्रथमः ।

---

१ ख. °लीनभो° । २ ख. °त्तु न ।

निष्कः सुवर्णाश्चत्वारः[1]

कृष्णलद्वयपरिमितो रौप्यस्य माषो भवति । ते षोडश माषा रौप्यस्य धरणम् । दशभिर्धरणैः शतमानसंज्ञकं रौप्यस्य परिमाणं, तदेव च पलम् । चत्वारः सुवर्णा रौप्यस्य निष्कः ॥ ३६३ ॥

ताम्रस्य परिमाणमाह—

कार्षिकस्ताम्रिकः पणः ॥

सुवर्णस्य[2] पलस्य चतुर्थांशः कर्षस्तेन संमितः कार्षिकः स ताम्रिकः पणो भवति । ताम्रस्यायं ताम्रिकः ॥ ३६३ ॥

साशीतिः पणसाहस्रो दण्ड उत्तमसाहसः ॥३६४ ॥
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥

अशीत्यधिकसहस्रसंख्याकाः पणा उत्तमसाहसाख्यो दण्डः । चत्वारिंशदधिकाः पञ्चशतसंख्याकपणात्मको मध्यमसाहसाख्यो दण्डः । सप्तत्यधिकशतद्वयसंख्याकपणात्मकोऽधमसाहसाख्यो दण्डः, स एव शास्त्रान्तरे प्रथमसाहसाख्य इत्युच्यते । यत्तु मनुनोक्तम्—

“ पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं[3] त्वेव चोत्तमः ”

इति, तदल्पापराधविषयम् ॥ ३६४ ॥

धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ॥ ३६५ ॥
योज्या व्यस्ताः समस्ता वाऽप्यपराधवशादिमे ॥

धिग्दण्डो धिक्त्वां कापुरुषमित्यादि । वाग्दण्डः सर्वस्वं ते हरामि त्वां देशान्निर्वासयामीत्यादि परुष[4]भाषणम् । धनदण्डः कृष्णलापहरणादि[5]सर्वहरणान्तः । वधदण्डः शरीरताडनम्, प्राणच्छेदो वा । एते दण्डा अपराधानुसारेण व्यस्ता एकशः समस्ता द्वौ त्रयश्चत्वारो वा प्रयोज्याः ॥ ३६५ ॥

ज्ञात्वाऽपराधं देशं च कालं[6] बलमथापि वा ॥
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥३६६॥

इति राजधर्मप्रकरणम् ॥ १२ ॥

---

१ ग. घ. निष्ककः । २ ग. घ. °स्य च° । ३ ग. घ. °स्रं द्वेव । ४ ख. °परुषवचनभा° । ५ ख. °णादिः स° । ६ ग. घ. °लं वाल° ।

एवं दण्ड्यदण्डनस्य क्रतुसमानफलत्वं संचिन्त्य सम्यक्परिभाव्य दण्ड्यादण्ड्यविवेकाय वक्ष्यमाणलक्षणैः सभ्यैः परिवृतो नृपतिर्व्यवहारान्विवादान्पृथक्कार्यान्तरासंकरेण प्रत्यहं पश्येत्परीक्षेत ॥ ३५८ ॥

कुलानि जातीः श्रेणीश्च गणाञ्जनपदानपि ॥ ३५९ ॥
स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि ॥

कुलानि कुटुम्बादीनि, जातीर्ब्राह्मणाद्याः, श्रेणीः सुवर्णकाराद्याः, गणान्मठब्राह्मणादीञ्जनपदान्राष्ट्राणि, स्वधर्मादपेतानि विनीय दण्डयित्वा पथि स्वधर्मे स्थापयेत् । पूर्वत्रैकैकस्य दण्डो विहितोऽत्र तु बहूनामित्यपुनरुक्तता ॥ ३५९ ॥

दण्डोपयोगि कृष्णलादिनिरूपणमाह—

जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ॥ ३६० ॥
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥

गवाक्षप्रविष्टादित्यकिरणेषु यत्सुसूक्ष्मं वैशेषिकोक्तनीत्या त्र्यणुकत्रयारब्धं दृश्यते रजस्तत्रसरेणुरिति मन्वादिभिः स्मृतम् । तेऽष्टौ त्रसरेणवो लिक्षैका, तास्तिस्रो राजसर्षप उच्यते ॥ ३६० ॥

गौरस्तु ते त्रयः षट् ते यवो मध्यस्त्रयस्तु ते ॥३६१॥
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥

ते राजसर्षपास्त्रयं एको गौरसर्षपः । ते च षट्संख्याका एको मध्यमो यवः, त्रयो यवा एकः कृष्णलः, एवं कृष्णलाः पञ्च माषः, षोडश माषा एकः सुवर्णः ॥ ३६१ ॥

पलं सुवर्णाश्चत्वारः पञ्च वाऽपि प्रकीर्तितम् ॥३६२॥

उक्ताः सुवर्णाश्चत्वारः पञ्च वाऽपि पलं प्रकीर्तितम् । देशानुसारेण पलव्यवस्था कर्तव्या ॥ ३६२ ॥

कनकपरिमाणमुक्तमधुना रजतपरिमाणमाह—

द्वे कृष्णले रौप्यमाषो धरणं षोडशैव ते ॥
शतमानं तु दशभिर्धरणैः पलमेव तु ॥ ३६३ ॥

---

१ ग. घ. 'य एव एको गौ' ।

दण्डस्यासम्यक्प्रणयनं प्रागनुष्ठितधर्मवशादुपार्जितस्य स्वर्गस्य कीर्तेरस्य च लोकस्य विनाशकं भवति । सम्यक्प्रणयनं तु धर्मान्तरार्जितं स्वर्गं कीर्तिं जयं च विघ्ननिवारणद्वारेणाऽऽवहति । तस्मात्सम्यगेव दण्डः प्रणेयः ॥ ३५५ ॥

दण्ड्यमाह—

**अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा॥३५६॥**
**नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥**

स्वकीयवर्णाश्रमादिधर्ममकुर्वन्दण्ड्यः । न तस्य संबन्धिविशेषाद्गुरुत्वाद्वा दण्डनीयत्वनिवृत्तिः । अर्घ्यः पूज्यः । प्रसिद्धमन्यत् । यत्तु स्मृत्यन्तरम्—

" अदण्ड्यौ मातापितरौ । स्नातकपुरोहितपरिव्राजकवानप्रस्थश्रुतशीलशौचाचारवन्तस्ते हि धर्माधिकारिणः "

इति, तत्स्वल्पापराधविषयम् । न सर्वात्मना दण्डाभावाभिप्रायम् । अत एव दक्षः—

" पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे[१] न तिष्ठति ।
श्वपादेनाङ्कयित्वा तं राजा शीघ्रं विवासयेत् " ॥ ३५६ ॥

न केवलं दण्डनीयान्दण्डयतो राज्ञः प्रत्यवायाभावः किंत्वभ्युदयविशेषोऽपि[३] भवतीत्याह—

**यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ॥३५७॥**
**इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः[४] ॥**

धिग्दण्डादिभिर्दण्डनीयान्दण्डयता वधार्हांश्च घातयता सम्यगाप्ता लब्धा वरा दक्षिणा यैस्तैः क्रतुभिरिष्टं स्यात् । न चैतावता दण्डस्य काम्यत्वमाशङ्कनीयम् । यतश्च तदप्रणयने प्रायश्चित्तमाह वसिष्ठः—

" दण्ड्योत्सर्गे राजैकरात्रमुपवसेत्त्रिरात्रं पुरोहितः कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा " इति ।

तथा—" एनो राजानमृच्छत्युत्सृजन्तं वै सकिल्बिषम् ।
तं चेद्घातयते राजा घ्नन्धर्मेण न दुष्यति " ॥ ३५७ ॥

**इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ॥३५८॥**
**व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥**

---

१ ग. घ. °बन्धवि° । २ ग. घ. °ति । श्वापा° । ३ ग. घ. °दयोऽपि विशिष्टो भ° । ४ ङ. सहस्रशतद° । ५ घ. °णैः । दिग्द° ।

मन्त्रिप्रभृतयः, जनाः पालनीयाः प्रजाः, दुर्गं प्रसिद्धं, कोशः संचितं वसु, दण्डश्चमूः, मित्राण्युपकारका राजानः ॥ ३५१ ॥

प्राप्तराज्येन यत्कार्यं तदाह—

तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ॥ ३५२ ॥
धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥

तद्राज्यं कार्यतयाऽवाप्य राज्याधिकारं लब्ध्वेति यावत्। राजा दण्डं धनशरीरपीडनविषयं दुर्वृत्तेषु शास्त्रातिक्रमकारिषु निपातयेत्प्रयुञ्जीत । न च दण्डं प्रयुञ्जानस्य राज्ञः प्रत्यवायः शङ्कनीयः। यतो भगवता ब्रह्मणा विधिना धर्म एव दण्डात्मना निर्मितो विहितः । राजानं प्रति विहितत्वाद्दण्डो नाधर्मायेत्यर्थः ॥ ३५२ ॥

*स नेतुं न्यायतः शक्योऽलुब्धेन कृतबुद्धिना ॥ ३५३ ॥
सत्यसंधेन शुचिना सुसहायेन धीमता ॥

अलुब्धेन न्यायधनव्ययकारिणा कृतबुद्धिना वृद्धसेवाविद्यागमाभ्यां लब्धप्रज्ञेन सत्यसंधेन सत्यसंकल्पेन शुचिना शुद्धोपधेन बाह्याभ्यन्तरशौचवता च सुसहायेन शास्त्रोक्तगुणगणयुक्तमन्त्रिप्रभृतिसहायवता धीमताऽधिगतार्थानुचिन्तनवता स दण्डो न्यायतो यथाशास्त्रं नेतुं [1]प्रणेतुं शक्यो भवति न पुनरन्येन ॥ ३५३ ॥

सम्यग्दण्डं प्रणयतोऽभ्युदयोऽन्यथा प्रत्यवाय इत्याह—

यथाशास्त्रं प्रयुक्तः सन्सदेवासुरमानवम् ॥ ३५४ ॥
जगदानन्दयेत्सर्वमन्यथा तु प्रकोपयेत् ॥

शास्त्रानतिक्रमेण प्रयुक्तो दण्डो देवादिसहितं जगदानन्दयेत् । ततश्च स्वस्य सुखयोगः। असम्यक्प्रणयने तु तदेव प्रकोपयेत्। ततश्चाऽऽत्मनो दुःखयोगः ॥ ३५४ ॥

अपरमपि फलमाह—

अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ॥ ३५५ ॥
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥

---

* एतदर्धस्थाने ङ. पुस्तकेऽयं पाठः—स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना ।

---

1 क. ग. घ. प्रणीतुं ।

इदानीं दैवपुरुषकारयोरन्योन्यसापेक्षतामाह—

यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ॥ ३४९ ॥
एवं पुरुषकारेण विना दैवं न सिध्यति ॥

यथा रथगतिकारणत्वेन प्रमितमपि रथादिचक्रमेकमेकाकि चक्रान्तरविधुरं रथं न गमयति एवं सुखदुःखानुभावात्मककार्यजननतया प्रमितमपि दैवं न पुरुषकारेण सहकारिणा विना कार्यपर्यन्तेन रूपेण सिध्यति। विद्युन्निपाताद्यपि साधयतो दैवस्य देशविशेषे[1] पुरुषस्यावस्थानापादकं पौरुषं भवत्येव सहकारि। तस्मात्फलार्थिना न केवलं दैवपरेण भवितव्यम् ॥ ३४९ ॥

सामादीनामुपायानां परस्परविरुद्धानेकफलोदयप्रसङ्गे यत्नाद्यं तदाह—

हिरण्यभूमिलाभेषु[2] मित्रलब्धिर्वरा यतः ॥ ३५० ॥
अतो यतेत तत्प्राप्तौ रक्षेत्सत्यं समाहितः ॥

सामादीनुपायान्प्रत्युपेयतयाऽवस्थितानां हिरण्यभूमिमित्रलाभानां मध्ये मित्रलब्धिर्वरा श्रेष्ठा, अतो मित्रप्राप्तिविषयो[3] यत्नः कार्यः। मैत्रीकरणकाले कृतस्य सत्यस्यारक्षणे मित्रमप्यमित्रं भवेत्। अतः सत्यरक्षणे समाधिर्विधेयः। एतच्च सामादिसाध्याद्धिरण्यभूमिलाभादधिकलाभहेतोर्मित्रस्य प्राप्तौ वेदितव्यम्। अन्यदा तु हिरण्यलाभ एव बलवान् ॥ ३५० ॥

राज्याङ्गान्याह—

स्वाम्यमात्यौ जनो(ना) दुर्गः कोशो दण्डस्तथैव च ३५१
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ॥

राज्ञः कर्म जनपदपालनं राज्यं तत्सप्ताङ्गम्। सप्तास्याङ्गानि भवन्ति। कानि तानीत्यपेक्षिते स्वामीत्यादिना मित्राणीत्यन्तेन तद्विशेषो निर्दिष्टः। *कुतस्तेषामङ्गत्वमित्याकाङ्क्षित उक्तमेताः प्रकृतय इति। यतः कार्यमुत्पद्यतेऽवतिष्ठते नियमेन भवति सा प्रकृतिः। यथा हिरण्यं कुण्डलस्य। राज्यं च विना स्वाम्यादिभिर्नोत्पद्यत उत्पन्नमपि न तैर्विना चिरकालमनुवर्तते। ततो भवन्ति स्वाम्यादयो राज्याङ्गानि। स्वामी महोत्साहत्वादिगुणयुक्तः पुरुषविशेषः। अमात्या

---

* एतत्परं ग. घ. पुस्तकयोरधिकम्—" कुतस्तेषां राज्याङ्गत्वमित्यादिना मित्राणीत्यन्तेन तद्विशेषो निर्दिष्टः " इति।

---

१ ख. °षेषु पु°। २ ङ. °भेभ्यो मि°। ३ क. °षये य°।

( राजधर्मप्रकरणम् १२ )

यदा परस्य शत्रो राष्ट्रं सस्यैरन्यैश्च हिरण्यादिगुणैरुपेतं स्याच्छत्रुश्च वाहनादिहीनः स्वयं च हृष्टगजाश्वादिर्हृष्टपुरुषश्च तदा परराष्ट्रं व्रजेत् ॥ ३४६ ॥

न च यात्राया अनियतफलत्वेन पुरुषेण प्रवर्तितव्यमित्यत्र हेतुमाह—

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ॥ ३४७ ॥
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम् ॥

दैवे पुरुषकारे च सति कर्मणः कर्मफलस्य सिद्धिर्व्यवस्थिता नियता सत्यपि पुरुषकारे दैवाभावे न फलं सिध्यति । नच प्राक्प्रवृत्तेर्दैवाभावः शक्यः[1] परिच्छेत्तुम् । अतोऽर्थसंशयाद्यात्रादौ प्रवृत्तिरुपपद्यत इत्यभिप्रायः । तत्र दैवं नाम पूर्वदेहप्रभवं[2] पौरुषं पुरुषस्य व्यापारः प्रयत्नाख्योऽपूर्वपर्यन्तः । तत्र पौर्वदैहिकमिति बाहुल्याभिप्रायम् । कारीर्यादीनामनुष्ठाने फलोपभोगे च देहैक्यात् ॥ ३४७ ॥

एवं तर्हि पुरुषकारापेक्षणीयं[3] दैवमेवास्तु फलसाधकं किं पुरुषकारेणेत्यत आह—

*केचिद्दैवाद्धठात्केचित्केचित्पुरुषकारतः ॥ ३४८ ॥
सिध्यन्त्यर्था मनुष्याणां तेषां योनिस्तु पौरुषम् ॥

वृष्टिमहापात[4]विद्युत्पातादयो मनुष्यादीनां प्राणिनामुपकारका अपकारका वा दैवाद्भवन्ति । हठात्परकीयपुरुषकारात्केचित् । यथाऽनिच्छन्तमपि सुतं माता पयः पाययति पिताऽध्यापयति व्याघ्रः सर्पो वा देहिनो व्यापादयति । केचित्पुनरर्थाः स्वकीयादेव यत्नात्सिध्यन्ति । यथाऽग्निहोत्रादयो हिंसास्तेयादयश्च । तेषां सर्वेषां पौरुषं प्रयत्नो योनिः कारणम् । केषुचिदन्वयव्यतिरेकाभ्यामेव प्रयत्नस्य कारणत्वमवगम्यते । येषां तु विद्युत्पातादिकारणतया प्रयत्नो न प्रमाणान्तरादवगम्यते[5] तेषां वेदादेव तदवगतिः । कारीर्यादिप्रयत्नो वृष्टिहेतुतया वचनसिद्ध एव । विद्युत्पातादयस्तु दुःखहेतुत्वेनाधर्मप्रयत्नजन्यतया सामान्यतः शास्त्रादेवावगम्यन्ते । तस्माद्यात्रादौ यतितव्यमेव ॥ ३४८ ॥

---

* अत्र पाठान्तरं ङ. पुस्तके—"केचिद्दैवात्स्वभावाच्च कालात्पुरुषकारतः । संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः" इति ।

---

१ ख. शक्तः प° । २ क. ग. घ. °देवप्र° । ३ ग. घ. छ. °कारोपे° । ४ क. °हावात° । ५ ग. घ. °ते । येषां दैवादे° ।

कर्मणां मन्त्रतोऽनुष्ठेयतया निश्चितानामा मन्त्रफलोदयात्प्रोक्तनकर्मानुष्ठानात्परे यथा मन्त्रं न विदुस्तथा तं सुरक्षितं कुर्यात् । सुरक्षितमन्त्रमूलत्वाद्राज्यस्य ॥ ३४२ ॥

अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः ॥ ३४३ ॥
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥

अनन्तरैकान्तरद्व्यन्तरा राजानो यथाक्रममरिर्मित्रमुदासीनश्चतसृषु दिक्षु विज्ञेयाः । एतद्द्वादशराजकं मण्डलं वक्ष्यमाणस्वरूपैः सामादिभिरुपायैः साधयितुं चिन्तनीयम् । तत्र हीनो दण्डेन समः साम्नेषदधिको दानेन ततोऽप्यधिको भेदेन साध्यः । अथवा शत्रुं दण्डेन । मित्रं साम्ना । उदासीनं दानेन । सर्वेऽपि भेदेन साध्याः ॥ ३४३ ॥

उपायाः साम दानं च भेदो दण्डस्तथैव च ॥३४४॥
सम्यक्प्रयुक्ताः सिध्येयुर्दण्डस्त्वगतिका गतिः ॥

उक्तानामरिप्रभृतीनां वशीकारोपायाः सामादयश्चत्वारो वेदितव्याः । ते सम्यग्यथावत्प्रयुक्ताः सिध्येयुः कार्यसिद्धिसमर्थाः स्युरित्यर्थः । एषां दण्डो गत्यन्तराभावे गतिः । उपायान्तराभावे दण्डोऽभ्युपाय इत्यर्थः । तस्य धनशरीरव्ययशरीरायाससाध्यत्वात् । साम प्रियभाषणम् । दानं प्रसिद्धम् । भेदः स्वामिभृत्यानां विमतीकरणम् । दण्डो वित्तस्य शरीरस्य वा पीडनम् ॥ ३४४ ॥

संधिं च विग्रहं यानमासनं संश्रयं तथा ॥ ३४५ ॥
द्वैधीभावं गुणानेतान्यथावत्परिकल्पयेत् ॥

संधिप्रभृतीन्यथान्यायं यथाविषयं षड्गुणान्परिकल्पयेत्प्रयुञ्जीत । संधिर्नाऽऽवाभ्यामन्योन्यमपकर्तव्यमिति व्यवस्थापरिग्रहः, विग्रहो वैरं, यानं यात्रा, आसनमुपेक्षणम्, संश्रयः परपीडितस्य प्रबलराजान्तराश्रयणं, द्वैधीभावः स्वबलस्य द्विधाकरणम् ॥ ३४५ ॥

यात्राकालमाह—

यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ॥ ३४६ ॥
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥

---

१ ख. °त्प्रार्थन° । २ ख. °था तां सु° । ग. घ. °थाऽर्थं सु° । ३ ख. °न्तरराजा° । ४ ग. घ. °स्या । वि° ।

ये राष्ट्रे करादानाय प्रजापालनाय चाधिकृता नियुक्तास्तेषां विचेष्टितं विविधं व्यापारजातं चारवचनेभ्योऽवधार्य साधून्यथोक्तकारिणो दानादिना संमानयेत् । विपरीतानसाधून्घातयेद्यथादोषं दण्डयेत् । उत्कोचजीवनशीलान्द्रव्यहीनान्कृत्वा देशान्निर्वासयेत् । कार्यार्थं कार्यिणो धनादानमुत्कोचः । श्रोत्रियान्दानमानसत्कारयुक्तान्कृत्वा सर्वदा वासयेत् । मानः पूजासत्कारः साधुत्वख्यापको व्यापारः ॥ ३३६ ॥ ३३७ ॥

अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिरक्षति[1] ॥ ३३८ ॥
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥

अन्यायेन प्रतिषिद्धमार्गेण स्वराष्ट्राद्धनमादाय यो राजा कोशं धनसंचयै[2]र्वर्धयति सोऽचिराद्व्यपेतलक्ष्मीकः सबान्धवो विनश्यति ॥ ३३८ ॥

प्रजापीडनसंतापात्समुद्भूतो हुताशनः ॥ ३३९ ॥
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥

प्रजानां पीडनादन्यायेन धनादानाद्यः संतापो दुःखातिशयस्तस्माद्धुताशन इव दुःखहेतुरधर्मराशिः समुद्भूतो राज्ञः श्रीप्रभृतीन्यदग्ध्वा प्रध्वंसमनीत्वा न निवर्तते न विरमति ॥ ३३९ ॥

य एव[3] नृपतेर्धर्मः स्वराष्ट्रपरिपालने[4] ॥ ३४० ॥
तमेव कृच्छ्रमाप्नोति परराष्ट्रं वशं नयन् ॥

निगदव्याख्यातमेतत् ॥ ३४० ॥

परराष्ट्रविषये विशेषमाह[5]—

किं तु यस्मिन्य आचारो व्यवहारः कुलस्थितिः ॥ ३४१ ॥
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥

यस्मिन्परराष्ट्रे य आचारो होलाकादिर्यश्च[6] व्यवहारो नाणकादिनिबन्धनो या च कुलस्थितिरेतावद्धनं राज्ञेऽनेन कुलेन देयमित्येवमादिरूपा स राष्ट्रो वशमुपागतस्तथैव तेनैवाऽऽचारादिना युक्तः परिपालनीयः ॥ ३४१ ॥

मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ॥ ३४२ ॥
कुर्याद्यथाऽस्य न विदुः कर्मणामा फलोदयात् ॥

---

१ ङ. °भिवर्धयेत् । सोऽ° । २ क. °चयायैव वर्ध° । ३ ख एव । ४ ङ. °लनात् । तमेव कृत्स्नमा° । ५ ग. °ह— । यस्मिन्देशे य आ° । ६ क. ग. घ. °लादि यच्च व्यवहारो गण° ।

प्रजापालनफलमाह—

पुण्यषड्भागमादत्ते न्यायेन परिपालयन् ॥ ३३३ ॥
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥

राज्ञा न्यायेन शास्त्रोक्तप्रकारेण पाल्यमानाः प्रजा यत्पुण्यं कुर्वन्ति तत्षष्ठांशसंमितं राजा पुण्यं लभते सर्वेभ्योऽपि दानेभ्यः प्रजानां परिपालनमभयदानात्मकमधिकं यस्मात्तस्मादुपपन्नः पुण्यषड्भागलाभः । एवं प्रजापालनं च धनप्राप्तौ हेतुर्यथा ब्राह्मणस्य प्रतिग्रहादिः ॥ ३३३ ॥

किं च—

चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ॥ ३३४ ॥
पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥

चाटादिभ्यो दुःखकारिभ्यः प्रजा रक्षेत् । पूर्वश्लोकैः स्वयं न पीडयेदित्यर्थादुक्तम् । अत्र तु यथा परो न पीडयेत्तथा कुर्यादित्युच्यते । चाटः पिशुनः । तस्करः प्रसिद्धः । दुर्वृत्तः परदारहारकादिः । महासाहसिको मनुष्यमारणबन्दिग्रहादिकारी । आदिशब्देन कूटमानकूटसुवर्णादिकारिणो लक्ष्यन्ते । कायस्थाः कराधिकृताः ॥ ३३४ ॥

प्रजानामरक्षणे दोषगौरवमाह—

अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ॥ ३३५ ॥
तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥

अरक्ष्यमाणा नृपेणापाल्यमाना अधर्मादनिवार्यमाणाः प्रजाश्चौर्यपारदार्यादिकं यत्पापं कुर्वन्ति तस्मात्पापान्नृपतेरर्धं भवति । नृपतिरर्धं गृह्णातीत्यर्थः । यस्मादसौ तासां पालनार्थं करानादत्ते । अत्रापि पापार्धसंमितं पापं राज्ञो भवतीति मन्तव्यम् । नह्यन्यकृतमदृष्टमन्यस्य भवति ॥ ३३५ ॥

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ॥३३६॥
साधून्संमानयेद्राजा विपरीतांस्तु घातयेत् ॥
उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ॥३३७॥
सदानमानसत्काराञ्श्रोत्रियान्वासयेत्सदा ॥

---

१ ख. पुण्यं प° । ङ. पुण्यात्षड्भा° । २ क. ग. घ. °दारिका° । ३ ग. घ. °हाधिका° । ४ क. ख. °स्थाः कारा° । ५ क. °कृतं दुष्कृतमन्य° ।

भुक्त्वा यथेच्छमङ्गनाभिः सह क्रीडेत् । कार्यवशान्मन्त्रिसमागतो वा भवेत् । ततो हस्त्यश्वादिबलानि दृष्ट्वा सेनान्या चमूपतिना सह बलविषयमर्थं चिन्तयेत् ॥ ३२७ ॥

संध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ॥ ३२८ ॥
गीतनृत्तैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ॥

सायंसंध्यामुपास्य रहस्यं चारवाक्यं श्रुत्वा गीतनृत्तैः कियन्तमपि कालं नीत्वा वेदं पठेत् ॥ ३२८ ॥

संविशेत्तूर्यघोषेण प्रतिबुध्येत्तथैव च ॥ ३२९ ॥
शास्त्राणि चिन्तयेद्बुद्ध्वा सर्वकर्तव्यतास्तथा ॥

तूर्यघोषेण वीणावेणुमृदङ्गादिनादेन स्वापार्थं विशेत् । तूर्यघोषेणैव प्रतिबुध्येत । ब्राह्मे मुहूर्ते बुद्ध्वा शास्त्राणि श्रुतिस्मृतिवचांसि तदर्थावगमोपायांश्च निगमनिरुक्तादीन्सर्वाणि कार्याणि चिन्तयेत् ॥ ३२९ ॥

प्रेषयेच्च ततश्चारान्स्वेष्वन्येषु च सादरम् ॥ ३३० ॥
ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ॥
दृष्ट्वा ज्योतिर्विदो वैद्यान्दद्याद्गाः काञ्चनं महीम् ॥ ३३१ ॥
नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च ॥

संध्यामुपास्य रहसि स्थित्वा वणिग्वैद्यपरिव्राजकबौद्धदिगम्बरादिवेशधारिणो निगूढान्परचेष्टावेदिनश्चारान्स्वेषु स्वकीयेषु सामन्तादिषु चान्येषु चामित्रादिषु राजसु सादरं यथा भवति तथा प्रेषयेत् । तत ऋत्विगादिभिरायुरारोग्यविजयैश्वर्यादिविषयाभिराशीर्भिरभिनन्दितो ज्योतिर्विदो वैद्यांश्चाऽऽगतान्दृष्ट्वा तदधीनं च कार्यं तैः सह विचार्य गाः काञ्चनं महीं नैवेशिकानि च श्रोत्रियेभ्यो दद्यात् । विवाहोपकरणं गृहोपकरणं वा नैवेशिकम् । श्रोत्रियाणामिति षष्ठी चतुर्थ्यर्थे ॥ ३३० ॥ ३३१ ॥

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु ॥ ३३२ ॥
स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता ॥

ब्राह्मणान्स्निग्धाञ्शत्रून्प्रति यथासंख्यं क्षमामार्जवं क्रोधं च कुर्यात् । भृत्यान्प्रजाश्च पितृवत्पालयेत् ॥ ३३२ ॥

---

१ क. ङ. °नृत्यैश्च । २ ख. °षेण प्र° । ३ ख. ग. घ. °दरान् । ऋ° ।

पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम् ॥ ३२३ ॥
राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥

निजराजसैनिकेषु शत्रुभयात्पलायनपरेषु भग्नेषु ये न निवर्तन्ते किं तु शत्रुं प्रत्यभिमुखा यान्ति तेषां पदानि क्रतुभिर्यज्ञैस्तुल्यानि पदे पदे यज्ञफलं लभन्त इत्यर्थः । पलायनपराणां तु शत्रुहतानां धर्मं स्वामी गृह्णाति ॥३२३॥

तवाहंवादिनं क्लीबं निर्हेतिं परसंगतम् ॥ ३२४ ॥
न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ॥

तवाहमस्मीति वदन्तं क्लीबं भीतं निर्हेतिं निरायुधं परसंगतमन्येन युध्यमानं निवृत्तं पलायमानं युद्धप्रेक्षणकादींश्च न हन्यात् ॥ ३२४ ॥

किंच—

कृतरक्षः समुत्थाय[1] पश्येदायव्ययौ स्वयम् ॥ ३२५ ॥
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः[2] ॥

आत्मनः प्रजानां च रक्षां विधायोद्यममवलम्ब्याधिकृतैः क्रियमाणावायव्ययौ स्वयं पश्येत् । स्वयं ग्रहणमादरार्थम् । तदनन्तरमन्येषामृणादानादीन्व्यवहारान्दृष्ट्वा स्नात्वा कामतो भुञ्जीत । स्नानग्रहणं सकलमाध्याह्निकोपलक्षणम् । कामत इति सत्यां बुभुक्षायामित्यर्थः* ॥ ३२५ ॥

हिरण्यं व्यापृतानीतं भाण्डागारे न्यसेत्ततः ॥३२६॥
पश्येच्चारांस्ततो दूतान्प्रेषयेन्मन्त्रिसंगतः ॥

व्यापृतैः करादिदानाधिकृतैरानीतं हिरण्यादिधनं भाण्डागारे धननिधानशालायां क्षिपेत् । ततश्चाराञ्शत्रुप्रभृतिचेष्टितज्ञानाय गूढप्रहितानागतांस्तद्वाक्यश्रवणाय[3] पश्येत् । ततो मन्त्रिभिः संगतः कार्यजातं निश्चित्य तत्सिद्धये दूतान्प्रेषयेत् ॥ ३२६ ॥

ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः॥ ३२७॥
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥

---

* एतदग्रेऽधिकश्चायं ग्रन्थः ख. पुस्तके स यथा—" यदुक्तम्—विसृष्टे विण्मूत्रे हृदि सुविमले दोषे सुपथगे विशुद्धे चोद्गारे क्षुदुपगमानवातेऽनुसरति । तथाऽग्नावुद्वृत्ते विशुद्धकरणे देहे च सुलघौ प्रयुञ्जीताऽऽहारं विधिनियमितः कालः स हि मत इति(?) " इति ।

---

१ ङ. °य कुर्यादा° । २ ख. ञ. वाग्यतः । ३ क. ग. घ. °प्रतिहता° ।

(राजधर्मप्रकरणम् १२ )

तत्र तत्र धर्मार्थकामप्रयोजनेषु कर्मसु निष्णातान्प्रवीणान्धर्मशास्त्राभिज्ञान्कर्मकुशलाञ्शुचीनर्थेषु चोद्यतानुद्यमिनो धनागमान्तःपुरव्ययकर्मस्वध्यक्षानधिकृतपुरुषनियन्तॄन्प्रयत्नेन कुर्यात् । योग्यानध्यक्षान्कुर्यादिति तात्पर्यार्थः । योग्यता चोक्ता[1]—

“ *प्राज्ञत्वमुपधाशुद्धिरप्रमादोऽभियुक्तता[2] ।
कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यता ” ॥

मनुः—“ तेषामर्थे नियुञ्जीत शूरान्दक्षान्कुलोद्गतान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्वेश्मनि[3] ” ॥

विष्णुः—“आकर[4]लक्षणशुल्कतरनागवनेष्वाप्तान्नियुञ्जीत । धर्मिष्ठान्धर्मकार्येषु निपुणानर्थकार्येषु शूरान्सङ्ग्रामकर्मसु । उग्रानुग्रेषु षण्ढान्स्त्रीषु ” ।

मनुः—“ अध्यक्षान्विविधान्कुर्यात्तत्र[5] तत्र विपश्चितः[6] ।
तेऽस्य सर्वाण्यवेक्षेरन्नृणां कार्याणि कुर्वताम् ” ॥

कार्याणि सुकृतदुष्कृतकर्माणि ॥ ३२० ॥

**नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ॥ ३२१ ॥**
**विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥**

यद्रणाप्तधनप्रदानं विप्रेभ्यः प्रजाभ्यश्च यदभयप्रदानं नास्मादधिकोऽन्यो नृपाणां धर्मोऽस्ति । एतदुपायश्च शत्रुविजय इति तत्सिद्धये च रणं कुर्यादिति तात्पर्यार्थः ॥ ३२१ ॥

ननु पाक्षिकानर्थशङ्कया प्रेक्षावतां रणे प्रवृत्तिरनुपपन्नेति विधिरयं न घटत इत्यत्राऽऽह—

**य आहवेषु युध्यन्ते[7] भूम्यर्थमपराङ्मुखाः ॥ ३२२ ॥**
**अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥**

ये क्षत्रियाः स्वकीयां भूमिं रक्षितुं परकीयां च जेतुमकूटैरायुधैर्युध्यन्ते न च शत्रून्प्रति पराङ्मुखा भवन्ति ते शत्रुभिर्हता योगिवत्स्वर्गं यान्ति स्वर्गं भुक्त्वा मुच्यन्त इत्यर्थः । आहवाः सङ्ग्रामाः । कूटानि विषदिग्धानीति तदन्यान्यकूटानि । अकूटैर्विषरहितैरित्यर्थः । एवं च सति नियमेनायमसौ वा लोको जितो भवतीति नास्त्यनर्थशङ्का निवर्तिका ॥ ३२२ ॥

---

* एतद्वचनं क. पुस्तके न विद्यते ।

---

१ ख. °क्ता । योग्यत्व° । २ घ. प्राज्ञात्व° । ३ ख. °नन्तः स्ववे° । ४ क. ग. घ. आकार° । ५ क. °धाञ्शुद्धान्कुर्यात्तत्र वि° । ६ ख. °तः । तैस्तु स° । ७ ङ. वध्यन्ते ।

दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्टिं वर्षसहस्राणि दानच्छेदफलं लिखेत् ॥
स्वमुद्रावर्षमासार्धदिनाध्यक्षाक्षरान्वितम् ।
एवंविधं राजकृतं शासनं समुदाहृतम् ” ॥

व्यासः—“ राज्ञा तु स्वयमादिष्टः संधिविग्रहलेखकः ।
ताम्रपट्टे पटे वाऽपि प्रलिखेद्राजशासनम् ॥
स्थानं वंशानुपूर्वीं च देशं ग्राममुपागतम् ।
ब्राह्मणांस्तु तथैवान्यान्मान्यानधिकृतांल्लिँखेत् ॥
कुटुम्बिनोऽथ कायस्थदूतवैद्यमहत्तरान्[2] ।
मेदचण्डालपर्यंतान्सर्वान्संबोधयन्निति ॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽ[3]मुकायाद्य दानं सब्रह्मचारिणे ॥
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम् ।
अनाच्छेद्यमनाहार्यं सर्वभाव्यविवार्जितम् ॥
दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षाष्टिं वर्षसहस्राणि दानच्छेदफलं लिखेत् ॥
ज्ञातं मयेति लिखितं दात्रध्यक्षाक्षरैर्युतम् ।
अब्दमासतदर्धाहाराजमुद्राङ्कितं तथा ॥
अनेन विधिना लेख्यं राजशासनकं लिखेत् ” ॥ ३१७॥३१८॥

कं देशविशेषमधिवसित्वैतत्कार्यमित्यपेक्ष्यतेऽत आह—

**रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ॥ ३१९ ॥**
**तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥**

रम्यो मनोहरः । पशव्यः पशुभ्यो हितः । आजीव्यः समन्तादुपजीव्यौषधिवनस्पतितृणकाष्ठादिमान् । जाङ्गलः स्वल्पवृक्षोदकपर्वतो बहुपक्षिमृगः प्रचुरवर्षातपश्च । एवंविधं देशं नृपतिरावसेत् । तत्र च दुर्गाणि गिरिदुर्गप्रभृतीनि प्रजाधनयोरात्मनश्च रक्षार्थं कुर्वीत ॥ ३१९ ॥

**तत्र तत्र च निष्णातानध्यक्षान्कुशलाञ्शुचीन् ॥ ३२० ॥**
**प्रकुर्यादायकर्मान्तव्ययकर्मसु चोद्यतान् ॥**

---

१ ग. घ. पट्टिव° । २ घ. °न् । मोद° । ३ क. °य:ऽत्र दानं वाऽमुकाय ब्र° ।

**दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं च कारयेत्॥३१६॥**
**आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥**

भूमिं क्षेत्रारामग्रामादिकां विप्राय दत्त्वा निबन्धनं वा कृत्वा भद्राणां शास्त्रार्थकारिणामागामिनां नृपतीनां परिज्ञानाय परिनिश्चयाय पार्थिवः पृथिवीपतिर्लिखितं लेख्यं वक्ष्यमाणप्रकारं कारयेत् । अस्मिन्ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयमित्येवमादिनियमो निबन्धः ॥ ३१६ ॥

लेख्यविधिमाह—

**पटे वा ताम्रपट्टे[1] वा स्वमुद्रोपरिचिह्नितम् ॥ ३१७ ॥**
**अभिलेख्याऽऽत्मनो वंश्यानात्मानं च महीपतिः ॥**
**प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्[2] ॥ ३१८ ॥**
**स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥**

पटे वा कार्पासादिमये ताम्रपट्टे वाऽऽत्मनः पितृपितामहादीन्विद्याविक्रमधर्मादिगुणोपेतानभिलेख्यास्यायं पुत्रोऽस्यायं पौत्र इत्येवं लेखयित्वाऽऽत्मानं च महीपतिर्लेखयित्वा प्रतिगृह्यत इति प्रतिग्रहो भूमिर्निबन्धश्च* तस्य च्छेदोऽपहारः स उपवर्ण्यते प्रत्यवायजनकतया येन शास्त्रेण तद्दानच्छेदोपवर्णनं तच्च लेखयित्वा स्वहस्तेन मतं मेऽमुकपुत्रस्य महीपतेरिति स्वहस्तलिखितेन दानकालेन च वत्सरादिना[3] संपन्नं शासनं शिष्यन्ते दानापहारान्निवर्त्यन्ते भाविनो भूपतिप्रभृतयो येन तच्छासनं स्वमुद्रया स्वकुलचिह्नेन गरुडादिना चिह्नितमङ्कितं चिरकालस्थायि कारयेत् । न हि तेन विना प्रतिग्रहीता तद्वंश्यो वा भूमिनिबन्धौ शक्नुयादुपभोक्तुम् । अत्र बृहस्पतिः—

> " दत्त्वा भूम्यादिकं राजा ताम्रपट्टेऽथ वा पटे ।
> शासनं कारयेद्धर्म्यं[4] स्थानवंश्यादिसंयुतम् ॥
> अनाच्छेद्यमनाहार्यं सर्वभाव्यविवर्जितम् ।
> चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम् ॥

---

* एतस्मात्परं क. पुस्तकेऽधिकम्—" तस्य परिमाणयितुं दानच्छेदोपवर्णनं च दीयत इति दानभूमिर्निबन्धश्च " इति ।

---

१ ङ. °पत्रे वा । २ ङ. °वर्णितम् । ३ ग. घ. °ना सहितं सं° । ४ ख. 'येद्धर्म्यं स्था° ।

प्राज्ञादयो गुणास्ते यस्योदिता उद्भूताः स उदितोदितः । पुरोहितं प्रकुर्वीत वृण्वीत, वरणेन हि पुरोहितत्वमुत्पद्यते यथाऽध्वर्युत्वादिकम् ॥ ३११ ॥

श्रौतस्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ॥ ३१२ ॥
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥

श्रुतिस्मृतिविहिताग्निहोत्रादिकर्मणां क्रियाऽनुष्ठानं तस्मात्प्रयोजनीभूताद्धेतोर्ब्रह्मादीनृत्विजो वृणुयात्, वरणेन कुर्यात् । यथाऽऽधानेनाऽऽहवनीयादीन् । तथा हविःसंस्थासोमसंस्थादीन्यज्ञान्भूरिदक्षिणान्प्राथमकल्पिकदक्षिणादानयुक्तान्कुर्यात् ॥ ३१२ ॥

भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ॥३१३॥
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ॥
अस्कन्नमव्यथं[1] चैव प्रायश्चित्तैरदूषितम्॥ ३१४ ॥
अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ॥

भोगान्भोक्तव्यानन्नविशेषान्वसूनि द्रविणानि च गोभूहिरण्यादीनि विप्रेभ्यो राजा दद्यात् । अत्र प्रशंसा—आत्मोपकारकत्वेन निधितुल्यत्वान्निधिरयं राज्ञां यद्विप्रेषूपपादितं विप्रेभ्यो दत्तम् । लौकिको निधिरुपभोगात्प्राक्चौरादिवशात्कदाचित्क्षीयते दत्तं तु न तथेति विशेषोऽयमिति वक्तुमुक्तमक्षय इति । भूमौ निहितं सुवर्णादिकं निधिः । न केवलं निधेरुत्कृष्टं[2] दानमपि त्वग्निहोत्रादेरपि । न हि दाने[3] कस्यचिद्धविषः स्कन्नं स्कन्दनं व्यथनं वा विद्यते येन विगुणं सदग्निहोत्रादिवदफलं स्यात् । प्रायश्चित्तैश्च प्रायश्चित्तनिमित्तैश्चान्यैर्दोषैरदूषितम् । अत आहवनीयाद्यग्निसंबन्धिनो हुताद्धोमाद्विप्रात्मन्यग्नौ हुतं दत्तं श्रेष्ठं प्रशस्ततरं भवति ॥ ३१३ ॥ ३१४ ॥

एवं दीयमानं धनं यतोऽत्यन्तोपकारकं भवत्यतस्तदर्जनादिकं यथा कार्यं तदाह—

अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ॥ ३१५ ॥
पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत्[4] ॥

अलब्धमप्राप्तं धर्मेणेहेत लिप्सेत । आत्मसात्कृतं यत्नेन तत्प्रणिधानेन पालयेद्रक्षयेत् । पालितं च नीत्या शास्त्रोक्तेन प्रकारेण वर्धयेदुपचयं गमयेत् । विवृद्धं च पात्रेषु विद्यातपोवृत्तसंपन्नेषु निक्षिपेद्दद्यात् ॥ ३१५ ॥

---

१ क. ग. ङ. °व्ययं चै° । २ घ. निधिरु° । ३ ख. °नेन क° । ४ ङ. विन्यसेत् ।

महोत्साहत्वादिगुणवान्नृपो भवति । ब्राह्मणादीनां स्वकर्मस्थापनयोग्यो भवतीत्यर्थः। महोत्साहो महोद्यमः । महाविषयत्वमविहन्यमानत्वं चोत्साहस्य महत्त्वम् । स्थूललक्षो बहुप्रदः । यः प्रत्युपकारायोपकारिणं स्मरति स कृतज्ञः। वृद्धसेवको ज्ञानादिगुणवृद्धपुरुषोपासकः । विनीतो गुर्वादिषु नम्रः। दुर्दशामापन्नोऽपि न न्यायादपैति यः स सात्त्विकः । कुलीनः शुद्धवंशजः। सत्यवाक्सत्यप्रतिज्ञः । शुचिर्बाह्याभ्यन्तरशौचवान । अदीर्घसूत्री प्रमितेऽर्थे निराशङ्कः। स्मृतिमान्प्रशस्तस्मृतिः। अक्षुद्रोऽनल्पहृदयः। योऽल्पापकारोपकाराभ्यां कोपप्रसादवान्सोऽल्पहृदयः । अपरुषोऽकठोरवाक् । धार्मिकः प्रसिद्धः। पुरुषार्थविक्षेपकं द्यूतादिकं व्यसनं तद्रहितोऽव्यसनः। प्राज्ञशूरौ प्रसिद्धौ। रहस्यविदात्मज्ञो मन्त्रज्ञः पररन्ध्रज्ञो वा । स्वरन्ध्रगोप्ता यत्र राज्याङ्गवैकल्ये परः प्रविशति तद्रन्ध्रं तस्य गोप्ता रक्षकः। आन्वीक्षिक्यां दण्डनीत्यां वार्तायां त्रय्यां च विनीतः शिक्षितः। आन्वीक्षिकी वेदाद्यविरुद्धन्यायविद्या। दण्डनीतिरर्थशास्त्रम्। वार्ता कृष्यादिविद्या। ऋग्यजुःसामानि त्रयी। त्रयीग्रहणात्तत्परिकरभूतानि व्याकरणाद्यङ्गानि मीमांसापुराणधर्मशास्त्राणि गृह्यन्ते ॥ ३०७ ॥ ३०८ ॥ ३०९ ॥

स मन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान्स्थिराञ्शुचीन् ॥३१०॥
तैः सार्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम्॥

स उक्तगुणो राजा मन्त्रिणः कार्याकार्यविदः । प्राज्ञानूहापोहसमर्थान् । मौलान्पितृपारम्पर्यागतान् । स्थिरान्स्वामिहितेष्वचञ्चलान् । शुचीञ्शुद्धोपधान्। प्रकुर्वीत प्रयत्नादुपाददीत । अथ तैः सह राज्यं राजकर्म षाड्गुण्यं तदङ्गानि च स्वाम्यादीनि चिन्तयेत्। हेयोपादेयतया विचारयेदित्यर्थः। अथ षाड्गुण्यविदा पुनर्विप्रेण सह विचारयेत्। पुनश्च स्वयं तमेवार्थं साधकबाधकप्रमाणवर्त्तया निश्चिनुयात् ॥ ३१० ॥

पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ॥ ३११ ॥
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥

दैवज्ञत्वादिगुणोपेतं ब्राह्मणं पुरोहितं कुर्वीत । दैवज्ञो ज्योतिःशास्त्रवित्। तेन हि शास्त्रेण प्राणिनां दैवं कर्मविपाको ज्ञायते। ये मन्त्रिणामुदिता उक्ताः

---

१ ङ. 'लान्हिताञ्शु' । २ ख. ग. कार्याः का° । ३ क. °ञ्शुद्धिमयान्। प्र' । ४ ग. घ. °वर्तितया विनि' ।

ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ॥ ३०६ ॥
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः* ॥

अनेकजन्मार्जितपुण्योपचयवतामपि नरेन्द्राणां यतो ग्रहाधीना उच्छ्रायाः संपदतिशयाः पतनानि च विपदतिशयरूपाणि । तथा जगतो भावाभावा॰ वुदयप्रलयौ ग्रहाधीनावेव । तस्मादन्येभ्यः पूज्यतरेभ्योऽतिशयेन ग्रहा उक्त-प्रकारेण पूज्याः । यद्यपि धर्माधर्मौ सुखदुःखानुभवहेतू तथाऽपि कालविशेष-मनपेक्ष्य न तद्धेतू भवतः । न च ग्रहाणां गतिविशेषमन्तरेण कालविशेषः शक्यो निरूपयितुमिति भवति ग्रहाधीनत्वं नरेन्द्रोच्छ्रायादेरतो विरुद्धं ग्रहस्थानं दृष्ट्वा तत्सूचितागामिदुःखसंघातविघाताय ग्रहयज्ञः कार्यः । स हि शान्तिकामस्य विहित इति तात्पर्यार्थः ॥ ३०६ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्री-
मदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धेऽप-
रार्के ग्रहयज्ञविधिप्रकरणं समाप्तम् ॥ ११ ॥

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

---

## राजधर्मप्रकरणम् । ( १२ )

---

उक्ता वर्णधर्मा ब्रह्मचारिगृहस्थधर्माश्च । इदानीं राज्ञो गृहस्थस्यापि गुण-वतो जनपदपरिपालनादीन्धर्मान्वक्तुं यैर्गुणैर्युक्तः प्रजापालनयोग्यो भवति तांस्तावदाह—

महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ॥ ३०७ ॥
विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक्शुचिः ॥
अदीर्घसूत्री स्मृतिमानक्षुद्रोऽपरुषस्तथा ॥ ३०८ ॥
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ॥३०९॥
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥

---

* इत उत्तरं ङ. पुस्तकेऽयं पाठः—"ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि । आरोग्यबलसं-पन्नो जीवेच्च शरदः शतम् " इति ।

---

१ क. ख. ग. घ. ङ. ˈत्पूज्याः सदा ग्र° ।

( ग्रहयज्ञविधिप्रकरणम् ११ )

व्युत्पत्त्या भोज्यमेव भोजनम् । यदि गुडौदनं न शक्नुयाद्दातुं ततो यथाशक्ति यथालाभं साधारणं यथाविधि दद्यात् । गुडमिश्र ओदनो गुडौदनः । क्षीरमिश्रं षष्टिकान्नं क्षीरषाष्टिकम् । षष्टिको व्रीहिविशेषः । गुडौदनं सर्वमेवात्र चित्रकम्(?) ॥ ३०२ ॥ ३०३ ॥

दक्षिणा आह—

**धेनुः शङ्खस्तथाऽनड्वान्हेम वासो हयः क्रमात् ॥३०४॥**
**कृष्णा गौरायसं छाग एता वै दक्षिणाः स्मृताः ॥**

ग्रहक्रमेण दक्षिणा दातव्याः । धेनुर्नवप्रसूता गौः । अनसो वोढा गौरनड्वान् । आयसं लोहमयम् । प्रसिद्धमन्यत् । एताश्च दक्षिणा ऋत्विग्भ्य एव देयाः । तथा च मत्स्यपुराणम्—

" यजमानः सपत्नीक ऋत्विजस्तु समाहितः ।
दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥
सूर्याय कपिलां धेनुं दद्याच्छङ्खं तथेन्दवे ।
रक्तं धुरंधरं दद्याद्भौमाय ककुदाऽन्वितम् ॥
बुधाय जातरूपं तु गुरवे पीतवाससी ।
श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे ॥
आयसं राहवे दद्यात्केतवे छागमुत्तमम् ।
सुवर्णेन समाः कार्या यजमानेन दक्षिणाः ॥
सर्वेषामथ वा गावो दातव्या हेमभूषिताः ।
सुवर्णमथ वा दद्याद्गुरुर्वा येन तुष्यति " ॥ ३०४ ॥

**यश्च यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ॥३०५॥**
**ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥**

यस्य पुरुषस्य यो ग्रहो दुःस्थो दुःखप्रदराशिस्थितो यथा जन्मराशितोऽष्टमराशिस्थः स तं ग्रहमितरग्रहपूजायामसमर्थ एकमेव यत्नेनाऽऽदरेणोक्तविधिना पूजयेत् । पूजितो हि न दुःखकरो भवति । यत एषां ग्रहाणां यूयं पूजयितारं पूजयिष्यथाभिलषितेन फलेन योजयिष्यथेति ब्रह्मणा प्रजापतिना वरो दत्तः ॥ ३०५ ॥

अत्रैव हेत्वन्तरमाह—

---

१ क. ततः शक्तिसा° । २ ग. घ. °रषाष्टि° ।

आङ्गिरस ऋषिरादित्यो देवता त्रिष्टुप्छन्दः । इमं देवा इति देवाः सोमो यजुः । अग्निर्मूर्धेति विश्वरूप आङ्गिरसोऽङ्गारको गायत्री । उद्बुध्यस्वेति परमेष्ठी बुधस्त्रिष्टुप् । बृहस्पत इति गृत्समद आङ्गिरसो भार्गवशौनको वा बृहस्पतिस्त्रिष्टुप् । अन्नात्परिस्रुत इति अश्विसरस्वतीन्द्राः शुक्रोऽतिजगती । शं नो देवीरिति सिन्धुद्वीपः शनैश्चरो गायत्री । काण्डात्काण्डादित्यग्नी राहुरनुष्टुप् । केतुं कृण्वन्निति मधुच्छन्दाः केतुर्गायत्री ॥ २९८ ॥ २९९ ॥

चरुहोमानन्तरं समिधां स्वरूपप्रतिपादनपूर्वकं तद्धोममाह—

**अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः[1] ॥३००॥**
**उदुम्बरः शमी दूर्वा[2] कुशाश्च[3] समिधः क्रमात् ॥**
**एकैकस्याष्टशतकमष्टाविंशतिरेव वा ॥ ३०१ ॥**
**होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण[4] संयुताः ॥**

अर्काद्याः समिधो यथा ग्रहस्या(म)ष्टोत्तरशतमष्टाविंशतिर्वा मधुघृताभ्यां दधिपयोभ्यां वाऽभ्यक्ताः पूर्वोक्तैर्मन्त्रैर्होतव्याः । एकैकस्येति षष्ठी चतुर्थ्यर्थे । एषा च संख्या समिधामेव तदेकवाक्यत्वात् । न च सकृन्मन्त्रमुच्चार्यैकदेवतात्वेन सह समिधः प्रक्षेप्तव्याः किंत्वेकैकाः, प्रत्येकं च मन्त्रावृत्तिः । तदुक्तं मत्स्यपुराणे—

" स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् " ।

तथा—" प्रादेशमात्राः सशिखाः शाखा[5]पर्णविपाटिताः ।
समिधः कल्पयेत्प्राज्ञः सर्वकर्मसु सर्वदा " ॥ ३०० ॥ ३०१ ॥

ब्राह्मणभोजनद्रव्यमाह—

**गुडौदनं पायसं[6] च हविष्यं क्षीरष(षा)ष्टिकम् ॥३०२**
**दध्योदनं घृता[7]न्नं च कृसरामिषचित्रकम् ॥**
**दद्याद्ग्रहक्रमादेतद्द्विजेभ्यो भोजनं बुधः ॥ ३०३ ॥**
**शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥**

गुडौदनादिकं यथाग्रहक्रमं द्विजेभ्यो भोजनं दद्यात् । भुज्यत इति

---

१ ङ. °लः । औदु° । २ ङ. °र्वा दर्भश्च । ३ क. ग. घ. छ. कुशश्च । ४ ङ. °ण वा यु° । ५ क. ख. शाखाः प° । ६ ङ. °नं हविश्चर्ग मांसं चित्रान्नमेव च । द° । ग. घ. छ. °नं हविश्चूर्ण मांसं चित्रान्नमेव चेति पाठे । दध्योदनं कृता° । ७ क. °ताक्तं च ।

( ग्रहयज्ञविधिप्रकरणम् ११ )

यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥
गन्धाश्च[1] बलयश्चैव धूपो देयश्च गुग्गुलुः ॥ २९७ ॥

यो ग्रहो यद्वर्णस्तस्मै तद्वर्णान्येव वस्त्रादीनि देयानि । धूपार्थं च गुग्गुलुर्देयः । अत्र वृत्तवशात्क्रमो न विवक्षितः सोऽन्यतोऽवगन्तव्य इति गन्धपुष्पधूपवस्त्रबलयः क्रमेण देयाः । अत्र सर्वेभ्यो ग्रहेभ्यो गन्धपुष्पाणि देयानि तथा धूपादि न पुनरेकस्मै गन्धादिबलिपर्यन्तं दत्त्वाऽन्यस्मै देयम् ॥ २९७ ॥

होमविधिमाह—

कर्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥

न केवलमादित्यादीनां पूजैव कार्या । किं तु प्रत्येकं चरवश्च । ते च मन्त्रवन्तः कार्याः । अनवस्रावितो विशदोऽन्तरूष्मपक्व ओदनश्चरुः । तन्त्रवन्त इति पाठे पाकयज्ञेतिकर्तव्यता तन्त्रम् । अत्र च नवानामपि ग्रहयागानां(णां) तुल्यकालत्वादिध्मा[2]द्यभेदः । तदाह शौनकः—

"एकबर्हिरिध्माज्यस्विष्टकृ[3]तः स्युस्तुल्यकालाः" ।

तदेषा[4]ऽभियज्ञभागा गाथाऽभि[5]गीयते—

"पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिषः ।
एकस्विष्टकृतः कुर्यान्नानाऽपि सति दैवते" इति ॥

होममन्त्रानाह—

आकृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत् ॥२९८॥
उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः ॥
बृहस्पते अतियदर्यस्तथैवान्नात्परिस्रुतः ॥ २९९ ॥
शं नो देवीस्तथा काण्डात्केतुं कृण्वन्निमा अपि ॥

भगवतो योगीश्वरस्य वाजसनेय(यि)[6]त्वाद्वाजसनेयके समाम्नाता एवात्र मन्त्रा ग्राह्याः । तत्रत्यान्येवाऽऽर्षादीनि वेदितव्यानि । आकृष्णेनेत्याद्या नवसंख्याका मन्त्रा नवसंख्याकेष्वेवाऽऽदित्यादिदै(दे)वत्येषु होमेषु यथासंख्यं प्रकीर्तिता विहिताः । तत्रैकैकस्य चरोरेकैवाऽऽहुतिः पाकयज्ञातिदेशेन प्राप्ता स[7]त्यैकैकेन मन्त्रेण कार्या । आहुतीनां संख्यान्तराविधानात् । आकृष्णेनेति हिरण्यस्तूप

---

१ ख. गन्धश्च । २ ग. घ. 'ध्मादिभे° । ३ ख. °कृताः स्यु° । ४ क. °षाऽपि य° । ५ ख. °भिधीय° । ६ क. ख. °सनीयत्वाद्वाजसनीये स° । ७ ख. °त्येके° ।

हंसारूढः क्वचित्कार्यः क्वचिच्च कमलासनः ।
वर्णेन कमलाभश्च चतुर्बाहुः शुभेक्षणः ॥
कमण्डलुं वामकरे सूत्रं हस्ते च दक्षिणे ।
वामे दण्डधरस्तद्वत्स्रुक्स्रुवौ चापि कल्पयेत् ॥
मुनिभिर्देवगन्धर्वैः स्तूयमानं समन्ततः ।
कुर्वाणमिव लोकांस्त्रीञ्शुक्लाम्बरधरं विभुम् ॥
मृगचर्मधरं चापि दिव्ययज्ञोपवीतिनम् ।
आज्यस्थाली तथा पार्श्वे तेनैव च चरुः पुरः ॥
वामे पार्श्वे च सावित्री दक्षिणे[1]न सरस्वती ।
अग्रे च ऋषयस्तद्वत्कार्याः पैतामहे पदे* ” ॥

इति राजानकशितिकण्ठपुस्तके विशेषः । प्रासङ्गिकमुक्त्वा प्रकृतमुच्यते । एते ग्रहा अग्निप्रणीयाग्न्यायतनस्योत्तरपूर्वदेशे पूज्याः । तथा च मत्स्यपुराणम्—

“ गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् ।
वप्रत्रयान्वितां वेदिं वितस्त्युच्छ्रायसंयुताम् ॥
संस्थापनाय देवानां चतुरश्रामुदक्प्लवाम् ” ।

कुर्यादिति शेषः । गर्तः खातमग्न्यायतनम् । वप्रो मेखला ।

“ अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् ” ।

तस्यां तिस्रः कोष्ठकपङ्क्तयः कार्या एकैकस्यां त्रयस्त्रयः कोष्ठका भवन्ति ।

| | | |
|---|---|---|
| बु. | शु. | चं. |
| बृ. | आ. | भौ. |
| के. | श. | रा. |

तत्र—“ मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु ।
उत्तरे[2]ण गुरुं विद्याद्बुधं पूर्वोत्तरेण तु ॥
पूर्वेण भार्गवं विद्यात्सोमं दक्षिणपूर्वके ।
पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुं स्थापयेच्छुक्लतण्डुलैः ” ।

एते चाऽऽदित्याभिमुखाः स्थाप्याः ॥ २९६ ॥

ग्रहपूजामाह—

* इतः प्रभृति विशेष इत्यन्तं न ग. घ. छ. पुस्तकेषु ।

१ ग. घ. °णे च स° । २ ग. घ. °ण बुधं विद्याद्गुरुं पू° ।

कुण्डस्थं वाऽपि कुर्वीत मूर्ध्नि सप्तशिखान्वितम् ।
कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजं तथा ॥
त्रयाणामपि देवानामनुकारानुकारिणीम् ।
जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम् ॥
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ।
अतसीपुष्पसंकाशां सुप्रतिष्ठां सुलोचनाम् ॥
नवयौवनसंपन्नां सर्वावयवभूषिताम् ।
सुचारुदशनां तद्वत्पीनोन्नतपयोधराम् ॥
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ।
त्रिशूलं दक्षिणे दद्यात्खड्गचक्रे तथैव च ॥
तीक्ष्णधारां तथा शक्तिं वामतोऽपि निबोधत ।
खेटकं पूर्णचापं च पाशमङ्कुशमेव च ॥
घण्टां च परशुं वाऽपि वामतः संनिवेशयेत् ।
अधस्तान्माहिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥
शिरश्छेदे न्यसेत्तद्वद्दानवं खड्गपाणिकम् ।
हृदि शूलेन निर्भिन्नं तिर्यगूर्ध्वं च भूषितम् ॥
रक्तरक्तीकृताङ्गं च रक्तविस्फुरि[1]तेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटी[2]भीषणाननम् ॥
वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् ।
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ॥
किंचिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयमानं च तद्रूपममरैः संनिवेशयेत् ॥
विनायकं प्रवक्ष्यामि गजवक्त्रं त्रिलोचनम् ।
लम्बोदरं चतुर्बाहुं व्यालयज्ञोपवीतिनम् ॥
स्तब्धकर्णं बृहत्तुण्डमेकदंष्ट्रं पृथूदरम् ।
स्वदन्तं दक्षिणकरे उत्पलं चापरे तथा ॥
मोदकं परशुं चैव वामतः परिकल्पयेत् ।
बृहत्संक्षिप्तगहनं पीनस्क[3]न्धाङ्घ्रिपाणिकम् ॥
युक्तं बुद्धिकुबुद्धिभ्यामधस्तान्मूषकान्वितम् ।
ब्रह्मा कमण्डलुधरः कर्तव्यः स चतुर्मुखः ॥

---

१ ख. °स्फुटिते° । २ क. ख. °टीभूषिताननम् । ३ ख. °स्कन्दाङ्घ्रि° ।

कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च " ।

निगदव्याख्यातमेतत् । [ *अथ राजानकशितिकण्ठकविशेषः ] ।

देवीपुराणे—" प्रभाकरस्य प्रतिमामिदानीं शृणुत द्विजाः ।
रथस्थं कारयेद्देवं पद्महस्तं सुलोचनम् ॥
सप्ताश्वं चैकवक्त्रं च रथं तस्य प्रकल्पयेत् ।
मुकुटेन विचित्रेण पद्मगर्भसमप्रभम् ॥
नानाभरणभूषा[1]भ्यां[2] कराभ्यां धृतपुष्करम् ।
स्क[3]न्धस्थे पुष्करे चैव लीलयैव धृते सदा ॥
चोलकच्छन्नवपुषं क्वचिच्चित्रे[4]षु दर्शयेत् ।
वस्त्रयुग्मसमोपेतं चरणौ तेजसाऽऽवृतौ ॥
प्रतीहारौ च कर्तव्यौ पार्श्वयोर्दण्डपिङ्गलौ ।
कर्तव्यौ दण्डहस्तौ च पार्श्वयोः पुरुषावुभौ ॥
लेखनीकृतहस्तं च पार्श्वे धातारमव्ययम् ।
नानादेवगणैर्युक्तमेवं कुर्याद्दिवाकरम् ॥
अनूरुं सारथिं चास्य पद्मिनीपत्रसंनिभम् ।
अश्वौ च वलितग्रीवौ गन्धस्थौ तस्य पार्श्वयोः ॥
भुजङ्गरज्जुभिर्बद्धाः सप्ताश्वरथसंयुताः ।
सप्ताश्वे[5]स्थं पद्महस्तं तस्मिंश्चैव प्रकल्पयेत् " ॥

पद्मपुराणे—" अत एव रवेः पादौ न कश्चित्कारयेत्क्वचित् ।
यः करोति स पापिष्ठां गतिमाप्नोति निन्दिताम् ॥
कुष्ठरूपमवाप्नोति लोकेऽस्मिन्दुःखसंज्ञितम् " ।

प्रसङ्गाद्वह्न्यादीनां लक्षणमुच्यते—

" वह्नेस्तु लक्षणं वक्ष्ये सर्वलक्षणलक्षितम् ।
दीप्तं सुवर्णवपुषमर्धचन्द्रासनं विभुम् ॥
बालार्कसदृशं तस्य वसनं चात्र कारयेत् ।
यज्ञोपवीतिनं कुर्याल्लम्बकूर्चभ्रुवं तथा ॥
कमण्डलुं वामकरे दक्षिणेऽस्याक्षसूत्रकम् ।
ज्वालावितानसंयुक्तमजवाहनमुज्ज्वलम् ॥

---

* एतच्चिह्नान्तर्गतं न विद्यते क. ग. घ. पुस्तकेषु ।

---

१ क. °पाद्यं भुजाभ्यां धृ° । २ ख. °भ्यां भुजाभ्यां । ३ क. ख. स्कन्दस्थे । ४ ख. °षु पट्टसु । व° । ५ क. ग. °श्वस्तं प° ।

( ग्रहयज्ञविधिप्रकरणम् ११ )

**रजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात्[1]* ॥**
**स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेऽपि(षु) वा॥२९६**

ताम्रमेव ताम्रकं तस्मादादित्यस्य प्रतिमा कार्या । स्फटिकात्सोमस्य । रक्तचन्दनादङ्गारकस्य । स्वर्णकाद्बुधबृहस्पत्योः । रजताच्छुक्रस्य । कृष्णमयः कार्ष्णायसं तस्माच्छनैश्चरस्य । सीसाद्राहोः । कांस्यात्केतोः । प्रतिमानिर्माणासमर्थस्तु ग्रहसमानवर्णैर्वर्णकैर्ग्रहान्[3]पटे लिखेत् । तत्राप्यसमर्थो ग्रहसमानवर्णेषु चन्दनादिगन्धमण्डलकेषु ग्रहानुल्लिखेत् । अत्र मत्स्यपुराणम्—

" पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः ॥
श्वेतः श्वेताम्बरधरो दशा(रः श्वेता)श्वः श्वेतभूषणः ।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥
रक्तमाल्याम्बरधरः शक्तिशूलगदाकरः ।
चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥
पीतमाल्याम्बरधरः कर्णिकारदलद्युतिः ।
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥
देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ ।
दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥
इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ।
बाणबाणासनकरः कर्तव्योऽर्कसुतः सदा ॥
करालवदनः खड्गचर्मशूली वरप्रदः ।
नीलसिंहासनयुतो राहुस्तत्र प्रशस्यते ॥
धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः ।
गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥
सर्वे किरीटिनः कार्या ग्रहा लोकहितप्रदाः ।
स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ॥
भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ।
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥

* इत उत्तरं ङ. पुस्तकेऽयं पाठः—" भास्कराङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ । सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ । कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च " इति ।

१ ख. °त् । सुव° । २ ङ. गन्धैर्मण्डलकेषु वा । ३ ख. °र्ग्रहाः कार्याः । त° । ४ क. °तवाहनः । ग° । ५ ग. °दाधरः ।

## ग्रहयज्ञविधिप्रकरणम् । ( ११ )

अथ ग्रहयज्ञविधिमाह*—

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ॥२९३॥
वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन्रिपून् ॥

श्रीशान्त्यादिकामोऽभिचरन्वा ग्रहयज्ञं वक्ष्यमाणस्वरूपं समाचरेदनुतिष्ठेत् । शान्तिः फलदानोन्मुखदुरितनिवारणम् । पुष्टिः शरीराद्युपचयः । अभिचार आयुष्प्रदधर्मप्रतिबन्धः । प्रसिद्धमन्यत् । वृष्ट्यायुःपुष्टीनां प्रत्येकं कामसंबन्धो नेतरेतरयुक्तानां, प्रमाणान्तरसिद्धत्वे सत्युद्दिश्यमानत्वात् । एवंविधस्योद्देश्यस्य विशेषणमविवक्षितम् । पूर्वं विनायकस्नानसहितो ग्रहयज्ञः श्रिये विहितः । इदानीं केवलः फलान्तरेभ्यश्चेति विधिभेदः । अभिचरन्निति शतृप्रत्ययोऽभिचारस्य ग्रहयज्ञं प्रति हेतुतामाचष्टे । अभिचारस्य चासिद्धत्वान्न स्वरूपेण हेतुता, किं तु तदिच्छायास्तेनेष्यमाणतया कर्मसंबन्धादभिचारस्य फलत्वम् ॥ २९३ ॥

ग्रहानाह—

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ॥२९४॥
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥

एता ग्रहयज्ञदेवताः । वृत्तवशाच्चात्र सूर्यादिशब्दनिर्देशो यागप्रयोगे पुनरादित्यादिशब्दैरुद्देशः कार्यः । तथा च बह्वृचगृह्यपरिशिष्टम्—

"गुडौदनमादित्याय घृतपायसं सोमाय हविष्यमन्नमङ्गारकाय क्षीरौदनं बुधाय षष्टिकं बृहस्पतये दध्योदनं शुक्राय माषौदनं तिलपिष्टमिश्रं सघृतं शनैश्चराय राहवे मांसौदनं केतवे चित्रौदनम्" इति ।

नैवं गद्यग्रन्थेऽस्मिञ्श्रूयमाणशब्दस्याविवक्षायां हेतुरस्ति ॥ २९४ ॥

आदित्यादिग्रहप्रतिमाप्रकृतिद्रव्याण्याह—

ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ॥ २९५ ॥

* इत उत्तरं ग. घ. पुस्तकयोर्ग्रहपूजामाहेत्यन्तं ग्रन्थव्यत्यासो दृश्यते ।

१ क. °मनिव° ।

( विनायकपूजाविधिप्रकरणम् १० )

दूर्वासर्षपपुष्पाणां दत्त्वाऽर्घं(र्घ्यं) पूर्णमञ्जलिम् ॥
रूपं देहि यशो देहि भगं भवति देहि मे ॥ २८९ ॥
पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे ॥

दूर्वया सर्षपैः पुष्पैरुदकेन च पूर्णमञ्जलिमर्घ्यं विधाय विनायकस्य जनन्या अम्बिकायै दत्त्वा रूपं देहीत्यनेन तामुपतिष्ठेत ॥ २८८ ॥ २८९ ॥

ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥ २९० ॥
ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥

अम्बिकामुपस्थाय शुक्ले वाससी परिधाय शुक्लमाल्यानुलेपनैश्चाऽऽत्मानमलंकृत्य ब्राह्मणान्भोजयेत् । गुरवे च वस्त्रद्वयं दद्यात् । गुरुशब्दप्रयोगात्स्नपनकर्ता गुरुवत्पूज्य इति गमयति ॥ २९० ॥

एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ॥ २९१ ॥
कर्मणां फलमाप्नोति श्रियमाप्नोत्यनुत्तमाम् ॥

एवमुक्तेन प्रकारेण विनायकं पूजयित्वा ग्रहांश्च वक्ष्यमाणविधिना कर्मणां कृतानां करिष्यमाणानां च फलं विघ्नशान्तिद्वारेण प्राप्नोति । श्रियं चानुत्तमां सर्वोत्कृष्टामाप्नोति । न विद्यत उत्तमा यस्याः साऽनुत्तमा । आप्नोतीति पुनर्वचनं श्रीकामं प्रति विनायकादिपूजायाः पृथग्विधानार्थम् ॥ २९१ ॥

आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा॥२९२॥
महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात् ॥

इति विनायकपूजाविधिप्रकरणम् ॥ १० ॥

आदित्यस्य स्वामिनः स्कन्दस्य महागणपतेश्च सर्वकालं पूजां तिलकं सुवर्णादिमयं कुर्वन्कर्मफलसिद्धिमवाप्नुयादिति ॥ २९२ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धेऽपरार्के विनायकपूजाविधिप्रकरणं समाप्तम् ॥ १० ।

---

१ ङ. जयं ।

स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ॥
जुहुयान्मूर्धनि कुशान्सव्येन परिगृह्य च ॥ २८३ ॥
मितश्च संमितश्चैव तथा शालकटङ्कटः ॥
कूष्माण्डराजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥ २८४ ॥
नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ॥
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ॥ २८५ ॥
कृताकृतांस्तण्डुलांश्च पललौदनमेव च ॥
मत्स्यान्पक्कांस्तथा चाऽऽमान्मांसमेतावदेव तु ॥२८६॥
पुष्पं चित्रं सुगन्धं च सुरां च विविधामपि ॥
मूलकं पूरिकापूपांस्तथैवोण्डेरकस्रजम् ॥ २८७ ॥
दध्यन्नं पायसं चैव गुडमिश्रं समोदकम् ॥

पूर्वोक्तेन प्रकारेण स्नातस्य शिरसि सव्येन पाणिना कुशान्परिगृह्येतरपाणिगृहीतेनौदुम्बरवृक्षमयेन स्रुवेण सर्षपतैलं मिताय स्वाहा संमिताय स्वाहा शालकटङ्कटाय स्वाहा कूष्माण्डराजपुत्राय स्वाहेति गुरुर्जुहुयात् । तैरेवं मितादिभिश्चतुर्भिर्नामभिश्चतुर्थ्यन्तैर्नमस्कारसमन्वितैश्चतुष्पथे शूर्पं स्थापयित्वा तत्र च सर्वतः सर्वदिगग्रान्कुशानास्तीर्य कृताकृततण्डुलादिरूपं बलिं दद्यात् । नामभिर्बलिमन्त्रैश्चेति विशेषेण निर्देशान्मितादिनामभिश्चतुर्थ्यन्तैर्नमस्कारमन्त्रैर्बलिमन्त्रतामापन्नैर्बलिर्देय इति गम्यते । अवघातादिना येषां व्रीहीणां तण्डुलीभावः प्रारब्धापरिसमाप्तश्चैते कृताकृतास्तण्डुलाः । तिलपिष्टमिश्र ओदनः पललौदनः । मूलकं शाकादिविशेषः । भृष्टा लोपिकाः पूरिकाः । क्षुद्रापूपास्तूण्डेरकाः । प्रसिद्धमन्यत् । एतत्सर्वमेकस्मिन्पात्रे कृत्वा सकृदेव दद्यात्॥ २८३ ॥ ॥ २८४ ॥ २८५ ॥ २८६ ॥ २८७ ॥

*विनायकस्य जननीमुपतिष्ठेत्तदाऽम्बिकाम् ॥२८८॥

---

* एतस्मात्प्रागेतदर्धमधिकं ङ. पुस्तके—" एतान्सर्वानुपाहृत्य भूमौ दत्त्वा ततः शिरः " इति । तद्व्याख्याऽऽदर्शपुस्तकेषु न विद्यते ।

---

१ क. च । सितश्च । २ क. °था साल° । ३ ङ. °कटङ्कौ । कू° । ४ ङ. च त्रिविधा° । ५ क. सिताय । ६ क. °व सिता° । ७ ग. घ. °शेषनि° । ८ ग. घ. °माप्ताश्च ते° ।

( विनायकपूजाविधिप्रकरणम् १० )

मुरां ताभोरा इतिप्रसिद्धा । रजनीद्वयं हरिद्रादारुहरिद्रे । सती कर्पूरविशेषः । वालुकादीनि वा । तथा च वसिष्ठः—

" वालुका शङ्खपुष्पी च कुष्ठं चैव वचा तथा ।
नागकेसरचूर्णं च सर्वौषधिगणो भृगो " ॥ २७६ ॥ २७७ ॥

अपि च—

अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥
मृत्तिकां रोचनां गन्धान्गुग्गुलं च विनिक्षिपेत् ॥२७८॥
या आहृता ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥

एकवर्णैश्चतुर्भिः कलशैरप आहृत्य तास्वश्वस्थानादिभ्यः समाहृता मृत्तिका गोरोचनामगुरुकस्तूरीकर्पूरचन्दनकेसरात्मकान्गन्धान्गुग्गुलं च विनिक्षिपेत् ।

अत्र बैजवापगृह्यम्—" चतुर्भ्यः प्रस्रवणेभ्यश्चतुरः कुम्भानाहृत्य तेषु सर्वौषधीः सर्वगन्धान्हिरण्यं व्रीहियवौ गुग्गुलं मृदमाखूत्कराम्" इति ।

प्रक्षिपेदिति शेषः ॥ २७८ ॥

चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ॥ २७९ ॥

अनः शकटं यो वहति तत्सोऽनड्वान्बलीवर्दः । तच्चर्मणि लोहिते भद्रासनं प्रतिष्ठातत्रोक्तम् । ततोऽप्सु मृदादिप्रक्षेपादनन्तरं स्थाप्यम् ॥ २७९ ॥

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ॥
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥२८०॥
भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः ॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ २८१ ॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ॥
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा ॥ २८२ ॥

सहस्राक्षमित्यादिभिर्मन्त्रैस्त्रिभिरेकैकेन कलशेन विनायकोपसृष्टस्य गुरुः स्नपनं करोति । प्रतिकलशं मन्त्रत्रयावृत्तिः ॥ २८० ॥ २८१ ॥ २८२ ॥

---

१ क. °रा भाभार इ° । २ ख. °भोर इ° । ३ क. स्मृतः । ग. घ. भृगौ । ४ ख. °ग्गुलुं च । ५ ङ. °लं चाप्सु नि° । ६ ख. °ग्गुलुं च । ७ ख. भद्रासने । ८ ख. मृगादि° । ९ क. श्च गावश्च । १० ख. दधुः ।

पुण्याहविधानम् । उपसृष्टस्य चिरकालविलम्बायोगात् । धिषणो बृहस्पतिः । तस्यैव विनायकस्येत्यर्थः ॥

स्नपनविधिमाह—

गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥ २७६ ॥
सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥
भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः॥२७७

शुक्लसर्षपाणां चूर्णेनाऽऽज्यसहितेन स उद्वर्तनीयः । ततः सर्वौषधैः सगन्धैश्चूर्णितैः सोदकैर्विलिप्तमस्तकः कार्यस्ततो भद्रासन उपवेश्यस्ततस्तस्य स्वस्ति भवन्तो ब्रुवन्त्विति द्विजा विप्राः शुभाः कल्याण(णं)वाच्याः । अत्र कर्तरि षष्ठी । ततश्च तेन वाच्या इत्यर्थः । तत्सादनादि शै(शि)वादिदेवपूजां कृत्वा कार्यमित्युक्तं भविष्यत्पुराणे—

“ व्योमकेशं तु संपूज्य पार्वतीं भीमजं तथा ।
कृष्णस्य पितरं तात अर्कमारं सितं तथा ॥
धिषणं क्लेदपुत्रं च कोणं लक्ष्म च भारत ।
विधुंतुदं बाहुलेयं नन्दकस्य च धारिणम् ” ॥

व्योमकेशः शिवः । भीमजो गणेशः । कृष्णस्य पिता वसुदेवः । आरो भौमः । सितः शुक्रः । क्लेदपुत्रो बुधः । कोणः शनैश्चरः । लक्ष्म लक्ष्मवांश्चन्द्रः, पूर्ण इत्यर्थः । विधुंतुदो राहुः । केतुरत्रानुक्तोऽपि ग्राह्यः साहचर्यात् । बाहुलेयः स्कन्दः । नन्दकस्य धारी विष्णुः । सर्वौषधानि सहदेव्यादीनि । तथा च मत्स्यपुराणम्—

“ सहदेवी वचा व्याघ्री बला चातिबला तथा ।
शङ्खपुष्पी तथा सिंही अष्टमी तु सुवर्चला ॥
महौषध्यष्टकं ह्येतन्महास्नानेषु योजयेत् ” ।

ब्रह्म(ब्राह्मी)सुवर्चलादीनि वा । तथा च भविष्यत्पुराणम्—

“ ब्राह्मी सुवर्चला मुस्ता[1] विष्णुक्रान्ता शतावरी ।
दुर्लभा शङ्खपुष्पी च प्रियङ्गुरजनी वचा ” ॥

सुरादीनि वा । तथा च स्मृतिः—

“ सुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
सती चैण्यकमुस्तं[2] च सर्वौषधिगणः स्मृतः ” ॥

---

१ ग. घ. मुक्ता । २ ग. घ. चम्पक° ।

आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ॥
वणिग्लाभं न चाऽऽप्नोति कृषिं चैव कृषिवलः ॥२७५॥

विमना उद्विग्नमना विफलारम्भो निष्फलोद्यमः संसीदत्यवसीदति अनिमित्ततो दृष्टनिमित्ताभावतः । राजनन्दनो राजपुत्रो न राज्यं कुमारी गुणवत्यपि न भर्तारमङ्गना च गर्भं प्रसूतावपत्यमायुष्मच्छ्रोत्रियश्चाऽऽचार्यत्वं शिष्यश्चाध्ययनं वणिज्याजीवी च तन्निमित्तं धनोपचयं कृषीवलश्च कृषिं न लभते । इमानि विनायकोपसृष्टस्य लक्षणानि । अत्र बैजवापगृह्यम्—

"अथ विनायकाः । चत्वारः खलु विनायका भवन्ति । मितश्च संमितश्च शालकटङ्कटश्च कूष्माण्डराजपुत्रश्चेत्येतैर्विनायकैरुपसृष्टलक्षणा ब्राह्मणाः स्वाध्यायवन्तोऽप्याचार्यत्वं न लभन्ते । कुमारा राजपुत्रा राजलक्षणसंपन्ना अपि राज्यं न लभन्ते । कुमार्योऽपि लक्षणवत्योऽपि भर्तॄन्न लभन्ते । स्त्रीणामाचारवतीनामप्यपत्यानि म्रियन्ते । विनायकोपसृष्टलक्षणं खलु भवति स्वप्ने सर्पान्पश्यति । अत्यन्तमपोऽवगाहते । अन्तरिक्षं क्रामति पांसुकर्दमे चावसीदति । पृष्ठतो मां कश्चिद्धावतीति[1] मन्यते । उष्ट्रान्गर्दभाञ्शुनो दिवाकीर्तिमन्यांश्चाप्रयतान्पश्यति[2] । करणे मूढमात्मानं मलिनान्तरमन्यांश्च प्रयतान्पश्यति" ।

भविष्यत्पुराणे—"करणे मूढमात्मानं मलिनान्तरगस्तथा[3] ।
चतुर्भिश्चाऽऽवृतं यान्तं श्मशानान्तिकगं नृप ॥
पश्यते नृपशार्दूल पश्यते नात्र संशयः ।
तैलार्द्रगात्रं च विभो करवीरविभूषितम् ॥२७३॥२७४॥२७५॥

स्नापनं[4] तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकम् ॥

तस्य विनायकोपसृष्टस्य तदुपसर्गशान्तये पुण्याहे वक्ष्यमाणविधिना स्नपनं कार्यम् । यत्तु भविष्यत्पुराणे—

"शुक्लपक्षे चतुर्थ्यां च वारेण धिषणस्य च ।
तिष्ये च वीरनक्षत्रे तस्यैव पुरतो नृप"

इति, तत्तु श्रीकामविनायकस्नपने द्रष्टव्यम् । तदुपसृष्टस्नपनविषयाणां तु

१ ख. °ते । क° । २ क. ग. घ. °ति । भ° । ३ ख. ग. घ. °था । यातुभिश्चा° ।
४ ङ. स्नपनं ।

## विनायकपूजाविधिप्रकरणम् । ( १० )

अभीष्टकर्मफलप्राप्तौ विघ्नपरिहारस्याप्युपायमिदानीमाह—

विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ॥
गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ २७० ॥

विनायकाख्यो देवविशेषः सर्वेषां कर्तॄणां कर्मविघ्नार्थं कर्मसिद्ध्यर्थं च गणानां पुष्पदन्तादीनामीश्वरत्वे च रुद्रचतुर्मुखाभ्यां नियुक्तोऽतोऽसौ विहितोपायेनैव निवारयितुं च शक्यत इति तदुपायविधिरारभ्यते ॥ २७० ॥

तत्र विनायकोपद्रवे सति तच्छमनाधिकार इति तदुपद्रवलक्षणं तावदाह—

तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ॥
स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ २७१ ॥
काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ २७२ ॥
व्रजन्तं च तथाऽऽत्मानं मन्यतेऽनुगतं परैः ॥

तेन विनायकेनोपसृष्ट उपद्रुतो यो मनुष्यस्तस्य वक्ष्यमाणानि चिह्नानि हे मुनयः शृणुत, स्वप्नेऽतिशयेन जलमवगाहते जलमग्नमात्मानं पश्यतीत्यर्थः । मुण्डान्कृतवपनान्काषायवसनांश्च नरान्पश्यति । तथा क्रव्यादान्व्याघ्रादीनधिरोहत्यन्त्यजातिभिः सहैकत्र देशेऽवतिष्ठते च । तथा गच्छन्तं मां पृष्ठतः परेऽनुगच्छन्तीति मन्यते । क्रव्यमाममांसं तददन्ति ये ते क्रव्यादा इति स्वप्ने ॥ २७१ ॥ २७२ ॥

अथ जागरणे—

विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ २७३ ॥
तेनोपसृष्टो लभते न राष्ट्रं राजनन्दनः ॥
कुमारी च न भर्तारमपत्यं गर्भमङ्गना ॥ २७४ ॥

१ क. ग. घ. °ष्टफलसंप्रा° । २ ग. घ. °युक्तः । कुतोऽ° । ३ क. ग. °यितुमाराधयितुं । ४ ङ. राज्यं । ५ ङ. गर्भिणी तथा । आ° ।

( श्राद्धप्रकरणम् ९ )

" वसून्वदन्ति हि पितॄन्रुद्रांश्चैव पितामहान् ।
प्रपितामहांस्तथाऽऽदित्याञ्श्रुतिरेषा पुरातनी[1] " ॥ २६८ ॥

**आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥**
**प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः ॥२६९॥**

इति श्राद्धप्रकरणम् ॥ ९ ॥

आयुरादीनि फलानि श्राद्धकर्तृभ्यः प्रयच्छन्ति न पुनर्वस्वादयः । यथाश्रुतग्राहिणः पूर्वश्लोकाद्वस्वादिदै(दे)वत्यमेव सर्वं श्राद्धं न पुनः पित्रादिदै(दे)वत्यमिति कस्यचिद्बुद्धिरुत्पद्यते । तन्निवृत्तिद्वारेण श्राद्धस्याऽऽयुरादिफलत्वप्रतिपादनपरोऽयं श्लोकः । अत्र च पितामहग्रहणं पित्राद्युपलक्षणार्थम् । ततश्च श्राद्धकर्तॄणां मनुष्याणां श्राद्धे[2] देवताभावेन संबध्यमानाः पित्रादय आयुरादिफलप्रदा भवन्तीत्युक्तं भवति । यद्यप्यपूर्वफलप्रदातृत्वं न देवतायास्तथाऽपि सर्वाङ्गोपेतकर्मानुष्ठानात्फलदाऽपूर्वोदय इति[3] युक्ताऽङ्गभूतपित्रादिदेवतायाः फलहेतुत्वोक्तिः । आयुरादीनां च प्रत्येकं फलत्वं प्रत्येकं द्वितीयायोगात् । एवं चामावास्याष्टकादिश्राद्धानां नित्यत्वं काम्यत्वं च ज्ञेयम् । यद्वा नित्यस्यैव श्राद्धस्य प्रयोगात्कर्तुरायुरादिसिद्धिः । नित्ययोरिव दर्शपूर्णमासयोः सूक्तवाकनिर्दिष्टायुरादिफलसिद्धिः ।

अत्र श्राद्धकालातिक्रमे यत्कार्यं तदुच्यते । तत्र ऋष्यशृङ्गः—

" देये पितॄणां श्राद्धे तु आशौचं जायते यदि ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते ॥
एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिंस्तिथौ तस्यां श्राद्धं कुर्यात्प्रयत्नतः " ॥

मासिकविषयमेतत् ।

मरीचिः—" श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृताहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः " ॥

षट्त्रिंशन्मतात्—" मासिकाब्दे तु संप्राप्ते त्वन्तरा मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि विचक्षणाः " ॥

यन्मृताहनि प्रतिमासं क्रियते तदत्र मासिकम् ॥ २६९ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिर्बन्धेऽपरार्के[4] श्राद्धप्रकरणं समाप्तम् ॥ ९ ॥

---

१ क. च. सनातनी । २ क. ग. घ. श्राद्धदे । ३ क. इत्युक्ता° । ४ ख. °बन्धने श्रा° ।

धनं विद्यां भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ॥
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ २६६ ॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ॥
आस्तिकः श्रद्दधानश्चाप्यपेतमदमत्सरः ॥ २६७ ॥

कृत्तिकादिभरण्यन्तेषु नक्षत्रेषु श्राद्धमास्तिकः श्रद्धावान्विगतमत्सरश्च सन्यथाविधि यः पितृभ्यः संप्रयच्छति स यथानक्षत्रक्रमं स्वर्गादीन्कामानाप्नुयात् । ततश्च स्वर्गकामः कृत्तिकासु श्राद्धं कुर्यात् । अपत्यकामो रोहिण्याम् । तेजस्कामो मृगशिरसि । शौर्यकाम आर्द्रायाम् । क्षेत्रकामः पुनर्वस्वोः । बलकामः पुष्ये । पुत्रकामोऽश्लेषायाम् । श्रैष्ठ्यकामो मघासु । सौभाग्यकामः पूर्वासु फल्गुनीषु । समृद्धिकाम उत्तरासु फल्गुनीषु । मुख्यताकामो हस्ते । सुतकामश्चित्रासु । चक्रप्रवृत्तिकामः स्वातौ । पुत्रकामो विशाखायाम् । वाणिज्यकामोऽनुराधासु । अरोगित्वकामो ज्येष्ठायाम् । यशस्कामो मूले । विशोकत्वकामः पूर्वाषाढासु । मुक्तिकाम उत्तराषाढासु । धनकामः श्रवणे । विद्याकामो धनिष्ठासु । भिषक्सिद्धिकामः शतभिषजि । कुप्यकामः पूर्वयोर्भद्रपदयोः । गोकाम उत्तरयोर्भद्रपदयोः । अजाविककामो रेवत्याम् । अश्वकामोऽश्वयुजि । आयुष्कामो भरण्याम् । आ फलप्राप्तेः कृत्तिकादिनक्षत्रे श्राद्धं प्रयोक्तव्यम् । अत एव वायुपुराणे—

" श्राद्धं यः कृत्तिकायोगे करोति सततं नरः "

इत्याद्युक्तम् ॥ २६४ ॥ २६५ ॥ २६६ ॥ २६७ ॥

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ॥
प्रीणयन्ति मनुष्याणां पितॄञ्श्राद्धेन तर्पिताः ॥२६८॥

उक्तं स्वसंबन्धिभ्यः प्रेतेभ्यः श्राद्धं प्रदेयमिति तत्र पित्रादिषु श्राद्धदेवताभूतेषु वस्वादिबुद्धिः कार्येत्यनेन विधीयते । ये पितृपितामहप्रपितामहाः श्राद्धदेवतात्वेन नियुक्ताः शास्त्रेषु ते यथाक्रमं वसुरुद्रादित्या बोद्धव्या इत्यन्वयः । ते वस्वादयः श्राद्धेन तर्पिताः श्राद्धेषु देवतात्वेन निविष्टा मनुष्याणां पित्रादींस्तर्पयन्ति । वस्वादिरूपेण ध्याताः श्राद्धात्तृप्तिमुपयान्तीत्यर्थः । अत एव मनुः—

---

१ ङ. °नं वेदान्भिष° । २ ङ. °नश्च व्यपे° । ३ घ. °रमदश्च । ४ क. °सु प्रवृत्तचक्रका° । ५ ख. °द्धेषु त° । ६ क. ग. घ. °ण ध्याताः ।

कन्यावेदिनो जामातॄन् । तृतीयायां पशून् । चतुर्थ्यां प्रधानान्सुतान् । पञ्चम्यां द्यूतम् । षष्ठ्यां कृषिम् । सप्तम्यां वाणिज्यम् । अष्टम्यां द्विशफं गवादि । नवम्यामेकशफमश्वादि । दशम्यां ब्रह्मवर्चस्विनः पुत्रान् । एकादश्यां स्वर्णरूप्ये । द्वादश्यां कुप्यं त्रपुसीसादिकम् । त्रयोदश्यां ज्ञातीनां मध्ये श्रेष्ठताम् । अमावास्यायां सर्वानुक्तान्कामान् । चतुर्दशी चात्र वर्जनीया । शस्त्रहतेभ्य एव तस्यां श्राद्धं प्रदेयम् । शस्त्रहतग्रहणं शास्त्रान्तरोक्तदुर्मरणप्रदर्शनार्थम् । तत्र ब्रह्मपुराणम्—

" प्रायो[1]नशनशस्त्राग्निविषोद्बन्धनिनां तथा ।
चतुर्दश्यां तु कर्तव्यं तृप्त्यर्थमिति निश्चयः " ॥

वायुपुराणात्—"युवानस्तु गृहे यस्य मृतास्तेषां प्रदापयेत् ।
शस्त्रेण निहता ये वै तेषां दद्याच्चतुर्दशीम् " ॥

मरीचिः—" विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रियाः कार्या अन्येषां तु विगर्हिताः " ॥

इति वचनाच्छस्त्रहतादीनामेव चतुर्दश्यां क्रिया इत्यवधार्यते न तु तस्यामेव तेषामिति । तेनामावस्यादिकालान्तरेष्वपि तेषां श्राद्धं युक्तम् । अत एव देवीपुराणम्—" आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् ।
चतुर्दश्यां भवेत्पूजा ह्यमाव[2]स्या तु कामिकी " ॥

गर्गः—" चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
तदेकोद्दिष्टविधिना कर्तव्यं शस्त्रघातिने " ॥

तथा—" सपिण्डीकरणादूर्ध्वंमृते कृष्णचतुर्दशीम् ।
प्रतिसंवत्सरादन्यदेकोद्दिष्टं न पार्वणम् " ॥

अत्र चैकस्य शस्त्रहतत्व एकोद्दिष्टविधानं न तु त्रयाणां तथात्वे, तत्र पार्वणमेव ॥ २६१ ॥ २६२ ॥ २६३ ॥

नक्षत्रविशेषात्फलविशेषमाह—

**स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ॥**
**ज्ञाति(पुत्रं)श्रैष्ठ्यं सुसौभाग्यं समृद्धिं मुख्यतां सुतान् २६४**
**प्रवृत्तचक्रतां पुत्रान्वाणिज्यप्रभृतींस्तथा ॥**
**अरोगित्वं यशो वीतशोकतां परमां गतिम्॥ २६५ ॥**

---

१ क. ग. घ. °यानाशकश° । २ क. ग. च. छ. °वस्यां तु ।

वैशाखस्य तृतीयायां नवम्यां कार्तिकस्य च ।
श्राद्धं कार्यं च शुक्लायां संक्रान्तिविधिना नरैः " ॥

महाभारते—" नक्षत्रेण न कुर्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्यं तथाऽऽग्नेये च भारत ॥
दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत् " ॥

आग्नेयं कृत्तिकाः । दारुणानि आर्द्राश्लेषाज्येष्ठामूलानि । जन्मनक्षत्रात्पञ्चमं चतुर्दशं त्रयोविंशं च प्रत्यरम् । श्राद्धनिषेधोऽयं कृष्णपक्षश्राद्धविषयः । तद्ध्यनियमेनैकस्यां तिथौ कर्तव्यमिति प्रतिषिद्धं परित्यज्यान्यत्रापि शक्यं कर्तुमिति प्रतिषेधेऽपि नात्यन्तबाधः । अन्यविषयत्वे तु श्राद्धविधेरात्यन्तिको बाध आपद्यते । ज्योतिषम्—

" साधारणध्रुवोग्रेषु मैत्रेऽपि च न शस्यते ।
मनुष्याणां प्रेतक्रिया कथंचित्त्रिपुष्करे यमलधिष्ण्ये च " ॥

साधारणे कृत्तिकाविशाखे । उत्तरात्रयं रोहिणी च ध्रुवाणि । उग्राणि पूर्वात्रयं भरणी मघाश्च । मैत्रमनुराधा । त्रिपुष्करं त्रिपात् । यमलं द्विपात् । पुत्रादिनाऽपि क्रियमाणं श्राद्धं तत्पित्रादीनां तृप्तिलक्षणं फलं साधयतीति शास्त्रप्रामाण्यादाश्रयणीयम् । तथा पित्राऽपि क्रियमाणा वैश्वानरेज्या पुत्रस्य ब्रह्मवर्चसादिकं निष्पादयतीति । एवं च सति पितृतृप्त्याश्रितोऽतिशयो हविर्विशेषात्कालविशेषाद्देशविशेषाच्च भवतीति शक्यं शास्त्रादवगन्तुम् ॥ २६० ॥

कृष्णपक्षे श्राद्धमेकस्यां तिथौ कार्यमित्युक्तं तद्यस्यां क्रियमाणं यस्मै फलाय संपद्यते तदिदानीमाह—

कन्यां कन्यावेदिनश्च पशून्मुख्यान्सुतानपि ॥
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥ २६१ ॥
ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरूप्ये सकुप्यके ॥
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥२६२॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ॥
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ २६३ ॥

प्रतिकृष्णपक्षं सर्वदा प्रतिपदि श्राद्धप्रदः कन्यां प्राप्नोति । एवं द्वितीयायां

---

१ क. °त्रा क्रि° । ग. घ. °त्रादिक्रि° । २ ख. °पदादि ।

( श्राद्धप्रकरणम् ९ )

तस्माद्यत्काम्यं त्रयोदशीश्राद्धं तद्विषयोऽयं निषेधो न पुनर्यन्नित्यं तद्विषयः । अत एवाऽऽपस्तम्बः काम्यस्यैवास्य निन्दामाह—

" सर्वेष्वेवापरपक्षस्याहःसु क्रियमाणं पितॄन्प्रीणाति कर्तुस्तु कालादिनियमात्फलविशेषः । प्रथमेऽहनि क्रियमाणं स्त्रीप्रायमपत्यं जायते । द्वितीये स्तेनास्तृतीये ब्रह्मवर्चस्विनः । चतुर्थे क्षुद्रपशुमान् । पञ्चमे[1] बहुपुमांसो बह्वपत्यो न चा[2]नपत्यः प्रमीयते । षष्ठेऽध्वशीलोऽक्ष[3]शीलश्च । सप्तमे कृषेर्वृद्धिः । अष्टमे पुष्टिर्नवम एकशफो दशमे व्यवहा[4]रे राद्धिः । एकादशे कृष्णायसत्रपुसीसम् । द्वादशे पशुमांस्त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्ति । चतुर्दश आयुधे राद्धिः । पञ्चदशे पुष्टिः" इति ।

सर्वेष्वेवापरपक्षस्याहःसु क्रियमाण इत्यनेनाऽऽपरप[5]क्षिकस्य श्राद्धस्य नित्यत्वमाह । कर्तु[6]स्तु काला[7]नियमात्फलविशेष इत्यनेन तु प्रतिपदादितिथिनियमेन तदैव क्रियमाणं फलविशेषप्रदं भवतीत्याह । तस्मात्काम्यस्यैव त्रयोदशीश्राद्धस्य प्रतिषेधोऽयम् । या तु षट्त्रिंशन्मते मघाश्राद्धस्य निन्दा—

" मघासु कुर्वतः श्राद्धं ज्येष्ठः पुत्रो विनश्यति ।
संक्रान्तावुपवासश्च चन्द्रसूर्यग्रहे तथा "

इति, सा न निषेधं कल्पयति क्लृप्तत्वात्तस्य । तथा च कन्यागतापरपक्षाधिकारे देवीपुराणम्—

" तत्रापि महती पूजा कर्तव्या पितृदैवते ।
ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् " इति ॥

पितृदैवतमृक्षं मघा । पूजा श्राद्धं, तेन पिण्डदानसहितमेव भाद्रपदापरपक्षमघासु श्राद्धं निन्दितम् । न श्राद्धमात्रं पिण्डदानस्यैव प्रतिषिद्धत्वात् । न च निषेधवाक्ये पिण्डदानशब्दः श्राद्धलक्षकः । लक्षणाकारणाभावात् । एवं तावन्मघाश्राद्धं पिण्डदानरहितमुक्तं, श्राद्धान्तराण्यपि पिण्डदानरहितान्युक्तानि मत्स्यपुराणे—

" अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते ॥

---

१ ग. घ. °मे पु° । २ ग. घ. चाप° । ३ ख. च. °क्षयशी° । ४ च. °हारवृद्धिः । ५ क. ग. च. °रपाक्षि° । ६ क. °र्तुस्तात्कालाभिनि° । ७ ग. °लातिनि° ।

त्रयोदश्यां तु वै श्राद्धं न कुर्यात्पुत्रवान्गृही ।
नेष्यते चोपवासश्च कैश्चिदप्ययनद्वये "

इति, तत्रेदं विचारणीयम्—किं सर्वापरपक्षेषु ज्ञातिश्रैष्ठ्यादिकामस्त्रयोदश्यामेवाऽऽपरपाक्षिकं श्राद्धं कुर्यादित्यनेन यद्विहितं तस्यैष निषेधः । यदि वा युगादिषु श्राद्धं कुर्यादितिविधितो भाद्रपदासितत्रयोदश्यां यत्प्राप्तं तस्य निषेधः । यद्वा तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः प्रोष्ठपद्यूर्ध्वं त्रयोदशीव्रीहियवपाकौ चेत्यनेन । तत्र युगादित्वप्रयुक्तं प्रोष्ठपद्यूर्ध्वं त्रयोदशीत्वप्रयुक्तं यच्छ्राद्धं तन्नित्यं तस्य चेदयं प्रतिषेधस्तदा विहितत्वात्प्रतिषिद्धत्वाच्च विकल्प आपद्येतातिरात्रषोडशिग्रहणाग्रहणवत्। नच वाच्यं सामान्यविषयाद्विधेः पुत्रवद्गृहिरूपविशेषविषयो निषेधो बलवानतो न विकल्प इति । यद्विषयो हि निषेधस्तद्विषयां निषेध्यै*प्राप्तिमपेक्षते। प्रसक्तिपूर्वकत्वान्निषेधस्य । ततश्च पुत्रवद्गृहिविषया त्रयोदशीश्राद्धप्राप्तिरस्तीति निषेधादेव गम्यते । अतो हि दुर्निवारो विकल्पः । ननु च नायं प्रसज्यप्रतिषेधः किं तु पर्युदासः, ततश्च पुत्रवद्गृहिव्यतिरिक्तं प्रत्येव श्राद्धविधिरयमतो न विकल्पः । तन्न । तथा सति हि न कुर्यादित्यन्वयो न स्यात् । किं तु न गृही न पुत्रवानिति स्यात् । न चार्थपदक्रमान्यथाभावः कार्यो हेत्वभावात् । नच करोत्यर्थान्वितो नञ्पर्युदासो भवति किं तु नामान्वितो धात्वन्तरान्वितश्च । तस्मान्न नैत्यकत्रयोदशीश्राद्धविषयोऽयं प्रतिषेधः, किं तु काम्यविषय एव । न हि तद्विषयत्वे विकल्पः प्रसज्येत । न हि रागप्राप्तं कलञ्जभक्षणं तत्प्रतिषेधेन विकल्पते । ननु च कलञ्जभक्षणमशास्त्रीयम् । शास्त्रीयश्च तत्प्रतिषेधस्तस्मादविकल्पः । त्रयोदशीश्राद्धं तु काम्यमपि शास्त्रेण विहितम् । अतो युक्तस्तस्य शास्त्रीयेण प्रतिषेधेन विकल्पः । सत्यं विहितं, किं तु फलं प्रत्युपायतया न पुनरनुष्ठेयतया। अनुष्ठेयता च तस्य फलरागनिबन्धनैव । अतो युक्ता कलञ्जभक्षणतुल्यता । येषामपि मते यत्र विधिः पुरुषं प्रवर्तयति तस्य फलसाधनत्वं शास्त्रादवबुध्यत इति, तन्मतेऽपि विषयस्य फलसाधनत्वावगमपरमेव विधेः प्रवर्तकत्वं प्रतीयते, न पुरुषप्रवृत्तिसिद्ध्यर्थं फलरागत एव तत्सिद्धेः । त्रिकालायां ह्यप्राप्तौ विधिरर्थवान् । अत एवाऽऽहुः—

" अप्रवृत्तप्रवर्तको विधिरज्ञातज्ञापकश्च " इति ।

---

* अत्र निषेध्येत्यधिकमिव भाति ।

---

१ ग. घ. च. छ. ज्ञानाति° । २ क. ग. घ. च. 'रपाक्षि° । ३ क. ख. °षेत्रप्रा° । ४ ग. घ. तु गृ° । ५ ग. घ. हेतुभा° । ६ ग. घ. प्रसज्यते । ७ ग. घ. °क्षण° ।

दधिशुक्तं च दातव्यं सर्वत्र दधिसंभवम् ।
दापयेन्मरिचोपेतं युक्तं मधुगुडैरपि " ॥

**पुलस्त्यः**—" मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रदानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥ २५९ ॥

**तथा**—

**वर्षास्वेवं त्रयोदश्यां मघासु चं न संशयः ॥ २६० ॥**

**वर्षासु या त्रयोदशी याश्च मघास्तस्यां तासु च यत्पितृभ्यो ददाति तदपि तृप्तिलक्षणस्य फलस्याऽऽनन्त्यमश्नुते । अनन्तां पितृतृप्तिं साधयतीत्यर्थः । अत्र च प्रोष्ठपद्यपरपक्षे या त्रयोदशी याश्च मघास्ता एव गृह्यन्ते ।**

**मनुः**—" यत्किंचिन्मधुसंयुक्तं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च " ॥

**त्रयोदशीमिति द्वितीया सप्तम्यर्थे ।**

**पितृगाथा**—" अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च " ॥

**वसिष्ठः**—" पिता पितामहश्चैव तथैव प्रपितामहः ।
उपासते सुतं जातं शकुन्ता इव पिप्पलम् ॥
मधुमांसैश्च शाकैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥

**पैठीनसिः**—" अजेन सर्वलोहेन वर्षासु च मघासु च ।
पुत्रो वा यदि वा पौत्रो यो नो दद्यात्त्रयोदशीम् " ॥

**पितृगाथे**—" अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः ॥
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत् ।
कार्तिकं सकलं वाऽपि प्राक्छाये कुञ्जरस्य वा " ॥

**यत्तु बृहस्पतिनोक्तम्**—" कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम् "

**इति, यच्च षट्त्रिंशन्मतम्**—

" गृही त्रयोदशीश्राद्धं न प्रकुर्वीत पुत्रवान् ।
उपवासं च संक्रान्तौ चन्द्रसूर्यग्रहे तथा ॥

---

१ ङ. च विशेषतः ।

नागरं चात्र वै देयं दीर्घमूलकमेव च " ।

आदित्यपुराणे—" मधुकं रामठं[1] चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा " ॥

मार्कण्डेयपुराणे—" यवव्रीही सगोधूमौ तिलमुद्गाः ससर्षपाः ।
प्रियङ्गवः कोविदारो निष्पावाश्चात्र शोभनाः " ॥

वायुपुराणे—" भक्षान्पूपं करम्भं च इष्टकाघृतपूरकान् ।
कृसरा मधुसर्पिश्च पयः पायसमेव च ॥
स्निग्धमुष्णं च यो दद्यादग्निष्टोमफलं लभेत् ।
दधि गव्यमसंसृष्टं भक्ष्यान्नानाविधानपि ॥
दत्त्वा न शोचति श्राद्धे वर्षासु च मघासु च ।
घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेत् ॥
शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः ।
स्युश्च संवत्सरं प्रीताः कुकरैर्मेषकैणकैः ॥
सक्तूँल्लाजांस्तथा पूपान्कुल्माषान्व्यञ्जनैः सह ।
सर्पिःस्निग्धानि सर्वाणि दध्ना संस्कृत्य भोजयेत् ॥
श्राद्धेष्वेतानि यो दद्यात्पितरः प्रीणयन्ति तम् " ।

मत्स्यपुराणे—" यत्किंचिन्मधुना मिश्रं गोक्षीरघृतपायसैः ।
दत्तमक्षयमित्याहुः पितरः[2] पञ्च देवताः[3] " ॥

ब्रह्मपुराणे—" अलाबुं ग्रीवकं चाणु कर्करीं त्रपुसं तथा ।
मधूकं नारिकेलं च लकुचं च हरीतकीम् ॥
मोराक्षं[4] दाधिशाकं च शाकमुत्पलसंज्ञितम् ।
भृङ्गराजमदुष्टानि वन्यानि च निवेदयेत् ॥
अथ मूलानि देयानि शुण्ठ्यार्द्रकबिसानि च ।
तमालं शतकन्दं च बहुसूची च कण्टेकी[5] ॥
कूर्चालकं च पिण्डालं दीर्घमूलं वरूटकम् ।
देयं तक्रं तु सद्यस्कं नवनीतादनुद्धृतम् ॥
पक्वं तु गोरसं देयं घृतात्पक्वादनन्तरम् ।
निर्दोषायाश्च गोः क्षीरं क्वथितं शर्करानुगम् ॥
आरण्यमाहिषीक्षीरं शर्कराशुण्ठिसंयुतम् ।
मध्वाक्तं तुहिनं चैव दद्यादमृतमेव तत् ॥

---

१ क. माठरं । २ ग. °रः पूर्वदे° । ३ क. च. °कैशं त्र° । ४ छ. मनोक्षं । ५ क. छर्दकी ।

यस्य पिबतः कर्णौ जलं स्पृशतः स त्रिपिबस्त्रिभिर्मुखेन कर्णाभ्यां च पिबतीति व्युत्पत्त्या । क्षीणेन्द्रियं संभोगाक्षममजापतिमजमित्यर्थः । तस्य मांसम् ।

तथा—" कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः ।
स वै वाध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः " ॥

तस्य मांसं वा । तथा गयास्थो यद्ददाति च । एतत्सर्वमानन्त्यमक्षयत्वमश्नुते प्राप्नोति । एतज्जनिता तृप्तिरनन्ता भवतीति तात्पर्यार्थः । गयाग्रहणं प्रदर्शनार्थम् । अत एवोक्तम्—

" गङ्गाद्वारे प्रयागे च नैमिषे पुष्करेऽर्बुदे[1] ।
संनिहित्यां गयायां च श्राद्धमक्षयतां व्रजेत् " ॥

अत्र वायुपुराणम्—" श्यामाकैरिक्षुभिश्चैव पितॄणां सार्वकामिकम् ।
कुर्यादा[2]ग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात् ॥
श्यामाका हस्तिनामानो विद्धि तान्यज्ञनिःसृतान् ।
प्रशान्तिकाः प्रियङ्गुश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥
एतान्यपि समानि स्युः श्यामाकानां सदा गुणैः ।
कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः ॥
महायवा व्रीहियवास्तथैव च मधूलिकाः ।
कृष्णाः श्वेता लोहिताश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥
बिल्वामलकमृद्वीकापनसाम्रातदाडिमम् ।
भव्यपा[3]लेवताक्षोटखर्जूरामलकानि च ॥
कशेरुः कोविदारश्च तालकन्दं तथा बिसम् ।
तमालं शतकन्दं च मध्वालुः शीतक[4]न्दकम् ॥
कलायं कालशाकं च सुनिषण्णं सुवर्चला ।
मांसं शाकं दधिक्षीरं चञ्चुर्वेत्राङ्कुरस्तथा ॥
कट्फलं कङ्कणी द्राक्षा लकुचं मोचमेव च ।
कर्कन्धुर्जीरकं चा[5]रं तिन्दुकं मधु[6]साह्वयम् ॥
वैकङ्कतं ना[7]गरिकं शृङ्गाटकपरूषकम् ।
पिप्पली मरिचं चैव पटोलं बृहतीफलम् ॥
सुगन्धिमत्स्यमांसं च कलायाः सर्व एव च ।
एवमादीनि चान्यानि स्वादूनि मधुराणि च ॥

---

१ क. ग. °र्बुधे । सं° । २ क. ग. घ. °दाग्राय° । ३ क. च. °पालीव° । ४ च. °कर्मक° । ५ क. दारं । ६ ख. °धुमाह्व° । ७ ग. नारिकेलं ।

पित्रर्थं मे प्रयच्छस्वेत्युक्त्वा यच्चाप्युपाहृतम् ।
वर्जनीयं सदा सद्भिस्तत्पयः श्राद्धकर्मणि " ॥

मत्स्यस्येदं मांसं मात्स्यं तेन दत्तेन द्वौ मासौ पित्रादयस्तृप्यन्ति । मत्स्यश्चात्र भक्षणार्ह एव पाठीनप्रभृतिर्ज्ञेयः । हरिणस्येदं हारिणम् । एवमौरभ्रादिषु माससंख्यावृद्धिर्द्रष्टव्या । उरभ्रो मेषः । तस्येदमौरभ्रम् । एवं शाकुनादीन्यपि । शकुनिः पक्षी । सोऽप्यत्र शिष्टभोजनीय एव ग्राह्यः । छागः प्रसिद्धः । पृषतश्चित्रमृगः । एणः कृष्णमृगः । लोहितस्तु हरिणः । तदुक्तमायुर्वेदे—

" एणः कृष्णस्तयोर्ज्ञेयस्ताम्रो हरिण उच्यते " ।

रुरुर्मृगविशेषः । वराहोऽत्राऽऽरण्यो न ग्राम्योऽत्यन्ताभक्ष्यत्वात् । शशस्येदं शाशम् ।

अत्र मनुः—" तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते पितरो विधिवन्नृणाम् " ॥

तथा—" वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी " ॥

विष्णुः—" तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः शाकैः श्यामाकैः प्रियङ्गुभिर्नीवारैर्मुद्गैर्गोधूमैर्मासं प्रीयन्ते । नव गावयेनैकादश तूपरेणाजेन " ।

गवयस्येदं गावयम् । तेन नव मासान्प्रीयन्ते । तूपरः शृङ्गहीनः ।

शङ्खः—" लाजान्मधुयुतान्दद्यात्सक्तूञ्शर्करया सह ।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटकगवेधुकम् " ॥[1][2]

शृङ्गाटकं जलजं त्रिकण्टकम् । गवेधुकं शङ्खाकारं तृणविशेषफलम् ॥ ॥ २५७ ॥ २५८ ॥

**खड्गामिषं[3] महाशल्कं मधु मुन्यन्नमेव च ॥**
**लोहामिषं कालशाकं मांसं वाध्रीणसस्य च ॥२५९॥**
**यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ॥**

खड्गो गण्डकाख्यो मृगविशेषः । तदामिषम् । महाशल्को मत्स्यविशेषः । तेन च तन्मांसं लक्ष्यते । मधु क्षौद्रम् । मुन्यन्नमारण्यं नीवारादि सस्यम् । लोहो लोहितच्छागस्तदामिषम् । कालशाकः प्रसिद्धः । वाध्रीणस उक्तो निगमे—

" त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वाध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि " ॥

---

१ ख. घ. °गवीधु° । २ घ. °कं शृङ्गाका° । च. °कं जलजाका° । ३ ङ. °षं महाशा° ।

( श्राद्धप्रकरणम् ९ )

अगृहीतगर्भाऽत्राऽऽर्तवस्नातेत्युच्यते ।

यमः—“ अप्स्वेकं प्लावयेत्पिण्डमेकं पत्न्यै निवेदयेत् ।
एकं च जुहुयादग्नौ त्रयः पिण्डाः प्रकीर्तिताः ” ॥

वायुपुराणे—“ पिण्डमग्नौ सदा दद्याद्भोगार्थी सततं नरः ।
पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मन्त्रपूर्वकम् ॥
उत्तमां गतिमन्विच्छन्गोभ्यो नित्यं प्रयच्छति ।
आज्ञां प्रज्ञां यशः कीर्तिमप्सु पिण्डं निधापयेत् ॥
प्रार्थयन्दीर्घमायुश्च वायसेभ्यः प्रयच्छति ।
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ॥
पितॄणां स्थानमाकाशं दक्षिणादिक्तथैव च ” ।

द्विजोच्छिष्टमार्जने वसिष्ठोऽन्यथाऽऽह—
“ श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् ।
च्योतन्ते वै स्वधाधारास्ताः पिबन्त्यकृतोदकाः ” ॥ २५६ ॥

येन द्रव्येण यावती तृप्तिः पितॄणां भवति तदाह—

**हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ॥**
**मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ २५७ ॥**
**ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ॥**
**मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहाः ॥२५८॥**

हविष्यान्नेन प्रदत्तेन पितृपितामहाद्या उद्देश्या मासं तृप्यन्ति । हविष्यमाह मनुः—

“ मुन्यन्नानि पयःसोमौ मांसं यच्चानुपस्कृतम् ।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते ” ॥

पयसि शृत ओदनः पायसः । तेन दत्तेन वत्सरं यावत्पित्रादयस्तृप्यन्ति । तदुक्तम्—

“ संवत्सरं तु गव्येन पयसा पायसेन च ” इति मनुना ॥

पायसश्चाप्रतिषिद्धपयो(या)ग्राह्यः । तत्र पयोविशेषनिषेधमाह मार्कण्डेयः—
“ मार्गमाविकमौष्ट्रं च सर्वमैकशफं च यत् ।
माहिषं चामरं चैव धेन्वा यच्चाप्यनिर्दशम् ॥

---

१ क. घ. च °जार्थे द° । २ ख. °न्त्यक्षतो° । ३ ग. ङ. °शाकैर्मा° । ४ क. °प्रसिद्धनिषिद्धप° । घ. °प्रसिद्धनिषिद्धपया ग्रा° । च. °प्रसिद्धनिषिद्धपयपरिग्र° । ५ ख. °चापि नि° ।

" जातकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च ।
प्रतिसंवत्सरं श्राद्धं मलमासेऽपि तत्स्मृतम् " इति ॥

अत एव प्रसवनिमित्तोऽन्य एवोत्सवः शिष्टाचारप्राप्तोऽत्र प्रतिषिध्यते । पैतृकमिति चन्द्रसूर्योपरागगजच्छायाश्राद्धादि कथ्यते । यस्याऽऽवश्यकस्य नास्ति कालान्तरम् । अत एव मत्स्यपुराणम्—

" चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षय्यकारकम् " ॥

सत्यः—" देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात् ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरामः ॥ २५५ ॥

**पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥**
**प्रक्षिपेत्सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् ॥२५६॥**

पार्वणादिश्राद्धसंबन्धिनः पिण्डान्गोछागविप्राणामन्यतमाय दद्यादन्यतमं भोजयेदित्यर्थः । अथ वाऽग्नौ जलेऽपि वा प्रक्षिपेत्सत्सु विप्रेषु स्वस्मादासनादनुत्थितेषु तदुच्छिष्टं न मार्जयेन्न शोधयेत् । पिण्डानिति बहुवचनमविवक्षितम् । तेन पत्नीप्राशिते मध्यमपिण्डे पिण्डद्वयस्यापि प्रतिपत्तिः कार्या । अत्र मत्स्यपुराणम्—

" पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
विप्रान्ते वाऽथ विधिवद्वयोभिरथवाऽऽशयेत् ॥
पत्नीं वा मध्यमं पिण्डमाशयेद्विनयान्विताम् ।
आधत्त पितरो गर्भमन्तः संतानवर्धनम् " ॥

वयांसि पक्षिणः ।

मनुः—" पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात्सम्यक्सुतार्थिनी ॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं सात्त्विकं धार्मिकं शुचिम् " ॥

बृहस्पतिः—" अन्यदेशस्थिता पत्नी रोगिणी गर्भिणी तथा ।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति " ॥

शङ्खलिखितौ—" एवं वरान्याचयित्वा नमस्कृत्य पिण्डानप्सु विन्यसेदग्नौ वा निक्षिपेत् । पत्नी वा मध्यमं पिण्डमश्नीयादार्तवस्नाता ।

---

१ क. च. 'क्षय्यका' । २ ख. मनुः । ३ ख. आदत्त ।

इति, तत्सपिण्डीकरणात्प्राक्तनैकोद्दिष्टविषयम् । यच्च वृद्धवसिष्ठेनोक्तम्—

" श्राद्धीयेऽहनि संप्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्वीत ह्येवं कुर्वन्न मुह्यति "

इति, तन्मासिकविषयम् । वार्षिकविषये तु लघुहारीतः—

" प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया बुधैः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् " ॥

अस्यार्थः—सर्वदा द्वादशे मासि परिसमाप्ते त्रयोदशे च प्राप्ते सांवत्सरिकं कार्यमधिमासोपनिपाते तु त्रयोदशे व्यतीते चतुर्दशे च प्रवृत्ते पिण्डक्रिया कार्या । आद्ये तु संवत्सरेऽधिमासे त्रयोदश एवाऽऽब्दिकं कार्यमिति ।

प्रसङ्गादन्यदपि मलमासविषयं किंचिदुच्यते । तत्र बृहस्पतिः—

" नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च " ॥

मत्स्यपुराणे—" चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्यादृत्तमक्षयकारकम् " ॥

वृद्धमनुः—" अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥
मङ्गल्यमाभिषेकं च मलमासे विवर्जयेत् " ।

वृषोत्सर्गस्य च नैकादशाहिकस्य प्रतिषेधः । तस्य नियतकालत्वात्प्रेतोपकारकत्वाच्च ।

" बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते ।
मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥
वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च ।
न कुर्यान्मलमासे च महादानव्रतानि च " ॥

देवदर्शनं सोमेश्वरादिदेवदर्शनं तच्चात्र प्रथमं विवक्षितम् । गृह्यपरिशिष्टात्—

" अवषट्कारहोमाश्च पर्व चाऽऽग्रा(ग्र)यणं तथा ।
मलमासेऽपि कर्तव्यं काम्या इष्टीर्विवर्जयेत् " ॥

पराशरः—" उपाकर्म तथोत्सर्गप्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ पराः कार्या वर्जयित्वा च पैतृकम् " ॥

प्रसवनिमित्तं जातकर्मादि कार्यमेव । अत एवाऽऽह सत्यव्रतः—

---

१ ख. घ. °द्धीयाह° । २ क. च. °दशारम्भे च । ३ क. च. °दशारम्भे प्राप्ते पि° । ४ क. च. °र्थश्राद्धं ग° । ५ ग. स्यादन्नम° ।

प्रतिपदः । पितृसोमकाविति दर्शस्य । एतेन चान्द्रो मास उपलक्षितः । तं मासं समतिक्रम्यान्यस्मिन्मासे यदा सूर्यो राश्यन्तरं गच्छेत्तदा पूर्वो मलिम्लुचः । उत्तरः प्रकृतः ।

शातातपः—" सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
मलमासस्तु स प्रोक्तस्तत्कार्यं तूत्तरे भवेत् " ॥

सिनीवालीमिति सकलसिनीवाल्यन्तमासाभिप्रायम् ।

काठकगृह्ये—" यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत् " ॥

तत्र मलिम्लुचेऽपि मासिकं श्राद्धं कार्यमित्याह कुथुमिः—
" अब्दमम्बुघटं दद्यादन्नं चाऽऽमिषसंयुतम् ।
संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम् " ॥

हारीतः—" असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं पूर्वं सपिण्डीकरणं तथा " ॥

पूर्वं प्रथमसंवत्सरविहितं मासिकम् । न तु दर्शश्राद्धं, तस्य हि तत्र निषेधमाह ऋष्यशृङ्गः—
" संवत्सरातिरेको वै मासो यः स्यात्त्रयोदशः ।
तस्मिंस्त्रयोदशं श्राद्धं न कुर्यादिन्दुसंक्षये " ॥

यत्तु शातातपेनोक्तम्—" एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित् ।
तत्राऽऽद्ये पितृकार्याणि देवकार्याणि चोत्तरे "

इति, तत्सपिण्डीकरणपर्यन्तपितृकार्यविषयम् । अत एव लघुहारीतः—
" सपिण्डीकरणादूर्ध्वं यत्किंचिच्छ्राद्धिकं भवेत् ।
इष्टं वाऽप्यथवा पूर्तं तत्र कुर्यान्मलिम्लुचे " ॥

यत्तु सत्यव्रतः—" वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृताहनि ।
मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथा "

इति, तदधिमासादन्यत्र मृतस्य प्रथमाब्दिकश्राद्धव्यतिरिक्तश्राद्धविषयम् ।

यत्तु गभस्तिवाक्यम्—" न कुर्यान्मलमासे तु कर्मी कर्म कथंचन ।
मुक्त्वा नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्तितम् ॥
एकोद्दिष्टं हि यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तत्कार्यं पूर्वमानेन[१] कालाधिक्येऽपि धर्मतः "

---

१ ख. ग. च. °ने च कालाधिक्ये विधिर्म° ।

लघुहारीतः—" चक्रवत्परिवर्तेत सूर्यः कालवशाद्यतः ।
अतः सांवत्सरं श्राद्धं कर्तव्यं मासचिह्नितम् ॥
मासचिह्नं तु कर्तव्यं पौषमाघाद्यमेव हि ।
अतश्चान्द्रविधानेन मासः स परिकीर्तितः " ॥

पौषादिसंज्ञा चान्द्रस्यैव हि । तथा हि—पुष्येण युक्तश्चन्द्रो यस्यां सा पौषी सा यस्मिन्मासि स पौषो मासः । एवं माघादयोऽपि । यद्यपि त्र्यह-त्र्यहादौ पौर्णमासी भवति तथाऽपि नासौ पौषादिसंज्ञकः । मासार्धमाससंवत्सराणामेव हि पौषादिः संज्ञा न त्र्यहादेस्तदाह पाणिनिः—" साऽस्मिन्पौर्णमासीति संज्ञायाम् " [ ४।२।२१ ] इति । न च सौरसावनमासयोरुक्तप्रकारपौर्णमासीनियमोऽस्ति । तस्माच्चान्द्र एव मासो मासिक आब्दिके च ग्राह्यः । यत्पुनः स्मृत्यन्तरेऽप्युक्तम्—

" यस्मिन्राशौ गते सूर्ये विपत्तिं याति मानवः ।
तद्राशावेव कर्तव्यं पितृकार्यं मृताहनि " ॥

अधिमासमरणविषयमेतत् । यदाह स एव—

" अधिमासे विपत्तिश्चेत्सौरं मासं समाश्रयेत् ।
स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु " इति ॥

अधिमासमृतस्य पुनस्तदधिमासप्राप्तौ सत्यामेतद्वेदितव्यम् । तथा च भृगुः—

" मलमासमृतानां तु यच्छ्राद्धं प्रतिवत्सरम् ।
मलमासे तु तत्कार्यं नान्येषां तु कथंचन " ॥

[ *अन्येषां मलमासमध्येऽमृतानाम् । मलमासमध्ये सांवत्सरिकं न कार्यम् । किं तु तद्व्यपगम इत्यर्थः । ] कः पुनरधिमासो नामेत्यपेक्षायामाह गर्गः—

" यदा चान्द्रेषु मासेषु मेषादिं क्रमते रविः ।
चैत्रादयस्तदोच्यन्ते तदभावे[1]ऽधिमासकः " ॥

लघुहारीतोऽपि—" इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥
तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः[2] स्मृतः " ॥

इन्द्राग्नी यत्र हूयेते इति शुक्लप्रतिपद उपलक्षणम् । अग्नीषोमाविति कृष्ण-

---

* एतच्चिह्नान्तर्गतं न विद्यते ख. ग. घ. छ. ञ. पुस्तकेषु ।

---

१ घ. च. 'भावोऽधि' । २ क. प्राकृतः ।

न्यसेत्पलाशवृत्तानामूर्णासूत्रेण वेष्टयेत् ।
लेपयेद्यवपिष्टेन संस्कुर्याद्विधिवत्ततः ॥
क्षिपेदुदकधारां तु संस्कारान्ते समन्ततः " ।

**वृद्धमनुः**—" जीवन्यदि स आगच्छेद्घृतकुण्डे[1] निमज्ज्य तम् ॥
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ।
व्रतचर्या द्वादशाहं त्रिरात्रमथवाऽस्य तु ॥
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ।
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन[2] वा यजेत् ॥
तथैन्द्राग्नेयपशुना गिरिं गत्वा स[3] तत्र तु ।
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः " ॥

**आयुष्मतीमिष्टिमायुष्कामेष्टिमित्यर्थः । मासिकमाब्दिकं च मृताहे कार्यमित्युक्तम् । तत्राहःशब्देनाहोरात्र उपलक्ष्यते । स च त्रिविधः—सावनः सौर ऐन्दवश्चेति । तदुक्तं ब्रह्मसिद्धान्ते—**

" सावनं स्यादहोरात्रमुदयादुदयो रवेः[4] ।
सौरस्त्रिंशस्तु राश्यंशस्तिथिसंभोगमैन्दवम् " ॥

**मेषादिराशेस्त्रिंशमंशं यावता कालेन रविर्भुङ्क्ते तावान्कालः सौरोऽहोरात्रः । ऐन्दवस्तु प्रतिपदादितिथिपरिमितः । स एव मृताहनीत्यत्र विवक्षितः । तदुक्तम्—**

" मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि ।
प्रत्यब्दं च तथाभूतं क्षयाहं तस्य तं विदुः " ॥

**मासोऽपि पूर्ववत्त्रिविध एव । तदुक्तं ब्रह्मसिद्धान्त एव—**

" दर्शाद्दर्शं चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसंक्रान्तिकचिह्नः सौरो मासोऽभिगद्यते तज्ज्ञैः " ॥

**तथा**—" चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः " ॥

**मासश्चान्द्र एव पितृकार्ये ग्राह्यः । स्मरन्ति हि—**

" विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च मासश्चान्द्रमसः स्मृतः ॥

---

१ क. च. °कुम्भे नि° । २ क. ख. °न योजयेत् । त° । च. °न याजयेत् । त° । ३ ख. ग. घ. समत्र । ४ ग. घ. °वेः । रवेस्त्रि° ।

" न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि " ॥

मृताहे यत्कार्यं तद्विज्ञातमासामावास्यायां कार्यमित्यर्थः ।

" यदा मासो न विज्ञातो विज्ञातं दिनमेव तु ।
तदा मार्गशिरोमासि माघे वा तद्दिनं भवेत् ॥
दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा " इति ॥

अत्र तिथौ दिनशब्दः । *पूर्वोक्तया दिशेत्यस्यायमर्थः—प्रोषितमरणे मासपरिज्ञाने मृततिथिज्ञानाभावे सति परिज्ञातमासामावास्यायां तस्य मृताहकालः । तथा मृततिथिपरिज्ञाने मासज्ञानाभावे सति तदा मार्गशिरोमासि माघमासे वा तस्यां परिज्ञातायां तिथौ तस्य मृताहकालः । तथैव मृततिथिमासापरिज्ञाने प्रस्थानदिनमासौ ग्राह्यौ यस्यां तिथौ मासे वा प्रस्थानं कृतं तत्रैव तस्य मृताहकालस्तत्राप्यभावे मृतवार्ताश्रवणदिने मृताहकाल इति भावः ।

प्रचेताः—" अपरिज्ञाते मृताहेऽमावास्यायां श्रवणदिवसे वा " ।

जातूकर्ण्यः—" पितरि प्रोषिते यस्य न वार्ता नैव वाऽऽगतिः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदादीन्येव सर्वाणि शेषकर्माणि संचरेत् " ॥

स्मृत्यन्तरम्—" न लभ्यते शरीरं चेल्लभ्यन्तेऽस्थीनि चेत्तदा ।
घृतेन तानि संसिच्य संस्कुर्याद्विधिना मृतम् ॥
दग्धान्यस्थीनि संप्राप्य क्षीरेणाऽऽप्लाव्य तानि तु ।
तेषामपि न लाभश्चेत्पलाशानां शतत्रयम् ॥
द्वाषष्ट्यधिकमादाय कुर्यात्तत्प्रतिरूपकम् ।
तत्र द्वात्रिंशतिं(तं) मूर्ध्नि कण्ठे षष्टिं ततः परम् ॥
वक्षस्यशीतिं जघने विंशतिं विंशतिद्वयम् ।
बाह्वोर्दशाङ्गुलीष्वत्र मुष्कयोः षट् च साधने ॥
चत्वार्यूरुद्वये षष्टिं विंशतिं जानुनोस्ततः ।
विंशतिं जङ्घयोः पश्चाद्दश पादाङ्गुलीषु च ॥

---

* इत आरभ्य भाव इत्यन्तग्रन्थो नास्ति ग. घ. छ ञ. पुस्तकेषु ।

---

१ क. ग. च. °तममावा° । २ क. च. °तममावा° । ३ क. ख. घ. छ. यत्र ।

" प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश[१] " ॥

**काष्णाजिनिः**—" अग्निप्रधानं सर्वेषामनुष्ठानं गृहाश्रमे ।
तद्योगात्कृतसाहाय्यः सर्वत्रार्हति पार्वणम् ॥
*निरग्नेरौरसस्योक्तमेकोद्दिष्टं मृताहनि ।
प्रत्यब्दं पार्वणं साग्नेरन्येषां न तु पार्वणम् " ॥

**यत्तु स्मृत्यन्तरम्**—" बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव च ।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम् "

इति, तत्क्षेत्रजादिव्यतिरिक्तविषयम् । अपुत्रकश्राद्धविषयं वा । पुत्रिकापुत्रोऽप्यौरसवत्कुर्यात्तत्समत्वात् । तथा च व्यासः—

" मुख्य एव सुतः कुर्यात्सपिण्डीकरणं पितुः ।
औरसस्तु सुतो मुख्यस्तत्समः पुत्रिकासुतः " ॥

**शङ्खः**—" अमावास्याक्षयो यस्य प्रेतपक्षे[२]ऽथवा यदि ।
सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः " ॥

**प्रेतपक्षो भाद्रपदापरपक्षः ।**

**शातातपः**—" एकोद्दिष्टं जलं पिण्डमशौचं प्रेतसत्क्रियाम् ।
न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे ॥

**गर्गः**—" चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
तदेकोद्दिष्टविधिना कर्तव्यं शस्त्रघातिने " ॥

**तथा**—" सपिण्डीकरणादूर्ध्वमृते कृष्णचतुर्दशीम् ।
प्रतिसंवत्सरादन्यदेकोद्दिष्टं न पार्वणम् " ॥

**प्रजापतिः**—" संक्रान्तावुपरागे च पर्वोत्सवमहालये ।
निर्वपेदत्र पिण्डांस्त्रीनेकतस्तु क्षयेऽहनि " ॥

**कात्यायनः**—" यानि पञ्चदशादीनि अपुत्रस्येतराण्यपि ।
एकस्यैवात्र दातव्यमपुत्रायाश्च सर्वदा " ॥

**आपस्तम्बः**—" अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् " ॥

**अथ मृताहापरिज्ञानविषयाणि वाक्यान्युच्यन्ते । तत्र बृहस्पतिः**—

---

* एतच्छ्लोको न विद्यते क. च. पुस्तकयोः ।

---

१ ख. घ. च. °मे । उद्यो° । २ क. °पक्षोऽथ ।

यल्लघुहारीत आह—" सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ।
पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डता " ॥

शातातपः—" सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
तत्र पार्वणवच्छ्राद्धं ज्ञेयमभ्युदयादृते " इति ॥

तस्यायमपवादः । तस्याप्यन्नं सोदकुम्भमित्येकवचनश्रवणात् । अपिशब्दात्संवत्सरान्ते सपिण्डीकरणेऽप्येतत्कार्यम् ॥ २५४ ॥

अपरमप्यपवादमाह—

**मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ॥**
**प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ २५५ ॥**

यन्मृताहनि संवत्सरं यावत्प्रतिमासं यच्च तत्रैवाहनि प्रतिवर्षं यच्चाऽऽद्यं यच्चैकादशेऽहनि श्राद्धं तदेवं कार्यम् । एकोद्दिष्टविधानेनेत्यर्थः । आद्यशब्देन नवश्राद्धान्युच्यन्ते । मासिकानामाब्दिकस्य चैकोद्दिष्टत्वं न नित्यं पार्वणवद्भावस्यापि विधानात् । यदाह जातूकर्ण्यः—

" पितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः ।
प्रत्यब्दं प्रतिमासं च विधिर्ज्ञेयः सनातनः " ॥

पितृगणस्थः सपिण्डितः । तत्र मासिकेषु [न] व्यवस्थितविकल्पो व्यवस्थापकाभावात् । अत एवाऽऽह कात्यायनः—

" सपिण्डीकरणादूर्ध्वं न दद्यात्प्रातिमासिकम् ।
एकोद्दिष्टविधानेन दद्यादित्याह शौनकः " ॥

अत्रैकोद्दिष्टविधानेन मासिकं दद्यादित्येकः कल्प उक्तः । न दद्यादित्यपरः । सांवत्सरिकश्राद्धे तु व्यवस्थितविकल्पः । तत्र क्षेत्रजौरसपुत्रिकापुत्राणामग्निमत्त्वं पार्वणवत्त्वे व्यवस्थापकम् । तथा श्राद्धोद्देश्यस्यामावास्यायां प्रेतपक्षे वा मृतत्वं यतित्वं वा येन केनचित्क्रियमाणस्य श्राद्धस्य पार्वणत्वव्यवस्थापकम् । शस्त्रहतश्राद्धस्य कृष्णचतुर्दश्यां क्रियमाणत्वं सर्वमेव कर्तारं प्रत्येकोद्दिष्टत्वव्यवस्थापकम् । तथा कर्तुरुद्देश्यस्य वाऽनग्नित्वं तथाऽग्निमतोऽपि कर्तुरौरसक्षेत्रजपुत्रिकापुत्रैर्व्यतिरिक्तत्वमेकोद्दिष्टत्वव्यवस्थापकम् । मृताहिकादन्यत्संक्रान्त्युपरागमहालयादिकालविहितं तत्रैकोद्दिष्टतया विधिरेव नास्तीति तत्पार्वणवदेव कार्यम् । एतां च व्यवस्थामाहुर्मुनयः । तत्र तावज्जातूकर्ण्यः—

१ ग. °द्देश्यस्य । २ ख. °वत्त्वं व्य° । ३ ख. °त्वं सर्वमेव कर्तारं त° । ४ क. च. °त्रत्वव्य° । ५ क. च. °ष्टव्य° ।

शातातपः—" तन्मात्रा च पितामह्या तच्छ्वश्र्वा तु सपिण्डनम् ।
आसुरादिविवाहेषु विन्नानां योषितां स्मृतम् " ॥

तन्मात्रा मातुर्मात्रेत्यर्थः । पितामही च मातुरेव ।

अथ मातुर्गोत्रनिर्णयः । तत्र बृहस्पतिः—

" भर्तुर्गोत्रेण नाम्ना च मातुः कुर्यात्सपिण्डनम् ।
तूष्णीं दंपतिपिण्डाभ्यां कुशैरन्तरयन्पितॄन् " ॥

अन्तरयंस्तिरोदधानः ।

शातातपः—" कुर्याद्गोत्रेण दौहित्रो मातुलेनावनेजनम् ।
पिण्डनिर्वपणं चैव मातुर्मातामहस्य च " ॥

अवनेजनं जलदानम् । यदाह लौगाक्षिः—

" मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः " ॥

मार्कण्डेयः—" ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् " ।

मातुः पितृगोत्रेणेत्यर्थः ।

व्यासः—" पत्या सहैकता तावद्यावत्पुत्रो न जायते ।
पुत्रिकायाः सुतोत्पत्तौ तस्यैकत्वं निवर्तते " ॥ २५२ ॥ २५३ ॥

**अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत् ॥**
**तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने ॥ २५४ ॥**

संवत्सरादर्वागिति संबन्धः । वर्षमित्यत्यन्तसंयोगे द्वितीया । यस्यापि प्रेतस्य संवत्सरपूर्तेः पूर्वमेव द्वादशाहादौ सपिण्डीकरणं भवेत्, तस्यापि संवत्सरं यावत्सोदकुम्भमन्नं द्विजे दद्यात् । तस्येति षष्ठी चतुर्थ्यर्थे द्विजन्मन इति चतुर्थी सम्यक्संप्रदानार्था । दद्यात्संवत्सरं द्विज इतिपाठे सप्तमी यथार्था, श्राद्धे ब्राह्मणस्याऽऽहवनीयार्थत्वात् । संवत्सरमिति चात्यन्तसंयोगे द्वितीया । अतः संवत्सरं यावत्प्रत्यहमन्नं देयम् । तथाचाऽऽपस्तम्बः—

" यस्य संवत्सरादर्वाक्सपिण्डीकरणं कृतम् ।
अब्दमम्बुघटं दद्यात्प्रत्यहं त्वन्नसंयुतम् " ॥

---

१ ख. °ण्ढानां कु° । २ क. घ. च. छ. ञ. बृहस्पतिः । ३ क. °त्तौ पत्यैक° । ४ ङ. °द्यात्संवत्सरं द्विजे ।

अथ मातृसपिण्डीकरणम् । तत्र वृद्धशातातपः—

" मातुः सपिण्डीकरणं कथं कार्यं सुतैर्भवेत् ।
पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम् " ॥

गार्ग्यः—" पत्यैवैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः ।
सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः " ॥

सुमन्तुः—" पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।
माता मातामहे तद्वदित्याह भगवाञ्शिवः " ॥

यमः—" जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम् ।
प्रमीतपितृकः पित्रा तत्पित्रा पुत्रिकासुतः " ॥

तत्पित्रा मातुः पित्रेत्यर्थः । पितुः पितामह्याश्चाभावे व्यवस्थामाह शातातपः-

" मृता याऽनुगता नाथं सा तेन सह पिण्डताम् ।
अर्हति स्वर्गवासं च यावदाभूमिसंप्लवम् " इति ॥

एवं च सत्यन्वारूढविषये जीवन्त्यामजीवन्त्यां वा पितामह्यां पित्रैव सह मातुः सपिण्डनं[1] कार्यम् । अन्यदा तु तत्पित्रा पितामह्या वेति सिद्धम् । यदि पुनः प्रेते पितरि तेनैव सपिण्डनं स्यात्तदा[3]ऽन्वारूढविषयं वचनमनर्थकं भवेत् । तस्य त्वन्वारूढा भर्त्रैव सह सपिण्डनीयेति नियामकत्वेनार्थवत्त्वे[4] सति प्रमीतपितृकः पित्रेतिवचनं न नियमपरं शक्यते वक्तुमित्यनियमसिद्धिः । यत्तु—

" मृते पितरि मातुस्तु न कुर्यात्सहपिण्डताम् ।
पितुरेव सपिण्डत्वे तस्या अपि कृतं भवेत् "

इति, तच्चेत्समूलं स्यात्तदाऽऽपद्विषयतया नेयम् ।

लघुहारीतः—" पुत्रेणैव तु कर्तव्यं सपिण्डीकरणं स्त्रियाः ।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये " ॥

मार्कण्डेयपुराणम्-" स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम् ।
सपिण्डीकरणं तासां पुत्राभावे न विद्यते[5] " ॥

भर्तुरभाव एतत् । यदाह पैठीनसिः—

" अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् " ॥

---

१ ख. °पिण्डीकरणम् । अ° । २ ख °रि नै° । घ. °रि नैव सह पि° । ३ ख. घ. च. °त्तदन्वा° । ४ क. च. °त्वेन सहार्थ° । ५ क. च. °ते । तत्पुत्राभा° ।

न चानुद्दिश्यमानायास्तत्संभवतीति साऽप्युद्देश्या[1]। उद्देशे च सा सह-भावेनैव निविशते न मुख्यत्वेन। तेनोत्पत्तिशिष्टेऽपि पित्रादिदेवतात्वे स्त्रीणामपि देवतात्वमविरुद्धम्। ततश्च प्राग्दर्शान्मातुरपि सपिण्डीकरणविधानं युज्यते। एवं श्राद्धेषु सपत्नीकाः पितृपितामहप्रपितामहा उद्देश्या इत्यपि सिद्धम्। सपिण्डीकरणं कर्तव्यमित्यनुवृत्तौ विष्णुः—

" मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि "।

अमावास्याश्राद्धकारिशूद्रविषयमेतत्। वचनबलादशौचमध्य एव श्राद्धकरणम्। एवं च साग्निकस्य कर्तुः सपिण्डीकरणकालास्त्रय उक्ता भवन्ति। द्वादशाहः। तथाऽशौचान्तप्रथमदर्शयोर्मध्ये किमप्यहः। तथाऽशौचानन्तरं प्रथमो दर्श इति। अनग्नेस्तु चत्वारः कालाः। यदाह गोभिलः—

" पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यदहर्वा वृद्धिरापद्येत "।

पैठीनसिः—" सपिण्डीकरणं पुत्रः पितुः कुर्वीत योऽग्निमान्।
अनग्नेस्तु क्रिया नान्या एकोद्दिष्टादृते क्वचित् "॥

एतदनग्नेः संवत्सरान्ते सपिण्डीकरणं करिष्यतः प्रथमसंवत्सरवर्तिश्राद्धविषयम्।

वृद्धवसिष्ठः—" श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम्।
तद्धानौ तु कृते प्रेतः पितृत्वं न प्रपद्यते "॥

एतदपि पूर्वेण समानविषयम्। विषयान्तरे तु लौगाक्षिराह—

" यस्य संवत्सरादर्वाक्सपिण्डीकरणं भवेत्।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् " इति॥

यत्तु हारीतोक्तम्–" मुख्यं श्राद्धं मासि मासि अपर्याप्तावृत्तं प्रति द्वादशाहेन वा भोज्या एकाहे द्वादशापि वा "

इति, तदसमर्थविषयम्। अपकृष्येत्यनुवृत्तावाहोशना—

" वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत्।
स श्राद्धी नरके घोरे पितृभिः सह पच्यते "॥

अनुपजातायां वृद्धौ यः प्रेतश्राद्धानपकर्षेदित्यर्थः। समर्थविषयं चैतत्। शाट्यायनिः—

" प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा।
अपकृष्यापि कुर्वीत कर्तुं[2] नान्दीमुखं द्विजः "॥

---

१ क. च 'द्देश्यत उ'। २ क. ख. कर्तुर्नांदी°।

( श्राद्धप्रकरणम् ९ )

कर्तुरुद्देश्यस्य च निरग्नित्वे निमित्ते कालोऽत्र नियम्यते तस्य कर्माङ्गत्वेन विधेयत्वात् । यत्तु काले कर्म विधीयते न कर्मणि काल इति न्यायविद्वचनं तदनुपादेयत्वाभिप्रायम् । न पुनरविधेयत्वपरम् । तथा सति तस्याङ्गत्वं न स्यात् । न ह्यविहितमङ्गं भवतीति । वृद्धिरभ्युदयः ।

उशना—“ पितुः सपिण्डीकरणं वार्षिके मृतवत्सरे ।
आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात् ” ॥

लघुहारीतः—“ भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ” ॥

सुमन्तुः—“ अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही ।
प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिण्डनम् ” ॥

अत्रापि पूर्ववत्कालनियमः । अनग्निर्यदा गृही भवेदित्यन्वयः । श्राद्धकर्ता गृही ।

तथा—“ यजमानाऽग्निमात्राजन्प्रेतश्चानग्निमान्भवेत् ।
द्वादशाहे भवेत्कार्यं सपिण्डकरणं सुतैः ” ॥

जाबालिः—“ सपिण्डीकरणं कुर्यात्पूर्वे दर्शेऽग्निमान्सुतः ।
परतो दशरात्रस्य पूर्णेऽब्दे तु तथा परः ” ॥

दशरात्रग्रहणमशौचकालोपलक्षणार्थम् ।

कात्यायनः—“ एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि ।
प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिण्डनम् ” ॥

हारीतः—“ या तु पूर्वममावस्या मृताहाद्दशमाद्भवेत् ।
सपिण्डीकरणं तस्यां कुर्यादेवं सुतोऽग्निमान् ॥
नासपिण्डयाग्निमान्पुत्रः पितृयज्ञं समाचरेत् ।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ” ॥

अस्ति हि पुत्रिकापुत्रस्य पार्वणश्राद्धे मातुर्देवतात्वम् ।

“ मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ”

इत्यादिवचनात् । इतरस्यापि माता पार्वणश्राद्धादौ पितृवत्तृप्तिमुपैतीति गम्यते । उक्तं हि—

“ स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते स्वधासमम् ।
पितामही च स्वेनैव स्वेनैव प्रपितामही ” इति ॥

---

१ च. विधीयमानत्वा° ।

" होमान्तः पितृयज्ञः स्याज्जीवे पितरि जानतः ।
पितरं भोजयित्वा वा पिण्डौ निपृणुयात्परौ ॥
येभ्यः पिण्डं पिता दद्यात्तेभ्यः पुत्रोऽपि दापयेत्[१] ।
जीवे पितरि नो दद्यादित्येषा नैगमी श्रुतिः ॥
जीवेत्पितामहो यस्य पिता चान्तरितो भवेत् ।
पितुरेकस्य दातव्यमेवमाहुर्मनीषिणः ॥
यस्य प्रमीतौ द्वौ स्यातां जीवेच्च प्रपितामहः ।
पिण्डौ निपृणुयात्[२]पूर्वौ भोजयेत्प्रपितामहम् " ॥

षट्त्रिंशन्मतात्—" पित्रा श्राद्धं न कर्तव्यं पुत्राणां च कथंचन[३] ।
भ्रात्रा तु नैव कर्तव्यं भ्रातॄणां च यवीयसाम् " ॥

वृद्धवासिष्ठः—" यतीनां तु न संसर्गः कर्तव्योऽत्र सुतैः सदा ।
त्रिदण्डग्रहणादेव प्रेतत्वं नोपपद्यते[४] " ॥

दण्डापूपिका[५]न्यायेनैतन्मन्तव्यम् । यस्य प्रेतत्वं नास्ति तस्य मरणेऽशौचशङ्कैव केति ।

प्रजापतिः—" सपिण्डीकरणं न स्याद्यतीनां चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते " ॥

बृहस्पतिः—" नवश्राद्धं यतेर्न स्यात्सपिण्डीकरणं तथा ।
अहन्येकादशे प्राप्ते कुर्यात्तस्य तु पार्वणम् " ॥

अत्र नवश्राद्धग्रहणमशेषप्रेतत्वविमुक्त्यर्थकर्मोपलक्षणार्थम् । तथा च शातातपः—

" एकोद्दिष्टं जलं पिण्डमशौचं प्रेतसत्क्रियाम् ।
न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे " ॥

ब्रह्मीभूतो ब्रह्माहमस्मीत्युपासकः ।

अथ कालाः । तत्र भविष्यत्पुराणम्—

" सपिण्डीकरणं कुर्याद्यजमानो ह्यनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥
निराग्निः सहपिण्डत्वं पितुर्मातुश्च धर्मतः ।
पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्[६] " ॥

---

१ क. ख. °त् । न जीवति पित्रे द° । ग. न जीवतिपितृको द° । २ क. च. निवृणु° । ३ क. कदाच° । ४ ग. घ. °ते । प्र° । ५ ख. °पिकन्या° । ६ क. च. °त् । भर्तु° ।

उपस्थाय वदेदेवं मुञ्च मुञ्चामुकं त्विह ।
मधुरं तद्दिने दद्यादेवमब्दं समाचरेत् ॥
सौवर्णं शक्तितो नागं ततो दद्याद्विजन्मने[1] ।
गां सवत्सां ततो दद्यादित्याज्ञा गारुडी तथा ॥
यथाविभागं कर्माणि नागार्थं यत्नतो[2] नरः ।
द्विजान्विमोक्षयित्वा तु सुप्रीताः सन्तु पन्नगाः " ॥

षट्त्रिंशन्मतात्—"पितुः पुत्रेण कर्तव्यं न कुर्वीत पिता सुते ।
अतिस्नेहेन कुर्वीत सपिण्डीकरणं विना " ॥

ब्रह्मपुराणे—" मृते पितरि यस्याथ विद्यते च पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥
तेभ्यस्तु पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् ।
मातर्यथ मृतायां च विद्यते च पितामही ॥
प्रपितामहीपूर्वकं तु कार्यस्तत्राप्ययं विधिः " ।

यत्तु—" व्युत्क्रमाच्च मृतानां तु नैव कार्या सपिण्डता "

इति वचनं तन्मातापितृव्यतिरिक्तप्रेतविषयम् । छन्दोगपरिशिष्टे कात्यायनः—

" न योषिभ्द्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता " ॥

तथा—" पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम् ॥
नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः ।
पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ॥
असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः " ॥

पूर्वौ पितामहौ यत्र केनापि निमित्तेनासंस्कृतावकृतसपिण्डीकरणौ तत्रापि ताभ्यां सह पितरं संस्कुर्यात्सपिण्डयेदित्यर्थः । वाजसनेययज्ञपार्श्वः—

---

१ क. ख. °द्विजोत्तमे । गां । २ क. खं. ग. च. छ. नित्यतो ।

यो ददाति क्रियापिण्डं तस्मै प्रेताय वै सुतः ।
तस्यैवाशौचमुद्दिष्टं ञ्यहमेव न संशयः ॥
विष्णुश्राद्धसमाप्तौ तु त्रयोदश्यां दिनत्रयम् ।
आशौचं पिण्डदः कुर्यान्न तु तद्बन्धुगोत्रजाः " ॥

एवं च प्रतिषिद्धश्राद्धानां मध्ये केषांचिदात्मघातकादीनां नारायणबलिरुक्तः । तत्र ये विधित आत्मानं घातयन्ति तेषां न श्राद्धप्रतिषेधो नापि नारायणबलिविधिः । विधिनिषेधविरोधतोऽप्रतिषिद्धस्य चाप्रत्यवायकरत्वात् । प्रत्यवायकरणस्य मरणस्य श्राद्धप्रतिषेधादिनिमित्तता । तथा च ब्रह्मगर्भः—

" यो जीवितुं न शक्नोति महाव्याध्युपपीडितः ।
सोऽग्न्युदकमहायात्रां कुर्वन्नामुत्र[1] दुष्यति " ॥

विवस्वान—" सर्वेन्द्रियविरक्तस्य वृद्धस्य कृतकर्मणः ।
व्याधितस्येच्छया तीर्थे मरणं तपसोऽधिकम् " ॥

तथा गार्ग्योऽपि गृहस्थमधिकृत्याऽऽह—

" महाप्रस्थानगमनं ज्वलनाम्बुप्रवेशनम् ।
भृगुप्रपतनं चैव वृथा नेच्छेत्तु जीवितम् " ॥

भृगुः पर्वतकटकः । वृथा धर्मानुष्ठानशून्यम् । मनुस्तु वानप्रस्थमधिकृत्याऽऽह—

" अपराजितां चाऽऽस्थाय व्रजेद्दिशमजिह्मगः ।
आनिपाताच्छरीरस्य युक्तो वार्यनिलाशनः " ॥

अपराजिता पूर्वोत्तरेशानदिक्तामाशरीरपातादकुटिलं जलमनिलं वा भक्षयन्समाहितो व्रजेत् ।

" आसां महर्षिचर्याणां त्यक्त्वाऽन्यतमया तनुम् ।
वीतशोकभयो विप्रो ब्रह्मभूयाय कल्पते " ॥

नागसर्पहतं प्रति कार्यविशेष उक्तः स्मृत्यन्तरे—

" प्रमादादिच्छया वाऽपि नागाद्वा सर्पतो मृतः ।
पक्षयोरुभयोर्नागान्पञ्चमीषु प्रपूजयेत् ॥
कुर्यात्पिष्टमयीं लेखां नागप्रतिकृतिं भुवि ।
अर्चयेत्तां सितैः पुष्पैः सुगन्धैश्चन्दनेन तु ॥
प्रदद्याद्धूपदीपौ च तण्डुलांश्च सितान्क्षिपेत् ।
आममिष्टं[2] तथैवान्नं क्षीरं च विनिवेदयेत् ॥

१ ख. °त्र मुह्यति । २ क. घ. °मपिष्टं ।

ततश्चोपवसेदह्नि विप्रांश्चैव निमन्त्रयेत् ।
कुलविद्यातपोयुक्तान्रूपशीलसमन्वितान् ॥
नव सप्ताथ वा पञ्च स्वसामर्थ्यानुसारतः ।
अपरेऽहनि संप्राप्ते मध्याह्ने सुसमाहितः ॥
विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् ।
उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
मनो निवेश्य विष्णौ च सर्वं कुर्यादतन्द्रितः ।
आवाहनादि यत्प्रोक्तं दैवपूर्वं तु तद्भवेत् ॥
तृप्तान्ज्ञात्वा ततो विप्रांस्तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥
एवं पिण्डान्प्रदद्याद्वै दैवं रूपमनुस्मरन् ।
प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ॥
यमाय सपरिवाराय चतुर्थं पिण्डमुत्सृजेत् ।
मृतं संकीर्त्य मनसा गोत्रपूर्वं ततः परम् ॥
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत्क्षिपेत् ।
विप्रानाचामयित्वा तु दक्षिणाभिः समर्चयेत् ॥
एकं वृद्धतमं विप्रं हिरण्येन प्रपूजयेत् ।
गवा वस्त्रेण भूम्या च प्रेतस्य मनसा स्मरन् ॥
ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः ।
क्षिपेयुर्गोत्रमुद्दिश्य नाम बुद्धौ निवेश्य च ॥
बहिर्गत्वा तिलाम्भस्तु तस्मै दद्यात्समाहितः ।
मित्रबन्धुजनैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ॥
एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने ।
समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा " ॥

**वायुपुराणे**—" शुक्लपक्षे तु द्वादश्यां कुर्याच्छ्राद्धं तु वत्सरम् ।
द्वादशाहनि वा कुर्याच्छुक्ले च प्रथमेऽहनि ॥

**स्मृत्यन्तरम्**—यदैव शुध्यति प्रेतो नारायणबलौ कृते ।
तदैव पापनिर्मुक्तः क्रियार्हो जायते तु सः ॥
तदैव स्मरणं तस्य यस्मिन्नहनि शुध्यति ।
सुतैरन्नप्रदानेन विष्णोः संस्मरणक्रमात् ॥

---

१ क. च. °तपूर्वम°। २ क. °त्रभृत्यज°। ३ घ. °दशेऽह°।

स्मृत्यन्तरम्—" विद्युद्द्रोनृपविप्राम्बुशृङ्गिदंष्ट्र्यग्निपातिताः ॥
वृथोत्पन्नमहाक्लीबव्रतिनो नोदभाजनाः " ।

उदभाजना अर्घ्योदकसंसर्गभाजना इत्यर्थः ।

तथा—" ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ॥
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ " ।

सङ्गवर्जितो भिक्षुः ।

स्मृत्यन्तरात्—" स्वेच्छया मरणं विप्र शृङ्गिदंष्ट्रिसरीसृपैः ।
अन्त्यान्त्यजविषोद्बन्धैरात्मना चैव ताडनैः ॥
संपूर्णसर्वगात्राणां विषादाकर्षतोऽथ वा ।
जलाग्निश्वभ्रपातैश्च निराहारादिभिस्तथा ॥
येषामेव भवेत्ते वै कथिताः पापकर्मिणः ।
पाषण्डमाश्रिताश्चैव महापातकिनस्तथा ॥
स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा ।
न तेषां स्नानसंस्कारो न श्राद्धं न सपिण्डनम् ॥
श्राद्धानि षोडशोक्तानि नान्यान्यपि भवन्ति हि[२] " ।

निराहारत्वमत्र रोषवशात्पापिपदं[३]कारं न पुनर्दारिद्र्यभावात् । आरूढपतिता दशदिनाभ्यन्तर एव मृता योषितः ।

" वैतानं प्रक्षिपेत्तोये गृह्याग्निं च चतुष्पथे ।
पात्राणि दाहयेदग्नौ यजमाने वृथा मृते " ॥

साग्निके पापकर्मणीति पाठः ।

" पूर्णे संवत्सरे तेषामथ कार्यं दयालुभिः ।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ॥
विष्णुं यमं च संपूज्य गन्धपुष्पादिभिस्तथा ।
दश पिण्डान्घृताभ्यक्तान्दर्भेषु मधुसंयुतान् ॥
यज्ञोपवीती सतिलान्ध्यायन्विष्णुं यमं तथा ।
दक्षिणाभिमुखस्तूष्णीमेकैकं निर्वपेत्तु तं[४] ॥
उद्धृत्य नियतः पिण्डांस्तीर्थाद्यम्भसि निक्षिपेत् ।
क्षिपंस्तान्कीर्तयेन्नाम गोत्रं तु मृतकस्य तु ॥
पुनरभ्यर्चयेद्विष्णुं यमं कुसुमचन्दनैः ।
धूपदीपैश्च नैवेद्यैर्भक्ष्यभोज्यसमन्वितैः ॥

---

१ क. ख. च. °द्रोवृपवि° । २ ग. घ. हि । वै° । ३ क. च. °दकरं । ४ क. तान् ।

संस्कार्यौ न सपिण्डनीयावित्यर्थः । एतच्च प्रत्यासन्ने सपिण्डीकरणकर्तरि[1] सति द्रष्टव्यम् । असति तु पौत्रादिः कुर्यादेव सपिण्डत्वात् । पापिष्ठमपि शुद्धेनेति पतितादिव्यतिरिक्तविषयम् । तथा च सपिण्डीकरणानुवृत्तौ बैजवापः—

" अभिशस्तपतितभ्रूणघ्नान्स्त्रीरभिचारिणीर्नातिदिशेत् "[2] ।

अतिदेशः सपिण्डनम् ।

गौतमः—" पापकर्मिणो न संसृजेरन्स्त्रियश्चाभिचारिणीः " ।

अथ पतितानित्यधिकृत्याऽऽह वृद्धयाज्ञवल्क्यः—

" सर्पविप्रहतानां च शृङ्गिदंष्ट्रिसरीसृपैः ।
आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् " ॥

[ * श्राद्धमौर्ध्वदैहिकादि । ]

छागलेयः—" चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ॥
उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति " ॥

× तर्हि प्रेतत्वविमोक्ष उदपिण्डदानादिप्राप्तौ चोपायमाह—

" नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ॥
ततस्तेभ्योऽपि दातव्यमन्नमेवं सदक्षिणम् " ।

तत इति नारायणबलिकरणादनन्तरमित्यर्थः ।

वृद्धयाज्ञवल्क्यः—" नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते ।
तस्य शुध्यावहं चैव तद्भवेन्न तदन्यथा " ॥

संग्रहात्—" प्रेतमुद्दिश्य यत्कार्यं कुर्यान्नारायणाय तत् ।
शिवाय वोदकश्राद्धपिण्डनिर्वपणादिकम् " ॥

यमः—" चण्डालैस्तु हता ये च शृङ्गिदंष्ट्रिसरीसृपैः ।
श्राद्धमेषां न कर्तव्यं ब्रह्मदण्डहताश्च ये ॥
महापातकिनां चैव तथा चैवाऽऽत्मघातिनाम् ।
उदकं पिण्डदानं च श्राद्धं चैव तु यत्कृतम् ॥
नोपतिष्ठति तत्सर्वं राक्षसैर्विप्रलुप्यते " ।

---

* एतत् क. च. पुस्तकयोरेव विद्यते । × एतदवतरणं विद्यते क. च. पुस्तकयोरेव ।

---

१ क. च. °रणे क° । ख. °रणं क° । २ क. ग. घ. °शस्तप° ।

इति, तत्प्रवासादिवशात्सपिण्डीकरणासमर्थे पुत्रे सति वेदितव्यम् । सामर्थ्यलाभे सति तु कालात्ययेऽपि पुत्रेणैव कार्यम् । तदुक्तं वायुपुराणे—

" श्राद्धानि षोडशाऽऽपाद्य विदधीत सपिण्डताम् ।
पितुः पुत्रो विधानज्ञ इति पौराणिका विदुः ॥
श्राद्धानि षोडशादत्त्वा कुर्यान्न तु सपिण्डताम् ।
प्रोषितावसिते पुत्रः कालादतिचिरादपि " ॥

प्रोषितावसिते प्रवासावसाने पुत्रोऽतिचिरादपि कालाद्यत्सपिण्डत्वं कुर्यात्तत्षोडश श्राद्धान्यदत्त्वा न कुर्यात्किं तु दत्त्वैवेत्यर्थः । यदि तानि भ्रात्रादिना दत्तानि तदा सपिण्डत्वमेव कुर्यात् ।

तथा—" अज्ञानादथवा मोहान्न कृता चेत्सपिण्डता ।
तत्रापि विधिवत्कार्या कालादतिचिरादपि " ॥

अज्ञानमोहौ सकलासामर्थ्योपलक्षणार्थौ ।

सुमन्तुः—" सुतः सपिण्डीकरणं न कुर्याद्यदि मोहितः ।
यावज्जीवति दुःखार्तो मृतो नरकमाप्नुयात् " ॥

सुतग्रहणमधिकारिमात्रोपलक्षणार्थम् ।

पैठीनसिः—" नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥
विभक्तैस्तु पृथक्कार्यं प्रतिसंवत्सरादिकम् ।
एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् " ॥

कात्यायनः—" पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम् ॥
न तत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः ।
पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ॥
असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः " ॥

असंस्कृतावसपिण्डितौ पितामहप्रपितामहौ पौत्रेण प्रपौत्रेण च न

---

१ च. °शाऽऽसाद्य । २ क. ग. °ण्डनम् । पि° ।

इति, तदुभयमप्यचिरातीतपित्रादिपिण्डविषयमेव। तस्य पिण्डस्य पितामहादिपिण्डत्रयात्प्रागूर्ध्वं वा प्रदानं विहितम्। तत्र यदा पूर्वं दीयते तदाऽसावाद्यः। यदोर्ध्वं तदाऽसावेव चतुर्थः। ततश्च 'आद्यं तु विभजेत्त्रिधा' 'चतुर्थं पिण्डमुत्सृज्य त्रेधं कृत्वा' इत्यादिवाक्यानि तद्विषयाण्येव। तत्रापि चिरातीतस्य पूर्वं पिण्डोदय इत्यभिप्रायेणात्र मुख्यं तु पितरं कृत्वेत्यादि पुराणवचनं प्रमाणम्। अत एव विष्णुः—

"संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय
च ब्राह्मणान्देवपूर्वान्भोजयेत्" इत्युक्तवान्।

शातातपस्तु प्रेतपिण्डस्य पश्चात्प्रदेयतामाह—

"सपिण्डीकरणं श्राद्धं देवपूर्वं नियोजयेत्।
पितॄनेवाऽऽशयेत्तत्र पुनः प्रेतं च निर्दिशेत्" इति॥

उशनसा च—"सपिण्डीकरणे विप्रान्भोजयेत्पार्वणे यथा।
पृथक्च कल्पयेदन्नमेकोद्दिष्टविधानतः" इत्युक्तम्॥

पुराणेऽपि—"श्राद्धद्वयमतिक्रम्य कुर्वीत सहपिण्डताम्।
तयोस्त्रिपुरुषं पूर्वमेकोद्दिष्टं ततः परम्"॥

पितामहादित्रयदै(दे)वत्यं त्रिपुरुषम्। अचिरातीतदै(दे)वत्यमेकोद्दिष्टम्।

अथ सपिण्डीकरणेऽधिकारी निरूप्यते। तत्र पुराणम्—

"पुत्र एव सपिण्डत्वं पित्रोरेव समाचरेत्।
औरसः क्षेत्रजो वाऽपि धर्म एष सनातनः"॥

एष मुख्यः शास्त्रार्थः[3]। पुत्रासंभवेऽन्येषामप्यस्त्यधिकारः[4]। अत एव पैठीनसिः—

"भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सपिण्डीकरणं कुर्यात्पुत्रहीने मृते सति॥
सर्वबन्धुविहीनस्य पत्नी कुर्यात्सपिण्डनम्।
ऋत्विजं कारयेद्वाऽपि पुरोहितमथापि वा"॥

यत्तु सुमन्तुनोक्तम्—"सर्वबन्धुविहीनस्य पत्नी कुर्यादनिन्दिता।
अथ वा शिष्यसब्रह्मऋत्विग्भृत्यपुरोहितैः॥
कारयेत क्रियाः सर्वाः सपिण्डीकरणं विना।
सपिण्डीकरणं पुत्रैः कार्यं नान्यैश्च निश्चितम्"

---

१ ख. घ. प्रधानं। २ ख. °य तत्पिता°। ३ ख. ग. घ. छ. ञ. °र्थः। असं°। ४ ख. ग. °वेऽप्यन्येषामस्त्य°। घ. छ. °वेऽस्त्वन्येषामप्यधि°।

अत्र च पितुः पात्रं पिण्डं च मुख्यं प्रथमं कुर्यात् । तथा पितरि प्रेतशब्दः प्रयुक्त इति गम्यते । पितुः पात्रपिण्डौ पितामहादीनां पात्रेषु पिण्डेषु प्रक्षेप्तव्याविति प्रतीयते । ततश्च यैः कैश्चिदुच्यते पितुर्यः प्रपितामहस्तदीयौ पात्रपिण्डौ त्रिधा कृत्वा पित्रादिपात्रपिण्डेषु निक्षेप्तव्याविति । तदेतद्वचनविरुद्धत्वादुपेक्षणीयम् । शातातपवचनविरो[2]धे[3]श्च । तथा हि—

" प्रेतानामिह सर्वे[4]षां ये मन्त्रै[5]श्च नियोजिताः ।
कृतार्थास्ते हि संवृत्ताः सपिण्डीकरणे कृते ॥
प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ताः पितृगणं तु ते " इति ॥

प्रपितामह इदानीं क्रियमाणात्सपिण्डीकरणात्पितृत्वं [न] प्रतिपद्यते किंतु पूर्वमेवासौ तथा संपन्नस्तस्मात्पितुरेव प्रेतत्वविमुक्तिपूर्विका पितृत्वप्राप्तिः सपिण्डीकरणसाध्या । पितृत्वप्राप्तेश्च प्रयोजनमुक्तं विष्णुपुराणे—

" ततः पितृत्वमापन्ने तस्मिं[6]न्प्रेते महीपते ।
श्राद्धधर्मैरशेषैस्तु तत्पूर्वानर्चयेत्पितॄन् " ॥

न च[7] चतुर्थपुरुषप्रमुखानां(णां) पितॄणां श्राद्धेष्वर्चनाधिकारोऽस्ति तत्परेभ्योऽनधिकारात् । " न चतुर्थं पिण्डं गच्छति " इत्यादिनिषेधेभ्यः ।

विष्णुः—" अर्वाक्सपिण्डीकरणात्प्रेतो भवति वै मृतः ।
प्रेतलोकं गतस्यान्नं सोदकुम्भं प्रयच्छे[8]त ॥
पितृलोकं गतस्यास्य श्राद्धं श्रद्धासमन्वितम् ।
पितृलोकं गतस्यापि तस्माच्छ्राद्धं प्रयच्छत " ॥

इत्यादिवचनार्थपर्यालोचनवशाद्गम्यते—मृतस्य प्राक्सपिण्डीकरणात्कोऽप्यवस्थाविशेषः प्रेतशब्दप्रवृत्तिनिमित्तो भवं[9]ती[10]ति । सपिण्डीकरणादूर्ध्वं तज्जन्यः पितृशब्दप्रवृत्तिनिमित्तभूतः कोऽप्यतिशयस्तत्र जात इति ।

यत्पुनः शातातपेनोक्तम्—" निरुप्य चतुरः पिण्डान्पिण्डदः प्रतिनामतः ।
ये समाना इति द्वाभ्यामाद्यं तु विभजेत्त्रिधा "

इति, यत्तु(च) लौगाक्षिवचनम्—

" चतुर्थं पिण्डमुत्सृज्य त्रेधं कृत्वा पिण्डेषु निर्द[11]द्यात् "

---

१ ख. घ. छ. ञ. पितुः प्र° । २ ग. °विधिश्च । ३ ख. °धविधिश्च । ४ घ. °षां यैर्मन्त्रै° । ५ च. मन्त्राश्च । ६ ख. च. °स्मिन्पूते । ७ क. घ. च. चतु° । ८ क. °च्छतु । पि° । ९ घ. °णाद्° । १० क. च. °वति । स° । ११ ख. °दद्यात् ° ।

( श्राद्धप्रकरणम् ९ )

" पात्राणि कृत्वा चत्वारि पूरयित्वा तिलाम्बुभिः ।
त्रिष्वेकं[1] पितृपात्रेषु प्रसिञ्चेन्नामगोत्रतः " ॥

**शौनकः**—" अथ सपिण्डीकरणं चत्वार्युदकपात्राणि । एकं प्रेतस्य त्रीणीतरेषां प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत् । समानीव आकूतिरित्येवमेव प्रथमं पिण्डं त्रिषु नियोजयेत् । मधुमतीभिः संगच्छतीति द्वाभ्यामेव चतुर्थोऽनुज्ञापितो भवति " इति ।

**ब्रह्मपुराणम्**—" चतुर्थ्यश्चार्घ्यपात्रेभ्य एकं वामेन पाणिना ।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ॥
संसृजतु त्वा पृथिवी ये समाना इति स्मरन् ।
प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ॥
ततः पितामहादिभ्यस्तन्मन्त्रैश्च पृथक्पृथक् ।
ये समाना इति द्वाभ्यां तज्जलं तु समर्पयेत् ॥
अर्घ्यं तेनैव विधिना प्रेतपात्राच्च पूर्ववत् ।
तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च स्वयमाचमेत्[2]+ " ॥

**पितामहादिभ्य इति वचनात्प्रेतशब्देनाचिरातीत उच्यते । न तु प्रपितामहस्य पितेति गम्यते ।**

" अथ तेनैव विधिना दर्भमूलेऽवनेजनम् ।
पितुर्दत्त्वा तु पिण्डं तु दद्याद्भक्त्या तु पूर्ववत् ॥
कृत्वा पिण्डमथाष्टाङ्गं ध्यात्वा तु वसुभास्वरम्[3] ।
सुवर्णरूप्यदर्भैश्च तस्मिन्पिण्डे ततस्त्रिधा ॥
कृत्वा पितामहादिभ्यो विधिवच्चैतमर्पयेत् ।
संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः ॥
एतं मन्त्रं जपेद्भक्त्या समानावर्तमेव च ।
ये समाना इति द्वाभ्यां पितृभ्यः प्रेतमर्पयेत् ।
सुवर्तुलांस्ततस्तांस्त्रीन्पिण्डान्कृत्वा प्रपूजयेत् ॥
अर्घपुष्पैस्तथा धूपैर्दीपमाल्यानुलेपनैः ।
मुख्यं तु पितरं कृत्वा पुनस्त्वन्यान्यथाक्रमम्[4] " ॥

---

* अत्र दीर्घाभावस्त्वार्षः ।

---

१ ख. च. °कं त्रिषु पा° । २ क घ. च. °चरेत् । पि° । ३ क. ग. °भासुर° । ४ ख. °क्रमात् । अ° ।

**बौधायनः**—" संवत्सरं प्रेतपत्नी मधुमांसलवणानि वर्जयेत् । अधः शयीत षण्मासानिति मौद्गल्यः " ।

अब्राह्मणीविषयमेतत् । ब्राह्मणी तु सर्वकालमेव मध्वादि वर्जयेत् ।

**प्रचेताः**—" प्रेतायान्नं सदा देयमब्दं वृत्तिविधानतः ।
एकोद्दिष्टविधानेन सर्वैः पुत्रैः प्रयत्नतः ॥
निनीयाश्मनि पूर्वं तु ततः श्राद्धं प्रकल्पयेत् ।
पश्चात्तु निनयेत्पूर्वं तस्मिन्नेव यथाविधि " ॥

**हारीतः**—" नाऽऽशिषः प्रतिगृह्णन्ति नान्नं विकिरेन्न स्वधां निनयेत् ।
पितृमन्त्रवर्जमश्नत्सु जपः ।
प्रदद्याद्दक्षिणां तेभ्यः सर्वेभ्यश्चानुपूर्वशः ।
यथाशक्ति प्रदद्याच्च गोभूहेमादिकं तथा ॥
नवानि भाण्डानि येष्वन्नं संस्क्रियते येषु भुज्यते तानि भुक्तवद्भ्यो दद्यात् " ॥

**तथा**—" नाग्नौकरणमन्त्राश्च एकं चात्र तिलोदकम् " ।

प्राक्सपिण्डीकरणान्त एव स्वस्तीत्युक्त्वा नवेषु विसर्गः ।
" अनुद्दिश्य हि प्रेताय सर्वं तत्रैव दीयते " ॥ २५० ॥ २५१ ॥

अथ सपिण्डीकरणमाह—

**गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ॥**
**अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ २५२ ॥**
**ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥**
**एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ २५३ ॥**

गन्धैश्चन्दनादिभिरुदकेन तिलैश्च युक्तं पात्रचतुष्टयं प्रेतादिभ्योऽर्घ्यं दातुं कुर्यात्[1] । तत्र प्रेतायार्घ्यं दत्त्वा तत्पात्रस्थं जलं पितामहादिपात्रेषु त्रिपु " ये समानाः " इति द्वाभ्यामनुष्टुब्भ्यां प्रजापतिदृष्टाभ्यां यथाक्रमं पितृजीवदेवताभ्यां प्रसिञ्चेत्[2] । शेषं तु कर्म ब्राह्मणनिमन्त्रणादि पार्वणवदाचरेत् । एतदुक्तप्रकारं पितामहादिदै(दे)वत्यं[3] पार्वणं[4] प्रेतदै(दे)वत्यं चैकोदिष्टं श्राद्धं सपिण्डीकरणसंज्ञकं वेदितव्यम् । स्त्रिया अपि चैतत्कार्यं न पुनः पुरुषस्यैव । अत्र भविष्यत्पुराणम्—

---

१ ख. घ. 'समयल' । २ ख. °भ्योऽर्घ्यदानं दद्या° । ३ क. ग. °त्यं चै° । ४ घ. च. °णं च प्रे° ।

एकोद्दिष्टेषु सर्वेष्विति नवश्राद्धाभिप्रायम् । तत्रावशिष्टमन्नं भोक्तृभ्य एव देयम् । मङ्गलभोजनं सांवत्सरिकैकोद्दिष्टावशिष्टम् । अत एवाङ्गिराः—

" नवश्राद्धेषु यच्छिष्टं गृहपर्युषितं च यत् ।
दंपत्योर्भुक्तशिष्टं च तन्न भुञ्जीत कर्हिचित् " ॥

बृहस्पतिः—" चतुर्थेऽहनि विप्रेभ्यो देयमन्नं हि बान्धवैः ।
गावः सवर्णं वित्तं च प्रेतमुद्दिश्य शक्तितः " ॥

चतुर्थेऽस्थिसंचयनाह इत्यर्थः ।

" यदिष्टं जीवतश्चाऽऽसीत्तद्द्यात्तस्य यत्नतः " ।

तस्य जीवत इत्यन्वयः ।

सत्यव्रतः—" प्रातरुत्थाय प्रेतब्राह्मणानेकादशाऽऽमन्त्र्यापराह्णे नाना-भक्ष्यान्नरसविन्यासैरेकैकमुद्दिश्य विधिवत्पिण्डदानम् । वासो हिरण्यदास्युपानच्छत्रोदकुम्भदक्षिणाः । गुणवति पात्रे शय्याप्रदानं ततः स्वस्त्ययनादि धर्माः प्रवर्तन्ते* दशम्यामतीतायामेकैकं तमुद्दिश्य भोजयेत् । तेषामेवै-कस्मै गुणवते शय्या " ।

विष्णुः—" द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात् " ।

व्यासः—" पुत्रः पत्नी च वपनं कुर्यादन्ते यथाविधि ।
पिण्डदानोचितोऽन्योऽपि कुर्यादित्थं समाहितः " ॥

तथा—" अशौचान्तदिने क्षौरं जनन्यां च गुरौ तथा " ।

संस्थितायां जनन्यां गुरौ संस्थित इत्यर्थः ।

स्मृत्यन्तरम्—" नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
नवश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥
एकादश्यां तु नन्दायां सिनीवाल्यां भृगोर्दिने ।
नभस्यस्य चतुर्दश्यां कृत्तिकासु त्रिपुष्करे " ॥

यो नन्दायां निषेधः स एकादश्यामेव । शुक्रेऽमावास्यायामेव । चतुर्दश्यां भाद्रपदचतुर्दश्यामेव । त्रिपुष्करे कृत्तिकास्वेव ।

---

* इतः प्रभृत्यधिकमुपलभ्यते—"इति पिण्डदानं नानाभक्ष्यान्नरसैर्मिश्रं पिण्डदानं ब्राह्मणेभ्यो भोजनार्थं देयं तद्विशेषभाषया पित्र इति कथयन्ति " इत्येवं क. ञ. पुस्तकयोः ।

पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया ।
प्रभातायां च शर्वर्यामुदिते च दिवाकरे ॥
कारयित्वा श्मश्रुकर्म नखच्छेदस्ततः परम् ।
स्नापनाभ्यञ्जनं दद्याद्विप्राय विधिपूर्वकम् ॥
गृह्णीयाद्भूमिभागं च स्थण्डिलं तदनन्तरम् ।
निपानदेशं संगृह्य कर्तव्यं स्थण्डिलं महत् ॥
नदीकूले निवासे वा प्रेतभूमिं विनिर्दिशेत् ।
अकृत्वा भूमिभागं तु निर्गतं ये न कुर्वते ॥
तदध्वनि जगद्भद्रे तदुच्छिष्टं कृतं भवेत् ।
न देवाः पितरस्तस्य गृह्णन्तीह कदाचन ॥
पतन्ति निरये घोरे तेनोच्छिष्टेन सुन्दरि ।
सतैलं स्नपनं कृत्वा गत्वा चैव महानदीम् ॥
तीर्थानि मनसा ध्यात्वा तैः स्वमभ्युक्षयेद्बुधः ।
एवं शुद्धिं ततः कृत्वा ब्राह्मणं शीघ्रमानयेत् ॥
आनीतं च द्विजं दृष्ट्वा कर्तव्या स्वागतक्रिया ।
अर्घ्यं पाद्यं ततः कृत्वा हृष्टतुष्टेन माधवि ॥
आसनं चोपकल्पेत मन्त्रेण विधिपूर्वकम् ” ।

**तथा**—“ उपवेश्याऽऽसने भद्रे छत्रं तत्र प्रकल्पयेत् ” ।

**आवरणार्थं छत्रं तद्ब्राह्मणाय प्रदीयते ।**

पश्चादुपानहौ दद्यात्पादस्पर्शकरे शुभे ।
संतप्तवालुकां भूमिमसिकण्टकितां तथा ॥
संतारयति दुर्गाणि प्रेतं दददुपानहौ ।
तिलोपचारं कृत्वा तु विप्रस्य नियतात्मवान् ॥
नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रमाह्वानयेद्भूमिं दर्भहस्तोऽथ भूतले ॥

मन्त्रः—इमं लोकं परित्यज्य गतोऽसि परमां गतिम् ।
एवमाह्वाय तं गन्धपुष्पधूपान्समर्पयेत् ” ॥

**देवलः**—“ एकोद्दिष्टेषु सर्वेषु ब्राह्मणेभ्यः समुत्सृजेत् ।
ततः कामं तु भुञ्जीत स्वयं मङ्गलभोजने ” ॥

---

१ च. गत्वा । २ क. घ. च. आवार° । ३ ख. ग. तु प्रविश्य नि° ।

( श्राद्धप्रकरणम् ९ )

**भविष्यत्पुराणे**–" नवश्राद्धं त्रिपक्षं च[1] षाण्मासं[2] मासिकानि च ।
न करोति सुतो यस्य तस्याधः पितरो गताः " ॥

**व्यासः**—" द्वादशाहे त्रिपक्षे च षाण्मासे मासिकेऽब्दिके ।
श्राद्धानि षोडशैतानि संस्मृतानि[3] मनीषिभिः ॥
षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते " ।

**आश्वलायनपरिशिष्टम्**–" नवश्राद्धं दशाहानि नवमिश्रं तु षड्ऋतून् ।
अतः परं पुराणं स्यात्रिविधं श्राद्धमुच्यते " ॥

**न चानेनैकादशाहिकस्य नवश्राद्धत्वं व्यावर्त्यते । वचनान्तरैस्तद्भावस्य विहितत्वात् ।**

**भविष्यत्पुराणे**–" नवश्राद्धादिश्राद्धानि यस्य वै न कृतानि सः ।
नाधिकारी भवेत्तत्र मासषाण्मासिकाब्दिके[4] " ॥

**शौनकगृह्यपरिशिष्टात्**–" प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यताम् ।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम् ॥
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते ।
पितृशब्दं न कुर्वीत पितृहा चोपजायते " ॥

**सपिण्डीकरणात्प्राक्तनैको[5]द्दिष्टविषयमेतत् ।**

**बह्वृचगृह्यपरिशिष्टे**—" असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात्सदशाहं समापयेत् ॥
अनूदकमधूपं च गन्धमाल्यविवर्जितम् ।
नवश्राद्धममन्त्रं चै पिण्डोदकविवर्जितम् " ॥

**अनूदकमनर्घ्यम् । पिण्डोदकमवनेजनम् ।**

**वराहपुराणे**—" श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रिया ।
गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः[6] ॥
मनसा वायुभूतेन विप्रे त्वाऽहं नियोजये ।
पूजयिष्यामि भोगैस्त्वामेवं विप्रं निमन्त्रयेत्[7] ॥
अस्तं गते तथाऽऽदित्ये गत्वा विप्रनिवेशनम् ।
दत्त्वा तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम् ॥

---

१ ग. च षण्मासं । २ क. षण्मासे । ३ क. च. संमता । ४ ख. °सिकेऽब्दि° । ५ ख. च सपि° । ६ ख. °तात्पयः । म° । ७ ख. मन्त्रं ।

एवं च सत्येकादशाहिकान्नवश्राद्धादाशौचान्तकार्यं ब्राह्मणभोजनं कर्मान्तरम् ।

**व्यासः**—" प्रथमे सप्तमे चैव नवमैकादशे तथा ।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते " ॥

**बह्वृचगृह्यपरिशिष्टे**—" नवश्राद्धं सह दद्युः " न पुनः प्रत्येकमित्यर्थः । नवश्राद्धग्रहणं प्रदर्शनार्थम् । अत एव प्रचेताः—

" एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः ।
कुर्युर्नैकैकशः श्राद्धमाब्दिकं[1] तु पृथक्पृथक् " ॥
अर्वाक्संवत्सरात्सर्वे कुर्युः श्राद्धं समेत्य वै ।
संवत्सरे व्यतीते तु कुर्युः श्राद्धं पृथक्पृथक् " ॥

**उशना**—" नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव हि कार्याणि संविभक्तधनैरपि " ॥

**एकेन ज्येष्ठेनेत्यर्थः ।**

**शातातपः**—" एकादशेऽह्नि यच्छ्राद्धं मातापित्रोस्तु दीयते ।
तत्समेतैस्तु कर्तव्यं पूर्वं चैव पृथक्पृथक् " ॥

**पूर्वं पुराणमाब्दिकादिकम् ।**

**मरीचिः**—" सर्वैरनुमतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
धनेन चाविभक्तेन सर्वैरेव कृतं भवेत् " ॥

**व्याघ्रः**—" प्रेतस्य प्रेतकार्याणि अकृत्वा धनहारकः ।
वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेत् " ॥

**तथा**—" देयानि वेश्मशुद्ध्यर्थं नवश्राद्धानि यत्नतः ।
ततः प्रेतविशुद्ध्यर्थं मृताहनि तु वत्सरम्[2] " ॥

**गृहविशुद्ध्यर्थमिति गृहे प्रविष्टयमकिंकरतृप्त्यर्थम् ।**

" शौचे तु सूतकं चेत्स्यान्निशाशेषे तथैव च ।
नवश्राद्धानि देयानि यथाकालं यथाक्रमम् ॥
यस्यैतानि न दीयन्त एकोद्दिष्टानि षोडश ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि " ॥

**वृद्धवसिष्ठः**—" अलब्ध्वा तु नवश्राद्धं प्रेतत्वाच्च न मुच्यते ।
अर्वाक्तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतम् " ॥

---

१ ख. घ. °माह्निकं । २ ख. ग. घ. छ. ञ. °म् । शौ° ।

अतिक्रम्य समाप्येत्यर्थः ।

ब्रह्मपुराणे—" नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसंख्यया ।
कर्तव्याः श्रुतितश्चैषां तत्र विप्रांश्च तर्पयेत् " ॥

अस्माच्च पूर्णे मासि मासिकं कार्यमिति गम्यते ।

शङ्खः—" आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः " ॥

पैठीनसिः—" सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासमाधिषु " ॥

[ +अपिशब्दोऽत्राशौचे सत्यपीति गमयति । ]

मत्स्यपुराणम्—" एकादशेऽहनि तथा विप्रानेकादशैव तु ।
पुत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ॥
द्वितीयेऽह्नि पुनस्तद्वदेकोद्दिष्टं समाचरेत् " ॥

[ *सूतकान्त इति ब्राह्मणस्यैव तद्विषयम्(?) । क्षत्रियवैश्यशूद्राणां तु । ]

वृद्धवसिष्ठः—" सप्तमे च तृतीये च प्रथमे नवमे तथा ।
एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् " ॥

चतुर्णां वर्णानां सामान्यमित्यर्थः । तर्ह्यशौचकालस्य दत्तस्तिलाञ्जलिरित्याशङ्क्याऽऽह स एव—

" चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक् " ॥

सूतकमशौचमित्यर्थः । एषां मध्ये नवश्राद्धान्याह यमः—

" चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
यद[3]त्र दीयते जन्तोर्नवश्राद्धं तदुच्यते " ॥

तथा—" यस्य संचयनादर्वागाहिताग्नेर्द्विजन्मनः ।
अयुग्मान्भोजयेद्विप्रांस्तन्नवश्राद्धमुच्यते " ॥

अत्रिः—" प्रेतार्थं सूतकान्ते तु ब्राह्मणान्भोजयेद्दश ।
नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि " ॥

---

+ एतच्चिह्नान्तर्गतं न विद्यते ख. ग. घ. छ. ञ. पुस्तकेषु । * धनुश्चिह्नान्तर्गतं नास्ति ख. ग. घ. छ. ञ. पुस्तकेषु ।

---

१ क. च. श्राद्धाः षोडश° । २ क. कर्तव्यं । ३ क. °दन्नं दी° ।

तथा—" द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणं चैवमित्येतच्छ्राद्धषोडशम् " ॥

षाण्मासिके इत्यनेन विहितयोः श्राद्धयोर्निरूपणार्थमाह—

" एकाह्नेन तु[1] षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनः संवत्सरश्चैवं स्यातां षाण्मासिके तदा " ॥

एकेनाह्ना त्रिभिर्वाऽहोभिर्यदा षण्मासा[2] न्यूनाः स्युः संवत्सरश्च तावत्संख्यया न्यूनोऽस्ति तदा षाण्मासिके श्राद्धे कार्ये इत्यर्थः ।

भविष्यत्पुराणे—" अकृत्वा षोडशैतानि कृत्वा वर्षशतायुतम् ।
न मुच्यते तु प्रेतत्वाद्यथाऽऽह भगवाञ्शिवः ॥
अर्वागब्दात्प्रमीतस्य यस्य मासास्त्रयोदश ।
श्राद्धं तस्यापि कर्तव्यं प्रतिमासं तु वत्सरम् " ॥

तथा—" मृताहनि तु दातव्यं प्रेताय सुखमिच्छता ।
मृताहनि तु दत्तेन मुच्यते कर्मणोऽशुभात् ॥
अस्थिसंचयने श्राद्धं त्रिपक्षे मासिकानि तु ।
रिक्तयोश्च तथा तिथ्योः प्रेतश्राद्धानि षोडश " ॥

रिक्तयोस्तिथ्योरेकेनाह्ना न्यूने षष्ठे द्वादशे च मास इत्यर्थः । तथा च पैठीनसिः—

" षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि च " ॥

तथा—" सपिण्डीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥
प्रेतसंस्कारकर्माणि यानि श्राद्धानि षोडश ।
यथाकाले तु कार्याणि नान्यथा मुच्यते ततः " ॥

अनेनेदमुच्यते—सपिण्डीकरणे द्वादशाहादौ कृतेऽपि मासिकानि प्रतिमासमेव कार्याणीति । तानि च यद्यप्येकोद्दिष्टानि प्रेतत्वविमोचनार्थानि[3] च तथाऽपि[4] तानि मन्त्रवन्ति न पुनर्नवश्राद्धवदमन्त्रकाणि । यदाह पैठीनसिः—

" नवश्राद्धमतिक्रम्य मृताहनि तु मासिकम् ।
प्रेतमुद्दिश्य मन्त्रैस्तु वत्सरं निर्वपेत्सुतः " ॥

---

१ ख. च तु षाण्मा° । २ क. च. °सिके कार्ये आब्दिके च कार्ये इ° । ख. °सिकाब्दिके । ३ ख. च. °चकार्था° । ४ ख. च °पि च ता° ।

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ॥
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥ २५० ॥
उपतिष्ठतामित्यक्षय्यस्थाने[1] विप्रविसर्जने ॥
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ॥२५१॥

एकमुद्दिश्य यत्क्रियते श्राद्धं तदेकोद्दिष्टम्। तद्दैवहीनं विश्वे(श्व)देवरहितम्। तत्रैकमर्घ्यं पवित्रमप्येकमावाहनमन्त्रेणाग्नौकरणेन[2] च रहितम्। यत्पार्वणे यज्ञोपवीतवत्कर्म तदिहापसव्यवत्कार्यम्। अपसव्यं प्राचीनावीतम्। "उपतिष्ठताम्" इति मन्त्रः प्रकृतस्याक्षय्यमस्त्वितिमन्त्रस्य कार्ये प्रयोज्यो विप्रविसर्जनेऽभिरम्यतामिति वदेत्। न तु "वाजेवाजे" इति। विप्राश्चाभिरताः स्म इति प्रतिब्रूयुः। एकस्यैकोद्देशस्य बहुविप्रनियोजनपक्षे बहुवचनम्।

कात्यायनः—"अथैकोद्दिष्टमेकमर्घ्यमेकं पवित्रकमेकः पिण्डो नाऽऽवाहनं नाग्नौकरणं नात्र विश्वे देवाः स्वधितमिति तृप्तिप्रश्नः सुस्वधितमित्यनुज्ञानम्। उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इत्यपरे"।

शातातपः—"एकोद्दिष्टं तु यच्छ्राद्धं नैमित्तिकमिहोच्यते।
तदप्यदैवं कर्तव्यमयुग्मानाशयेद्द्विजान्" ॥

एकोद्दिष्टमुक्तं तच्च त्रिविधम्। नवं मिश्रं पुराणं च। तत्रैकादशाहान्तं नवम्। तदूर्ध्वमासंवत्सरान्मिश्रम्। तत उत्तरं पुराणम्। तत्र नवमिश्रविषया विधयस्तावदुच्यन्ते। तत्र व्याघ्रः—

"एकादशे चतुर्थे च मासि मासि च वत्सरम्।
प्रतिसंवत्सरं चैवमेकोद्दिष्टं मृताहनि* " ॥

कात्यायनः—"श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि।
ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा" ॥

त्रैपक्षिकादूर्ध्वानि ध्रुवाणि। अत एवाऽऽह जातूकर्ण्यः—
"ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत् ॥
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः" इति ॥

---

* इत ऊर्ध्वं—"प्रतिसंवत्सरं चैवमित्यनेन चतुर्थवत्सरे शुद्धश्राद्धं त्रिपौरुषं विधेयमिति गम्यते" इति क. च. पुस्तकयोः।

---

१ क. ख. °क्षयस्था°। २ ख. °हनेनाग्नौ°। ३ क. ग ङ. °क्षय्यस्था°।

अक्षय्योदकदानं च अर्घ्यदानवदिष्यते ।
षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन ॥
प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः ।
पवित्रान्तर्हितान्पिण्डान्सिञ्चे[1]दु[2]त्तानपा[3]त्रकृत् ॥
युग्मानेव स्वस्तिवाच्य अङ्गुष्ठग्रहणं सदा ।
कृत्वा धुर्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः ” ॥

धुर्यः पङ्क्तिमूर्धन्यः । आश्वलायनगृह्यपरिशिष्टम्—

“ आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यात् । उदङ्मुखेभ्यो वा प्राङ्मुखः । द्वौ दर्भौ पवित्रे [4]सोपयामानि पात्राणि चत्वारि शं नो देवीरित्यभिमन्त्रितासु यवानावपति । यवोऽसि सोमदेवत्यो गो[5]सवो देवनिर्मितः । [6]प्रत्नवद्भिः [7]प्रभुस्तुष्ट्या नान्दीमुखाँल्लोकान्प्रीणयाहि नः स्वाहेति पितरः प्रीयन्तामित्येषां प्रतिग्रहणं विसर्जनं च । एवमुत्तरयोः पितृपितामहयोर्नित्यं चाग्नौकरणम् । स्वाहाकारेण होमश्च । अतो देवा अवन्तु न इत्यङ्गुष्ठग्रहः । इदं विष्णुर्वि चक्रम इत्यत्र पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेत् । भुक्त्वा च येषु पिण्डदानमाशयान्गोमयेनोप[8]लिप्य तेषु प्रागग्रान्कुशानास्तीर्यालंकृत्य पृथगाज्यमिश्रं[9]गुडौदनो हविः [10]सर्वत्र तस्यार्धेन द्वेद्वे आज्याहुतीर्जुहुयात् । नान्दीमुखाः पितरः प्रीयन्तामिति विसृजेत् । प्रदक्षिणमुपचारः । यवैस्तिलार्थः सर्वं द्विर्द्विः ” इति ।

भविष्यत्पुराणम्—“ पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप ।
वृद्धिश्राद्धे महाबाहो [11]लोके धर्ममपेक्षते ” ॥

[12]इति नान्दीमुखश्राद्धविधानम् ॥ २४९ ॥

अथैकोद्दिष्टप्रयोगविधिमाह —

---

१ ख. °दुत्थानपानकृ° । २ ग. °नमात्रवत् । यु° । ३ घ. °त्रवत् । यु° । ४ ग. सोमया° । ५ ख. °सवे दे° । ६ क. ग. प्रत्तव° । क. प्रतस्तु° । ७ ग. प्रभुः पुष्ट्या । ८ क. °लिप्तेषु । ९ ग. घ. °श्र ओदनो । १० ष. सकृत्तस्या° । ११ च. लोको धर्ममुपे° । १२ ख. इत्याभ्युदयिकश्राद्धना° ।

( श्राद्धप्रकरणम् ९ )

तथा—" मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं [1]सोऽत्र मधुमन्त्रविवर्जितः ॥
न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम् ।
अन्य एव जपः कार्यः सोमसामादिकः शुभः ॥
यस्तस्य प्रकरोऽन्नस्य तिलमान्यवमांस्तथा ।
उच्छिष्टसंनिधौ सोऽत्र तृप्तेषु विपरीतकः ॥
संपन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते ।
सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥
प्रागग्रेषु तु दर्भेषु आद्यमामन्त्र्य पूर्ववत् ।
[2]अपः [3]क्षिपेन्मूलदेशेऽवने[4]निध्वेति निस्तिलाः " ॥

आद्यः पङ्क्तिमूर्धन्यो विप्रः ।

" द्वितीये च तृतीये च मध्यदेशाग्रदेशयोः ।
मातामहप्रभृतींस्तु एतेषामेव वामतः ॥
सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ।
संयोज्याक्षतकर्कन्धुदधिभिः प्राङ्मुखस्ततः ॥
अवनेजनवत्पिण्डान्दत्त्वा बिल्वप्रमाणकान् ।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥
उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरः ।
भवेदधश्च करणादधरः श्राद्धकर्मसु ॥
तस्मात्सर्वेषु श्राद्धेषु वृद्धिमत्स्वितरेषु च ।
मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेत् ॥
गन्धादीनि क्षिपेत्तूष्णीं तत आचामयेद्द्विजान् ।
अन्यत्राप्येष एव स्याद्यवादिरहितो विधिः ॥
दक्षिणाप्रवणे देशे दक्षिणाभिमुखस्य च ।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः ॥
अथाग्रभूमिमासिञ्चेत्[5]सम्यक्प्रोक्षितमस्त्विति ।
शिवा आपः सन्त्विति च युग्मानेवोदकेन च ॥
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम् ।
अक्षतं चारिष्टं चास्त्वित्यक्षतान्प्रतिपादयेत् ॥

---

१ क. सोममधु॰ । २ ख. अपक्षि॰ । ३ क. घ. च. छ. ञ. ॰क्षिपन्मू॰ । ४ क. ॰निजति ।
५ क. ख. घ. ॰त्स सुप्रोक्षि॰ ।

धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
अपोऽर्घ्यं गन्धपुष्पं च धूपं दीपं निवेदयेत् " ॥

**ब्रह्मपुराणात्**—" पूर्वाह्णे दैविकं कार्यं श्राद्धमभ्युदयार्थिना ।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता " ॥

**सव्यं प्रदक्षिणम्** ।

**तथा**—" युग्मांस्तु भोजयेद्वृद्धौ ब्राह्मणान्नियतः शुचिः ।
नान्दीमुखास्तु पितरस्तृप्यन्तामिति वाचयेत् " ॥

**अत्रिः**—"पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः " ॥

**कात्यायनः**—" आभ्युदयिके प्रदक्षिणमुपचारः पित्र्यमन्त्रवर्जं जप ऋजवो दर्भा यवैस्तिलार्थः संपन्नमिति तृप्तिप्रश्नो दधिबदराक्षतमिश्राः पिण्डा नान्दीमुखान्पितॄनावाहयिष्य इति पृच्छति । नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने । नान्दीमुखान्पितॄन्वाचयिष्य इति पृच्छति । नान्दीमुखाः पितरः पितामहाः प्रपितामहाः प्रीयन्तामिति स्वधां प्रयुञ्जीत । युग्मानाशयेत् " ।

**तथा**—" अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ।
प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा ॥
उपवेश्य कुशान्दद्यादृजुनैव हि पाणिना " इति ।

**प्रातरुपवेश्येत्यन्वयः । आमन्त्रणं पूर्वेद्युरेव ।**

**तथा**—" निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ।
सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ॥
पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् ।
गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत् ॥
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।
पात्राणां पूरणादीनि दैवे नैव हि कारयेत् ॥
ज्येष्ठोत्तरकरान्युग्मान्कराग्राग्रपवित्रकान् ।
कृत्वाऽर्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते " ॥

**द्वयोर्द्वयोर्ब्राह्मणयोर्हस्तौ मेलयित्वाऽर्घ्यदानं कार्यम् । तत्र ज्येष्ठस्य विप्रस्य हस्त उत्तरः कार्यः ।**

---

१ क. वाचयति । २ ख. ग. सर्वस्य ।

( श्राद्धप्रकरणम् ९ )

" मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि ।
पतिपुत्रान्विता भव्या योषितोऽष्टौ मुदाऽन्विताः " ॥

चतुर्विंशतिमतात्–" अथाऽऽभ्युदयिके प्राप्ते देवतास्थापनं स्मृतम् ।
जातिधर्मकुलश्रेणिलोकानां वृद्धिकारणम् ॥
तिस्रः पूज्याः पितुस्तिस्रः पूज्या मातामही तथा ।
इत्येता मातरः प्रोक्ताः पितृमातृष्वसाऽष्टमी " ॥

माता पितामही प्रपितामहीति तिस्रः पितृपक्षे । मातामही मातुः पितामही मातुः प्रपितामहीति तिस्रो मातृवर्गे । तथा मातृष्वसा पितृष्वसा चेत्यष्टौ मातरः।

" ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।
वृध्द्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान्पितॄन् ॥
मातृपूर्वान्पितॄन्पूज्य ततो मातामहानपि ।
मातामहीस्ततः केचिद्युग्मा भोज्या द्विजातयः " ॥

कात्यायनः—" कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥
प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु ।
अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥
कुड्यलग्ना वसोर्धाराः पञ्च धारा घृतेन तु ।
कारयेत्सप्त धारा वा नातिनीचा न चोच्छ्रिताः ॥
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः* ।

आयुष्याणि आनोभद्रीयादीनि ।

मातरस्तु—" ब्रह्माणी चैव माहेशी कौमारी वैष्णवी क्रमात् ।
वाराही नारसिंह्यैन्द्री सप्तैता मातरो मताः " ॥

यद्वा—" गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥

---

* एतदग्रेऽधिकोऽयं ग्रन्थश्च. पुस्तके स यथा—
" ललिता च उमा गौरी अम्बिका सलिलाश्रया । भगाही च भगाक्षी च धाराः सप्त प्रकीर्तिताः ॥
अनुमतिश्च राका च सिनीवाली कुहूस्तथा । धात्री सर्वेश्वरी चैव ह्यन्नेश्वरी तथैव च ॥
एतास्तु देवता नित्यं भक्तगोलकदेवताः । पूज्या ह्यक्षोटशाखायामेकान्तवासिनी सदा ॥
मृत्तिकागोलके पूज्यो महागणपतिर्विभुः । पञ्चामृतं घृताभ्यक्तं मधुमांसं द्वितीयकम् " इति ॥

---

१ क. °पुत्रयुता । २ ख. ग. घ. मातामहव° । ३ ख. दुर्गाः क्षे° । ४ ख. ग. घ. च °न् । पितॄ° । ५ क. घ. च. °युग्माः पूज्या । ६ च. °खिता वा । ७ क. च. °पुष्पैश्च नै° ।

**वृद्धवसिष्ठः**—" पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा ।
उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु " ॥

**वृद्धशातातपः**-" पृथग्दिनेष्वशक्ताश्चेदेकस्मिन्नेव वासरे ।
श्राद्धत्रयं प्रकुर्वन्ति तन्त्रं वा वैश्वदेविकम् " ॥

**शातातपः**—" पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं स्मृतम् ।
ततो मातामहानां तु वृद्धौ श्राद्धत्रयं स्मृतम् " ॥

**वसिष्ठः**—" श्राद्धत्रयं प्रकुर्वीत तन्त्रं वा वैश्वदेविकम् ।
मातृभ्यः कल्पयेत्पूर्वं पितृभ्यस्तदनन्तरम् ॥
ततो मातामहानां तु पिण्डान्दद्यात्क्रमेण तु " ।

**कात्यायनः**—" असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः[1] ।
अतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥
गणशः क्रियमाणेषु मातृभ्यः[2] पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु " ॥

एतच्च सर्व एव प्रत्युद्धारः पुत्रजन्मना व्याख्यात इत्येतद्विषयम् । अस्य चायमर्थः—सर्व एव पतितस्य कृतप्रायश्चित्तस्य प्रत्युद्धारो ज्ञातिपरिग्रहः पुत्रजन्मना व्याख्यातः । पुत्रे जाते ये तस्य जातकर्मादयः संस्कारास्ते सर्वेऽप्यस्य कार्या इति । एवं च जातकर्मादीनां संस्काराणां युगपत्करणाद्गणशः क्रियमाणत्वम् ।

" स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकारणात् ।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् " ॥

पिण्डानभ्युदयश्राद्धे तेषां पुत्राणामोद्वाहनादा विवाहात्पिता स्वपितृभ्यो दद्यात् । तस्य पितुरभावे तत्क्रमात् । अत्र क्रमशब्देन पितुरनन्तरो भ्रात्रादिर्लक्ष्यते । पुत्रविवाहे पितुः श्राद्धाधिकारः[3] कन्यापुत्रविवाहेष्वित्यनेनोक्तो वोढुरपि पृथगधिकारो नानिष्ट्वा तु पितॄञ्श्राद्धमित्यनेनोक्तस्तेन पुत्रविवाहे पित्रा पुत्रेण च वृद्धिश्राद्धं पृथक्कार्यम् । पुत्रेण च—

" येभ्य एव पिता दद्यात्तेभ्यो दद्यात्सुतोऽग्निमान् "

इति विधिमाश्रित्य कर्तव्यम् । अत्र चाग्निमद्ग्रहणमधिकारिमात्रोपलक्षणार्थम् । अत एव समावर्तने ब्रह्मचारिणा जीवत्पितृकेण पितामहादिभ्यः श्राद्धं प्रदीयते । वृद्धवसिष्ठः—

---

१ च. °भिः । प्रति° । २ च. °भ्यः प्रणनं । ३ ख.° रः कर्तव्यः क°। च. °रः कार्यः क° ।

**अत्र विष्णुपुराणम्**—" कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनि[1] ।
नामकर्माणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥
युग्मांस्तु प्राङ्मुखान्विप्रान्भोजयेन्मनुजेश्वर " ।

**मत्स्यपुराणम्**–" उत्सवानन्दसंताने यज्ञोद्वाहादिमङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ॥
ततो मातामहाः पूज्या विश्वे देवास्तथैव च " ।

**शातातपः**—" नानिष्ट्वा तु पितॄञ्श्राद्धे कर्म वैदिकमाचरेत् ।
तिस्रोऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥
अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् ।
तस्य क्रोधसमाविष्टा हिंसां कुर्वन्ति मातरः " ॥

**ब्रह्मपुराणे**—" कर्मण्यथाऽऽभ्युदयिके मङ्गल्यवति शोभने[2] ।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च ॥
पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् " ।

**शातातपः**—" मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् " ॥

**भास्करः**—" निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने[3] श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् " ॥

**कात्यायनः**–" विवाहादिः कर्मगणो य उक्तो गर्भाधानं यस्य शुश्रुम चान्ते ।
विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नाऽऽदौ कर्मणः कर्मणः स्यात् ॥
आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ।
नवयज्ञे च यज्ञज्ञा[4] वदन्त्येवं मनीषिणः ॥
एवमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक् ।
नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते " ॥

**पुराणात्**—" वैश्वदेवविहीनं तत्केचिदिच्छन्ति मानवाः ।
युग्मास्तत्र द्विजाः कार्यास्ते पूज्याश्च प्रदक्षिणम् " ॥

---

१ क. ख. च. °श्मनः । ना° । २ क. च. भोजने । ३ क. घ. °वनं श्राद्धं कर्माङ्गं विधिव° ।
४ क. घ. च. °ज्ञस्य व° ।

इत्यादि पञ्चदश्यां मांसवर्जनं तद्रागप्राप्तं मांसभक्षणं वारयति। न वैधम्। पितृसेवितभोजनविधिश्च सकृद्भक्षणमात्रेणैव चरितार्थो भवतीति तदभ्यासो रागीय एव।

विष्णुपुराणे—" श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियोज्य च।
व्यवायी रेतसो गर्भे मज्जयत्यात्मनः पितॄन् "॥

व्यवायो मैथुनम्।

शातातपः—" श्राद्धं कृत्वा परे श्राद्धे भुञ्जते ये तु जिह्मलाः।
पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः "॥

तथा—" पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्।
दानं प्रतिग्रहं होमं श्राद्धं भुक्त्वाऽष्ट वर्जयेत् "॥

यमः—" दशकृत्वः पिबेच्चापो गायत्र्या श्राद्धभुग्द्विजः।
ततः संध्यामुपासीत जपेच्च जुहुयादपि "॥

अत्र सकृन्मन्त्रः। कार्याविशेषात्। यत्र हि मन्त्रकार्यं शिष्यते तत्र कर्मावृत्तौ मन्त्रोऽप्यावर्तते। यथा निर्वाप्याज्यग्रहणधूपच्छेदनमन्त्राः। तैर्हि निर्वापादिसंस्कार्यं द्रव्यं प्रकाश्यते। तद्भेदाद्युक्ता मन्त्रावृत्तिः।

मत्स्यपुराणे—" पुनर्भोजनमध्वानं द्यूतमायासमैथुनम्।
श्राद्धं कृत्वा च भुक्त्वा च सर्वमेतद्विवर्जयेत्॥
स्वाध्यायं कलहं चैव दिवा स्वप्नं च सर्वदा "॥

ब्रह्मपुराणे—" अस्तास्ते च ततः सूर्ये विप्रपात्राणि चाम्भसि।
निक्षिपेत्प्रयतो भूत्वा सर्वाण्यधोमुखानि च॥
द्वितीयेऽहनि सर्वं च भाण्डप्रक्षालनं तथा "॥ २४८॥

सर्वेषां श्राद्धानां प्रकृतिभूतं पार्वणं श्राद्धं विधायेदानीं तद्विकृत्यात्मकमाभ्युदयिकं श्राद्धं विधातुमाह—

**एवं प्रदक्षिणं[२] कृत्वा वृद्धौ नान्दीमुखान्पितॄन्॥**
**यजेत दधिकर्कन्धुमिश्राः[३] पिण्डा यवैः क्रियाः॥२४९॥**

वृद्धौ विवाहादौ नान्दीमुखसंज्ञकान्पितॄनेवं पार्वणोक्तश्राद्धप्रकारेण यजेत। प्रदक्षिणं कृत्वा प्रदक्षिणं कुर्वन्नित्यर्थः। अत्र पौर्वापर्यमविवक्षितम्। संमील्य हसतीतिवत्। अत्रापरो विशेषः कर्कन्धुमिश्राः पिण्डा यवैश्च[४] तिलैश्च कार्याः क्रिया इति। कर्कन्धु बदरम्।

---

१ क. पुनः। २ ङ. °क्षिणावृत्को वृ°। ३ ङ. °मिश्रान्पिण्डान्यवैः। ४ क. च. °श्च का°।

ज्ञातयः पितृपक्ष्याः । बान्धवा मातृपक्ष्याः[1] । गृहबलिशब्देन सकलमेव वैश्वदेवादि[2] कर्मोपलक्ष्यते ।

पुराणात्—" ततो विसर्जयेद्विप्रान्प्रणिपत्य च भक्तितः ।
आद्वारमनुगच्छेच्च आगच्छेच्चानुमोदितः " ॥

मार्कण्डेयः—" ततो नित्यक्रियां कुर्याद्भोजयेच्च तथाऽतिथिम् ।
नित्यक्रियां पितृणां च केचिदिच्छन्ति मानवाः ॥
पितृणां न तथैवान्ये शेषं पूर्ववदाचरेत् ।
पृथक्पाकेन चेत्यन्ये केचित्पूर्वं तु पूर्ववत् ॥
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः[3] " ॥

नित्यक्रिया वैश्वदेवादिः ।

स्मृत्यन्तरम्—" आतिथ्यरहितं श्राद्धमासुरं सति संभवे ।
देहि देहीति वक्तव्ये भोक्तुर्दोषोऽन्यथा भवेत् " ॥

देवलः—" निर्वर्त्य पितृमेधं तु दीपं प्रच्छाद्य पाणिना ।
आचम्य पाणी प्रक्षाल्य ज्ञातीञ्शेषेण तोषयेत् " ॥

ब्रह्मपुराणे—" भगिन्यो बान्धवाः पूज्याः श्राद्धेषु च सदैव हि " ॥

तथा—" बन्दिमागधसूताश्च तौर्यत्रिकविदस्तथा ।
अलब्धलाभाः श्राद्धेषु नाशयन्ति महद्यशः ॥
तस्मात्तेऽपि विभोक्तव्याः सकलं च विभज्य च " ॥

गीतनृत्तवाद्यानि तौर्यत्रिकम् ।

देवलः—" श्राद्धं दत्त्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन ।
देवा हविर्न गृह्णन्ति कव्यानि पितरस्तथा " ॥

आपस्तम्बः–" सर्वतः समवदायोत्तरेण यजुषा शेषस्य ग्रासार्धपरार्धं प्राश्नाति[4] " ।

एतत्संकल्पितैकादश्याद्युपवासविषयं भोजनविरोधिरोगविषयं च । " प्राणे निविष्टोऽमृतं जुहोमि ब्रह्माणि म आत्माऽमृतत्वाय" इत्युत्तरं यजुः । ततश्च " भुञ्जीत पितृसेवितम्" इत्यनेन भोजनं कर्तव्यमेवेति नियम्यते । तत्राऽऽमिषादि पितृसेवितमप्यौपवसथ्येऽहन्यग्निमता न भक्ष्यम् । " अमाषममांसं व्रतं व्रतयीत " इति श्रुतेः । अनग्निस्तु भक्षयेदेव ।

यत्पुनः—" आसप्तमं कुलं हन्ति शिरोभ्यङ्गे चतुर्दशी ।
मांसाशने पञ्चदशी कामधर्मे तथाऽष्टमी "

---

१ ख. च. °पक्षाः । गृ° । २ क. °देविकादि° । ३ क. च. °नरैः । नि° । ४ क. घ. प्राश्नन्ति ।

बृहस्पतिः—"अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् ।
अद्य मे वंशजाः सर्वे गतास्तेऽनुग्रहाद्दिवम् ॥
अत्र शाकादिदानेन क्लेशिता ये मयेदृशाः ।
तत्क्लेशजातं चित्तेन विस्मृत्य क्षन्तुमर्हथ " ॥ २४६ ॥

**यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ॥**
**पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥ २४७ ॥**

यस्मिन्नर्घ्यपात्रेऽर्घ्यसंस्रावाः पूर्वं स्थापितास्तत्पात्रं पूर्वमुत्तानं कार्यं ततः प्रागुक्तं विप्रविसर्जनं कार्यम् । येषां गृहे पितृपात्रमुत्तानमेव पात्रान्तरेण पिहितं स्थापनीयमेवेति विहितं तन्मतमाश्रित्य दक्षिणादानानन्तरमुक्तं ब्रह्माण्डपुराणे—

" ततः संस्रावपात्रेभ्यो जलमादाय चार्पितम् ।
ऊर्जं वहन्तीश्च जपन्पिण्डांश्चाप्यवसिञ्चति " ॥ २४७ ॥

**प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥**
**ब्रह्मचारी भवेत्तां तु रजनीं ब्राह्मणैः सह ॥ २४८ ॥**

तान्विप्रान्प्रदक्षिणीकृत्य गच्छतोऽनुगम्य पितृसेवितं श्राद्धावशिष्टमेवान्नं भुञ्जीत । श्राद्धकर्ता भोक्तारश्च तां रात्रिं ब्रह्मचारिणो भवेयुः ।

मत्स्यपुराणात्—" बहिः प्रदक्षिणं कुर्यात्पदान्यष्टावनुव्रजेत् ।
बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः ॥
निवृत्य प्रणिपत्याथ पर्युक्ष्याग्निं स मन्त्रवित् ।
वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव च " ॥

बहिर्गृहाद्बहिरित्यर्थः ।

कात्यायनः—" वाजे वाजे इति विसृज्याऽऽमावाजस्य इत्यनुव्रज्य प्रदक्षिणीकृत्य प्रविशेत् " ।

मनुः—" प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् ।
ज्ञातिभ्यः शक्तितो दत्त्वा बान्धवानपि पूजयेत् ॥
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः " ।

---

१ क. °म् । यत्तु शा° । ग. °म् । पत्र । २ ख. °ता यूयमीद° । ३ क. °जातचित्तां तु वि° । ख. °जातचित्तं तु वि° । ४ ख. संस्रावाः । ५ क. ग च. °यमिति । ६ क. ख. निर्वृत्य । ७ क. दद्याद्बान्ध° ।

दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च ॥
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥२४५॥

विश्वे देवाः प्रीयन्तामिति कर्त्रा विप्रैश्चोक्ते दातारो नोऽभिवर्धन्तामिति श्लोकं जपेत् ।

पुराणात्—" सव्यवद्भिर्व्यतीर्थेन यवोदकमथो ददत् ।
विश्वे देवाश्च यज्ञेऽस्मिन्प्रीयन्तामित्युदाहरेत् " ॥

मत्स्यपुराणे—" ततः स्वधावाचनकं विश्वे(श्व)देवेषु चोदकम् ।
दत्त्वाऽऽशिषोऽपि गृह्णीयाद्विजेभ्यः प्राङ्मुखो बुधः ॥
अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ।
गोत्रं तथा वर्धतां नस्तथेत्युक्तश्च तैः पुनः ॥
दातारो नोऽभिवर्धन्तां वेदाः संततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥
एताः सत्याशिषः सन्तु सन्त्वित्युक्तश्च तैः पुनः " ॥

अत्र बौधायनेन " दातारो नोऽभिवर्धन्ताम् " इति श्लोकानन्तरम्—
" अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कंचन "
इति मन्त्र आम्नातः ॥ २४४ ॥ २४५ ॥

इत्युक्त्वा तु प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥
वाजेवाज इति प्रीतः पितृपूर्वं विसर्जनम् ॥ २४६ ॥

इति पूर्वोक्तं मन्त्रमुक्त्वा ब्राह्मणानां प्रिया वाचश्चोक्त्वा तांश्च नमस्कृत्य प्रीतः सन् " वाजेवाजे " इत्यनया त्रिष्टुभा वसिष्ठदृष्टया विप्रदेवत्यया विसर्जयेत् । अत्र पितृविसर्जनं पूर्वम् । अत्र मत्स्यपुराणम्—
" ततस्तानग्रतः स्थित्वा प्रतिगृह्योदपात्रकम् ।
वाजेवाज इति जपन्कुशाग्रेण विसर्जयेत् " ॥

विप्रविसर्जनं चोपवीतिना कार्यम् ।
" उपवीयों स्वधेति विसृजेदस्तु स्वधेति विसृजेत् । अस्तु स्वधेति वा " ।
इति शौनकवचनात् । प्रतिब्राह्मणं मन्त्रावृत्तिः । कुशाग्रस्पर्शरूपविसर्गस्य सर्वविप्रविषयस्य युगपत्कर्तुमशक्यत्वात् ।

---

१ क. च. °पनीये स्व° ।

" दरिद्रोऽपि यथाशक्ति दद्याद्विप्रेषु दक्षिणाम् " ।

तथा—" लोके श्रेष्ठतमं सर्वं मनसश्चापि यत्प्रियम् ।
सर्वं पितॄणां दातव्यं तेषामेवाक्षयार्थिना ॥
अनन्तमक्षय्यं[1] स्वर्ग्यं राजतं दानमुच्यते ।
पितॄणां तेन दानेन सत्पुत्रास्तारयन्त्युत " ॥

मार्कण्डेयः—" अपि स्यात्स कुलेऽस्माकं कश्चित्पुरुषसत्तमः ।
प्रसूयमानां यो धेनुं दद्याद्ब्राह्मणपुंगवे ॥
अपि स्यात्स कुलेऽस्माकं दद्यात्कृष्णाजिनं च यः ।
सुवर्णशृङ्गं सखुरं विधिना मानवोत्तमः " ॥

पारस्करः—" एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि ।
भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः[2] " ॥

पात्रानुसारत[3] इत्यर्थः ।

वृद्धगौतमः—" दक्षिणां पितृदेवेभ्यो दद्यात्पूर्वं ततो द्वयोः " ।

पितरो देवा येषां ते पितृदेवाः पितृदेवत्याः श्राद्धभोक्तार इत्यर्थः । तेभ्यः पूर्वं दक्षिणां दद्यात्ततो द्वयोर्वैश्वदेविकविप्रयोरित्यर्थः । द्वयोरिति चतुर्थ्यर्थे सप्तमी । ततश्च ब्राह्मणेभ्य एव दक्षिणा देया न पित्रादिभ्यः । तथा च देवलः—

" आचान्तेभ्यो द्विजेभ्यश्च प्रयच्छेदथ दक्षिणाम् ।
हिरण्यरत्नभोगानामन्येषां च स्वशक्तितः " ॥

एवं च सति दक्षिणाशब्दसामञ्जस्यं भवति । यच्च वाक्यं " पितृभ्यो दक्षिणा देया " इति तत्पितृदेवत्यब्राह्मणसंबन्धपरम् । अन्यथा ब्राह्मणानां दक्षिणास्वाम्यं न स्यात् ।

जमदग्निः—" सर्वं कर्मापसव्येन दक्षिणादानवर्जनम् " ।

अपसव्यं तत्रापि भगवान्मत्स्यो मेने ।

कात्यायनः–" स्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्युक्ते पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधोच्यतामित्यनुज्ञापितैर्विप्रैरस्तु स्वधेत्युच्यमान ऊर्जं वहन्तीरित्यपो निषिञ्चेत्सपवित्रेषु कुशेषु ॥२४२॥२४३॥

**विश्वे देवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥२४४॥**

---

१ ग. च. °क्षयं स्व° । २ ख. °नुमानतः । ३ क °नुमानमित्य° ।

**वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम्॥२४३॥**
**ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ॥**

ततो विप्राचमनादूर्ध्वं स्वस्तिवाचनं कुर्यात् । स्वस्ति भवन्तो ब्रुवन्त्विति विप्रान्वाचयेदित्यर्थः । तैश्च स्वस्तीत्युक्तेऽक्षय्योदकं कुर्यात् । षष्ठ्यन्तगोत्रसंबन्धनामानन्तरमक्षय्यमस्त्वित्युक्त्वा विप्रहस्तेषु जलं निषिञ्चेदित्यर्थः । ततो यथाशक्ति दक्षिणां दत्त्वा स्वधाकारं कारयेत्स्वधां वाचयिष्य इति विप्राननुज्ञापयेदित्यर्थः । तैश्च वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः पित्रादिभ्यः स्वधोच्यतामिति विप्रानुज्ञापने कृतेऽस्तु स्वधेति तैरुक्ते भूमौ जलं सिञ्चेत् ।

**शातातपः**—" अभिप्रेतार्थसिद्ध्यर्थमिष्टकामांस्तु वाचयेत् ।
दीर्वाः सूर्यहया नद्यो विष्णोस्त्रीणि पदानि च ॥
एवमेषां प्रणामेन दीर्घमायुरवाप्नुयात् ।
अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ॥
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु नः ।
लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ॥
लक्ष्मीर्वसेत्सदा सोमे सौमनस्यं सदाऽस्तु मे ।
अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तु मे ॥
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ।
दक्षिणायां तु सर्वत्र बहु देयं तथाऽस्तु नः ॥
एवमस्त्विति तैर्वाच्यं मूर्ध्ना ग्राह्यं तु तेन तत् " ।

**ब्रह्मपुराणात्**–" आचान्तेषूदकं दद्यात्पुष्पाणि सयवानि च ।
यवोऽसीति पठन्मन्त्रं श्रद्धाभक्तिसमन्वितः ॥
दद्यात्तथाऽक्षय्यजलं तिलाज्यमधुसंयुतम् ।
सपवित्रान्कुशान्भूमावास्तीर्य सतिलांस्तथा " ॥

**ब्रह्माण्डपुराणात्**–" सौवर्णरौप्यपात्राणि मनोज्ञानि शुभानि च ।
हस्त्यश्वरथयानानि समृद्धानि गृहाणि च ॥
उपानत्पादुकाछत्रचामराण्यजिनानि च ।
यज्ञेषु दक्षिणा पुण्या सेति संचिन्तयेत्सदा " ॥

या यज्ञदक्षिणा सैवेयमिति बुद्धिः कार्येत्यर्थः ।

शङ्खः—" ऊर्णासूत्रं प्रदातव्यं कार्पासमथ वा नवम् ।
दशां विवर्जयेत्प्राज्ञो यद्यप्यहतवस्त्रजा " ॥

आश्वलायनः—"वासो दद्याद्दशामूर्णास्तुकां वा " इति । ततश्च विहितप्रतिषिद्धत्वाद्दशाया विकल्पः ।

व्याघ्रः—" गन्धपुष्पादि धूपं च दीपं च विनिवेदयेत् ।
एतद्वः पितरो वासो दशा दद्यात्पृथक्पृथक् " ॥

बृहस्पतिः—" धूपदीपैर्माल्यगन्धैस्तथा वस्त्राञ्जनादिना ।
समभ्यर्च्योदपात्रं तु तेषामुपरि निक्षिपेत् " ॥

ब्रह्मपुराणात्—" मधु चाऽऽज्यं जलं चार्घं पुष्पं धूपं विलेपनम् ।
बलिं दद्याच्च विधिवत्पिण्डोऽष्टाङ्गो भवेद्यथा " ॥

पुराणात्— " यत्किंचित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम् ।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथंचन " ॥

विष्णुः—" पिण्डानां विकिरं कृत्वाऽऽर्घपुष्पधूपानुलेपनान्नाद्यभक्ष्यभोज्यं निवेदयेत् । उदपात्रं मधुघृततिलैः संयुक्तं च " ।

मनुः—" अविजिघ्रेच्च तान्पिण्डान्यथा न्युप्तान्समाहितः " ॥ २४१ ॥

**मातामहानामप्येवं दद्यादाचमनं ततः ॥**

मातामहानामप्येवं पितृवत्पिण्डदानं कुर्यात् । ततो ब्राह्मणानाचामयेत् ।

विष्णुः—" उदङ्मुखेष्वाचमनं दत्त्वा ततः प्राङ्मुखेषु दद्यात् " ।

ततश्च सुप्रोक्षितमिति श्राद्धदेशं प्रोक्ष्य दर्भपाणिः सर्वं कुर्यात् ।

नारायणः—" अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः ।
तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतैः " ॥

बृहस्पतिः—" भाजनेषु तु तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
*निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम् " ॥

जातूकर्ण्यः—" पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ॥
न स्त्रीभिर्न च बालेन न सजात्या कदाचन " ॥

**स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ॥ १४२ ॥**
**दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥**

---

* एतदर्धस्थान एतदर्धम्–"तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतैः" इति ग. घ. पुस्तकयोः ।

---

१ क. °तसूत्रजाम् । आ° । २ ग. 'द्दशां पूर्णा । ३ ख. च । ४ ख. ग. ञ. °किरणं कृ° ।
५ ख. ग. घ. छ. ञ. °वाच्य त° ।

**विष्णुधर्मोत्तरे**—" पिण्डनिर्वपणं कार्यं कुशाभावे विचक्षणैः[1] ।
काशेषु राजन्दूर्वासु पवित्रे ते परे स्मृते " ॥

**व्यासः**—" ब्रूयाच्छ्राद्धेषु सावित्रीं पिण्डे पिण्डे समाहितः ।
सोमायेति च वक्तव्यं तथा पितृमतेति च " ॥

**मरीचिः**—" आर्द्रामलकमात्रांस्तु पिण्डान्कुर्वीत पार्वणे ।
एकोद्दिष्टे बिल्वमात्रं पिण्डमेकं तु निर्वपेत् ॥
नवश्राद्धे स्थूलतरं तस्मादपि तु निर्वपेत् ।
तस्मादपि स्थूलतरमशौचे प्रतिवासरम् " ॥

**मनुः**—" न्युप्य[2] पिण्डान्पितृभ्यस्तु प्रयतो विधिपूर्वकम् ।
तेषु पिण्डेषु तं हस्तं निर्मृज्याल्लेपभागिनाम् " ॥

**लेपभागिन आह मत्स्यपुराणम्**—
" लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं[3] साप्तपौरुषम् " ॥

**विष्णुः**—" अत्र पितरो मादयध्वमिति[4] दर्भमूले करावघर्षणम् " ।

**व्याघ्रः**—" दर्भमूलेषु निर्मृज्याद्धस्तलेपं समाहितः ।
अद्भिः प्रक्षाल्य तत्पात्रं[5] प्रतिपिण्डं तु पूर्ववत् ।
कृत्वाऽवनेजनं कुर्यात्पिण्डपात्रमधोमुखम्[6] " ॥

**मनुः**—" आचम्योदक्परावृत्य त्रिरायम्य शनैरसून् ।
षड्ऋतूंश्च नमस्कुर्यात्पितॄनेव च मन्त्रवित् " ॥

**ब्रह्माण्डपुराणात्**—"कृष्णाच्चैव तिलात्तैलं यत्नात्सुपरिरक्षितम् ।
बिल्वपात्रेण[7] दातव्यं पितृभ्योऽभ्यञ्जनं बुधैः " ॥

**तिलादिति जात्यभिप्रायमेकवचनम् ।**

**तथा**—" अपसव्यं पितृभ्यस्तु दद्यादञ्जनमुत्तमम् ।
नामान्युच्चार्य सर्वेषां वस्त्रार्थं सूत्रमेव च ॥
क्षौमसूत्रं नवं दद्याद्दिशोत्कार्पासकं तथा ।
पत्तोर्णं पट्टसूत्रं च कौशेयं च विसर्जयेत्[8] " ॥

**क्षौममतसीप्रभवम् । पत्तोर्णं धौतकौशेयम् । पट्टसूत्रं प्रसिद्धम् । कौशेयं[9] त्रसरीसूत्रम् ।**

---

१ ख. ग. °णैः । कुशे° । २ ग. न्यस्य । ३ क. ग. च. °ण्डयं सप्त° । ४ च. °मित्यामलके. नाव° । ५ घ. °त्रं पितृपि° । ६ ग. °त्पितृपा° । ७ ख. °ल्वमात्रे° । ८ क. ग. विवर्ज° । ९ घ. °यं भ्रमरी° ।

कात्यायनः–" तृप्ताञ्ज्ञात्वाऽन्नं प्रकीर्य सकृत्सकृदपो दत्त्वा पूर्ववद्गायत्रीं जप्त्वा मधुमतीर्मधु मध्विति च तृप्ताः स्थेति पृच्छति। तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकत उद्धृत्योच्छिष्टसमीपे दर्भेषु त्रीन्पिडानवनिज्य दद्यो-दाचान्तेष्वित्येके "।

ब्रह्माण्डपुराणे—" सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः।
प्रघर्षणं ततः कुर्याच्छ्राद्धकर्मण्यतन्द्रितः॥
खण्डनं पेषणं चैव तथैवोल्लेखनं बुधः।
सकृदेव पितॄणां स्याद्देवानां च त्रिरुच्यते "॥

उल्लेखनं पिण्डनिर्वपणप्रदेशे लेखाकरणम्।

वायुपुराणात्—" सकृदेवाऽऽस्तरेद्दर्भान्पिण्डार्थं दक्षिणामुखः।
प्राग्दक्षिणाग्रान्प्रयतो दद्यात्पिण्डाननन्तरम् "॥

तथा—" मधुसर्पिस्तिलयुतांस्त्रीन्पिण्डान्निर्वपेद्बुधः।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः "॥

जातूकर्ण्यः—" उपमूलं समास्तीर्य दर्भानुच्छिष्टसंनिधौ।
कृत्वाऽवनेजनं दद्यात्त्रीन्पिण्डांस्तु यथाविधि "॥

सुमन्तुः—" श्राद्धसेवनकाले तु पाणिनैकेन दीयते।
तर्पणे तूभयं कुर्यादेष एव विधिः स्मृतः " इति॥

बृहस्पतिः–" सर्वस्मात्प्रकृतन्नात्पिण्डान्मधुतिलान्वितान्।
पितृमातामहादीनां दद्याद्गृह्यविधानतः "॥

मरीचिः—" पात्राणां खड्गपात्रेण पिण्डदानं विधीयते।
राजतोदुम्बराभ्यां वा हस्तेनैवाथ वा पुनः "।

उदुम्बरं ताम्रमयम्।

पारस्करः—" अर्घदानेऽथ संकल्पे पिण्डदाने तथाऽक्षये।
गोत्रसंबन्धनामानि यथावत्प्रतिपादयेत "॥

गृह्यकृत्—" यदि नामानि न विद्यात्स्वधा पितृभ्यः पृथिवीसद्भ्य इति प्रथमं पिण्डं निदध्यात्। स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम्। स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम् "।

---

१ च. °द्यादनाचा°। २ च. °तः। कण्ड°। ३ ख. च. °ह्यर्चम्। य°। ४ क. घ. °क्षमभ्य इ°। ख. °क्षषद्भ्य इ°।

अनग्निदग्धा ये जीवा येऽपि दग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् " ॥

इति बृहस्पतिमते विकिर आच[1]मनानन्तरम् । अन्यमते तु प्रागेवाऽऽचमनात् । कात्यायनः पुनरेतं मन्त्रमाह—

" ये अग्निदग्धा ये अनग्निदग्धा जीवा जाताः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्[2][3] " इति ॥

मार्कण्डेयः—" अन्नं सतृणमभ्युक्ष्य मामेक्षेष्ठेति मन्त्रतः ।
उदङ्मुखानां विप्राणां पुरतः सोदकं ततः ॥
अन्नं तु विकिरेद्भक्त्या भृत्यभागस्तु[4] स स्मृतः " ॥

अत्रान्नविकिरे मन्त्रः । न तु प्रोक्षणे । तृणमत्र दर्भाः । " दर्भेषु विकिरश्च यः " इति वचनात् ।

मरीचिः—" श्राद्धेषु विकिरं दत्त्वा यो नाऽऽचामेन्मतिभ्रमात् ।
पितरस्तस्य षण्मासान्भवत्युच्छिष्टभोजिनः ॥ २३९ ॥ २४० ॥

**[5]सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥**
**उच्छिष्टसंनिधौ पिण्डान्दद्याद्वै पितृयज्ञवत् ॥२४१॥**

प्रकृतं सर्वप्रकारमन्नं स्तोकशः स्तोकशः क्वचित्पात्र उपादायोद्धृत्य पिण्डपितृयज्ञविधानेन चान्नमयान्पिण्डान्दद्यात् । सतिलं दक्षिणामुख इति पितृयज्ञाद्विशेषः । उच्छिष्टसंनिधौ नाग्निसंनिधावित्यर्थः ।

आत्रिः—" पितृणामासनस्थानामग्रतस्त्रिष्वरत्निषु ।
उच्छिष्टसंनिधानं तन्नोच्छिष्टासनसंनिधौ " ॥

जातूकर्ण्यः—" व्याममात्रं समुद्धृत्य पिण्डांस्तत्र प्रदापयेत् ।
यत्रोपस्पृशतां वाऽपि प्राप्नुवन्ति न बिन्दवः " ॥

भास्करस्मृतौ—" विप्राणां[6] बाहुमात्रेण पिण्डदानं विधीयते " ॥

मनुः—" उपलिप्ते शुचौ देशे स्थानं कुर्वीत सैकतम् ।
मण्डलं चतुरश्रं वा दक्षिणावनतं महत् ॥
एकदर्भेण तन्मध्यमुल्लिखेत्त्रिश्च तं त्यजेत् ।
तस्मिन्स्थाने ततो दर्भानेकमूलशिखान्बहून् ॥
दक्षिणाग्रानुदक्पादान्सर्वांस्तान्स्तृणुयात्समम् " ॥

---

१ ख. °मनीयान° । २ क. ख घ. च. छ. ञ. °ति । बृहस्पतिमते–मा° । ३ ख. घ. °ति यत्नतः । ४ ख. ग. °स्तु संभृताः । ५ ख. °र्व्यः । प्रासम° । ६ ख. °णां बहु° ।

मनुः—" ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ।
यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः " ॥

मार्कण्डेयः—" प्रष्टव्या ब्राह्मणा भक्त्या भूनिविष्टेन जानुना ।
तृप्ता भवन्तः संपन्नं भवतां कश्चिदेव तु " ॥

मनुः—" सार्ववर्णिकमन्नाद्यं संनीयाऽऽप्लाव्य वारिणा ।
समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि " ॥

संनयनमेकत्र पात्रे[१] ग्रहणम् ।

" असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च[२] यः[३] ।
उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ॥
दासवर्गस्य तत्पित्र्यं भागधेयं प्रचक्षते " ।

भागधेयं भागः । ततश्चानुपनीतप्रमीतांश्च स्वकुलोत्पन्नाञ्जन्तूंस्तथा कुलयोषित्प्रभृतीनामल्पायुष्यानां ये त्यागिनस्तांश्चोद्दिश्य विप्रभोजनपात्रस्थमन्नं दर्भेषु च यो विकिरस्तदुभयं पृथक्पृथक्त्याज्यमित्यर्थः सिद्धो भवति । यश्च(च्च) भूमिगतं विप्रोच्छिष्टं तदजिह्मायाशठाय मृताय दासवर्गाय संकल्पनीयम् ।

वसिष्ठस्तु—" उच्छेषणं भूमिगतं विकिरं लेपमोदकम् ।
अनुप्रेतेषु विसृजेदप्रजानामनायुषाम् " इति ॥

प्रेतेषु पित्रादिषु येऽनुप्रेता अनुमृता ये च स्वकुलेऽप्रजसोऽल्पायुषश्च तानुद्दिश्योच्छेषणादि दद्यात् ।

तथा—" प्राक्संस्कारात्प्रमीतानां सप्रेष्याणामिति श्रुतिः[६] ।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे " ॥

पात्रगतमुच्छिष्टम् । भूमिगतमुच्छेषणम् । ततश्चासंस्कृतप्रमीतेभ्यः सप्रेष्येभ्य इति चोद्देशः कार्य इति सिद्धं भवति । वैश्वदेविकब्राह्मणविकिरे गोभिलोक्तमन्त्रः—

" असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् " ॥

पित्र्यब्राह्मणसंबन्धिविकिरविषये बृहस्पतिः—

" उपस्पृष्टोदकानां तु ब्राह्मणानां तदग्रतः ।
सोदकं विकिरेदन्नं मन्त्रमेनमुदाहरेत्[७] ॥

---

१ ग. °त्रे करण° । २ ख. च. °किरंश्च । ३ घ. यः । तच्छो° । ४ क. °त्यागिनां । ५ क. ख. अन्नं प्रे° । ६ क. च. स्मृतिः । ७ ग. °मेतदुदीरयेत् ।छ. ब. °मेतदुदाहरन् । अ° ।

अमूर्तीनां समूर्तीनां पितॄणां दीप्ततेजसाम् ।
नमस्यामि सदा तेषां ध्यानिनां योगचक्षुषाम् ॥
इन्द्रादीनां[1] जनेतारो[2] दक्षमारीचयोस्तथा ।
सप्तर्षीणां तथाऽन्येषां तान्नमस्यामि कामदान् ॥
मन्वादीनां[3] जनेतारः[4] सूर्याचन्द्रमसोस्तथा ।
तान्नमस्यामि सर्वान्वै पितॄनप्सुषदस्तथा ॥
नक्षत्राणां ग्रहाणां च वाय्वग्न्योश्च पितॄनथ ।
द्यावापृथिव्योश्च सदा नमस्यामि कृताञ्जलिः ॥
देवर्षीणां जनेतारः[5] सर्वदेवनमस्कृताः ।
त्रातारः[6] सर्वभूतानां तान्नमस्ये पितामहान् ॥
प्रजापतेः कश्यपाय सोमाय वरुणाय च ।
योगीश्वरेभ्यश्च[7] सदा नमस्यामि कृताञ्जलिः ॥
नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ।
स्वयंभुवे नमस्यामि ब्रह्मणे योगचक्षुषे ॥
इत्येतदुक्तं सप्तार्चिर्ब्रह्मर्षिगणपूजितम् ।
पवित्रं परमं ह्येतच्छ्रीमद्रक्षोविनाशनम् " इति ॥

शेषानुज्ञापने विशेषमाह शौनकः—

" तृप्ताञ्ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च संपन्नं पृष्ट्वा यद्यदन्नमुपभुक्तं ततः स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेदभिमतेऽनुमते वा " इति ।

अस्यार्थः—श्राद्धे भोक्तॄंस्तांस्तृप्तान्विदित्वा मधु वाता ऋतायत इति त्र्यृचमक्षन्नमीमदन्त इति चैकामृचं राहूगणगौतमदृष्टामिन्द्रदे(दे)वत्यां पङ्क्तिं[8] जपित्वा संपन्नमिति ब्राह्मणान्पृष्ट्वा संपन्नमिति तैः प्रत्युक्ते यद्यदन्नं तैर्ब्राह्मणैर्भुक्तं ततस्ततः स्थालीपाकादन्नादेकदेशं[9] पिण्डार्थं पात्रान्तरे पिण्डपितृयज्ञस्थालीपाकेन सहोद्धृत्य ब्राह्मणाननुज्ञापयत्यवशिष्टमन्नं किं क्रियतामिति । ततस्तस्मिन्नन्ने ब्राह्मणैरभिमते[10] स्वीकृते विप्रगृहं प्रति तत्प्रापणीयम् । अथ ज्ञातिभिः सहोपभुज्यतामित्यनुमन्यन्ते तदा तथैव कुर्यादिति ।

---

१ क. °नां च ने° । २ ग. जनीता° । ३ ख. मन्त्रादी° । ४ ग. च. जनीतारः । ५ ग. च. जनीता° । ६ क. घ. च. त्रातारः । ७ ख. योगेश्व° । ८ ख. °न्नपङ्क्तिमि° । ९ ख. च. °कादे° । १० ख. °मतैः स्वी° ।

कृणुष्व पाज [ ऋ० अ० ३ अ० ४ व० २३ ] इत्याद्या रक्षोघ्नाः । पितृमन्त्रा उदीरतामवर [ ऋ० अ० ७ अ० ६ व० १७] इत्यादयः ।

बौधायनः—" रक्षोघ्नानि च सामानि स्वधावन्ति यजूंषि च ।
मध्वृचोऽथ पवित्राणि श्रावयेदाशयाञ्शनैः " ॥

मनुः—" स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणा[1]नि *खिलानि च ॥
ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विविधानि च ।
इन्द्रेशसोम[2]सूक्तानि पावमानीश्च शक्तितः ॥
बृहद्रथन्तरं तद्वज्ज्येष्ठसाम च रौरवम् ।
तथैव शान्तिकाध्यायं मधुब्राह्मणमेव च ॥
मण्डलब्राह्मणं तद्वत्प्रीतिका[3]रि च यत्पुनः ।
विप्राणामात्मनश्चैव तत्सर्वं समुदीरयेत् " ॥

विष्णुपुराणे—" रक्षोघ्नमन्त्रपठनं भूमेरा[4]स्तरणं तिलैः ।
कृत्वा ध्येयाश्च पितरस्त एव द्विजसत्तमाः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वग्र्यां विप्रदेहेषु संस्थिताः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वग्निहोमाप्यायितमूर्तयः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु पिण्डेन मया दत्तेन भूतले ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
तृप्तिं प्रयान्तु मे भक्त्या यन्मयैतदुदीरितम् ।
मातामहस्तृप्तिमुपैतु तस्य तथा पिता तस्य पिता च योऽन्यः ।
विश्वे[5] च देवाः परमां प्रयान्तु तृप्तिं प्रणश्यन्तु च यातुधानाः ॥
यज्ञेश्व[6]रो यज्ञसमस्तहव्यभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
तत्संनिधानादपयान्तु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे " ॥

वायुपुराणे—" सप्तार्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभम् ।
स्वर्गापवर्गसोपानं पितॄणां च विमुक्तये ॥

---

* हरिवंशादीनि ।

---

१ क. °णान्यखि° । २ क. च. °मसूक्ता° । ३ क. च. °कानि च । ४ क. घ. च. °रापूर° । ५ ख. °श्वे दे° । ६ क. ग. घ. °रो हव्यस° ।

( श्राद्धप्रकरणम् ९ )

**बृहस्पतिः**—" संस्कृतं व्यञ्जनाढ्यं च पयोमधुघृतान्वितम् ।
श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते " ॥

**आपस्तम्बः**—" नैयमिकं तु यच्छ्राद्धं स्नेहवदेव दद्यात् । सर्पिर्मांसमिति प्रथमकल्पाभावे तैलं शाकमिति " ।

**कार्ष्णाजिनिः**—" यदिष्टं जीवतश्चाऽऽसीद्दद्यात्तत्तस्य यत्नतः " ॥

**यमः**—" कृच्छ्रं द्वादशरात्रेण मुच्यते कर्मणस्ततः ।
तस्माद्विद्वान्नैव दद्यान्नापि याचेन्न दापयेत् " ॥

**वृद्धशातातपस्त्वन्यथाऽऽह**—" अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ।
न याचते द्विजो मूढः स भवेत्पितृघातकः ॥
अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितम् ।
कृपणो मन्दबुद्धिस्तु न स श्राद्धफलं लभेत्" इति॥

तच्च श्राद्धार्थमुपकल्पितं याचितव्यं दातव्यं च । अनुपकल्पितं तु न याच्यं नापि देयमिति व्यवस्था ॥

**आ तृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा॥ २३९ ॥**
**अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च ॥**
**तदन्नं प्रकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ॥ २४० ॥**

ब्राह्मणतृप्तिं यावत्पवित्राणि सूक्तानि यजूंषि सामानि च जपित्वा यद्यदन्नं विप्रैरुपभुक्तं ततस्तत एकदेशं क्वचित्पात्रे कृत्वोपादाय पूर्वं जपं जपित्वा तृप्ताः स्थेति विप्रानामन्त्र्य तैश्च तृप्ताः स्म इति प्रत्युक्तः शेषमन्नं यथा नेतुं मन्यन्ते तथोक्त्वा तत्पात्रस्थमन्नं भूमौ प्रकिरेत् । ततो विप्रेभ्यः सकृत्सकृदपो दद्यात् । व्याहृतयः सावित्री " मधु वाता ऋतायते " इति त्र्यृचश्च पूर्वजपः स यज्ञोपवीतिना कार्यः । यदाह जमदग्निः—

" अपसव्येन कर्तव्यं सर्वं श्राद्धं यथाविधि ।
सूक्तं स्तोत्रं जपं मुक्त्वा विप्राणां च विसर्जनम् " इति ॥

**कात्यायनः**—" अश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा रक्षोघ्नीः पितृमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि " ।

---

१ क. च. प्रशस्यते । २ ख. घ. °थमः कल्पोऽभा° । ३ ख. ग. घ. कृच्छ्रद्वा° । ४ च. मूकः । ५ ग. शेषान्नमनु° । ६ क. घ च. °नुमन्य । ७ ग. घ. °द्भूमावपो दद्यात्सकृत्स° । ८ ख. च. °र्वे पूर्वे ज° । ९ क. ख. ग. °जपो भुञ्जानेषु यो जपः स ।

मनुः—“ ब्राह्मणं भिक्षुकं वाऽपि भोजनार्थमुपागतम् [1] ।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत् [2] ” ॥

यमः—“ भिक्षुको ब्रह्मचारी वा भोजनार्थमुपागतः ।
उपविष्टेषु तु प्राप्तः कामं तमपि भोजयेत् ” ॥ २३८ ॥

## अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ॥

अन्नं पायसादि ब्राह्मणानामभीष्टं तच्च हविर्भागार्हं क्रोधत्वरारहितो दद्यात् ।

शङ्खः—“ अग्नौकरणशेषेण यदन्नमभिघारयेत् ।
तस्मिंस्तु प्राशिते दद्याद्यदन्यत्प्रकृतं [3] भवेत् ” ॥

शङ्खलिखितौ—“ ततस्तिलैर्मांसैः शाकैः सूपैः कृसरपायसापूपैर्लाजैर्भक्षैः पानैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टतोऽन्नं दद्यादनसूयः ” ।

यमः—“ ततो विष(श)[4] मानीय भोजयेत्प्रयतो द्विजान् ।
अन्नं सूपं घृतं शाकं मांसं दधि पयो मधु ॥
सर्वमेतत्समानीय प्रणयेत यथासुखम् ।
यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरी ” ॥

नारायणः—“ यद्द्रव्यं यत्पवित्रं च यत्पित्र्यं यत्सुखावहम् ।
द्विजातिभ्यः सवर्णाया नार्या हस्तेन दीयते ॥
हृद्यं यदन्नमुष्णं यत्तदुष्णमिह शस्यते ” ।

मनुः—“ हविर्यच्चिररात्राय यच्चाऽऽनन्त्याय कल्पते ।
पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ” ॥

विष्णुः—“ तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः शाकैः प्रियङ्गुनीवारैर्गोधूमैश्च मासं प्रीयन्ते । एकादशौरभ्रेणाजेन संवत्सरं तु पयसा तद्विकारैर्वा ” ।

मनुः—“ मुन्यन्नानि पयः सोमं मांसं यच्चानुपस्कृतम् ।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते ” ॥

अनुपस्कृतं कार्यान्तरार्थत्वेनापक्वम् ।

---

१ क.ग.च. °मुपस्थितः । २ ख. °मभिपूज° । ३ क. च. °दन्नं प्रकृ° । ४ क. ख. च. °दमत्सम°।

बौधायनः—" पादेन पादमाक्रम्य यो भुङ्क्तेऽनापदि द्विजः ।
नैवासौ भोज्यते श्राद्धे निराशाः पितरो गताः " ॥

ब्रह्माण्डपुराणे–" शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
यो दद्याद्रागसंमोहान्न तद्गच्छति वै पितॄन् ॥
तस्मान्न देयमुच्छिष्टमन्नाद्यं श्राद्धकर्मणि ।
अन्यत्र दधिसर्पिर्भ्यां शिष्याय च सुताय च ॥
हर्षयेद्ब्राह्मणांस्तुष्टो भोजयेच्चाशनं शनैः ।
अन्नाद्येनासकृच्चैनान्गुणैश्च परिचोदयेत् " ॥

परिचोदयेत्प्रवर्तयेत् ।

निगमः—" अपेक्षितं न यो दद्याच्छ्राद्धार्थं परिकल्पितम् ।
अधः कृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ॥
मांसापूपफलेक्ष्वादि दन्तच्छेदं न भक्षयेत् ।
ग्रासशेषं न पात्रे स्यात्पीतशेषं तु नो पिबेत् " ॥

अत्रिः—" हुंकारेणापि यो ब्रूयाद्धस्ताद्वाऽथ गुणान्वदेत् ।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वा पिबेत् ॥
प्रौढपादो बहिष्कक्षो बहिर्जानुकरोऽथ वा ।
अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः ॥
पीत्वाऽवशिष्टतोयादि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धं पुनः खादेन्मोदकादि फलादि वा ॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि[2] वा ।
इत्थमश्नन्द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम् ॥
घृतं वा यदि वा तैलं विप्रो नाद्यान्नखच्युतम् ।
यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः " ॥

शातातपः—" अत्युष्णं सतिलं सर्वमनिवारितमद्रुतम् ।
अलोलुपो जितक्रोधो भुञ्जीतान्नं मितं हितम् " ॥

कार्ष्णाजिनिः–" कुर्यादथापरिश्रान्तो दम्भाहंकारवर्जितः ।
क्रोधं मोहं तथा लोभं वर्जयेच्छ्राद्धकर्मणि " ॥

कुर्याद्भोजनमित्यन्वयः ।

---

१ च. °मू । स दाता नरकं गत्वा ति° । २ ख. च. °वेद्भोज° ।

यमः—" यस्तु भुक्त्वा पुनर्भुङ्क्ते यश्च तैलाभिघारितम् ।
रजस्वलाभिर्यद्दृष्टं तद्वै रक्षांसि गच्छति " ॥

रजस्वलादिभिरिति व्याख्येयं बहुवचनम् ।

" निरोंकारेण यद्भुक्तं परिविष्टं समन्युना ।
दुरात्मना च यद्भुक्तं तद्वै रक्षांसि गच्छति " ॥

निरोंकारेणेत्योंकारादिकं[1] भोजनमन्त्रमन्तरेणेत्यर्थः ।

" विधिहीनमसृष्टान्नं[2] मन्त्रहीनमदक्षिणम् ।
अश्रद्धया हुतं दत्तं तद्वै रक्षांसि गच्छति ॥
नियुक्तश्चैव यः श्राद्धे यत्किंचित्परिवर्जयेत् ।
पितरस्तस्य तं मासं नैराश्यं प्रतिपेदिरे " ॥

वसिष्ठः—" उभयोः शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् ।
तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः ॥
तस्मादशून्यं हस्तेन कुर्यादन्नमुपागतम् ।
भाजनं वा समालभ्य तिष्ठेदुच्छोषणाद्द्विजः " ॥

तथा—" नियुक्तस्तु तथा श्राद्धे दैवे वा मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति " ॥

वराहपुराणे—" उद्धरेद्यदि पात्रं तु ब्राह्मणो ज्ञानदुर्बलः ।
हरन्ति राक्षसास्तस्य भुञ्जानोऽन्नं[3] वसुंधरे " ॥

शातातपः—" अर्धभुक्ते[4] तु यो विप्रस्तस्मिन्पात्रे जलं पिबेत् ।
यद्भुक्तं तत्पितॄणां तु शेषं विद्यात्तथाऽऽसुरम् ॥
हस्तं प्रक्षाल्य यश्चापः पिबेद्भुक्त्वा द्विजः सदा ।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः " ॥

मनुः—" श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः " ॥

शातातपः—" भग्नपृष्ठस्तु यो भुङ्क्ते बहिर्जानुस्तथैव च ।
हसते वक्ति चाजस्रं स ज्ञेयः पितृघातकः ॥
न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् " ॥

---

१ ख. °कं मन्त्र° । २ ख °मस्पृष्टा° । ग. °ममृष्टा° । ३ क.च. भुञ्जतोऽपि व° । छ.ञ. भुञ्जतोऽन्नं । ४ ख. °क्तेन यो ।

शङ्खलिखितौ-“ नाग्रासनस्थः पूर्वमश्नीयान्नाभ्यधिकं दद्यान्न प्रतिगृह्णीयात् ” ।

बौधायनः—“ जुषेति प्रथमं ब्रूयाद्भुक्तान्ते ब्राह्मणेषु च ।
मन्त्रकर्मविपर्यासादच्छिद्रं जायतामिति ” ॥

बह्वृचगृह्यपरिशिष्टम्—“ यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ” ॥

पाणितले दत्तमित्यग्नौकरणान्नमित्यर्थः । तच्चान्नं संकल्पात्पूर्वं पृथक्स्थाप्यं ततो भोजनार्थेनान्नेन मिश्रणीयम् ।

मनुः—“ न च द्विजातयो ब्रूयुर्दात्रा पृष्टा न्हविर्गुणान् ।
यावदूष्मा भवत्यन्ने यावदश्नन्ति वाग्यताः ॥
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ” ।

प्रचेताः—“ पीत्वाऽपोशानमश्नीयात्पात्रे दत्तमगर्हितम् ।
सर्वेन्द्रियाणां चापल्यं पादपाण्योस्तथैव च ॥
दन्तच्छेदं हस्तपानं वर्जयेच्चातिभोजनम् ” ।

पानादिकं हस्तेन न पिबेत् ।

शङ्खलिखितौ-“ ब्राह्मणा अन्नं गुणदोषैर्नाभिवदेयुः । नानृतं ब्रूयुः । अन्योन्यं न प्रशंसेयुः । अन्नपानं न प्रभूतमिति न ब्रूयुः[1] । अन्यत्र हस्तसंज्ञाया यावद्भूमौ यावत्प्रशस्तं यावत्सोष्म तावदश्नन्ति पितरो ह्यन्यत्र फलमूलपानकेभ्यः ” ।

फलादीनां सोष्मता न कार्येत्यर्थः ।

यमः—“ यश्च पाणितले भुङ्क्ते यश्च वायुं समुत्सृजेत् ।
न तस्य पितरोऽश्नन्ति यश्चैवाग्रे प्रशंसति ” ॥

वराहपुराणे-“ याचेत यदि दातारं ब्राह्मणो ज्ञानवर्जितः ।
पितरस्तस्य तुष्यन्ति दातुर्भोक्तुर्न संशयः ” ॥

हारीतः—“ उद्धृत्य पाणिं विहसन्सक्रोधो विस्मयान्वितः ।
श्राद्धकाले तु यद्भुङ्क्ते न तत्प्रीणाति वै पितॄन् ” ॥

वृद्धशातातपः-“ आसने पादमारोप्य यद्भुङ्क्ते च द्विजोत्तमः ।
हन्ति दैवं च पित्र्यं च तदन्नं च प्रजाः पशून् ” ॥

देवलः—“ योऽप्रसन्नमना भुङ्क्ते सोपानत्कोऽपि वा पुनः ।
प्रलापशीलः क्रुद्धो वा स विप्रः पितृदूषकः ” ॥

---

१ ख. ग. °ति ब्रू° ।

गोत्रसंबन्धनामानि इदमन्नमिति स्वधा ।
पितृक्रमादुदीर्येति स्वसत्तां विनिवर्तयेत् " ॥

स्वसत्ताविनिवर्तनाय न ममेति मानसः संकल्पः कार्यः । ततश्चामुकगोत्र पितरमुकैतत्तेऽन्नं स्वधा नम इत्युच्चार्य न ममेति मनसा संकल्पयेत् । एवं पितामहादावपि । यदा तु बहूनां पित्रादीनामेकैक एव ब्राह्मणो भोज्यते तदा यावन्तः पितरस्तावतोऽन्नभागान्बुद्ध्या कृत्वैकैकं भागं पित्रादिभ्यः संकल्पयेत् ।

तथा—" दत्ते वाऽप्यथ वाऽदत्ते भूमौ यो निक्षिपेद्बलिम् ।
तदन्नं विफलं याति निराशैः पितृभिर्गतैः " ॥

भरद्वाजः—" पितॄणामन्नमादाय बलिं यस्तु प्रयच्छति ।
स्तेयेन ब्राह्मणस्तेन स सर्वस्तेयकृद्भवेत् " ॥ २१७ ॥

**सव्याहृतिकां गायत्रीं मधु वाता इति त्र्यृचम् ॥**
**जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ २३८ ॥**

तिसृभिर्व्याहृतिभिः सहितां गायत्रीं मधुवाता इति च त्र्यृचं राहुगणगौतमदृष्टं गायत्रं वैश्वदेवं जपित्वा यथासुखं जुषध्वमिति विप्रान्प्रति वाच्यम् । ते च विप्रा वाचंयमा भुञ्जीरन् ।

प्रचेताः—" अपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ ।
मधु वात (ता) इति त्र्यृचं[२] मध्वित्येतत्त्रिकं तथा " ॥

मध्विति त्रिरुच्चारयेदित्यर्थः ।

लघुयमः—" अन्नं मधुमयं कृत्वा मधु वातेति मन्त्रितम् ।
अग्निहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत् ॥
सर्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत् " ॥

मधुमयं प्रचुरमधुकमित्यर्थः । अच्छिद्रभाषणं च प्रागेवापोशानदानात्कार्यं न पश्चात् । तदाह प्रचेताः—

" अपोशानकराग्राणामच्छिद्रस्य च भाषणात् ।
निराशाः पितरो यान्ति देवैः सह न संशयः " ॥

व्यासः—" जुषध्वमिति ते चोक्ताः सम्यग्विधृतभाजनाः ।
कृतमौनाः समश्नीयुरपोशानादनन्तरम् " ॥

---

१ घ. ङ. म. °क्रममुदी° । २ क. ख. घ. च. वात इ° । ३ क. °चं पठित्वैत° । ४ क. च. अग्रही° ।

**ब्रह्मपुराणे**—" ततो मधुघृताक्तं तु सोष्णमन्नं तिलान्वितम् ।
गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः ॥
एतद्वोऽन्नमितीत्युक्त्वा विश्वान्देवांश्च संयजेत् " ।

**अस्यार्थः**—वैश्वदेविकब्राह्मणभोजनार्थं मधुघृताभ्यामभ्यक्तेनान्नेन पूर्णपात्रं सतिलोदकेन हस्ताग्रेण गृहीत्वोमित्येतद्वो विश्वे देवा अमुकनामानोऽन्नमिति निवेदयेदिति ।

" पितृभ्यश्च ततो दद्यादन्नमामन्त्रणेन तु ।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ॥
अथ दत्त्वा समग्रं तु कुलान्तं भोजनं क्रमात् ।
विश्वेभ्यश्चाथ देवेभ्यः कुर्याच्च प्रतिपादनम् ॥
द्विजाङ्गुष्ठं गृहीत्वा तु पठन्मन्त्रं च वाग्यतः ।
पृथ्वी ते पात्रमित्यन्नममृतं चिन्तयेत्पठन्[1] ॥
विष्णो हव्यमिदं रक्ष मदीयमिति कीर्तयन् ।
एकैकस्याथ विप्रस्य गृहीत्वाऽङ्गुष्ठमादरात् ॥
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः ।
तिलयुक्तं च पानीयं सकुशं तेषु चाग्रतः ॥
विकिरेत्पितृभृत्येभ्यो जपन्नपहता इति ।
तेभ्यो[2] दद्यादपोशानं भवन्तः प्राशयन्त्विति " ॥

अस्माद्वाक्यादङ्गुष्ठनिवेशनं पश्चात्पूर्वमन्नसंकल्प इति गम्यते । ततश्चाङ्गुष्ठनिवेशनान्नसंकल्पयोः पौर्वापर्ये विकल्पः ।

**अत्रिः**—" असंकल्पितमन्नाद्यं पाणिभ्यां यदुपस्पृशेत् ।
अभोज्यं तद्भवेद्दत्तं पितॄणां नोपतिष्ठति " ॥

**देवादिभ्योऽन्नप्रदानं संकल्पः ।**

" अपोशानकरे विप्रे संकल्पं यः समाचरेत् ।
तदन्नमसुरैर्भुक्तं पितॄणां नोपतिष्ठति ॥
हस्तेन सक्तमन्नाद्यमिदमन्नमुदीरयेत्[3] ।
स्वधेति च ततः कुर्यात्स्वसत्ताविनिवर्तनम् ॥

१ ग. °न्तयन्पठेत् । वि° । २ ख. °भ्यो वदेदपो° । ३ क. ग. घ. °रयन् । स्व° ।

अपसव्यमत्र प्राचीनावीतम् ।

यमः—" यावद्धविष्यं भवति यावत्सृष्टं प्रदीयते ।
तावदश्नन्ति पितरो यावन्नाऽऽह ददाम्यहम् ॥
यत्किंचित्पच्यते गेहे भक्ष्यं वा भोज्यमेव वा ।
न भोक्तव्यं पितृणां स्यादनिवेद्य कथंचन " ॥

पुराणात्—" नापवित्रेण हस्तेन नैकेन न विना कुशम् ।
नाऽऽयसे नाऽऽयसेनैव श्राद्धे तु परिवेषयेत् " ॥

आयसे भाजन आयसेन दर्व्यादिना न दद्यादित्यर्थः ।

" तस्मादन्तारितं देयं पर्णेनाथ तृणेन च " ।

पैठीनसिः—" पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वधा । इदं विष्णुर्वि चक्रम इत्यनेनाङ्गुष्ठमन्ने चोदके चावधार्य व्याहृतिपूर्वां गायत्रीं जप्त्वा वाग्यतः स्वदतेति ब्रूयात् " ।

यमः—" अङ्गुष्ठमात्रो भगवान्विष्णुः पर्यटते महीम् ।
राक्षसानां वधार्थाय को मेऽद्य प्रहरिष्यति ॥
तस्माच्छ्राद्धेषु सर्वेषु अङ्गुष्ठग्रहणं स्मृतम् ।
निरङ्गुष्ठं च यच्छ्राद्धं बहिर्जानु च यत्कृतम् ॥
बहिर्जानु च यद्भुक्तं सर्वमेवाऽऽसुरं भवेत् ।
विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति च क्रमात् ॥
वारिष्वग्रप्रदत्तेषु तमङ्गुष्ठं निवेशयेत् " ।

कात्यायनः—" वैष्णव्या वा यजुषा वाऽङ्गुष्ठमन्नेऽवगाह्यापहता इति तिला-न्प्रकीर्योष्णं स्विष्टमन्नं दद्यात् ।

इदं विष्णुर्वि चक्रम इति वैष्णवी, विष्णो हव्यमिति यजुः । दद्याद्देवेभ्यः पितृभ्यश्चेति शेषः ।

विष्णुः—" नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत् ।
पित्रे पितामहाय च नामगोत्राभ्यामुदङ्मुखेषु " ।

उक्तवाक्येभ्यः पूर्वमङ्गुष्ठनिवेशनं पश्चादन्नसंकल्प इति क्रमः प्रतीयते । अत्र प्राङ्मुखयोरुदङ्मुखेष्विति सप्तम्या ब्राह्मणानामाहवनीयार्थत्वं प्रतिपद्यते । विश्वेभ्यो देवेभ्यः पित्र इत्यादिकया चतुर्थ्या विश्वेषां देवानां पित्रादेश्च देवतात्वं तेन यदापस्तम्बेन—" अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच " इत्यादिना श्राद्धमुक्तं तदेतन्निवेदनादिशब्देनोच्यते ।

---

१ क. ख. घ. °वग्राह्या° ।

ततश्च विप्रभोजनप्रदेशात्प्रदेशान्तरेऽन्नस्य वर्धितं हस्ताभ्यामुपसंगृह्य विप्रसंनिधौ पित्रादीन्ध्यायञ्शनकैः स्थापयेत्स्वयमेव । एकैकस्य भोक्तुर्भोजनार्थमुपकल्पितो भागोऽन्नस्य वर्धितम् ।

तथा—" उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते ।
तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः ॥
गुणांश्च सूपशाकाद्यान्पयो दधि घृतं मधु ।
विन्यसेत्प्रयतः सम्यग्भूमावेव समाहितः " ॥

गुणा व्यञ्जनादिकानि तानि च सूपशाकादिशब्दैर्निर्दिष्टानि तानि च भूमिस्थितेषु भाजनेषु देयानि । नासर्पा(त्रा)दिस्थितेषु ।

वृद्धशातातपः—" आयसेन तु पात्रेण यदन्नमुपनीयते ।
भोक्ता विष्ठासमं भुङ्क्ते दाता तु नरकं व्रजेत् " ॥

तथा—" हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥
सौवर्णराजताभ्यां वा खड्गेनौदुम्बरेण वा ।
दत्तमक्षयतां याति फल्गुपात्रेण वा पुनः " ॥

औदुम्बरं ताम्रमयम् ।

यमः—" माक्षिकं फाणितं शाकं गोरसं लवणं तथा ।
हस्तदत्तानि भुक्त्वा तु कृच्छ्रं सांतपनं चरेत् " ॥

विष्णुः—" न प्रत्यक्षं लवणं दद्यात् " ॥

वायुपुराणे—" सैन्धवं लवणं चैव तथा मानससंभवम् ।
पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः " ॥

हारीतः—" पङ्क्त्यां वै चोपविष्टेभ्यः समं गन्धादि भोजनम् ।
न पङ्क्त्यां विषमं दद्यान्न याचेन्न च दापयेत् ॥
याचको दापको दाता सर्वे निरयगामिनः(णः) " ।

कार्ष्णाजिनिः—" अपसव्येन कर्तव्यं पित्र्यं कृत्यं विशेषतः ।
अन्नदानादृते सर्वमेवं मातामहेष्वपि ॥
अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति ।
विष्ठामश्नन्ति पितरस्ते च सर्वे द्विजातयः ॥
यत्तु श्राद्धं क्रियादुष्टमज्ञानपरिवेषितम् ।
तस्मिन्भुक्त्वाऽऽचरेत्कृच्छ्रं चान्द्रायणमथापि वा " ॥

---

१ क. नासर्पादि । घ. नासन्स्यादि । च. नासंन्यादि° । २ ख. फालितं । ३ क. पितृकृ° ।

स्तदा भवत्स्वेवाग्नौकरणमिति ब्राह्मणानुज्ञानम् । तथेति च प्रतिवचनम् । तदाह शौनकः—

" अनग्निश्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पूर्ववत्तथाऽस्त्विति " ।

यमः—" हुत्वाऽग्नौ च ततः पश्चाद्विधिनाऽनेन मन्त्रवित् ।
स्वधेत्येवं हविःशेषमादाय प्रसमीक्ष्य च " ॥

होमावशिष्टं स्वधेत्यनेन मन्त्रेण प्रसमीक्ष्याऽऽलोक्याऽऽदाय पितृभ्यो दत्त्वा पिण्डार्थमवशेषयेत् ॥ २३५ ॥ २३६ ॥

दत्त्वाऽन्नं पृथिवी पात्रमिति पात्रानुमन्त्रणम् ॥
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ॥ २३७ ॥

हुतशेषादन्यद्भोजनार्थमुपकॢप्तमन्नं विचित्रं तद्देवेभ्यः पितृभ्यश्च दत्त्वा संकल्प्य पृथिवी ते पात्रमिति पात्रानुमन्त्रणं कृत्वा " इदं विष्णुर्वि चक्रमे " इति गायत्र्या मेधातिथिदृष्टया विष्णुदै(दे)वत्यया द्विजाङ्गुष्ठं तस्मिन्नन्ने निवेशयेत् ।

शौनकः—" पाकं सर्वमुपानीय संवेद्य च पृथक्पृथक् ।
विधिना देवपूर्वं तु परिवेषणमारभेत् " ॥

संवेद्य भोक्तॄणां संविदितं कृत्वेत्यर्थः ।

उशना—" हुतशेषं पितृभ्यश्च दत्त्वाऽन्नं परिवेषयेत् ।
हविष्यं मधुमांसानि पायसापूपमेव च " ॥

शङ्खः—" उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत् ।
अन्यत्र फलपुष्पेभ्यः पानकेभ्यश्च पण्डितः " ॥

फलाद्यनुष्णं देयमित्यर्थः ।

धर्मः—" परिवेषणमिष्टं स्याद्भार्यया पितृतृप्तये ।
फलस्यानन्तता प्रोक्ता स्वयं च परिवेषणे " ॥

हुतशेषं प्रदाय स्वयं च परिवेषणं कार्यमिति विहितम् । शौनकस्तु परिवेषणोत्तरकालं हुतशेषप्रदानमाह—" अन्नमन्ने सृष्टं दत्तं समृध्नुकम् " इति ।

हुतावशिष्टमन्नं भाजने पूर्वं दत्ते भोजनार्थेऽन्ने दत्तं समृध्नुकं समृद्धिकरं भवतीत्यर्थः ।

मनुः—" पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्धितम् ।
विप्रान्तिके पितॄन्ध्यायञ्शनकैरुपनिक्षिपेत् " ॥

---

१ ङ. °त्राभिम° । २ ख. °भ्यः पात्रादिना च द° । ग. °भ्यः पात्रादिभिश्च । ३ च. पित्रादिभ्य° । ४ ख. °कमृद्धि । मृ°।

श्चानाहिताग्निश्चौपसदे कुर्यादेव न न कुर्यात् । न त्वनाहिताग्निरेवौपसद इति तस्यार्थः । अनग्निस्तु विप्रकरेऽग्नौकरणहोमं कुर्यादित्याह मनुः—

"अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्" ।

यत्तु जातूकर्ण्येनोक्तम्—"अग्न्यभावे तु विप्रस्य हस्ते दद्यात्तु दक्षिणे ।
अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न विन्दति"

इति, तद्भार्यावेदनात्प्राङ्नियताग्न्यभावो न पुनस्ततः प्रागेवाग्न्यभाव इत्यभिप्रायः(येण) । लब्धभार्योऽपि[1] प्राग्दायविभागादनाग्निः संभवति । पाणावेवोपपादयेदित्येवशब्दो लौकिकमग्निं व्युदस्यति यतः स एवाऽऽह—

"न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते" ।

मत्स्यपुराणे—"अग्न्यभावे तु विप्रस्य[2] पाणावथ जलेऽपि वा ॥
अजकर्णेऽश्वकर्णे वा गोष्ठे[3] वाऽथ शिवान्तिके" ।

शङ्खः—"अजस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे ॥
अप्सु चैव कुशस्तम्बे अग्निं कात्यायनोऽब्रवीत् ।
रजते च सुवर्णे च नित्यं वसति पावकः" ॥

कात्यायनः—"पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निकः ।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥
मातामहस्य भेदेऽपि कुर्यात्तन्त्रे च साग्निकः" ।

मातामहस्य यो ब्राह्मणस्तस्य पाणौ वैश्वदेविकतन्त्रे[4] भेदे च पृथगग्नौकरणं कार्यमित्यर्थः ।

वायुपुराणे—"दैवे ह्यनग्निकः कुर्याच्छेषं पित्र्ये निवेदयेत् ।
न हि स्मृताः शेषभाजो विश्वे देवाः पुराणगैः" ॥

यमः—"दैवविप्रकरे[5]ऽनाग्निः कृत्वाऽग्नौकरणं द्विजः ।
हुत्वा पितृभ्यः शेषात्तु पिण्डार्थं स्थापयेत्पुनः" ॥

वायुपुराणम्—"वैश्वदेवे यदैकस्मिन्भवेयुर्द्व्यादयो द्विजाः ।
तदैकपाणौ दातव्यं स्याद्विधिर्विहितस्तदा" ॥

अस्यार्थः—यदैकस्मिञ्श्राद्धे वैश्वदेविके कार्ये द्वौ चत्वारः षडित्येवं द्व्यादयो विप्राः स्युस्तदैकस्य हस्ते होमे कृते कृतो विधिरतो न विप्रान्तरहस्ते कार्य इति । वैश्वदेविकहस्ते होमोऽनग्नेर्वैकल्पिकः । यदा च हस्ते होम-

---

१ ख. °ब्धदारोऽपि । २ ख. विप्राणां । ३ च. गोकर्णेऽथ । ४ च. °तन्त्रभे° । ५ क. ख. दैवे वि° ।

सरलो देवदारुश्च सालश्च खदिरश्च ह ।
समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥
ग्राह्याः कण्टकिनश्चैव यज्ञिया ये च केचन ।
पूजिताः समिदर्थे ये पितृणां वचनं यथा ॥
श्लेष्मातको रक्तमालः कपित्थः श(शा)ल्मलिस्तथा ।
नीपो विभीतकश्चैव श्राद्धकर्मणि गर्हिताः ॥
चिरबिल्वस्तथा[१] टङ्कस्तिन्दुकाम्रातकौ तथा ।
बिल्वकः कोविदारश्च एते श्राद्धे विगर्हिताः ॥
निवासश्चैव कीटानां गर्हिताः स्युरयज्ञियाः ।
गुल्मांश्च वेष्टितान्यांश्च वल्लीभिश्च समन्ततः ॥
शकुनानां निवासांश्च वर्जयेद्विजसत्तमः ।
अन्यांश्चैवंविधान्सर्वान्विवर्जयेद्वा अयज्ञियान् ॥
पुष्पाणां च फलानां च भक्षाणां[२] च प्रयत्नतः ।
अग्रमुद्धृत्य सर्वेषां जुहुयाज्जातवेदसे " ॥

मार्कण्डेयः—" आहिताग्निश्च जुहुयाद्दक्षिणाग्नौ समाहितः ।
अनाहिताग्निश्चौपसदे अग्न्यभावे तथाऽप्सु वा " ॥

औपसदो गृह्याग्निः । आहिताग्नेर्दक्षिणाग्निविधानमौपसदाभावे[३][४] वेदितव्यम् । औपसदे[५][६] तु सति तत्रैव । तथा च वायुपुराणम्—

" आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः ॥
अग्न्यर्थं लौकिकं वाऽपि जुहुयात्कर्मसिद्धये " ॥

अत्र वाक्येऽग्निशब्दः प्रकृतेऽग्नौ वर्तते । श्राद्धप्रयोगविधौ च गृह्योऽग्निः प्रकृतः श्राद्धप्रयोगस्य गृह्यशास्त्रविधेयत्वात् । गृह्याग्न्यधिकारेण च गृह्यशास्त्राणां प्रवृत्तिरिति तदभाव एव तत्कार्ये दक्षिणाग्निलौकिकाग्न्योर्विधिर्युज्यते तत्सद्भावे तु तेनैव स्वकार्यसिद्धौ किमग्न्यन्तरविधानेन । योऽपि धर्मशास्त्रेषु पुराणेषु च श्राद्धप्रयोगविधिः स गृह्योक्तादभिन्नः प्रत्यभिज्ञानात्तेन धर्मशास्त्रेष्वपि गृह्य एवाग्निः प्रकृतः । अतोऽग्न्यर्थमित्यत्राग्निशब्दो गृह्यपरः प्रकृतत्वादिति[७] युक्तम् । यत्पुनरनाहिताग्निश्चौपसद इति वचनं तद्दक्षिणाग्नावग्नौकरणविधानादनाहिताग्नेः श्राद्धानधिकाराशङ्कानिराकरणार्थम् । तत-

---

१ क. ख. चिरिबि° । २ ग. भक्ष्याणां । ३ ग. °मौपास° । ४ ख. ग. °पवसनाभा° । ५ ग. औपास° । ६ ख. ग. °पवसने तु° । ७ ख. °कृत्यत्वादित्ययु° ।

विष्णुः—" मन्त्रहीनं क्रियाहीनं संपद्धीनं द्विजोत्तमाः ।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम " इति ॥ २३४ ॥

अग्नौ करिष्य आदाय पृच्छत्यन्नं घृतप्लुतम्[1][2] ॥
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत् ॥२३५॥
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ॥ २३६ ॥

बहुतराज्यसिक्तमन्नमुपादायाग्नौ करिष्य इत्यनेन मन्त्रेण श्राद्धभोक्तॄननुज्ञाप्य कुरुष्वेत्यनेन तैरनुज्ञातः स्वसूत्रोक्तपिण्डपितृयज्ञहोमकल्पेन तदन्नैकदेशमग्नौ हुत्वा हुतशेषं ब्राह्मणभोजनभाजनेषु रौप्यमयेषु तदसंभवे प्रतिषिद्धवर्जं यथालाभोपपन्नेषु समाहितस्तन्मनाः प्रक्षिपेत् । रौप्यपात्रनिर्देशात्पितृब्राह्मण[3]भाजनेष्वेव हुतशेषप्रदानमिच्छतीति गम्यते । अत्रानुज्ञा[4]नवचनं सर्वैरेव ब्राह्मणैर्युगपद्वाच्यमित्याह मनुः—

" अग्नौ कुर्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह " ॥

ब्रह्माण्डपुराणे—" आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः ।
अग्नये कव्यवाहाय स्वधा नम इति ब्रुवन् ॥
सोमाय च पितृमते स्वधा नम इति ब्रुवन् ।
यमायाङ्गिरसां पत्ये स्वधा नम इति ब्रुवन् ॥
इत्येते होममन्त्रास्तु त्रयाणामनुपूर्वशः ।
दक्षिणतोऽग्नये नित्यं सोमायोत्तरतस्तथा ॥
एतयोरन्तरे नित्यं जुहुयाद्वै विवस्वते ।
बहुशुष्केन्धने चाग्नौ सुसमिद्धे[5] विशेषतः ॥
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ।
अप्रबुद्धे[6] सधूमे वा जुहुयाद्यो हुताशने ॥
यजमानो भवेदन्धः[7] सोऽमुत्रेति हि नः श्रुतम् ।
अन्तर्निधाय समिधं जुहुयात्कव्यवाहनम् ॥
पलाशफल्गुन्यग्रोधप्लक्षाश्वत्थविकङ्कताः ।
उदुम्बरस्तथा बिल्वश्चन्दनं यज्ञियाश्च ये ॥

१ क. घ. घृताप्लु° । २ क. °म् । ओंकुरुष्वेत्यनु° । ३ ख. ग. °णभोज° । ४ क. घ. च. °ज्ञाव° । ५ घ. असमिद्धे । ६ क. ग. °प्रसिद्धे । ७ क. °न्धः सपुत्र इति नः ।

दद्यात्पवित्रं योगिभ्यो जन्तुर्धारिणमम्भसः ।
अथ निष्कसहस्रस्य फलमाप्नोति मानवः" ॥

तथा—"लवणेन सुपूर्णानि श्राद्धे पात्राणि दापयेत् ।
रसास्तमुपतिष्ठन्ति भक्ष्यं सौभाग्यमेव च ॥
पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजने ।
पात्रं भवति कामानां विद्यानां च धनस्य च ॥
राजतं काञ्चनं चैव दद्याच्छ्राद्धेषु यः पुमान् ।
दत्त्वा स लभते दाता प्राकाम्यं धनमेव च" ॥

पुराणात्—"राजतं राजताक्तं वा पितॄणां पात्रमेव च ।
रजतस्य कथा वाऽपि दर्शनं दानमेव च ॥
अनन्तमक्षयं स्वर्ग्यं राजतं दानमुच्यते ।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत" ॥

मनुः—"राजतैर्भाजनैरेषामपि वा राजतान्वितैः ।
वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते" ॥

वृद्धशातातपः—"पात्रे तु मृन्मये यस्तु श्राद्धे वै भोजयेत्पितॄन् ।
अन्नदाता पुरोधाश्च भोक्ता च नरकं व्रजेत्" ॥

अत्रिः—"भोजने हैमरौप्याणि दैवे पित्र्ये यथाक्रमम् ।
न मृन्मयानि कुर्वीत भोजने दैवपित्र्ययोः ॥
पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने" ।

विष्णुः—"तैजसानि पात्राणि दद्याद्विशेषतो राजतानि । घृतादि-
दाने तैजसानि पात्राणि फल्गुपात्राणि वा" ।

फल्गुर्वृक्षविशेषः ।

मत्स्यपुराणात्—"अकृत्वा भस्ममर्यादां यः कुर्यात्पङ्क्तिभोजनम् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति" ॥

ब्रह्मपुराणे—"मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः ।
गौरमृत्तिकया वाऽपि प्रणीतेनाथ भस्मना ॥
पाषाणचूर्णसंकीर्णादाहृतं तत्र वर्जयेत्" ।

ब्रह्माण्डपुराणे—"प्रक्षाल्य हस्तपात्रादि पश्चादद्भिर्विधानवित् ।
प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपेच्छुचौ" ॥

---

१ घ. च. °न्तुवार° । २ क. °णसंभवः । अ° । ३ क. ग. घ. °त्रमुच्यते । र° ।

**क्रतुः**—" ललाटे पुण्ड्रकं दृष्ट्वा स्कन्दे(न्धे) मालां तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम् " ॥

**पुण्ड्रकं चात्र वृत्तं निषिद्धं नोर्ध्वम् ।**

**मरीचिः**—" घृताद्वा तिलतैलाद्वा नान्यद्दद्यात्तु दीपकम् " ॥

**अत्रिः**—" युवं वस्त्राणीत्यनेन दद्याद्वासांसि शक्तितः " ॥

**वायुपुराणात्**—" वासो हि सर्वदै(दे)वत्यं सर्वदेवैरभिष्टुतम् ।
वस्त्राभावे क्रिया न स्याद्यज्ञदानादिका क्वचित् ॥
तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः ।
ददद्वै तानि चाऽऽप्नोति यज्ञदानतपांसि च " ॥

**तथा**—" आच्छादनं तु यो दद्यादहतं श्राद्धकर्मणि ।
आयुः प्राकाम्यमैश्वर्यं रूपं च लभते शुभम् ॥
कौशेयं क्षौमकार्पासं दुगू(कू)लमहतं तथा ॥
श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान् " ॥

**शातातपः**—" युवा सुवासा इति वासो दद्यात्तदभावे यज्ञोपवीतकम् " ॥

**तथा**—" लोके श्रेष्ठतमं सर्वमात्मनश्चापि यत्प्रियम् ।
सर्वं पितॄणां दातव्यं तदेवाक्षयमिच्छता " ॥

**वायुपुराणे**–" श्राद्धेषूपानहौ दद्याद्ब्राह्मणेभ्यो विशेषतः ।
दिव्यं स लभते चक्षुर्वाजियुक्तान्रथांस्तथा ॥
यज्ञोपवीतं यो दद्याच्छ्राद्धकाले तु धर्मवित् ।
पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम् ॥
कृतं विप्रेण यो दद्याच्छ्राद्धकाले कमण्डलुम् ।
मधुक्षीरस्रवा धेनुर्दातारमनुगच्छति ॥
चक्रविद्धं तु यो दद्याच्छ्राद्धकाले कमण्डलुम् ।
धेनुं स लभते दिव्यां घटोपभृतदोहनाम् ॥
तूलपूर्णे तु यो दद्यात्पादुके श्राद्धकर्मणि ।
शोभनं लभते यानं पादयोः सुखमेव च ॥
व्यजनं तालवृन्तं च दत्त्वा विप्राय सत्कृतम् ।
प्राप्नुयात्स्पर्शयुक्तानि सुगन्धीनि मृदूनि च ॥
श्रेष्ठं छत्रं च यो दद्यात्पुष्पमालाविभूषितम् ।
प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥

**शङ्खः**—" उपवीतं कटौ कृत्वा कुर्याद्गात्रानुलेपनम् ।
एकवासाश्च योऽश्नीयान्निराशाः पितरो गताः " ॥

**वृद्धमनुः**—" विनोपवीतं नो कुर्याद्गन्धैः श्राद्धेऽनुलेपनम् ।
नियुक्तश्च शिखावर्जं माल्यं शिरसि वेष्टयेत् " ॥

**मार्कण्डेयः**—" जात्याश्च सर्वा दातव्या मल्लिकाः श्वेतयूथिकाः " ।

**ब्रह्माण्डपुराणे**—" शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥
जपादि कुसुमं भाण्डी रूषिकाः सकुरण्डिकाः ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः " ॥

**शङ्खः**—" उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥
जलोद्भवानि देयानि रक्तान्यपि विशेषतः " ।

**चैत्यवृक्षः श्मशानवृक्षः । वर्जयेदित्यनुवृत्तौ विष्णुः**—
" उग्रगन्धीनि कण्टकिजा[१]नि रक्तानि च पुष्पाणि ।
तथा सितानि सुगन्धीनि कण्टकिजातान्यपि जलजानि रक्तान्यपि दद्यात् । पुष्पवती[२]रिति पुष्पम् " ।

**ओषधीः प्रतिमोदध्वमित्यस्या मध्ये प्र[३]तीकमेतत् ।**

**ब्रह्मपुराणे**—" चन्दनागुरुणी चोभे तथैवोशीरपद्मकम् ।
तुरुष्कं गुग्गुलुं चैव घृताक्तं युगपद्दहेत् ॥
घृ[४]तं न केवलं दद्याद्दुष्टं वा तृणगुग्गुलुम् " ।

**शङ्खः**—" धूपार्थे गुग्गुलुं दद्याद्घृतयुक्तं म[५]धूत्कटम् " ।

**पुराणात्**—" वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।
आ[६]ह्वा[७]नं सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् " ॥

**शातातपः**—" हस्तवाताहतं धूपं ये पिबन्ति द्विजोत्तमाः ।
वृथा भवति तच्छ्राद्धं तस्मात्तत्परिवर्जयेत् " ॥

**देवलः**—" पुष्पवतीतिमन्त्रेण दद्यात्पुष्पाण्यतन्द्रितः ।
इदं ज्योतिरिति ज्योतिः सुज्योतिरिति तेऽपि च " ॥

---

१ ग. °जातानि । २ ग. घ. च. °तीति । ३ ग. घ. प्रत्येक° । ४ क. ग. धृतेन । ५ क. मदोत्क° । ६ ग. आहारः स° । ७ च. °ह्वानः स° ।

न्युब्जं पात्रं करोति पितृषदनमसीति कुशवत्यां भूम्यामधो-
मुखं कुर्यात् । तस्योपरि च कुशपुष्पगन्धधूपदीपोपवीतवा-
ससां दानानि " ।

तस्य पात्रस्योपरि गन्धादिदानं कुशसाहचर्यात् । अन्ये तु मन्यन्ते—गन्धादिदानं पितृब्राह्मणेभ्य इत्युक्त्वा कुशदानमेव पात्रस्योपरीति, कुशशब्दं च द्वितीयान्तं पठन्ति । श्लोककात्यायनः—

" अर्घ्यं स्वधा यो इत्युक्त्वा संस्रावानभिमन्त्रयेत् ।
ये देवा इति मन्त्रेण पुत्रकामो मुखं स्पृशेत् " ॥

यमः—" पैतृकं प्रथमं पात्रं तस्मिन्पैतामहं न्यसेत् ।
प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेत् ॥
स्पृष्टमुद्धृतमन्यत्र नीतमुद्घाटितं तथा ।
पात्रं दृष्ट्वा व्रजन्त्याशु पितरः प्रशपन्ति च " ॥

मत्स्यपुराणात्—" या दिव्येत्यर्घ्यमुत्सृज्य दद्याद्गन्धादिकं ततः ।
वस्त्रोत्तरं चानुपूर्वं दत्त्वा संस्रवमादितः ॥
पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत् " ।

अस्यार्थः—"या दिव्याः" इत्यर्घं(र्घ्यं) दत्त्वा पितृपात्रे संस्रावमर्घ्यावशेषमादित आदौ कृत्वा निधायानन्तरं श्राद्धदेशादुत्तरतो न्युब्जं तन्न्यसेत् । ततो गन्धादि वस्त्रपर्यन्तं दद्यादिति ।

विष्णुः—" चन्दनकुङ्कुमकर्पूराण्यनुलेपनाय " ।

मार्कण्डेयः—" चन्दनागुरुकर्पूरकुङ्कुमानि प्रदापयेत् ॥
अश्वमेधमवाप्नोति पितॄणामनुलेपनात् " ।

व्यासः—" विपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।
धूपं च धूरसीत्युक्त्वा दीपो(प) ज्योतिरिदं च ते " ॥

तत्र—" गन्धद्वाराम् " इत्यनुष्टुभं श्रीदै(दे)वत्यां विश्वे देवा अपश्यन् । " धूरसि " इति धूंपदै(दे)वत्यं यजुः परमेष्ठी प्राजापत्योऽपश्यत् ।

वृद्धशातातपः—" पवित्रं तु करे कृत्वा यः समालभते द्विजम् ।
राक्षसं तद्भवेच्छ्राद्धं निराशैः पितृभिर्गतैः " ॥

गन्धैश्चर्चनं समालम्भनम् ।

देवलः—" यज्ञोपवीतं विप्राणां स्कन्धान्नैवावतारयेत् ।
गन्धादिपूजासिद्ध्यर्थं दैवे पित्र्ये च कर्मणि " ॥

---

१ क. °त् । पितृषदनद्ा° । २ घ. हि । ३ ग. च. संस्राव° । ४ क. घ. च. धूर्दैवं° ।

स्मृत्यन्तरम्—" विभक्तिभिस्तु संयुक्तं दीयते पितृदैवतम् ।
दत्तमक्षयतां याति विपरीतं निरर्थकम् " ॥

बह्वृचगृह्यपरिशिष्टे—" गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि ।
गोत्रस्तु तर्पणे कुर्यादेवं दाता न मुह्यति ॥
सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि ।
अक्षय्ये तु पितुः कार्यं तर्पणं तृप्तिमिच्छता ॥
शर्मन्नर्घ्यादिके कार्यं शर्मणोऽक्षय्यकर्मणि ।
शर्मा तु तर्पणे कुर्यादेवं कुर्वन्न मुह्यति " ॥

ततश्चामुकगोत्र पितरमुकशर्मन्नेतत्तेऽर्घ्यमिति प्रयोक्तव्यम् । एवं पितामहादिष्वपि । तर्पणे त्वमुकगोत्रः पिताऽमुकशर्मा तृप्यत्विति प्रयोगः । एवं पितामहादिष्वपि । अक्षय्योदके त्वमुकगोत्रस्य पितुरमुकशर्मणोऽक्षय्यमस्त्विति प्रयोगः । एवं पितामहादिष्वपि ॥ २३२ ॥ २३३ ॥

**दत्त्वाऽर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥**
**पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः॥२३४॥**

अर्घ्यं दत्त्वाऽवशिष्टान्संस्रवान्संस्रावपात्रस्थाञ्जलशेषानेकस्मिन्पात्रे कृत्वा यथाविधि पितृभ्यः स्थानमसीति मन्त्रेण तत्पात्रमधोमुखं करोति । अधो भूम्यां न फलकादावित्यर्थः ।

प्रचेताः—" प्रथमं पितृपात्रे तु सर्वान्संभृत्य संस्रवान् ।
पितृभ्यः स्थानमित्युक्त्वा कुर्याद्भूमावधोमुखम् ॥
अर्घ्यसंस्रावपात्रं तु शुन्धन्तामिति संस्पृशेत् ।
पितृभ्यः स्थानमसीति न्युब्जं कुर्यात्पवित्रवत् ॥
तस्योपरि कुशं दत्त्वा प्रदद्याद्दैवपूर्वकम् ।
गन्धपुष्पाणि धूपं च प्रदीपं च यथाक्रमम् " ॥

अनेन गन्धदानं चैवं ब्राह्मणेषु कार्यमित्युच्यते । तदा पुष्पादिदानान्यपि । ततश्च दत्त्वोदकं गन्धमाल्यमित्यत्र य उक्तः क्रमस्तेनास्य विकल्पः ।

कात्यायनः—" एकस्मिन्पितृपात्रे संस्रावान्समवनीय पुत्रकामो मुखमनक्ति ।
तथा शुन्धन्तां लोकाः पितृषदना इत्येकदेशमवसिच्य तत्र

१ क. ख. °क्षये तु । २ क. ख. °क्षयक° । ३ क. °न्संस्रा° । ग. च. °न्संस्रावान्पात्र° । ४ घ. °वान्पात्र° । ५ क °थमे पि° । ६ ग. घ. तथा । ७ ग. संस्रवा° । ८ । ख. °दन इ° ।

ततो वामेन हस्तेन गृहीत्वा चमसान्क्रमात् ।
पितृतीर्थेन तत्तोयं दक्षिणेन च पाणिना ॥
दत्तदर्भोदके हस्ते विप्रेभ्यश्च पृथक्पृथक् ।
दद्यान्मन्त्रं जपंश्चाथ या दिव्या आप इत्यपि ॥
अमुकामुकगोत्रैतत्तुभ्यमस्तु तिलोदकम् ।
एष तेऽर्घ इति प्रोच्य तेभ्यो दद्याद्यथा स्वधा ॥
जलं क्षीरं दधि घृतं तिलतण्डुलसर्षपान् ।
कुशाग्राणि च पुण्यानि दत्वाऽऽचामेत्ततः स्वयम् ॥
इदं वः पुष्पमित्युक्त्वा[1] पुष्पाणि च निवेदयेत् ।
अयं वो धूप इत्युक्त्वा तदग्रे तु दहेत्ततः ॥
अयं वो दीप इत्युक्त्वा दीपं गृह्यं निवेदयेत् ।
अनङ्गलग्नं यद्वस्त्रं विभवे तद्युगं शुभम् ॥
श्वेतचन्दनकर्पूरकुङ्कुमानि शुभानि च ।
विलेपनार्थं दद्यात्तु यद्वाऽन्यत्पितृवल्लभम् " ॥

**कात्यायनः**—" अपसव्यवदासिञ्चेत्पितृपात्रेषु पूर्ववत् ।
ततस्तिलांस्तिलोऽसीति गन्धपुष्पाणि चैव हि " ॥

पूर्ववच्छं नो देवीरित्यनयेत्यर्थः ।

**दक्षः**—" दत्त्वा हस्ते पवित्रं तु कृत्वा पूजां च पादतः ।
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥
हस्ते प्रादेशमात्रं तु त्रिवृद्दत्त्वा पवित्रकम् ।
अभ्यर्च्य पूर्वतोऽर्घ्यं[2] वै दद्यात्तु पितृदिङ्मुखः " ॥

**श्लोकगौतमः**—" शिरसः पादतो वाऽपि सम्यगभ्यर्च्य संयतः ।
पूर्ववत्पृथगेकैकमेकैकेनार्घयेत्क्रमात् ॥
एकैकं ब्राह्मणमेकैकेनार्घ्येण प्रतिपूजयेत् " ॥

**प्रचेताः**—" अप्रदक्षिणमेतेषामेकैकं तु पितृक्रमात् ।
संबोध्य गोत्रनामभ्यामेष तेऽर्घ इतीरयेत् " ॥

**ततश्च यद्येकैकस्य द्वौ द्वौ त्रींस्त्रीन्वा विप्रानुपवेशयेत्तथाऽप्येकैक एव ब्राह्मणोऽर्घ्यो[3] न सर्वे । अत एव शौनकस्त्रीण्येवार्घ्यपात्राण्याह—" त्रिषु पात्रेष्वेकैकद्रव्येष्वनेकद्रव्येषु वा " इति ।**

---

१ क. °क्त्वा दद्यान्माल्यं सुशोभनम् । श्वे° । २ घ. प्रपू° । ३ क. °णोऽर्घ्येन । ख. °णोऽर्घ्येण स° ।

ततो वैश्वदेविकमा(का)वाहनादिदीपप्रदानान्तपदार्थे(र्थ)काण्डादूर्ध्वमपसव्यं प्राचीनावीतं कृत्वाऽप्रदक्षिणं प्राक्संस्थं द्विगुणान्कुशान्विष्टरार्थान्दत्त्वा पितॄन्पितामहान्प्रपितामहानित्येवमादीनुद्देश्यान्पितॄनावाहयिष्य इति विप्राननुज्ञाप्याऽऽवाहयति एतैरनुज्ञात उशन्तस्त्वेत्यनुष्टुभा दमनदृष्टया पितृदै(दे)वत्यया पित्रादीनावाह्याऽऽयन्तु न इति त्रिष्टुभं शङ्खदृष्टां पितृदै(दे)वत्यां जपेत् । यवकार्यं चात्र तिलैः कर्तव्यम् । अर्घ्यादि वैश्वदेविकवत्कुर्यात् ।

पुराणात्—" अपसव्यं ततः कृत्वा तिलानादाय संयतः ।
पितॄनावाहयामीति पृच्छेद्विप्रानुदङ्मुखान् ॥
आवाहयेदनुज्ञात उशन्तस्त्वेत्यृचा पितॄन् ।
क्षिप्त्वाऽपसव्यं च तिलान्पितॄन्ध्यायन्समाहितः ॥
जपेदायन्तु न इति मन्त्रं सम्यगशेषतः ।
रक्षार्थं पितृसत्रस्य त्रिः कृत्वा सर्वतोदिशम् ॥
तिलांस्तु प्रक्षिपेन्मन्त्रं तूच्चार्यापहता इति ।
सौवर्णराजताम्भोजमणिपात्राण्यथापि वा ॥
अर्घ्यार्थं संस्करोत्येव शुभपत्रपुटादिना " ।

ब्रह्मपुराणे—" पितॄनावाहयिष्येऽहं शेषान्विप्रान्वदेत्ततः ।
आवाहयस्वेत्युक्तस्तैः सावधाना भवन्त्विति " ॥

सावधाना भवन्त्विति कर्ता ब्रूयात् ।

" इदं वः पाद्यमर्घ्यं च चतुर्थ्यन्तं निवेदयेत् ।
पितॄन्पितामहान्यक्ष्ये भोजनेन यथाक्रमम् ॥
प्रपितामहांश्च सर्वांश्च तत्पितॄंश्चानुपूर्वशः ।
उशन्तस्त्वेति च जपेत्पितॄनावाहयेत्ततः ॥
सोमदत्ता बर्हिषदस्त्वग्निष्वात्ताश्च ये परे ।
पितरः पुण्ययशसः सर्वेऽप्यायन्तु नस्त्विति ॥
ततस्तिलान्गृहे तस्मिन्विकिरेच्चाप्रदक्षिणम् ।
श्रद्धया परया युक्तो जपेदपहतास्त्विति ॥
ततो यज्ञियवृक्षोत्थपात्रेषु सकुशेषु च ।
गृहीत्वाऽपः पवित्राश्च शं नो देवी जपन्क्षिपेत् ॥
विकिरेत्तेषु च तिलांस्तिलोऽसीति जपन्क्रमात् ।
अर्घ्यैः पुष्पैश्च गन्धैश्च ताः प्रपूज्याश्च शास्त्रवत् ॥

---

१ च. °दार्थकादू° । २ क. °वमुद्दिश्य पितृ° । ३ ख. घ. अर्घार्थं । ४ ग. °र्वांस्तांस्तापि° ।

गार्ग्यः—" स्वधेति चैव मन्त्रान्ते पितॄणां वचनं यथा ।
स्वाहेति चैव देवानां होमकर्मण्युदाहरेत् " ॥

अर्घ्यादिप्रदानानि चात्र होमशब्देनोच्यन्ते ॥

**दत्त्वोदकं गन्धमाल्यं धूपदानं सदीपकम् ॥ २३१ ॥**

गन्धमाल्यादिदानानि प्रत्येकमुदकं दत्त्वा कार्याणि । तथा च गौतमः—
" भिक्षादानमप्पूर्वं ददाति चैवं धर्म्येषु " इति ।

आपः पूर्वं यस्मात्तदप्पूर्वम् ।

अत्र मनुः—" गन्धमाल्यैः सुरभिभिरर्चयेद्दैवपूर्वकम् " ।

शौनकः पुनराच्छादनदानमप्याह[1]—
" एतस्मिन्काले गन्धमाल्यधूपदीपाच्छादनानां प्रदानम् " ।

एतस्मिन्कालेऽर्घ्यदानादूर्ध्वमित्यर्थः । गन्धादिमन्त्राः पितृपूजायां वक्ष्यन्ते तेऽत्राप्यविरोधाद्ग्राह्याः ।

ब्रह्मपुराणे—" देवानावाहयिष्ये ते प्राहुरावाहयस्व च ।
विप्राङ्गुष्ठं गृहीत्वा तु विश्वान्देवान्समाह्वयेत् ॥
ततो मन्त्रं जपेन्मौनी विश्वे देवास आगत ।
द्वितीयं च जपेन्मन्त्रं विश्वे देवाः शृणो(णु)त[2] च ॥
जपेत्तृतीयं मन्त्रं तु पौराणं पुण्यवर्धनम् ।
आगच्छन्तु महाभागा विश्वे देवा[3] महाबलाः ॥
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ।
इदं च वः पाद्यमर्घ्यं पुष्पधूपविलेपनम् ॥
अयं दीपप्रकाशश्च विश्वे देवाः समर्प्यते " ।

अनेन च पाद्यादिदानेषु मन्त्रविधिः क्रियते । ततश्च—इदं वो विश्वे देवाः पाद्यमिदं वो विश्वे देवा अर्घ्यमित्येवं सर्वत्र प्रयोज्यम् । धूपदीपप्रकाशयोरयं व इति मन्त्रादिः[4] । एवं चैषां मन्त्रान्तरैर्विकल्पः ॥ २३१ ॥

**अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥**
**द्विगुणांस्तु कुशान्दत्त्वा[5] उशन्तस्त्वेत्यृचा पितॄन्॥२३२॥**
**आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥**
**यवार्थस्तु तिलैः कार्यः कुर्यादर्घ्यादि पूर्ववत् ॥२३३॥**

---

१ ख. ग. °नमाह- । २ च. शृणुतेति । ज° । ३ क. °वा वरप्रदाः । ये । ४ ग. मन्त्रविधिः । ए° । ५ ङ. °शान्कृत्वा ह्युश° ।

प्रजापतिः—" सौवर्णं राजतं ताम्रं खड्गं मणिमयं तथा[1] ।
यज्ञियं चमसं वाऽपि त्वर्घ्यार्थं पूरयेद्बुधः " ॥

कात्यायनः—" अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् " ॥

योगयाज्ञवल्क्यः—" पवित्रे[2] स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत् ।
अन्तर्गर्भे[3] कुशौ[4]च्छन्ने कौशे प्रादेशसंमिते " ॥

यज्ञपार्श्वः—" ओषधीरन्तरं कृत्वा अङ्गुष्ठाङ्गुलिपर्वणोः ।
छिन्द्यात्प्रादेशमात्रं तु पवित्रं विष्णुदैवतम् ॥
न नखेन न काष्ठेन न लोहेन न मृन्मयात् " ।

चतुर्विंशतिमतात्—" द्वे द्वे शलाके देवानां पात्रे कृत्वा त्वपः क्षिपेत्[5] ।
शं नो देव्या यवोऽसीति यवानपि ततः क्षिपेत् ॥
पुष्पधूपादिभिः कृत्वा पूजां पात्रेषु मानवः ॥
पितृपात्रे विशेषोऽयं तिलोऽसीति तिलान्क्षिपेत् ।
तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे ॥
एकोद्दिष्टे शलाकैका निधायोदकमाहरेत् " ॥

शलाका दर्भाग्रम् ।

प्रचेताः—" पवित्र इति मन्त्रेण पवित्रे कारयेद्बुधः ।
ते निधायार्घ्यपात्रेषु शं नो देवीत्यपः क्षिपेत् " ॥

तिसृष्वपि शलाकासु पवित्रे स्थ इति द्विवचनान्त एव मन्त्रः प्रयोक्तव्यः । एकस्मिन्नपि पात्रे विकल्प्यमानसुवर्णादिद्रव्यबहुत्वात्पात्रेष्विति बहुवचनम् ।

मत्स्यपुराणे—" विश्वान्देवान्यवैः पुष्पैरभ्यर्च्याऽऽसनपूर्वकम् ।
पूरयेत्पात्रयुग्मांस्तु स्थाप्य दर्भपवित्रके " ॥

प्रचेताः—" एकैकस्य तु विप्रस्य अर्घ्यं पात्रे विनिक्षिपेत् ।
यवोऽसीति यवान्क्षिप्त्वा गन्धपुष्पैः[6] सुपूजितम् " ॥

गार्ग्यः—" दत्त्वा हस्ते पवित्रं तु कृत्वा पूजां विधानतः ।
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् " ॥

प्रचेताः—" पादप्रभृति मूर्धान्तं देवानां पुष्पपूजनम् ।
शिरःप्रभृति पादान्तं नमो[7] व इति पैतृके " ॥

१ ख. °था । अर्घ्यार्थं च समं वाऽ° । २ क. घ च. °वित्रस्थ । ३ क. च. अनन्त° । ४ च °शच्छिन्ने । ५ ख. घ. पिबेत् । ६ ग. च. °ष्पैः सपूरित° । ७ ख. घ. छ. ञ. °मो वै इ° ।

दैवे तु ऋजवो दर्भाः प्रदातव्याः पृथक्पृथक् ।
धर्मोऽसीत्यथ मन्त्रेण गृह्णीयुस्ते च तान्कुशान् " ॥

बृहस्पतिः—" ऋजून्सव्येन कृत्वा वै दैवे दर्भान्प्रदक्षिणान् ।
द्विगुणानपसव्येन दद्यात्पित्र्येऽपसव्यवत् " ॥[1]

ततश्च दैवासनेषु यज्ञोपवीत्यासनस्य दक्षिणतो दर्भान्ददाति । इतरत्र तु प्राचीनावीती पश्चिमत इति सिद्धम् ।

बौधायनः—" प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानां सयवा दर्भाः पितॄणां द्विगुणास्तिलैः " ॥

प्रदक्षिणमुदक्संस्थमप्रदक्षिणं प्राक्संस्थम् । द्वैगुण्यं दर्भाणां भङ्गपर्यन्तं कार्यम् । यदाह शौनकः—

" अपः प्रदाय दर्भांश्च द्विगुणान्भुग्नानासने प्रदाय " इति ।

शातातपः—" उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।
प्रदद्यात्पार्वणे श्राद्धे दैवपूर्वं विधानतः " ॥

बृहस्पतिः—" आसने चार्घ्यदाने च पिण्डदाने[2]ऽवनेजने[3] ।
संबन्धगोत्रनामानि यथार्हमनुकीर्तयेत् " ॥

कात्यायनः—" दक्षिणं पातयेज्जानुं देवान्परिचरन्सदा ।
पातयेदितरं जानुं पितॄन्परिचरन्सदा " ॥

तथाऽऽसनेषु दर्भानास्तीर्य विश्वान्देवानावाहयिष्य इति पृच्छति । आवाहयेत्यनुज्ञातो विश्वे देवास आगतेत्यावाह्य विश्वे देवाः शृणुतेममिति जप्त्वौ(पित्वौ)षधय इत्यक्षतावापनम् ॥ २२९ ॥

**यवैरन्ववकीर्याथ भाजने सपवित्रके ॥**
**शं नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥२३०॥**
**या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥**

आवाहनं कृत्वा द्वे पवित्रवती पात्रे यवैरन्ववकीर्य पात्रयोर्यवान्प्रक्षिप्य शं नो देवीत्यृचा पात्रद्वयेऽपः[4] क्षिप्त्वाऽप्सु च यवोऽसीति यजुषा यवान्प्रक्षिप्य " या दिव्याः " इति मन्त्रेण वैश्वदेविकब्राह्मणहस्तेष्वेकपात्रस्थमर्घ्यमेकस्य ब्राह्मणस्य हस्तयोः पात्रान्तरस्थमपरस्य निक्षिपेत् । प्रत्यर्घ्यदानं मन्त्रावृत्तिः । एवमपां च प्रक्षेपे यवानां च प्रक्षेपे मन्त्रावृत्तिः ।

---

१ ख. ग. च. °त्पित्र्येऽप° । २ ग. °ने च भोज° । ३ क. °वनीपते । सं° । ४ क. °मपः क्षि° ।

पिण्डनिर्वपणे[1] चापि जपेदेतत्समाहितः ।
पठ्यमानमिदं श्रुत्वा श्राद्धकाल उपस्थिते ॥
पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ” ।

ब्रह्माण्डपुराणे—“ तत्र सिद्धार्थकान्भूमौ क्षिपेद्रक्षोपनुत्तये ।
दिक्षु सर्वासु च तिलान्मन्त्रेणानेन धर्मवित् ॥
ॐ निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥
एतेन मन्त्रेण सुसंयतात्मा तिलान्क्षिपेद्दिक्षु तथा विदिक्षु ” ।

निगमः—“ अपहता असुरा रक्षांसीति[3] तिलान्विकिरेत् ” ।

आसुरं यज्ञैः(जुः) परमेष्ठिप्रजापतिदृष्टम् ॥ २२८ ॥

**पाणिप्रक्षालनं दत्त्वा विष्टरार्थान्कुशानपि ॥**
**आवाहयेदनुज्ञातो विश्वे देवास इत्यृचा ॥ २२९ ॥**

पाणिप्रक्षालनसाधनं हस्ते जलं दत्त्वा हस्ते विष्टरार्थांश्च कुशान्दत्त्वा वैश्वदेविकब्राह्मणैरनुज्ञातो “ विश्वे देवास आगत ” इति गायत्र्या वैश्वदेव्या प्रजापतिदृष्टया विश्वान्देवानावाहयेत् । अनुज्ञात इतिवचनाद्विश्वान्देवानावाहयिष्य इत्यनुज्ञापनमावाहयेति चानुज्ञानमर्थसिद्धम् । अत्र च मन्त्रान्ते पुरूरवार्द्रवनामानो विश्वे देवा आगच्छतेति पार्वणे वाच्यम् । श्राद्धान्तरे तु नामान्तराणि । यथाऽऽह बृहस्पतिः—

“ इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ।
नैमित्तिके कालकामौ काम्ये च धुनिरो(रिलो)चनौ ॥
पुरूरवार्द्रवश्चैव पार्वणे समुदाहृतौ ।
उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ॥
अयमुच्चारणीयस्तु श्लोकः श्रद्धासमन्वितैः ।
आगच्छन्तु महाभागा विश्वे देवा[6] महाबलाः ॥
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ” ।

प्रचेताः—“ दर्भांश्चैवाऽऽसने दद्यान्न तु पाणौ कदाचन ।
पितृदेवमनुष्याणां स्यात्तुष्टिः शाश्वती तथा ॥

---

१ ग. च. °निर्वाप° । २ ख. °तः । पाठ्य° । ३ क. °ति च । पा° । ४ ख. °ज्ञः प्रजापतिपरमेष्टिदृ° । ५ ख. इत्याज्ञा मनसाऽऽवा° । ६ क. ख. °वा वरप्रदाः । ये ।

प्रचेताः—" उपमूलं सकृल्लूनान्कुशांस्तत्रोपसादयेत् ।
यवांस्तिलान्बृसीं कांस्यमपश्च स्वयमाहृताः ॥
पार्णराजतताम्राणि पात्राणि स्युः समिन्मधु ।
पुष्पधूपसुगन्धाश्च क्षौमसूत्रं च मेक्षणम् " ॥

विष्णुः—" कुतपः कृष्णाजिनं तिलाः सिद्धार्थका अक्षतानि च
पवित्राणि रक्षोघ्नानि च " ।

अत एतान्यासेचयेदित्यर्थः[1] ॥ २२६ ॥ २२७ ॥

मातामहश्राद्धं प्रत्यतिदेशं वैश्वदेवतन्त्रविकल्पं चाऽऽह—

**मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ २२८ ॥**

मातामहानामपि श्राद्धमेवं पितृश्राद्धवत्कार्यम् । तत्र वैश्वदेविकब्राह्मणभोजने प्रतिश्राद्धं भेदेन न्यायतः प्राप्तौ विकल्पार्थमिदं वचनं तन्त्रं वा वैश्वदेविकमिति । सामर्थ्याधीना चात्र व्यवस्था । अत एव वृद्धवसिष्ठः—

" श्राद्धद्वयं करिष्यंस्तु दशैव चतुरोऽपि वा ।
त्रीन्वा निमन्त्रयेद्विप्रानेकं वा ब्रह्मवादिनम् " ॥

तत्र—" द्वौ दैवे पितृकृत्ये त्रीन् " इति पक्षं वैश्वदेविकभेदपक्षं चाऽऽश्रित्य दशेत्युक्तम् । एकैकमेव चेति पक्षे चतुर इति । अत्रैव वैश्वदेवतन्त्रे त्रीनिति । अत्यन्तापदि त्वेकमित्युक्तम् ।

प्रचेताः—" अपसव्यं ततः कृत्वा जप्त्वा मन्त्रं तु वैष्णवम् ।
गायत्रीं प्रणवं चापि ततः श्राद्धमुपक्रमेत् ॥
श्राद्धं करिष्य इत्येवं पृच्छेद्विप्रान्समाहितः ।
कुरुष्वेति स तैरुक्तो दद्याद्दर्भासनान्यथ " ॥

कात्यायनः—" सर्वत्र प्रश्नेषु पङ्क्तिमूर्धन्यं पृच्छति सर्वान्वा " ।

ब्रह्मपुराणम्—" उपविश्य जपेद्धीमान्गायत्रीं तदनुज्ञया ।
पापापहं[3] पावनीयमश्वमेधफलं तथा ॥
मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्मितम् ।
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥
नमः स्वधायै स्वाहायै नित्यमेव भवत्विह ।
आद्यावसाने श्राद्धस्य त्रिरावर्तं जपेत्सदा ॥

---

१ क. °ताः । स्वर्ण । २ क. ख. °न्यासं च° । घ. छ. ञ. °न्यामाचमये° । ३ क. °पहां पावनीयाम° ।

यमः—" पादप्रक्षालनं कुर्यात्स्वयमेव विनीतवत्[1] ।
ततः सिद्धिमिति[2] प्रोच्य कल्पितेष्वासनेषु च ॥
समाध्वमिति तान्ब्रूयादासनं संस्पृशन्नपि ।
ब्रह्मोद्याश्च कथाः कुर्वन्पितॄणामेतदीप्सितम् " ॥

पादप्रक्षालनानन्तरं श्राद्धस्य कर्मणः सिद्धिं भवन्तो ब्रुवन्त्विति ब्राह्मणान्प्रति प्रोच्य समाध्वमित्यनेनाऽऽसनं स्पृशन्नुपवेशयेदित्यर्थः ।

धर्मः—" अन्वारभ्य ततो देवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत् " ॥

पितृब्राह्मणोपवेशन एव व्याहृतयः ।

मनुः—" तेषामारक्षभूतं तु पूर्वं दैवं निवेदयेत् ।
रक्षांसि विप्रलुम्पन्ति श्राद्धमारक्षवर्जितम् " ॥

आरक्षणमारक्षा(क्षः) ।

स्मृत्यन्तरम्—" आस्यतामिति तान्ब्रूयादासनं संस्पृशन्नपि[3] ।
उपस्तीर्णेषु चाऽऽसीरन्न स्पृशेयुः परस्परम् " ॥

आस्यतामित्यनेन समाध्वमित्यस्य विकल्पः ।

विष्णुः—" यथाभूयोवयःक्रमेण कुशोत्तरेष्वासनेषूपवेशयेत् ।
विद्यातपोधिकानां वै प्रथमासनमिष्यते ॥
पाङ्क्त्यानां तु विशिष्टानां समं गन्धादिभोजनम् " ॥

हारीतः—" संतिष्ठमानेष्वर्हत्सु योऽनर्होऽग्रासनं श्रयेत् ।
गृह्णाति स मलं पङ्क्तेरायुषा च वियुज्यते ॥
चतुर्णां दुष्कृतं हन्ति ब्राह्मणो विघ्नकारकः ।
अन्नस्यान्नपतेः पङ्क्तेस्तथा भोजनकाङ्क्षिणः " ॥

हन्तिरत्र गत्यर्थः । तेषां निवार्याऽऽत्मनः स्वीकुरुत इति यावत् ।

गार्ग्यः—" स्पर्शे स्पर्शे भवेत्पापमेकपङ्क्तिनियोजने ।
हीनवृत्तादिपङ्क्तौ तु तस्माद्युक्तं विवेचनम् " ॥

बृहस्पतिः—" एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् ।
भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥
अग्निना भस्मना वाऽपि स्तम्भेनाप्युदकेन वा ।
द्वारसंक्रमणेनापि पङ्क्तिभेदः प्रकीर्तितः " ॥

---

१ ख. °तवान् । त° । २ क. ख. घ. सिद्धमि° । ३ ख. °पि । तपश्चीर्णे । ४ ख. °ब्रह्मार° । ५ च. °योगतः । ही° ।

मात्स्याच्च—" प्राचीनावीतमुदकं तिलाः सव्याङ्गमेव च ।
यवनीवारमुद्गाश्च शुक्लपुष्पघृतानि च ॥
वल्लभानि प्रशस्तानि पितॄणामिह सर्वदा " ।

आपस्तम्बः—" अटव्यां ये समुत्पन्ना अकृष्टाः फलितास्तथा ।
ते वै श्राद्धे पवित्रास्तु तिलास्ते न तिलास्तिलाः " ।

ग्राम्यास्तिला[1] न तिलकार्यकरा भवन्तीत्यर्थः ।

पुराणात्—" स्थूलोदुम्बरवस्त्राणि रजतं खड्गमेव च ।
श्राद्धे महापवित्राणि फलानि समिधस्तथा " ॥

वायुपुराणे—" कृष्णाजिनस्य सांनिध्यं दर्शनं दानमेव च ।
रक्षोघ्नं ब्रह्मवर्चस्यं पशून्पुत्रांश्च दापयेत् " ॥

मनुः—" व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन *भोजयेत् ।
कुतपं चाऽऽसनं दद्यात्तिलैश्चावकिरेन्महीम् " ॥

कुतपोऽत्र कम्बलः ।

मत्स्यपुराणम्—" उदपात्रं च कांस्यं च मेक्षणं च समित्कुशान् ।
आहरेदपसव्येन सर्वं दक्षिणतः शनैः ॥
एवमासाद्य तत्सर्वं भवनस्याग्रतो भुवि ।
गोमयेनोपलिप्तायां गोमूत्रेण तु मण्डलम् ॥
अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत् ।
विप्राणां क्षालयेत्पादानभिनन्द्य[2] पुनः पुनः " ॥

स्मृत्यन्तरम्—" दक्षिणाप्रवणं कार्यं मण्डलद्वयमेव च ।
उत्तरेऽक्षतसंयुक्तान्पूर्वाग्रान्विन्यसेत्कुशान् ॥
दक्षिणे दक्षिणाग्रांश्च सतिलान्विन्यसेद्द्विजः " ॥

शंभुः—" संमार्जितोपलिप्ते तु द्वारि कुर्वीत मण्डले ।
उदक्प्लवमुदीच्यं[3] स्याद्दक्षिणं दक्षिणाप्लवम् " ॥

ब्रह्मनिरुक्ते—" पाद्यं चैव तथैवार्घ्यं दैव आदौ प्रदापयेत् ।
शं नो देवीति मन्त्रेण पाद्यं चैव [4]प्रदापयेत् " ॥

आम्बरीषः सिन्धुद्वीप ऋषिः । आपो देवता । गायत्री छन्दः ।

---

* भोजयेदित्यनेन स्वयं दौहित्रस्य श्राद्धकर्तृतायामयोग्यतामाचष्ट इति क. पुस्तके ।

---

१ क. °लास्तिला न भवन्ति । तिलकार्यकरा न भ° । २ क. °भिवन्द्य । ३ क. च. °दीच्यां स्या° । ४ क. प्रकल्पये° ।

आपदि तु मृत्संपृक्ताभिरद्भिरित्यादिकं संस्कारं कृत्वा हवींष्युपयोज्यानि। अथोपादेयानि। तत्र ब्रह्मपुराणम्—

" यतिस्त्रिदण्डः[1] करुणा राजतं पात्रमेव च।
दौहित्रः कुतपः कालश्छागः कृष्णाजिनं तथा "॥

दिनस्याष्टमो मुहूर्तः कुतपः कालः।

" गौराः कृष्णास्तथाऽऽरण्यास्तथैव त्रिविधास्तिलाः।
पितृणां तृप्तये सृष्टा दर्शैते ब्रह्मणा स्वयम्॥
दर्भमन्त्रैस्तिलैर्हेम्ना राजतेन विना जलम्।
दत्तं हरन्ति रक्षांसि तस्माद्[2]द्यान्न केवलम् "॥

दर्भादिभिर्जलेन च विना यद्दत्तं तद्रक्षांसि हरन्तीत्यर्थः। दर्भमन्त्रादिरहितमुदकमेव वा दत्तं हरन्तीत्यर्थः।

मनुः—" अपराह्णस्तथा दर्भा वास्तुसंपादनं तिलाः।
सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु संपदः "॥

सृष्टिः प्रभूतता। मृष्टिः स्वादुता।

" त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् "॥

देवलः—" दर्भास्तिला गजच्छाया दौहित्रं मधुसर्पिषी।
कुतपो नीलमण्डश्च पवित्राणीह पैतृके "॥

नीलमण्डो नीलवृषः।

स्मृत्यन्तरम्—" अपत्यं दुहितुश्चैव खड्गपात्रं तथैव च।
घृतं च कपिलाया गोर्दौहित्रमिति कीर्तितम् "॥

[ *दुहितृपुत्रः श्राद्धे दक्षिणादावेव पूज्यो न तु श्राद्धकर्तृतायाम्। अत्र निर्णयो मनुस्मृतौ ग्राह्यः। ]

वृद्धशातातपः—" दौहित्रं खड्गशृङ्गं तु ललाटं[3] यत्तदुच्यते।
तस्य शृङ्गस्य यत्पात्रं दौहित्रमिति कीर्तितम् "॥

स्मृत्यन्तरम्—" ब्राह्मणः कम्बलो गावः सूर्योऽग्निस्तिथिरेव च।
तिला दर्भाश्च कालश्च नवैते कुतपाः स्मृताः "॥

---

* एतच्चिह्नान्तर्गतं क. पुस्तके।

---

१ च. °दण्डी क°। २ ख. च. तस्मै दद्या°। ३ ग. °लाटे य°। च. °लाटे यत्तु दृश्यते।

दैवे वा यदि वा पित्र्ये सुराप्यायतनं स्पृशेत् ।
रजस्वला पुंश्चली वा रक्षः संगच्छते हि तत् " ॥

**व्यासः**—" चण्डालश्वपचौ वर्ज्यौ निर्वापे समुपस्थिते ।
काषायवासाः कुष्ठी वा पतितो भ्रूणहाऽपि वा ॥
संकीर्णयोनिर्विप्रश्च संबन्धी पतितस्य यः ।
वर्जनीया बुधैरेते निर्वापे समुपस्थिते " ॥

निर्वापः श्राद्धम् । संकीर्णयोनिः[1] क्षेत्रजादिः । उपस्थितशब्दादुपक्रमप्रभृत्येते वर्जनीयाः ।

" मद्यपः स्वैरिणी या च परपूर्वापतिस्तथा ।
नैव श्राद्धेऽभिवीक्षेरन्नावापात्प्रभृति क्वचित् " ॥

आवापः श्राद्धोपक्रमः ।

**ब्रह्माण्डपुराणे**—" नग्नादयो न पश्येयुः श्राद्धमेतत्कदाचन ।
गच्छन्त्येतैस्तु दृष्टेन पितरोऽथ पितामहाः ॥
सर्वेषामेव भूतानां त्रयी संवरणं यतः ।
ये वै त्यजन्ति तां मूढास्ते वै नग्नादयः स्मृताः ॥
दस्युं चैव नृशंसं च दर्शने परिवर्जयेत् ।
ये चान्ये पापकर्माणः सर्वांस्तान्परिवर्जयेत् " ॥

दस्युश्चौरः । नृशंसो निष्ठुरः ।

**वायुपुराणे**—" वृथा जटी वृथा मुण्डी वृथा नग्नश्च यो नरः ।
महापातकिनो ये च ते वै नग्नादयो नराः ॥
अन्नं पचेयुरेते तु यदि वै हव्यकव्ययोः ।
उत्स्रष्टव्यं प्रधानार्थं[2] संस्कारो वा यदि स्मृतः " ॥

उत्स्रष्टव्यं त्याज्यम् । आपदि तु श्राद्धात्मकप्रधानार्थं संस्कार्यम् । संस्कारश्च ब्रह्मपुराण उक्तः—

" हविषां संस्कृतानां तु पूर्वमेवापवर्जनम् ।
मृत्संपृक्ताभिरद्भिश्च प्रोक्षणं तु विधीयते ॥
सिद्धार्थकैः कृष्णतिलैः कार्यं चाप्यवकीरणम् ।
गुरुसूर्याग्निवस्तूनां दर्शनं च प्रयत्नतः " ॥

श्वाद्यभिवीक्षितानां पक्वानां हविषामपवर्जनं त्यागः । पूर्वः प्रथमः ।

---

१ क. °निः क्षत्तादिः । २ ख. प्रदाना° ।

उपह्वरं पर्वतनिकटः । निकुञ्जो गुहा[1] ।

" रूक्षं क्रिमिहतं क्लिन्नं संकीर्णानिष्टगन्धिकम् ।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि " ॥

रूक्षमस्निग्धम् । क्लिन्नं सकर्दमम् । अनिष्टशब्दं दुःखकरशब्दम् ।

शङ्खः—" म्लेच्छदेशे तथा रात्रौ संध्यायां च विशेषतः ।
न श्राद्धमाचरेत्प्राज्ञो म्लेच्छदेशं न च व्रजेत् " ॥

ब्रह्माण्डपुराणम्—" उत्तरेण महानद्या दक्षिणेन च कीकटम्[2] ।
एष त्रैशङ्कवो नाम वर्जितः श्राद्धकर्मणि ॥
पारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ।
प्रनष्टश्राद्धकर्माणो वर्ज्या देशाः प्रयत्नतः ॥
गोगजाश्वादिपृष्ठेषु कृत्रिमायां तथा भुवि ।
आपत्स्वपि च कष्टासु न कुर्यात्पितृतर्पणम् " ॥

अथापासनीयानि । तत्र यमः—

" कुक्कुटो विड्वराहश्च काकः श्वाऽथ बिडालकः ।
वृषलीपतिश्च वृषलः षण्डो नारी रजस्वला ॥
एते तु श्राद्धकाले वै वर्जनीयाः प्रयत्नतः " ।

मनुः—" चण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च ।
रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान् ॥
होमे[3] प्रदाने भोज्ये च यदेभिरभिवीक्षितम् ।
दैवे कर्मणि पित्र्ये वा तद्गच्छत्ययथातथम् ॥
घ्राणेन सूकरो हन्ति पक्षवातेन कुक्कुटः ।
श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः " ॥

अवरवर्णजः शूद्रः ।

" खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत् ।
हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः " ॥

खञ्जः कुण्ठः ।

देवलः—" बीभत्समशुचिं[4] नग्नं मत्तं धूर्तं रजस्वलाम् ।
नीलकाषायवसनं छिन्नकर्णं च वर्जयेत् ॥
शस्त्रं कालायसं सीसं मलिनाम्बरवाससम् ।
अन्नं पर्युषितं चापि श्राद्धेषु परिवर्जयेत् ॥

---

१ क. °हा वृक्षगहनं वा । रू° । २ क. ख. घ. कीटकम् । ३ ख. होमप्र° । ४ ख. च. °भत्सुम° ।

तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् " ।

अत्र पुरुषाहारापेक्षं चातुर्गुण्यं, सिद्धान्नेनेत्यादिरतिदेशो द्विजामश्राद्धविषयः ।
षट्त्रिंशन्मतात्—" आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत् ।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा "

पिण्डदानं भवेदिति शेषः ।

तथा—" आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तथा ।
हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः " ॥

आमश्राद्धे च भोजनप्रयुक्तानां तृप्तिप्रश्नादीनां निवृत्तिः[1] ।

" एवं कार्यं सदा श्राद्धं शूद्रेणाप्याममेव च ।
मन्त्रवर्जं तु शूद्रस्य सर्वमेतद्विधीयते " ॥

भविष्यत्पुराणम्—" धर्मेप्सवश्च धर्मज्ञा यदि शूद्राः प्रकुर्वते ।
अग्नौकरणमन्त्रश्च नमस्कारो विधीयते " ॥

आमश्राद्धासमर्थं प्रति हेमश्राद्धमाह व्यासः—

" द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला " ॥

द्रव्यमत्र भोज्यं विवक्षितं द्विजश्च भोक्ता । मनुः—

" शुचिं देशं विविक्तं च गोमयेनोपलेपयेत् ।
दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् " ॥

विविक्तो विजनः । शुचेरपि देशस्य गोमयोपलेपनं वचनात्संस्कारातिशयाय कार्यम् ।

तथा—" अवकाशेषु चोक्षेषु[2] जलतीरेषु चैव हि ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा " ॥

चोक्षाः[3] स्वभावशुचयः ।

यमः—" परकीयप्रदेशेषु पितॄणां निर्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥
अटव्यः पर्वताः पुण्या नदीतीराणि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥
तस्माच्छ्राद्धानि देयानि पुण्येष्वायतनेषु च ।
नदीतीरेषु तीर्थेषु स्वभूमौ च प्रयत्नतः ॥
उपह्वरनिकुञ्जेषु तथा पर्वतसानुषु " ॥

---

१ ख. ग. निर्वृत्तिः । २ ख. मोक्षेषु । ३ ख. मोक्षाः ।

इत्यादिवचनैः शृङ्गग्राहितया शूद्रं प्रति श्राद्धं विहितम् । ततश्च शूद्रस्य सकलोपाधिसहितं श्राद्धमस्तीति तत्संनिहितमेव विधिः श्राद्धं प्रत्यपि प्रवर्तमानः प्रयुङ्क्ते । तत्र ब्राह्मणभोजननिषेधानुग्रहार्थं द्विजातिकर्तृकश्राद्धः(?) श्राद्ध इति साक्षाद्ब्राह्मणभोजनं न प्रयुङ्क्ते प्रणाड्या तु प्रयुङ्क्त एव । न खल्वपरथा शूद्रं प्रति प्रवर्तमानयोर्विप्रभोजनविषययोर्विधिनिषेधयोरविरोधः शक्यः संपादयितुम् । शक्यते च पितॄनुद्दिश्य परित्यक्तमाममन्नं शूद्रेणापि विप्रान्प्रत्येतत्त्यक्त्वा युष्माभिर्भोज्यमिति प्रार्थनया विप्रभोजनं प्रणाड्या कर्तुम् । एवं च सति शूद्रस्य निमित्तानपेक्षया प्राप्तमामश्राद्धं " शूद्रः कुर्यात्सदैव हि " इत्यादिभिरनूद्यते । ननु च द्विजानामपि हविष्पाकब्राह्मणभोजनासामर्थ्ये शूद्रवदामेन श्राद्धप्रयोगो निमित्तानपेक्षः पाकाभावेऽधिकारः स्यादित्यादिभिरनूद्यते । सत्यम् । यदि द्विजातीनां यथाश्रुतपाकाद्यङ्गानुष्ठाने विध्यौचित्यप्राप्तसाक्षाद्ब्राह्मणभोजनविषयसामर्थ्यं न स्यात् । तदसामर्थ्ये च श्राद्धात्मनि प्रधानेऽप्यसामर्थ्यम् । तच्चाधिकारस्य भङ्गे प्राप्ते तदुज्जीवनायाऽऽमद्रव्यसाध्यः श्राद्धप्रयोगविशेषो नैमित्तिको विधीयते । तथा च सति नित्यं शूद्रकर्तृकमामश्राद्धमनित्यं च द्विजकर्तृकं प्रति पूर्वाह्णो न शक्योऽभिधातुं नित्यानित्यसंयोगविरोधात् । तत्र न तावन्नित्ये स शक्यो विधातुम् । औपदेशिकेनापराह्णेन सह विकल्पप्रसङ्गात् । द्विजकर्तृकं त्वामश्राद्धं नैमित्तिकत्वाद्विकृतिरिति । तत्रापराह्ण आतिदेशिक औपदेशिकः पूर्वाह्णः । न चौपदेशिकातिदेशिकयोर्विकल्पस्तस्मात्तत्रैव पूर्वाह्णविधिर्न शूद्रकर्तृकेऽप्यामश्राद्धे । किं तु तत्रापराह्णविधिरेव । अत एव च यच्छातातपीयमेव वाक्यम्—

" मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः ।
आमंमात्रेण तत्रैव पितॄणां दत्तमक्षयम् "

इति, तच्छूद्रविषयम् । अनुवादकं चैतत् । साधारणापराह्णोपदेशादेवापराह्णस्य शूद्रामश्राद्धेऽपि प्राप्तत्वात् । तस्मात्सिद्धं शूद्रकर्तृकमामश्राद्धमपराह्ण एव कार्यम् ।

प्रसङ्गादामश्राद्धविधयः केचिल्लिख्यन्ते । तत्र व्यासः—

" आमं दद्द्भिः कौन्तेय दद्यादन्नं चतुर्गुणम् ।
सिद्धान्नेन विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ॥
आवाहनादि सर्वं स्यात्पिण्डदानं च भारत ।
दद्याद्यश्च द्विजातिभ्यः शृतं वा यदि वाऽशृतम् ॥

१ ग. च. तत्सहि° । २ क. ख °णपूज° । ३ क. ग. घ. च. प्रणल्या । ४ क. ग. घ. च. प्रणल्या । ५ ख. निद्यान° । ६ ख. °रनुगद्य° । ७ च. च सिद्धं नि° । ८ ख. घ. °मपात्रे° । च. °मश्राद्धेन त° ।

पाकासामर्थ्यनिमित्तेऽधिकारभङ्गे सत्यामेन द्रव्येण श्राद्धस्य प्रयोगविशेषोऽधिकारोज्जीवनाय विधीयमानो नैमित्तिको भवति । ननु शूद्रः कुर्यात्सदैव हि " इति वचनाच्छूद्रत्वेन निमित्तेन पूर्ववदेव प्रयोगविशेषो नैमित्तिकः कस्मान्न विधीयते । उच्यते—प्राप्तं खलु शूद्रं प्रत्यामश्राद्धमिति न विधेयम् । किं त्वनुवाद्यम् । तथा हि प्रतिषिद्धं ब्राह्मणभोजनं शूद्रस्य । यदाह सुमन्तुः—

" न पक्कं भोजयेद्विप्रान्सच्छूद्रोऽपि कदाचन ।
भोजयन्प्रत्यवायी स्यान्न च तस्य फलं भवेत् ॥
भोजनेन हि विप्रस्य यत्पापं स्याद्दुरात्मनः ।
ततोऽसौ लिप्यते मूढो यः शूद्रो भोजयेद्विजान् " इति ॥

न चात्र संप्रीत्यादिप्रयोजनमेव ब्राह्मणभोजनं निषिध्यते न तु वैधमिति वाच्यम् । यतः " न चाऽऽप्नोति फलं तस्य " इति वाक्यशेषो वैधविप्रभोजने एव युज्यते । नैवायं निषेधः श्राद्धोपाधिभूतविप्रभोजनविषयो न भवतीति शक्यते वक्तुं कारणाभावात् । ब्राह्मणभोजनप्रतिषेधे च श्राद्धाधिकार एव शक्यते । तथा हि श्राद्धकल्पे ब्राह्मणनिमन्त्रणादिविधिदर्शनात् । तथा हविः पचेत् , श्राद्धदेशं प्रत्याहरेत् , परिवेषयेत् , विप्रान्भोजयेदित्यादिविधिदर्शनाच्छ्राद्धयज्ञस्य ब्राह्मणभोजनरूपोपाधिपर्यन्तताऽवसीयते । न चोपाधिसंपादनसामर्थ्यप्रतिबन्ध उपहिते भवति सामर्थ्याप्रतिबन्धः । यत्त्वभ्युदितेऽष्टावुपांशुयाजस्य देवतोद्देशरहितस्यापि प्रयोज्यत्वं न्यायविद्भिरुच्यते, तद्युक्तमेव । न खल्वभ्युदितेष्टेरधिकारबुद्धिरनुष्ठापिका । किं त्वधिकारभ्रमः । विहितकालभ्रान्त्या हि तत्र कालान्तरविषयाधिकारभ्रमो जन्यते । अत उपाधिभूतदेवतोद्देशसामर्थ्यविरहेऽप्युपांशुयाजानुष्ठानं नायुक्तम् । तत्र ह्यधिकारभ्रान्तिप्रवर्तितः प्रयोग एव तस्य विकृतस्य समाप्तिनिमित्तम् । तेन नैमित्तिकनिमित्तप्रक्रान्तस्योपांशुयाजप्रयोगस्य देवतोद्देशरहितस्यापि समाप्तिर्वचनसामर्थ्यात्तत्र युज्यते । श्राद्धे तु नाधिकारभ्रमोऽनुष्ठानहेतुः किं तु तद्भङ्गः । अतो विप्रभोजनोपहितस्य श्राद्धात्मकप्रधानस्यानुष्ठानसामर्थ्यप्रतिबन्धे भवति शूद्रस्याधिकारभङ्गः । न च वाच्यम्—अनधिकृत एव श्राद्धे शूद्र इति ।

यतो " भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः "

---

१ ख. °विषयोऽधि° । २ ग. च. °रो जीव° । ३ क. ख. °शेषः क° । ४ ग. घ. लभेत् । ५ च. °नविषयो न भवतीति न श° । ६ क. °देयं प्र° । ७ ग. °यागस्य । ८ क. ख. °कनित्यप्र° । ९ ग. °र्थ्यात्तु जायते ।

" दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते " इति ॥

श्राद्धादावस्तगामिनीति च पितुरिति च प्रदर्शनार्थम् । यत्तु ग्राह्या कुतपकालिकीति वचनम्, तदनग्नेरमावास्याश्राद्धं प्रति कालविशेषविधायकं न पुनः श्राद्धान्तरं प्रतीति मन्तव्यम् । श्राद्धविशेषेऽपराह्णात्कालान्तरमाह शातातपः—

" आमश्राद्धं तु पूर्वाह्ण एकोद्दिष्टं तु मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् " इति ॥

अत्र द्विजानामामश्राद्धं पाकासामर्थ्ये निमित्ते विधीयमानत्वादनित्यम् । शूद्रस्य निमित्तानपेक्षं तद्भवतीति नित्यम् । तत्र नोभयविधे तस्मिन्पूर्वाह्णविधिरयं नित्यानित्यसंयोगविरोधात् । तत्र द्विजानामामश्राद्धविधय उदाह्रियन्ते । तत्र संवर्तः—"पाकाभावेऽधिकारः स्याद्द्विजातीनामुदाहृतः ।
अपत्नीनां महाबाहो विदेशगमनादिभिः ॥
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः " ।

उशना—" आत्मनो देशकालानां विप्लवे समुपस्थिते ।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि " ॥

प्रचेताः—" आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं द्विजैः कार्यं शूद्रैः कार्यं सदैव हि " ॥

तीर्थे पाकासामर्थ्ये सति। चन्द्रसूर्यग्रहे भोक्तुरभावे ।

" स्त्री शूद्रः स्वपचश्चैव जातकर्मणि वाऽप्यथ ।
आमश्राद्धं तदा कुर्याद्विधिना पार्वणेन तु " ॥

स्वपचः स्वयंपचः ।

जमदग्निः—" यावत्स्यादन्नाग्निसंयुक्त उत्पन्नाग्निरथापि वा ।
आमश्राद्धं सदा कुर्याद्धस्तेऽग्नौकरणं भवेत् " ॥

हारीतः—" श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादि नियतं माससंवत्सरादृते " इति ॥

मासिकं सांवत्सरिकं च श्राद्धं वर्जयित्वा स विधिरित्यर्थः । अयं मासिकसांवत्सरिकामश्राद्धनिषेधो ग्रहणव्यतिरिक्तविषयः । चन्द्रसूर्यग्रहे सति मासिकसांवत्सरिकश्राद्धमामान्नेनैव कार्यमिति भावः । एवमादिभिर्वचनैः

---

१ क. ख. च पूर्ण° । २ क. घ. °ति पितुरिति च प्रदर्शनात् । य° । ३ ग. च. सदा । ४ क. द्विजः । ५ ग. घ. च. °र्थः । ए° ।

" ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं वाऽपि[1] स्वधावाचनमिष्यते " इति ॥

एतच्च पराशरवाक्यस्यानियामकत्व एव युज्यते । नियामकत्वे[2] तु पुनः कुतपसंज्ञकादष्टमान्मुहूर्तादुत्तरो रौहिणसंज्ञको मुहूर्तः श्राद्धाङ्गत्वेन न शक्यते विधातुम् । दशमादय एव हि त्रयो मुहूर्ताः पराशरेण नियम्येरन्न तु नवमः । एवं तस्य नियामकत्वे मुहूर्तपञ्चकं वेति त्रयोदशस्य मुहूर्तस्य सायाह्नान्तःपातिनोऽङ्गत्वविधिरनुपपन्नः । अस्य च चतुर्थप्रहरान्तःपाताच्छ्राद्धाङ्गत्वं[3] प्रतिषिध्यते । तथा च वायुपुराणम्—

" चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः ।
आसुरं तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् " ॥

अत एव विहितप्रतिषिद्धत्वान्मुहूर्तपञ्चकं वेति विकल्प उक्तः । व्यवस्थितश्चायम् । यदा प्राक्चतुर्थात्प्रहरादमावस्यादिश्राद्धाङ्गतिथिः समग्रश्राद्धप्रयोगसंपादनसमर्था भवति चेत्प्रतिषेधः । नो चेद्विधिः । पराशरवाक्यस्यानियमत्वमेव[4] स्फुटी करोति व्याघ्रपात्—

" विधिज्ञः श्रद्धयोपेतः सम्यक्पात्रप्रयोजकः ।
रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम् " इति ॥

यत एव द्वितीयमह्नोऽर्धमपराह्णोऽत एव बह्वृचब्राह्मणे श्रूयते—"उद्धराऽऽहवनीयमित्यपराह्ण आह " इति । अत एव चाऽऽश्वलायनीयसूत्रम्—" उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य " इत्यादि । सायंकालविहितस्याग्निहोत्रस्याङ्गमुद्धरणं सायमेव कार्यं " तत्कालश्चैव तद्गुणः "[5] इति वचनात् । तेन सायाह्न एवायमपराह्णशब्दः । तस्मात्सिद्धं द्वेधा विभक्तस्याह्नो द्वितीयो भागोऽपराह्ण इति । तत्रामावास्याया अन्यत्र श्राद्धप्रकरणे प्रथम एवापराह्णभाग एतत्कार्यं, विलम्बे[6] हेत्वभावात् । अमावास्यायां तु पिण्डान्वाहार्यकपितृयज्ञानुरोधेन यत्रापराह्णभागेऽमावास्यायुक्ते संपद्यते तत्र कार्यम् । सांवत्सरादिकं तु श्राद्धतिथियुक्तेऽपराह्णभागे यत्र कुत्रचित्कार्यम् । सा चेत्सायाह्नमात्रव्यापिनी स्यात्तदा सायाह्न एव व्याघ्रपाद्वचनबलेन श्राद्धं कार्यं न पुनरुदयव्यापिन्यामपराह्णपर्यन्तायाम् । तथा च स्मृत्यन्तरम्—

---

१ क. ख. ग. च. °पि सुधा° । २ ख. ग. घ. °त्वे पु° । ३ ख °तुष्प्रह° । ४ क. ग. घ. °त्रनियो° । ५ क. ख. घ. °त्कालाच्चैव तद्ग्रहणात् " इ० । ग. °त्कालाश्चैव तद्गुणाः " इ० । छ. ञ. °त्कालाश्चैव तद्ग्रहणाः " इ० । ६ ख. ग. °लम्बहेतुत्वाभा° ।

अनेन च पार्वणं श्राद्धं कुतपे कार्यं विधीयते। अन्यथा कुतपव्यापिन्या ग्रहणविधिरदृष्टार्थः स्यात्। तस्मादपराह्णे विहितं श्राद्धं कुतपे कार्यमिति विधिः कुतपस्यापराह्णान्तर्भावं गमयति। भवति च कुतपस्य द्वितीयमर्धमपराह्णमध्यवर्ति। अह्नो[1] हि पञ्चदशमुहूर्तरूपस्याष्टमो मुहूर्तः कुतपस्तेन तस्य भवति द्वितीयमर्धमपराह्णः। यदि च सायाह्नात्प्राक्तनं मुहूर्तत्रयमेवापराह्णः स्यात्तदा ग्राह्या कुतपकालिकीति विधिना कुतपो नित्यवद्विहितमपराह्णं बाधित्वा विधेयः। स चाबाधे सत्यन्यो[2]ऽन्यः। अत एव कुतप[3]विधानान्नाह्नस्तृतीये भागेऽस्यापराह्णशब्दस्य वृत्तिरवसीयते। यदुक्तं गौतमेन—

" प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणाद्बुधः।
विधिज्ञो विधिमास्थाय रौहिणं न तु लङ्घयेत् "

इति, तदपि कुतपमात्रव्यापिकुह्वादि[4]श्राद्धविषयम्[5]। न पुनः सकलमध्याह्नव्यापिश्राद्धतिथावेकोद्दिष्टविषयम्। तथाहि सति रौहिणानतिक्रमविधेरदृष्टं मूलं कल्प्यं स्यात्। न तु विषयान्तरे। तथाहि अपराह्णान्तर्गतरौहिणांशारब्धे श्राद्धे श्राद्धाङ्गभूततिथिक्षयेऽपि प्रारब्धकर्मसमाप्तिरनन्तरमेव तिथ्यन्तरेऽपि विधिनाऽऽक्षिप्यते समाप्यते च। कुतपोत्तरार्धा[6]रब्धं रौहिणे श्राद्धं विना पुरुषापराधादिति दृष्टमूलैव रौहिणानतिक्रमस्मृतिः। तस्मादुक्त एव विषयोऽस्य वाक्यस्य युक्तः। यत्तु व्यासादिभिर्मध्यंदिनात्परतो मुहूर्तत्रयेऽपराह्णशब्दः प्रयुज्यते। तत्तस्य भागस्य शब्दान्तरेण व्यपदेष्टुमशक्यत्वात्। न पुनस्तस्यैवापराह्णपदव्यपदेश्यत्वात्। दर्शितो हि तस्य सायाह्ने मध्यंदिनोत्तरार्धे च प्रयोगः। ननु च द्वितीयमहरर्धमपराह्णस्तथाऽपि यदपराह्णे विहितं तदह्नः पञ्चधा विभक्तस्य चतुर्थ एव भागे कार्यम्। यदाह पराशरः—

" यद्यदेतेषु विहितं तत्तत्कुर्याद्विचक्षणः " ॥

अस्यार्थः—यद्यत्कर्म स्नानदानश्राद्धादिकं पूर्वाह्णादिकालेषु विहितं तदेतेषु प्रातरादिषु मुहूर्तत्रयपरिमितेष्वह्नः पञ्चसु भागेषु कार्यमिति। तन्न[7], न ह्यनेन वाक्येनापराह्णविहितं श्राद्धमह्नः पञ्चधा विभक्तस्य चतुर्थ एव भागे कार्यमिति नियम्यते। किंतु पिण्डान्वाहार्यकं श्राद्धं मध्यंदिनादुत्तरत्र मुहूर्तत्रये कार्यमित्यौचित्यप्राप्तमनूद्यते। तद्धि पितृयज्ञं कृत्वा कार्यं पितृयज्ञं तु[8] निर्वर्त्येत्यत्रोक्तम्। यत एव नेदं नियामकमत एव दर्शश्राद्धप्रकरणे मत्स्यपुराणम्—

---

१ ख. °ह्नोऽपि प°। च °ह्नोस्त्रेधाविभक्तपक्षे हि। २ ख. °न्यायः। अ°। ३ क °विधिना नाह्नस्तृतीये भागे स्यादप°। ४ क. °दिवि°। ५ क. ख. च. °म्। त°। ६ ख. °रब्धो रौहिणे श्राद्धे वि°। ७ क. ग. ततश्च श्राद्धमप°। ८ ख. तु न निवर्त्येत्य°।

अपराह्ने समभ्यर्च्येत्यत्र संदेहः । किं द्विधा[1] विभक्तस्याह्न उत्तरो भागोऽपराह्णः किं वा पञ्चधा विभक्तस्य चतुर्थो भागोऽपराह्णः । तत्र केचिदाहुः—पञ्चधा विभक्तस्य चतुर्थो भागोऽपराह्ण इति । तथा हि श्रुतिः—

" आदित्यो वै सर्व ऋतवः स यदैवोदेत्यथ वसन्तो यदा संगवोऽथ ग्रीष्मो यदा मध्यंदिनोऽथ वर्षा यदाऽपराह्णोऽथ शरद्यदाऽस्तमेत्यथ हेमन्तः " इति ।

स्मृतिरपि, यदाह व्यासः—

" मुहूर्तत्रितयं प्रातस्तावानेव च संगवः ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्तु तादृशः ॥
सायाह्नस्त्रिमुहूर्तोऽथ सर्वकर्मबहिष्कृतः[2] " इति ॥

अतश्च श्रौतादिप्रयोगात्पञ्चधा विभक्तस्याह्नश्चतुर्थ एव भागोऽपराह्णशब्दवाच्य इति । तदन्ये नानुमन्यन्ते । ते हि मन्यन्ते—नैवास्मात्प्रयोगाद्वाच्यनियमः शक्योऽवधारयितुम् । भवति हि श्रुतावेवाह्नो भागान्तरेऽप्यपराह्णशब्दप्रयोगः । यथा—

" पूर्वाह्णो वै देवानां मध्याह्नो मनुष्याणामपराह्णः पितॄणाम् " इति ।

अत्र खलु त्रेधाविभक्तस्याह्नस्तृतीयो[3] भागोऽपराह्णशब्दवाच्यः प्रयुज्यते । तथा " तस्मात्सुपूर्वाह्ण एव पूर्वयो[4]पसदा प्रचरि[5]तव्यं[6] स्वपराह्णे[7] परया " इत्यादौ दिनस्यान्तिमे मुहूर्ते द्वेधा विभक्तस्याह्नो द्वितीये भागेऽप्यस्ति प्रयोगः ।

यदाह मनुः—" यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते " इति ॥

ततः पञ्चधाविभक्तस्याह्नश्चतुर्थ एव भागेऽपराह्णशब्दप्रयोग इत्यसिद्धम् । तदसिद्धौ च न स एवापराह्णपदवाच्यः । यदि हि तथा स्यात्तदा पङ्कजशब्दवत्कुशलप्रवीणादिशब्दवद्वा योगरूढत्वादिकल्पनयाऽपराह्णे समभ्यर्च्येत्यादिवाक्ये मध्याह्नसायाह्नयोर्मध्यगतोऽह्नो भाग एव वाक्यार्थान्वयी स्यात् । न त्वेतदस्ति । तस्मादह्नोऽपरो भाग इत्यनया व्युत्पत्त्या यौगिक एवायं शब्दः । अत एव कुतपकालव्यापिन्याममावास्यायाममावास्याश्राद्धं कार्यमाह जाबालिः—

" भूतविद्धा त्वमावास्या प्रतिपन्मिश्रिता च या ।
तयोस्तु पितृकृत्येऽपि ग्राह्या कुतपकालिकी " इति ॥

---

१ क. ग. घ. द्वेधा । २ क. °वर्धर्म° । ३ क. ग. घ °तीये भागेऽपराह्णशब्दः प्र° । ४ ख. पूर्वे यो° । ५ ख. प्रचारि° । ६ क. घ. °चलित° । ७ ख. °ह्णे च प° ।

ब्राह्मणाञ्श्रुतशीलवृत्तसंपन्नानेकेन वा काले ज्ञापिता-
न्स्नातान्कृतशौचांस्तानुदङ्मुखान्पितृवदुपवेश्य चैकैकमे-
कैकस्य द्वौ द्वौ त्रींस्त्रीन्वा वृद्धौ फलभूयस्त्वं न [1]त्वेवैकं
सर्वेषां पिण्डैर्व्याख्यातं काममनाद्ये "।

अस्यार्थः—पार्वणादिश्राद्धचतुष्टये ब्राह्मणाञ्श्रुतादिगुणोपेतानेकेन वा श्रुतादिना गुणेन संपन्नान्काले पूर्वेद्युर्ज्ञापितान्निमन्त्रितान्स्नातान्समावृत्ता-नाप्लुतान्वा तद्दिने कृत[2]पादशौचान्पितृवत्पितृतुल्यवयस्कान् । वृद्धवृद्धत-रवृद्धतमानित्यर्थः । पित्रादीनामेकैकस्य स्थान एकमेकं द्वौ द्वौ विप्रौ त्रींस्त्रीन्विप्रान्वोपवेशयेत् । विप्रसंख्यया वृद्धौ फलभूयस्त्वं न तु सर्वेषां पित्रादीनां स्थान एकं ब्राह्मणमुपवेशयेत् । काममनाद्ये आद्यं तु सपिण्डीकरणं ततोऽन्यदनाद्यम्[3] । यद्वाऽन्नमाद्यं तदभावोऽनाद्यं यद्वाऽनाद्यमाममिति ।

ब्रह्मपुराणे— " देशकालधना[4]भावादेकैकमुभयत्र वा ।
शेषान्वित्तानुसारेण भोजयेदन्यवेश्मनि " ॥

उभयत्र दैवे पित्र्ये चेत्यर्थः ।

शङ्खः—" भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् " ॥

पुराणात्—" एक एव यदा विप्रो द्वितीयो नोपपद्यते ।
पितॄणां ब्राह्मणो योज्यो दैवे त्वग्निं नियोजयेत् " ॥

वसिष्ठः—" अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतशीलादिसंपन्नं स[5]र्वालक्षणवर्जितम् ॥
यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् ।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे " ॥

बृहस्पतिः—" यद्येकं भोजयेच्छ्राद्धे स्वल्पत्वात्प्रकृतस्य तु ।
स्तोकं स्तोकं समुद्धृत्य तेभ्योऽन्नं च निवेदयेत् " ॥

ब्राह्मणतृप्तिसमर्थस्यान्नस्य स्तोकं तृतीयं भागं बुद्ध्या पृथक्कृत्य तेभ्यः पित्रादिभ्यः प्रत्येकं प्रदद्यादित्यर्थः ।

---

१ क. च. त्वेकैकं । २ च. °तशौ° । ३ क. ग. °म् । यद्वाऽना' । ४ क. °नालाभादे° ।
५ ख. ग. घ. सर्वल° ।

**योगयाज्ञवल्क्यः**—" यदि वाग्यमलोपः स्याज्जप्यादिषु कथंचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् " ॥

**मार्कण्डेयः**—" अह्नः षट्सु मुहूर्तेषु गतेषु त्वथ तान्द्विजान् ।
प्रत्येकं प्रेषयेत्प्रेष्यं स्नानार्थं चामलोदकम् ॥
स्नातः स्नातान्समाहूतान्स्वागतेनार्चयेत्पृथक् ।
स्थितान्देशे विविक्ते तु प्रकीर्णतिलबर्हिषि ॥ २२५ ॥

**अपराह्णे समभ्यर्च्य स्वागतेनाऽऽगतान्द्विजान् ॥**
**पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ २२६ ॥**
**युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च ॥**
**परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा ॥ २२७ ॥**
**द्वौ दैवे प्राक्तु[1] पित्र्ये त्रीनुदगेकैकमेव वा ॥**

तान्निमन्त्रितानागतान्विप्रानपराह्णेऽह्नोऽपरभागे स्वागतेन स्वागतवाक्येन पूजितानाचान्ताञ्शुचौ शुद्धे परिश्रिते काण्डपटादिना परिवृते[2] दक्षिणतः क्रमनिम्ने प्रदेशे दैवे वैश्वदेविके यथाशक्ति युग्मान्प्राङ्मुखान्पित्र्ये पितृकार्ये यथाशक्त्या वा[3] । अयुग्मानिति पाठः । अयुग्मानुदङ्मुखानासनेषु पवित्रपाणिरुपवेशयेत् । अथ वा द्वावेव वैश्वदेवे त्रीनेव पित्र्ये । यद्वोभयत्रैकैकम् । द्विचतुरादिसंख्याका[4] युग्माः । एकत्रिपञ्चकादिसंख्याका[5] अयुग्माः । महासंख्यायामसमर्थस्य चाल्पसंख्याविधिः । यत्तु मनुनोक्तम्—

" द्वौ दैवे पित्र्यकृत्ये[6] त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् ।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् " ।

इति, तन्न्यूनसंख्याप्रशंसार्थं[7][8] नाधिकसंख्यानिषेधार्थम् । तथा सति नाधिकसंख्या विधीयेत ।

**विधत्ते च गौतमः**—" नवावरान्भोजयेदयुजो वा यथोत्साहम् " इति ।

**गृह्यकृच्छौनकः**—" अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा

---

१ ङ. प्राक्त्रयः पित्र्ये उद° । २ ख. °ते दक्षिणतो द° । ३ ग. घ. च. वाऽयुग्मानु° । ४ ख. °संख्यका । ५ ख. °संख्यका । ६ क ग. पितृकार्ये त्री° । ७ क. तदूनविप्रसंख्याप्र° । ८ ग. च. °नविप्रसंख्याप्र° ।

वृद्धमनुः—" स्वयंधौतेन[1] कर्तव्याः क्रिया धर्म्या विपश्चिता ।
न तु नेजकधौतेन नाहतेन च कर्हिचित् " ॥
अहतमाह कश्यपः—" अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवा ।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा " ॥

माङ्गलिक्यं विवाहादि । ततोऽन्यत्र सकृत्प्रक्षालितमहतमित्याह प्रचेताः—
" ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् " ॥
व्यासः—" अच्छिन्नाग्रं च यद्वस्त्रं मृदा प्रक्षालितं च यत् ।
अहतं धातुरक्तं तत्पवित्रमिति वै स्थितिः " ॥
शाट्यायनिः—" ततः सूर्यमुपस्थाय सम्यगाचम्य च स्वयम् ।
अभ्युक्षणं समादाय संयतात्मा गृहं व्रजेत् ॥
सोपानत्कः सदर्भश्च सपात्रः सदशोत्तरः " ।

सदशमुत्तरमुत्तरीयं यस्य स [स]दशोत्तरः । सूर्योपस्थानं ब्रह्मयज्ञाद्युपलक्षणार्थम् ।
योगयाज्ञवल्क्यः—" तेनोदकेन पात्राणि प्रोक्ष्याऽऽचम्य पुनर्गृहे ।
पात्राद्विरहितं तोयमुद्धृतं सव्यपाणिना ॥
*न तेन प्रोक्षणं कुर्याद्वस्त्रनिर्णेजनेन च " ।
ब्रह्माण्डपुराणे—" नाप्रोक्षितं स्पृशेत्किंचिद्दैवे पित्र्ये च वा पुनः ।
उत्तरेणाऽऽहरेद्वेद्या दक्षिणेन विसर्जयेत् " ॥

वेदिः श्राद्धभूमिः ।
गोभिलः[2]—" दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादो यो जान्वोर्वा जङ्घयोस्तथा ।
कृतावसक्थिको[3] यस्तु प्रौढपादः स उच्यते " ॥
बौधायनः—" नाभेरधः करस्पर्शं कर्मयुक्तो विवर्जयेत् " ।
तथा—" संध्ययोरुभयोर्जप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥
गुरूणां संनिधौ दाने योगे चैव विशेषतः ।
एतेषु मौनमातिष्ठेत्स्वर्गमाप्नोति मानवः " ॥

---

* एतदर्धस्थानेऽयं पाठश्चपुस्तके स यथा—"तेनैव प्रोक्षणं कुर्याद्वस्त्रनिर्णेजकेन वा" इति ।

---

१ ख. ग. घ. च. °यं वैते° । २ क. ग. घ. गोबिलः । ३ क. ख. घ. छ. °सक्थिको ।

तिलानवकिरेत्तत्र सर्वतो वासयेदजान् ।
असुरोपहतं सर्वं तिलैः शुध्यत्यजेन च ॥
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् ।
चोष्यपेयसमृद्धं च यथाशक्ति प्रकल्पयेत् ॥
ततो निवृत्ते मध्याह्ने लुप्तलोमनखान्द्विजान् ।
अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥
तैलमुद्वर्तनं स्नानं स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेवकपूर्वकम् ॥
ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रमम् " ॥

औदुम्बरं ताम्रम् ।

विष्णुः—" स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते " ॥

वृद्धवसिष्ठः—" जपहोमोपवासेषु धौतवस्त्रः सदा भवेत् ।
अलंकृतशुचिर्मौनी श्राद्धादौ विजितेन्द्रियः " ॥

प्रचेताः—" श्राद्धकृच्छुक्लवासाः स्यात् " ।

कषायरक्तप्रतिषेधमाह बौधायनः—

" काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।
न तद्देवगमं भवति हव्यकव्येष्वथो हविः " ॥

योगयाज्ञवल्क्यः—" जपे होमे तथा दाने दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नाऽऽसुरीं कक्ष्यां शेषे काले यथेच्छया ॥
परिधानाद्बहिः कक्ष्या निबद्धा ह्यासुरी भवेत् " ।

भृगुः—" नग्नः स्यान्मलवद्वासा नग्नः कौपीनकेवलः ।
द्विकक्ष्योऽनुत्तरीयश्च अकक्षोऽवस्त्र एव च ॥
नग्नः काषायवासाः स्यान्नग्नश्चार्धपटः स्मृतः " ।

शातातपः—" एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम् ।
न चार्चयेद्द्विजान्नग्नः कुर्यादेवंविधो नरः ॥
सव्यादंसात्परिभ्रष्टं कथंचिद्विवृताम्बरम् ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् " ॥

---

१ च. °कसंस्कारभक्षव° । २ ख. °भक्षव° ३ क. °त् । चूष्य° । ४ ख. °थक्पृथक् । पा° ।

देवयज्ञार्थं वैश्वदेवम् । दर्शश्राद्धं दार्शम् । एतच्च श्राद्धमात्रोपलक्षणार्थम् । पैठीनसिः—

" पितृपाकं समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति " ॥

लौगाक्षिः—" पक्षान्तकर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं[१] ततः कुर्यात्ततोऽन्वाहार्यकं बुधः " ॥

पक्षान्तकर्माग्न्यन्वाधानम् । अन्वाहार्यकं दर्शश्राद्धम् ।

" अकृते[२] वैश्वदेवे तु स्थालीपाकः प्रकीर्तितः ।
अन्यत्र पिण्डयज्ञात्तु सोऽपराह्णे[३] विधीयते " ॥

पिण्डयज्ञ[४]स्थालीपाकात्प्राग्वैश्वदेवः कार्य इत्यर्थः ।

भविष्यत्पुराणे त्वन्यक्रमः—

" कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य[५] च ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप " इति ॥

तथा—" पितॄन्संतर्प्य विधिवद्बलिं दद्याद्विधानतः ।
वैश्वदेवं ततः[६] कुर्यात्कृत्वा ब्राह्मणवाचनम् ॥
ये अग्निदग्धा मन्त्रेण भूमौ यन्निक्षिपेद्बुधः ।
जानीहि तद्बलिं वीर श्राद्धकर्मणि नित्यदा " ॥

एवं वैश्वदेवस्य त्रयः कालाः । एकः पाकानन्तरोऽपरो बलिदानानन्तरः श्राद्धसमाप्त्यनन्तरस्तृतीयः ।

अथापरेतिकर्तव्यता[७] । तत्र पुराणम्—

" भूमिः श्राद्धे पञ्चगव्यैर्लिप्ता शोध्या तथोल्मुकैः ।
गौरमृत्तिकया छन्ना प्रकीर्णतिलसर्षपा " ॥

उशना—"गोमयोदकैर्भूमिभाजनभाण्डशौचं कुर्यात् " ॥

देवलः—" तथैव यन्त्रितो दाता प्रातः स्नात्वा[८] सहाम्बरः ।
आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ॥

---

१ क. पितृय° । २ ख. अक्षतं । ३ ख. ग. च. °राह्णो वि° । ४ ख. ग. °यज्ञः स्था° । घ. °यज्ञ इति स्था° । ५ ख. विसर्ज्य । ६ क. ख. च. तदा । ७ क. °तामाह–त° । ८ क. ग. °त्वा महा° ।

इति कुशाः । अथ प्रोक्षणम् । तत्र वृद्धशातातपः—

" बहिराचम्य नद्यादौ सोदकश्च सुसंयतः ।
आहरेत्प्रोक्षणं प्राज्ञो नैकजातिर्न चाव्रतः ॥
शैवलतृणपर्णाद्यैरसंस्काराम्बुभाजनैः ।
सैकतावस्रुतोयाद्यैर्न कुर्यात्प्रोक्षणं बुधः " ॥

एकजातिः शूद्रः । शैवलादिभिर्युक्तैरसंस्कृतभाजनैः । सैकतान्तर्गतैर्वस्त्रादिनिर्गतैश्च जलैर्न प्रोक्षेदित्यर्थः ।

आपस्तम्बः—" नालिका[1]भिन्नपात्रेण कांस्यपात्रेण चैव हि ।
प्राण्यङ्गफलजेनापि कुर्यान्नाभ्युक्षणं बुधः " ॥

नालिका[2] वेणुमयी । भिन्नपात्रं यन्मृन्मयम् । प्राण्यङ्गजं शङ्खशुक्त्यादि । फलजं नारिकेलबिल्वादिमयम् ।

" गृहे वा सम्यगाचान्तः कृत्वा स्वर्णोदकं बुधः ।
नाधोवस्त्रैकदेशेन शुद्ध्यर्थमप आहरेत् ॥
यद्यानीतं तु सव्येन प्रोक्षयेद्दक्षिणेन तु ।
आग्नेयं प्रथमं प्रोक्तं विप्रहस्ताद्द्वितीयकम् ॥
तृतीयमुदकस्थानाच्चतुर्थं मणिकात्स्मृतम् " ॥

अग्नियुक्तभाजनस्थमाग्नेयम् । मणिक उदपात्रम् ।

प्रचेताः—" संगृह्याभ्युक्षणं यायात्सोपानत्को गृहं प्रति[3] ।
तदमुक्त्वा गृहं प्राप्य आचामेत्परिचारकात् ॥
अभ्युक्षणोदपात्रं तु न तावत्स्था[4]प्यते क्वचित् ।
यावन्नाऽऽचमनं दत्तं प्रोक्षिता न गलन्तिका " ॥

गलन्तिका वारिधानी । विष्णुः—" न नक्तं गृहीतेन श्राद्धकर्म कुर्यादुदकेन " ।

ब्रह्माण्डपुराणे—" दुर्गन्धि फेनिलं वर्ज्यं तथा वै पल्वलोदकम् ।
नाऽऽप्नुयाद्यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते " ॥

इति प्रोक्षणम् । अथ वैश्वदेवादिः । तत्र लौगाक्षिः—

" पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम् " ॥

---

१ ख. °भिन्न पा° । २ ख °काभिर्वेणुमयीभिर्न पा° । ३ ख. °ति । उद° । ४ क. °प्य प्रशमे° । ५ क. °त्स्थापयेत्क्वचि° ।

न्दर्भानाहरेत् । अपरिगृहीताश्चापः । कृतवेश्मकर्माणः सस्त्रीबा-
लवृद्धाः सुरभिस्नाताः शुचिवाससः स्युः " ।

**सुरभिस्नाताः सुगन्धितैलादिद्रव्यस्नाताः ।**

**यमः**—" समूलस्तु[२] भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।
मूलेन लोकाञ्जयति शक्रस्य तु महात्मनः ॥
रक्षन्ति दर्भा असुरांस्तिला रक्षन्ति राक्षसान् ।
वेदविद्रक्षति त्वन्नं यतये दत्तमक्षयम् " ॥

**ब्रह्मपुराणे**—" हरिता वै सपिञ्जूलाः स्निग्धाः पुष्टाः समन्ततः ।
रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्कृताः " ॥

**सपिञ्जूला अच्छिन्नप्रान्ताः । बद्धमुष्टिः करो रत्निः । संस्कृताः परामृष्टाः ।**

" तथा श्यामाकनीवारदूर्वाश्च समुदाहृताः " ।

**कुशाभाव इति द्रष्टव्यम् । तथा च विष्णुः**—

" कुशाभावे कुशस्थाने काशदूर्वाश्च दद्यात् " ।

**गोभिलः**[३]—" बर्हिरुपमूललूनं पितृभ्यस्तेषामलाभे शूकतृणशरसू-
र्यसुतनलषण्ढ(ण्ड)वर्जं सर्वतृणानि " ।

**शूकतृणं शूकधान्यतृणम् । कात्यायनः**—

" हरिता[५] यज्ञिया[६] दर्भाः पीतकाः पञ्चयज्ञियाः ।
समूलाः पितृदै(दे)वत्याः कल्माषा वैश्वदेविकाः ॥
पिण्डार्थं संभृताः स्युर्ये तर्पणार्थं तथैव च ।
धृतैकतस्तु विण्मूत्रे तेषां त्यागो विधीयते " ॥

**पुराणात्**—" तर्पणादीनि कार्याणि पितॄणां यानि कानिचित् ।
तानि स्युर्द्विगुणैर्दर्भैः संस्तरार्थं विशेषतः ॥
सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् " ॥

**कुशग्रहणमन्त्रः**—"विरिञ्चिना सहोत्पन्न परमेष्ठिन्निसर्गज ।
नुद पापानि सर्वाणि भव स्वस्तिकरो मम " ॥

---

१ ख. °द्रवन्ना° । २ क. °मूलास्तु भवेद्दर्भाः पि° । ३ ग. घ. च. गोबिलः । ४ क. ख. ग. °तवन° । च. °तवग्ल° । ५ घ. °रिताः पैतृका द° । ६ ख. °ता याज्ञिका द° । ७ घ. °काः पञ्च-याज्ञिकाः । स° । ८ च. °ञ्चयाज्ञिकाः । स° । ९ च. °वत्ये क° ।

देवलः—“ पूर्वं निमन्त्रितोऽन्यस्य यदि कुर्यात्प्रतिग्रहम् ।
भुक्ताहारोऽपि वा भुङ्क्ते सुकृतं तस्य नश्यति ” ॥

मनुः—“ केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः ।
कथंचिदप्यतिक्रामन्पापः सूकरतां व्रजेत् ” ॥

अङ्गीकृतनिमन्त्रणस्यैतत् । आपस्तम्बः—“ आरब्धे चाभोजनमासमापनात् ”।

यमः—“ केतनं कारयित्वाऽपि योऽतिपातयते द्विजः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ” ॥

निमन्त्र्य ब्राह्मणमतिपातयतेऽतिक्रामति तं न भोजयत इति यावत् ।

“ आमन्त्रितस्तु यः श्राद्धे त्वन्यस्य कुरुते क्षणम् ।
संवत्सरकृतं पुण्यं तस्य नश्यति दुर्मतेः ॥
आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् ।
अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ” ॥

हारीतः—“ दैवे वा यदि वा पित्र्ये निमन्त्र्य ब्राह्मणं यदि ।
तर्पयेन्न यथान्यायं स तत्तस्य फलं हरेत् ॥
प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः ।
तर्पयित्वा विशेषेण सर्वं तत्फलमाप्नुयात् ” ॥

मनुः—“ निमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते ।
दातुर्यद्दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते ” ॥

वृषली शूद्रा ।

मनुः—“ दैवपूर्वं तु यच्छ्राद्धमदैवं वाऽपि यद्भवेत् ।
ब्रह्मचारी भवेत्तत्र मुक्त्वा श्राद्धं तु नैत्यकम् ” ॥

कात्यायनः—“ तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यात् । मैथुनश्रमस्वाध्यायान्वर्जयेत् । आवाहनादि वाग्यत आ उपस्पर्शनात् । आमन्त्रितश्चैवम् ” ।

उपस्पर्शनमाचमनं कर्मणोऽन्ते तत्पर्यन्तं वाचंयमः स्यादित्यर्थः ।

वृद्धशातातपः—“ शुद्ध्यर्थं प्रातरुत्थाय भक्षयेद्दन्तधावनम् ” ।

एतच्च भोक्तुर्न दातुः । “ क्लिन्नदन्तः पितॄन्यजेत ” इति श्रुतेः ।

हारीतः—“ अथ श्वोभूते दक्षिणाप्रवणां दिशं गत्वा दक्षिणाप्रणतान्समूला-

१ ख. च. °च्छ्राद्धं सदै° । २ ख. घ. आह्वना° । ३ क. °क्तुरेव न दा° ।

संयमिनो ब्रह्मचारिणः ।

प्रचेताः—" सवर्णं प्रेषयेदाप्तं द्विजानामुपमन्त्रणे " ।

स्वयंनिमन्त्रणासामर्थ्य एतत् ।

" कृतापसव्यः पूर्वेद्युः पूर्वान्पितॄन्निमन्त्रयेत् ।
भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदथ(त) ॥
सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत् " ।

मनुस्तु वैश्वदेविकब्राह्मणानां पूर्वं निमन्त्रणमिच्छति । यदाह—

" दैवाद्यन्तं यदीहेत पित्राद्यन्तं न तद्भवेत् ।
पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः " इति ॥

ततश्च विकल्पः ।

यमः—" जातिक्रियावबोधाद्यैर्गुणैर्युक्तानलोलुपान् ।
प्रार्थयेत प्रदोषान्ते भुक्तानाशयितान्द्विजान् ॥
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवद्भिर्भवितव्यं नः श्वोभूते श्राद्धकर्मणि ॥
ते तं तथेत्यविघ्नेन यातीयं रजनी यदि ।
यथाश्रुतं प्रतीक्षेरञ्श्राद्धकालमतन्द्रिताः " ॥

ते तथेति ब्रूयुरिति शेषः ।

मत्स्यपुराणे—" दक्षिणं जानुमालभ्य त्वं मयाऽद्य निमन्त्रितः ।
एवं निमन्त्र्य नियमाञ्श्रावयेत्पैतृकान्बुधः ॥
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि " ॥

वराहपुराणे—" वस्त्रशौचादि कर्तव्यं श्वः कर्ताऽस्मीति जानता ।
स्थानोपलेपनं भूमिं कृत्वा विप्रान्निमन्त्रयेत् ॥
दन्तकाष्ठं च विसृजेद्ब्रह्मचारी शुचिर्भवेत् " ॥

**तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥ २२५ ॥**

तैर्निमन्त्रितैः संयतमनोवाक्कायव्यापारैर्भवितव्यम् । चकारात्कर्त्राऽपि भवितव्यम् ।

मनुः—" निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा ।
न च च्छन्दांस्यधीयीत यस्य श्राद्धं च तद्भवेत् " ॥

---

१ ग. घ. च. यातेयं ।

आत्मार्थं यः पचेदन्नं न देवातिथिकारणात् ।
नार्हत्यसावपि श्राद्धं पतितो ब्रह्मराक्षसः " ॥

हारीतः—" स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः " ॥

ब्रह्मपुराणे—" कृतघ्नान्नास्तिकान्स्तब्धान्म्लेच्छदेशनिवासिनः ।
त्रिशङ्कुवर्बरानान्ध्रान्बकान्द्रविडकुङ्कुणान् ॥
कर्णाटकांश्च बाह्लीकान्कलिङ्गांश्च विवर्जयेत् " ।

स्कन्दपुराणे—
" ईश्वर उवाच-श्राद्धं परीक्ष्य दातव्यमित्येषा वैदिकी श्रुतिः ।
परीक्षणाच्च रम्भोरु आर्जवं गुणवत्तरम् ॥
अपरीक्ष्य तु यो दद्याच्छ्राद्धमार्जवमास्थितः ।
तस्य तुष्यन्ति पितरो देवताश्च न संशयः " ॥ २२२ ॥ २२३ ॥ २२४ ॥

## निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवाञ्शुचिः ॥

श्राद्धदिनाच्च पूर्वेद्युर्ब्राह्मणान्पङ्क्तिपावनान् । तदभावे मातामहादीन् । आत्मवान्विजितेन्द्रियः । शुचिः प्रयतो निमन्त्रयेत । अप्रत्याख्येयो नियोगो निमन्त्रणम् ।

देवलः—" अक्रुद्धो निभृतः स्वस्थः श्रद्धावानत्वरः शुचिः ।
समाहितमनाश्चात्र क्रियायामसक्तस्सदा " ॥

निभृतो मन्दभाषी । स्वस्थः प्रकृतिस्थः । समाहितमनास्तत्परः ।

" श्वः कर्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ॥
असंभवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् ।
अज्ञातीनसमानार्थानयुग्मानात्मशक्तितः " ॥

असंभवे पूर्वेद्युर्निमन्त्रणासंभवे । तदहर्निमन्त्रणपक्षेऽपि पूर्वेद्युस्त्यक्तस्त्रीसङ्गा एव निमन्त्रणीयाः । अत्र मार्कण्डेयः—

" निमन्त्रयेत पूर्वेद्युः पूर्वोक्तान्द्विजसत्तमान् ।
अप्राप्तौ तद्दिने वाऽपि हित्वा योषित्प्रसङ्गिनम् ॥
भिक्षार्थमागतान्विप्रान्काले संयमिनो यतीन् ।
भोजयेत्प्रणिपाताद्यैः प्रसाद्य यतमानसः " ॥

---

१ क. °पृष्टे न । २ ख. °बन्धुरा° । ३ ख. °वाञ्जिते° ४ घ. °मानर्थां° । ५ ख. °नो व्रती° ।

वेष्टकपुंश्चलिवार्धुषिकाहितुण्डिकप्रत्यवसितभृतकाध्यापि[1]क[2]भृतकाध्या-
पितमेलकसूच[3]कानियामककुशीलवादीन्दैवे पित्र्ये च वर्जयेत् ” ।

मनुः—“ सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम् ।
अप्रतिष्ठं वार्धुषिके नष्टं देवलके भवेत् ” ॥
यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत् ।
भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥
इतरेषु त्वपाङ्क्त्येषु यथोद्दिष्टेष्वसाधुषु ।
मेदोसृङ्मांसमज्जास्थि वदन्त्यन्नं मनीषिणः ॥
अपाङ्क्त्यो यावतः पाङ्क्त्यान्भुञ्जानाननुपश्यति ।
तावतां न फलं तत्र दाता प्राप्नोति बालिशः ॥
यावतः संस्पृशेदङ्गैर्ब्राह्मणाञ्शूद्रयाजकः ।
तावतां न भवेद्दातुः फलं दानस्य पौर्तिकम् ॥
वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु ।
पापरोगी सहस्रस्य दातुर्नाशयते फलम् ” ॥

वीक्ष्यान्ध इति योग्यताऽत्र विवक्षिता । ततश्च यत्र प्रदेशेऽवस्थितश्चक्षुष्मान्विप्रान्भुञ्जानानवलोकयितुं क्षमस्तत्र प्रदेशेऽवस्थितो वाऽन्धो नवतेर्विप्राणां भोजनफलं नाशयतीत्यर्थः ।

वायुपुराणे—“ अनाश्रमी तपस्तेपे तं विप्रं न निमन्त्रयेत् ।
औपपत्तिस्तथा शाक्यो नास्तिको वेदनिन्दकः ॥
ध्यानिनं ये च निन्दन्ति सर्वे ते पङ्क्तिदूषकाः ” ॥

औपपत्तिरौपपत्तिकः शुष्कतार्किकः शाक्यसाहचर्यात् । आगमानुसारतार्किक[4]ः प्रशस्त एव ।

“ वृथामुण्डाश्च जटिलाः सर्वे का[6]पटिकास्तथा ।
निर्घृणान्भिन्नवृत्तांश्च सर्वाञ्श्राद्धे विवर्जयेत् ॥
प्राह वेदान्वेदभृतो वेदान्यश्चोपजीवति ।
उभौ तौ नार्हतः श्राद्धं पुत्रिकापतिरेव च ” ॥

वेदभृतो वेदप्राप्तये परिक्रीतः । वेदोपजीवनं वाराध्ययनादि ।

“ वृथा दा[7]रांश्च यो गच्छेद्याजयेच्चावृतोऽध्वरे ।
नार्हतस्तावपि श्राद्धं द्विजो यश्चैव नास्तिकः ॥

---

१ ख. च. °पकाध्यापि° । २ ग. °कमे° । ३ क. °चकक° । ख. °चककानि° । ग. घ. °चकनि° । ४ क. °किकस्तु प्र° । ५ च. °कः श° । ६ क. कार्पटि° । ७ क. ख. च. दानांश्च ।

" एतान्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान् ।
द्विजातिप्रवरो विप्रानुभयत्र विवर्जयेत् " ॥

उभयत्र दैवे पित्र्ये च ।

**गौतमः**—" न भोजयेत्स्तेनपतितनास्तिकतद्वृत्तिवीरहाग्रेदिधिषूदिधिषूपति-स्त्रीग्रामयाजकाजपालोत्सृष्टाग्निमद्यपकुचारकूटसाक्षिप्रातिहारिकान् । उपपतिर्यस्य च सः । कुण्डाशी सोमविक्रयी । अगारदाहिगरदावकीर्णिगणप्रेष्यागम्यागामिपरिवित्तिपरिवेत्तृपर्याहितपर्याधातृत्यक्तात्मदुर्बालकुनखिश्यावदन्तपौनर्भवकितवाजपराजप्रेष्यप्रातिरूपिकशूद्रापतिनिराकृतिकिलासिकुसीदिवणिक्शिल्पोपजीविज्यावादित्रतालनृत्यगीतशीलान् । पित्रा वा कामेन विभक्तान् । शिष्यांश्चैके सगोत्रांश्च वीरहा ब्राह्मणेतरपुरुषहा च " ।

ब्रह्महा च पतितत्वेनैव गृहीतः । पतिशब्दोऽग्रेदिधिषूदिधिषूशब्दाभ्यां प्रत्येकं संबध्यते । याजकशब्दश्च स्त्रीग्रामशब्दाभ्यां प्रत्येकं संबध्यते । कुचारः कुत्सिताचारः । प्रातिहारिक ऐन्द्रजालिकः । उपपतिं न भोजयेत् । उपपतिर्यस्य स उपपतिस्तं चेत्यर्थः । पर्याहितपर्याधातारावाह लौगाक्षिः—

" सोदर्ये तिष्ठति ज्येष्ठे योऽग्न्याधानं करोति हि ।
तयोः पर्याहितो ज्येष्ठः पर्याधाता कनिष्ठकः " ॥

त्यक्तात्मा साहसिकः । प्रातिरूपिकः कूटतुलादिमानव्यवहारी, प्रकारान्तरेण वा प्रतारकः । किलासी कुष्ठी, भूमिहर्ता वा । कुसीदी कुत्सितवृद्ध्युपजीवी । ज्याशीलो धनुर्विद्योपजीवी । एवं वादित्रादिशीलाः । सगोत्राः सपिण्डाः ।

**शङ्खलिखितौ**—

" अनृतवाक्तस्करो राजद्विष्टो भृत्यो वृक्षरोपकवृत्तिर्गरदोऽग्निदो माहिषिकश्छागलिकः शूद्रोपाध्यायो बन्दी घाण्टिको देवलकः पुरोहितो नक्षत्रादेशवृत्तिर्ब्रह्मपुरुषोऽपत्यविक्रयी कितवः कूटकारकमानुषपशुविक्रयिणश्चेत्यपाङ्क्तेयाः ।

**हारीतः**—" चिकित्सकवृषलप्रेष्यकारुककितवश्वक्रीडकशाकुनिजीविमीनघातका-

---

१ क. घ. च. विद्वानु° । २ क. ग. घ. °षूप° । ३ ख. °रिकाः । उ° । ४ घ. °द्राधिप° । ५ क. ग. °लनृत्तगी° । ख. च. °लनृत्तगी° । ६ ख. वक्री ।

मनुस्तु दिधिषूपतिमन्यथाऽऽह—

" भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः ।
धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः " इति ॥

लक्षणाभिधानादेव दिधिषूपतिरपि वर्ज्य इति ज्ञेयम् ।

" भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च " ॥

भ्रामर्यपस्मारी । श्वित्री श्वेतत्वक् ।

" हस्तिगोश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।
पक्षिणां[1] पोषको यश्च युद्धाचार्यस्तथैव च ॥
स्रोतसां भेदकश्चैव तेषां चाऽऽवरणे रताः " ।

स्रोतो जलप्रवाहस्तस्य भेदको विदारकः । आवरणं सेत्वादिना निरोधः ।

" गृहसंवीजको[2] दूतो वृक्षरोपक एव च ।
श्वक्रीडी श्येनजीवी च कन्यादूषक एव च " ॥

गृहसंवीजको गृहस्य कर्ता । दूतः संधिविग्रही । वृक्षरोपको मूल्यार्थम् ।

" हिंस्रो वृषलवृत्तिश्च गणानां चैव याजकः ।
आचारहीनः क्लीबश्च नित्ययाचनकस्तथा " ॥

वृषलवृत्तिर्वृत्तिर्यस्य स वृषलवृत्तिः । बहवो मिलिता एककर्मकारिणोऽत्र गणाः । प्रत्येकं बहूनां याजकः[3] पूगयाजकः । तेनापुनरुक्तता । क्लीबोऽनुत्साही ।

" कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च ।
औरभ्रिको माहिषिकः[4] परपूर्वापतिस्तथा " ॥

श्लीपदं व्याधिविशेषः । उक्तव्यतिरिक्तोऽपि साधुनिन्दितः । औरभ्रिको मेषजीवी । एवं माहिषिको व्यभिचारिणीसुतो वा । यथाऽऽह देवलः[5]—

" महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी ।
तस्यां यो जायते गर्भे[6] स वै माहिषिकः[7] स्मृतः ॥
प्रेतनिर्हारकश्चैव वर्जनीयः प्रयत्नतः " ।

प्रेतनिर्हारको मूल्येन, धर्मार्थे तु न दोषः ।

---

१ ख. °णां मोष' । २ ग. घ. च. °संवेशको । ३ ख. °जकाः पूगयाजकाः । तें° । ४ क. ख. घ. °हिषकः । ५ क. ग. घ. °लः । माहि° । ६ क. गर्भः । ७ क. ख. घ. च. °हिषकः ।

यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट्परिवित्तिश्च गणाभ्यन्तर एव च " ॥

यक्ष्मी राजयक्ष्मी । निराकृतिमाह देवलः—

" अधीत्य विस्मृते वेदे भवेद्विप्रो निराकृतिः । "

कात्यायनस्त्वन्यथा निराकृतिमाह—

" यस्त्वाधायाग्निमालस्याद्देवादीन्नैभिरिष्टवान् ।
निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः " ॥

ब्रह्मद्विड्ब्राह्मणद्वेष्टा । गणाभ्यन्तरो गणमध्यगः । गणो मठस्थो ब्राह्मणादिः।

" कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे " ।

कुशीलवो नटादिः ।

तथा—" ब्राह्मैर्यौनैश्च संबन्धैः संयोगं पतितैर्गतः " ।

अस्य च पतितात्पृथगुपादानं कृतप्रायश्चित्तस्यानुग्रहार्थम् । उपपातकसंयोग्यनुग्रहार्थं वा ।

" अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी बन्दी च तैलिकः कूटकारकः " ॥

गरदो विषदः । बन्दी मङ्गलपाठकः । कूटकारकस्तुलादेर्मानस्य साक्ष्यस्य[1] वा कूटस्य कर्ता ।

" पित्रा विवदमानश्च केकरो मद्यपस्तथा ।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी " ॥

केकरोऽप्य(ध्य)र्धदृष्टिः । मद्यं द्राक्षारसादि न तु सुरा । तत्पातुः पतितत्वेनैव[2] निषिद्धत्वात् ।

पापरोगानाह देवलः—" उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो
भगंदरो महोदरमश्मरीत्यष्टौ पापरोगाः " ।

रसो विषं पारद इक्षुरसादिर्वा ।

" धनुःशराणां कर्ता च यश्चाग्रेदिधिषूपतिः ।
मित्रध्रुग्द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च " ॥

अग्रेदिधिषूमाह देवलः—" ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा च दिधिषूर्मता " ॥

---

१ ख. साक्षस्य । २ क, घ. °व सिद्ध° ।

उशना—" वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
यस्त्वेनामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥
दत्त्वाऽनुयोगेनार्थाय पतितान्मनुरब्रवीत् ।
वेदविक्रयिणो ह्येते नैताञ्श्राद्धेषु भोजयेत् ॥
असंस्कृताध्यापकाश्च भृतकाध्यापकाश्च ये ।
तमो विशन्ति ते घोरमिति वैवस्वतोऽब्रवीत् " ॥

अत एवैते न भोजनीया इत्यर्थः ।

मनुः—" जटिलं चानधीयानं दुर्बालं कितवं तथा ।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे विवर्जयेत् " ॥

जटिलो ब्रह्मचारी । दुर्बालः खलतिः ।

" चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा ।
विपणेन च जीवन्ति वर्ज्याः स्युर्हव्यकव्ययोः " ॥

चिकित्सको वृत्त्यर्थं न धर्मार्थम् ।

देवलः—" देवकोशोपजीवी च नाम्ना देवलको भवेत् ।
अपाङ्क्तेयः स विज्ञेयः सर्वकर्मसु सर्वदा " ॥

तथा—" देवार्चनरतो विप्रो वित्तार्थी वत्सरत्रयम् ।
असौ देवलको नाम हव्यकव्येषु गर्हितः " ॥

विपणो वणिज्या । विपणजीवितया प्रतिषिद्धस्यापि मांसविक्रयिणः पृथक्प्रतिषेधोऽत्यन्तवर्ज्यत्वख्यापनार्थः । तेनोक्तगुणवतां विपणजीविनामप्यापद्युपादेयत्वं गम्यते । एवमन्येऽपि सामान्यतः प्रतिषेधसिद्धौ विशेषप्रतिषेधा अत्यन्तानुपादानार्था वेदितव्याः ।

" प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा " ॥

प्रतिरोद्धा प्रतिकूलः । त्यक्ताग्निः शास्त्रोक्तत्यागकारणमन्तरेणेति शेषः । वार्धुषिर्निषिद्धवृद्ध्युपजीवी । निषेधश्च यथा[३]—

" समर्घं[४] धनमुद्धृत्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥

१ क. ग. घ. च. °वन्तो व°। २ ख. ग. च. °वकेशो°। ३ ग. °था—स्वल्पार्थं । ४ ख. समार्धं ।

अचर्माणः शिपिविष्टाः । कचैर्विना खलतय इत्यर्थः ।

महाभारते—" अव्रती कितवः स्तेनः प्राणिविक्रयिकोऽपि वा ।
पश्चाच्चेत्पीतवान्सोमं[1] सोऽपि केतनमर्हति " ॥

व्रतमत्र वेदव्रतम् ।

मनुः—" यावतो ग्रसते पिण्डान्हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्ताञ्शूलर्ष्ट्ययोगुडान् " ॥

शूलमृष्टिश्चाऽऽयुधविशेषः । अयोगुडो लोहपिण्डः ।

देवलः—" कूटसाक्षिपुंस्त्वोपघातिस्त्रीजितसेतुभेदकतालावधारणरङ्गोपजी-
विविधर्मपाठके[2][4]नित्ययाचकप्रायश्चित्तनिमित्तधूर्तसाहसिकमृगयु-
कितवै[3]नास्तिकपिशुनशठै[5]वणिग्धर्मिपौनर्भवात्मम्भरिपुक्क[6]सिसमु-
द्रयायिकृत्याभिचारशूँ[7]लमेलकवैद्यभृतककन्यादूषकक्रूतघ्नकु[8]हि-
कक्रूरमित्रध्रुग्दत्तापव्ययिसमयभेदिवाग्दुष्टपरुषकारुशिल्पिक-
हस्त्यारोहाश्वबन्धकाश्चेति वर्ज्याः " ।

तालावधारणस्तालवादनाजीवी । विधर्मपाठकाः पाषा(ष)ण्ड्यागमस्य पाठकाः । पुक्कसी मृगवधजीवी । दत्तापव्ययी दत्तापहर्ता । अश्वबन्धको विक्रयार्थमश्वान्यो बध्नाति ।

वसिष्ठः—" विद्वद्भोज्यान्यविद्वांसो येषु राष्ट्रेषु भुञ्जते ।
तान्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् " ॥

हारीतः—" अपि विद्याकुलैर्युक्ता हीनवृत्ता नराधमाः ।
क्षौद्रेषु निरता नित्यं यातुधानाः प्रकीर्तिताः " ॥

क्षौद्रेषु परपीडा[9]करेषु कर्मस्वित्यर्थः ।

" पक्षिमीनमृगघ्ना ये सर्पकच्छपघा[10]तिनः ।
नानाजन्तुवधे सक्ताः प्रोक्ता दुर्ब्राह्मणा हि ते " ॥

तथा—" शूद्रप्रेष्यो भृतो राज्ञा वृषलो ग्रामयाजकः ।
वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः " ॥

यमः—" यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्च वै वृषलीपतिः " ॥

---

१ क. °मं नासौ के° । २ ग. °कप्रा° । ३ क. °वपि° । ४ घ. °ठकन्या° । ५ ख. °णिग्प्रहर्षौ° । ६ ग. °सिक्कस° । ७ ख. °शूरमे° । ८ ग. °कुहकामि° । ९ ख. °डाकारे° । १० ख. °घातकाः । नानाज° ।

व्यङ्गुलातीतकर्णस्य पितरो भुञ्जते हविः ॥
य एतैर्लक्षणैर्युक्तास्तांस्तु पङ्क्त्या न निर्विशेत् ” ।

शङ्खः—“ अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः ।
शूद्रान्नरसपुष्टाङ्गा ब्राह्मणाः पङ्क्तिदूषिताः ” ॥

यमः—“ चौरा वार्धुषिका दुष्टाः परस्वानां च नाशकाः ।
चातुराश्रम्यबाह्याश्च विज्ञेयाः पङ्क्तिदूषकाः ॥
ये व्यपेताः स्वकर्मभ्यः स्तेनास्ते परिकीर्तिताः ।
कव्यं ददाति यस्तेभ्यस्तस्य तत्प्रेत्य नश्यति ॥
ज्ञानपूर्वं तु ये तेभ्यः प्रयच्छन्त्यल्पमेधसः ।
पुरीषं भुञ्जते सर्वे शतं वर्षाण्यमुत्र ते ॥
तस्मोद्वै दातुकामेन दैवं श्राद्धं च सर्वशः ।
प्रशान्तेभ्यः प्रदातव्यं नाशान्तेभ्यः कथंचन ” ॥

वायुपुराणे—“ यस्तिष्ठेद्वायुभक्षस्तु चातुराश्रम्यबाह्यतः ।
अयतिर्मोक्षवादी च उभौ तौ पङ्क्तिदूषकौ ” ॥

महाभारते—“ अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत ।
पुत्रिकापुत्रपूर्वाश्च श्राद्धे नार्हन्ति केतनम् ” ॥

केतनं निमन्त्रणम् । गणपूर्वो गणपुत्रः । गणो गणको मठब्राह्मणादिर्वा ।

मनुः—“ न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः ।
नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्विजम् ” ॥

अन्यविप्रासंभवे स एवाऽऽह—
“ कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ” ॥

ब्रह्माण्डपुराणात्—“ नानुयोगोऽस्ति वेदानां योऽनुयुङ्क्ते स पापकृत् ।
भोक्ता वेदफलाद्भ्रश्येद्दाता दानफलात्ततः ” ॥

अनुयोगः परीक्षार्थं प्रश्नः किं पठसीत्येवंरूपः ।

कश्यपः—“ अरीन्विश्वस्तहन्तॄंश्च व्यङ्गान्नक्षत्रसूचकान् ।
वर्जयेद्ब्राह्मणानेतान्सर्वकर्मसु यत्नतः ॥
काणाः कुष्ठाश्च पण्ढाश्च त्वचर्माणः कचैर्विना ।
सर्वे श्राद्धे न योक्तव्या मिश्रिता वेदपारगैः ” ॥

---

१ ग. घ. °दूषकाः । य° । २ ख. घ. °स्माद्वेदान्तका° । ३ क. ख. ग. घ. नातिरू° । ४ ख. च. यो न भुङ्क्ते । ५ क. कुब्जाश्च । ख. ग. कुण्ठाश्च ।

"सोदर्ये[1] तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम् ।
आवसथ्यं तथाऽऽधानं[2] पतितस्तु तथा भवेत् " ॥

ब्रह्मगर्भः[3]—"याजनाध्यापनादानैरनिन्द्येभ्यो धनेन च ।
औपासनं समादद्या(ध्या)त्स्वे काले परिवेदयन् " ॥

प्रकृतमुच्यते—मातापित्राचार्यादीन्विना पातित्यादिना कारणेन यस्त्यजति स मात्रादित्यागी । तथा च मनुः—

"अकारणात्परित्यक्ता मातापित्रोर्गुरोस्तथा " ।

गुरुरत्राऽऽचार्यो न पिता तस्य पृथगुपात्तत्वात् ।

कुण्डाशी कुण्डगोलकान्नभोजी । तथा च कुण्डगोलकावभिधायाऽऽह-

मनुः—"यस्तयोरन्नमश्नाति स कुण्डाश्युच्यते बुधैः[4] " ।

ब्रह्मपुराणात्-"चतुःषष्ठ्या पलैः शुद्धैः कुण्डं प्रस्थचतुष्टयम् ।
भवेत्तद्यस्तु निगिरेत्[5]स कुण्डाशी पतत्यधः " ॥

धर्महीनो वृषलः । तदाह मनुः—

"वृषो हि भगवान्धर्मस्तस्य यः कुरुते त्वलम् ।
वृषलं तं विदुर्देवाः सर्वधर्मबहिष्कृतम् " ॥

तस्याऽऽत्मजो वृषलात्मजः । अथवा वृषलः शूद्रः स आत्मजो यस्य स वृषलात्मजः ।

परपूर्वा पूर्वमन्यस्मै दत्ता तस्याः पतिः परपूर्वापतिः । स्तेनश्चौरः । निषिद्धकर्मकारिणश्च कर्मदुष्टास्ते चोक्तेभ्योऽन्ये चिकित्सकदेवलकादयः शास्त्रान्तरादवबोद्धव्याः । अत्र मनुः—

"ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः ।
तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् " ॥

नास्ति दैवमितिमतिमान्नास्तिकः । नास्तिकशास्त्रव्याख्यानादिनिबन्धनवृत्तिर्यास्तद्वृत्तिः ।

यमः—"नाश्नन्ति पिशुने देवा नाश्नन्त्यनृतवादिनि ।
भार्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे ॥
न खैरुपयातस्य न रक्ताम्बरवाससः ।

---

१ क. घ. सोदरे । २ क. ग. तदाधा° । ३ क. ग. घ. °र्भः । यज° । ४ ख. द्विजः । ५ क. ख. घ. निगरे° ।

**वृद्धवसिष्ठः**—" अग्रजश्च यदाऽनग्निरादध्यादनुजः कथम् ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि " ॥

एतच्च धर्माधिकारिणि ज्येष्ठेऽग्न्याधेयम[1]कुर्वति द्रष्टव्यम् । नानधिकारिणि ।

**हारीतः**—" सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिवेद्यन्ते नाग्निहोत्रेण नेज्यया " ॥

विवाहाधिकारिणाऽनुमतोऽपि नोद्वहेदित्यर्थः ।

**उशना**—" पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित् ।
तपोग्निहोत्रमन्त्रेषु न दोषः परिवेदने " ॥

यस्य पित्रादयः सन्ति तस्य तदनुज्ञातस्य तपोग्निहोत्रादयः परिवेदनहेतवो न भवन्तीत्यर्थः ।

**सुमन्तुः**—" पितुर्यस्य तु नाऽऽधानं कथं पुत्रस्तु कारयेत् ।
अग्निहोत्रेऽधिकारोऽस्ति शङ्खस्य वचनं यथा " ॥

अनुज्ञातस्येति शेषः ।

" व्यसनासक्तचित्तो वा नास्तिकोऽप्यथवाऽग्रजः ।
कनीयान्धर्मकामस्तु आधानमथ कारयेत् " ॥

व्यसनादिनाऽनधिकारित्वमुपलक्ष्यते । अतस्तदनुमतेनैवाधिकारी कनीयानादद्या(ध्या)त् ।

" ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा " ॥

**शातातपः**—" नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिता " ॥

अनधिकृते ज्येष्ठ इति शेषः । ज्येष्ठेऽधिकारिणि श्राद्धमकुर्वत्यपि कनिष्ठस्तु तत्कुर्वन्न परिविद्यते । विरूपायां ज्येष्ठायामनूढायामपि कनिष्ठाविवाहो न दोषाय ।

**योगयाज्ञवल्क्यः**—"आवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते ।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते " ॥

आवसथ्याधानमपीतराधानवद्भवतीत्याह गार्ग्यः—

---

[1] ख. °मर्थवति ।

**यमोऽप्याह**—" व्रती यः स्त्रियमभ्येति सोऽवकीर्णी निरुच्यते " ।

**व्रती ब्रह्मचारी ।**

**कुण्डगोलकावाह मनुः**—" परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
जीवे भर्तरि कुण्डः स्यान्मृते भर्तरि गोलकः " ॥

**क्षेत्रजसुतविषयमेतत् । अन्यस्याब्राह्मणत्वादेवाप्राप्तिः । कुनखी स्वभावान्मृतनखः । श्यावदन्तः स्वभावात्कृष्णदन्तः । भृत एव भृतको भृतकश्चासावध्यापको भृतकाध्यापकः । अथवा भृतकोऽध्यापको यस्य स भृतकाध्यापकः । अत्र देवलः**—

" भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ।
तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात् " ॥

**क्लीबः ष(प)ण्डः । अङ्गुल्यादिना यः कन्यां क्षतयोनिं करोति स कन्यादूषी कन्यादोषख्यापको वा । अनिश्चितसत्यभावेन पापकारितयोक्तोऽभिशस्तः । मित्रध्रुङ्मित्रद्रोही । पिशुनः परदोषसूचकः । सोमविक्रयी सोमलतायाः सोमयागस्य वा विक्रेता । परिविन्दकः परिवेत्ता । अत्र मनुः**—

" दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिः स पूर्वजः " ॥

**शातातपः**—" क्लीबे देशान्तरस्थे च पतिते प्रव्रजे तथा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने " ॥
पितृव्यपुत्रान्सापत्नान्परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने " ॥

**परनारीसुता दत्तकादिभ्रातरः ।**

**वसिष्ठः**—" अष्टौ दश द्वादश वा वर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति " ।

**अनिविष्टमकृतविवाहाग्निहोत्रम् । तत्र श्लोकौ भवतः**—

" द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोगतः[1] ।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥
उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च ।
राजयक्ष्मामयावी ना न न्याय्यः स्यात्प्रतीक्षितुम् ॥
खञ्जवामनकुब्जेषु गद्गदेषु जडेषु च ।
जात्यन्धे बधिरे मूके न दोषः परिवेदने " ॥

---

१ क. °योगतः ।

उक्तगुणानामपि विप्राणां रोगित्वादिनिमित्तेन निन्द्यत्वं श्लोकत्रयेणाऽऽह—

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ॥
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः ॥२२२॥
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ॥
मित्रध्रुक्पिशुनः सोमविक्रयी[१] परिविन्दकः ॥ २२३ ॥
मातापित्रोर्गुरोस्त्यागी कुण्डाशी वृषलात्मजः ॥
परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥ २२४ ॥

रोगिप्रभृतयो निन्दिताः श्राद्धे वर्जनीया इत्यर्थः । रोगी दीर्घरोगी । तथा च ब्रह्मपुराणम्—

"भोक्तुं श्राद्धेषु नार्हन्ति दैवोपहतचेतसः ।
षेण्ढो[२] मूकश्च कुनखी खल्वाटो दन्तरोगवान् ॥
श्यावदन्तः पूतिनासश्छिन्नाङ्गश्चाधिकाङ्गुलिः ।
गलरोगी च गड्डुमान्स्फुटिताङ्गश्च सज्वरः ॥
खञ्जतूपरमन्दाश्च तथाऽन्ये दीर्घरोगिणः" ।

हीनाङ्ग ऊनाङ्गः संख्यातः परिमाणतो वा । एवमतिरिक्ताङ्गः । अङ्गमङ्गुल्यादि । काण एकचक्षुः । चक्षुर्नाङ्गं किं त्विन्द्रियम् । अतो हीनाङ्गात्काणस्य पृथग्ग्रहणम् । पुनर्भूः पुनरूढा तस्याः पतिस्तस्याः सुतो वा पौनर्भवः । तत्त्वतस्तु सुत एव । अत एव हारीतः—

"स्वैरिणी च पुनर्भूश्च रेतोधाः कामचारिणी ।
सर्वभक्षा[३] च विज्ञेयाः पञ्चैताः शूद्रयोनयः ॥
एतासां यान्यपत्यानि चोत्पद्यन्ते कदाचन ।
न तान्पङ्क्तिषु युञ्जीत नैते पङ्क्त्यर्हकाः स्मृताः" इति ॥

रेतोधाः कुण्डमाता । कामचारिणी अन्यपुरुषगामिनी । सर्वभक्षा[४] सुरापी । अवकीर्णिनमाह देवलः—"गूढलिङ्ग्यवकीर्णी स्याद्यश्च भग्नव्रतस्तथा" ।
गूढलिङ्गी दण्डादिकाश्रमलिङ्गरहितः । भग्नव्रतो विलुप्तब्रह्मचर्यः ।

---

१ ङ. °यी वेदनिन्दकः । मातापितृगुरुत्यागी । २ क. ग. शण्ढो । ३ ग. घ. °भक्ष्या च । ४ क. ग. घ. °भक्ष्या सु° ।

ऊर्ध्वरेतास्तपस्युग्रे रतो नियतभुग्यतः ।
शापानुग्रहयोः शक्तः सत्यसंधो भवेदृषिः ॥
नियतः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥
एषां परः परः श्रेष्ठो विद्याद्यैरधिको[1]ऽपि सन् ।
चीर्णव्रता गुणैर्युक्ता भवेयुर्ये च[2] कर्षकाः ॥
सावित्रीज्ञाः क्रियावन्तस्ते राजन्के+तनक्षमाः ।
क्षत्रधर्मिणमप्याजौ केतयेत्कुलजं द्विजम् ॥
न त्वेव वणिजं तात श्राद्धेषु परिकल्पयेत् " ।

**वृद्धमनुः**—" यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
आत्मकैवल्यविच्चैव पङ्क्तिपावनपावनः " ॥

**यमः**—" ऋजुर्घृणी क्षमी दान्तः शान्तः सत्यव्रतः शुचिः ।
वेदज्ञः सर्वशास्त्रज्ञ उपवासपरायणः " ॥

**तथा**—" छन्दोगं भोजयेच्छ्राद्धे वैश्वदेवे च बह्वृचम् ।
पुष्टिकर्मण्यथाध्वर्युं शान्तिकर्मण्यथर्वणम् " ॥

**आपस्तम्बः**—" तुल्यगुणेष्वपि वयोवृद्धः श्रेयान् । द्रव्यकृशश्चेच्छन् " ।

**मत्स्यपुराणे**—" अर्थज्ञो वेदविन्मन्त्री ज्ञातवंशः कुलान्वितः ।
पुराणवेत्ता सर्वज्ञः स्वाध्यायजपतत्परः ॥
शिवभक्तः पितृपरः सूर्यभक्तोऽथ वैष्णवः ।
ब्रह्मण्यो योगविच्छान्तो विजितात्माऽथ शीलवान् " ॥

**स्कन्दपुराणे**—" कुलश्रुताभ्यां संयुक्तादलुब्धस्तु विशिष्यते ।
ताभ्यामपि च विप्राभ्यां[3] चिरवासी विशिष्यते " ॥

**चिरवासी विज्ञातशीलो यद्वा गुरुकुले चिरक्लिष्टो भवतीति तात्पर्यम् ।**

**आपस्तम्बः**—" भोजयेद्ब्राह्मणान्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसंबन्धान्गु[4]णहान्या तु परेषां समुदितः सोदर्योऽपि योजयितव्यः[5] " ।

**योनिगोत्रमन्त्रान्तेवासित्वेनासंबन्धान्परेषामसंबन्धिनां[6] गुणहीनत्वेन गुणैर्युक्तः सोदर्योऽपि भोजयितव्यः । किमुत व्यवहितसंबन्धः[7] ॥ २१९ ॥ ॥ २२० ॥ २२१ ॥**

---

\+ केतने निमन्त्रण इत्यर्थः ।

---

१ ख. °को ह स° । २ क. ग. च कार्ष° । ३ ख. °भ्यां कुलवा° । ४ ख. °बद्धान्गु° । ५ क. ग. घ. योजित° । ६ ख. °बद्धान्प° ७ क. ग. घ. °वस्थित° ।

मत्स्यपुराणात्—" मण्डलब्राह्मणज्ञा ये ये सूक्तं पौरुषं विदुः ।
तांस्तु दृष्ट्वा नरः क्षिप्रं सर्वपापैः प्रमुच्यते " ॥

यमः—" स्थविरांस्तपस्विनो दान्ताञ्शिष्टान्वा यदि वेतरान् ।
तान्सर्वान्भोजयेच्छ्राद्धे साधुभिश्च निमन्त्रयेत् ॥
अर्जयित्वा धनं पूर्वं दारुणैः कृषिकर्मभिः ।
भवेत्सर्वातिथिः पश्चात्स राजन्केतनक्षमः " ॥

इतरानस्थविरानित्यर्थः । केतनं निमन्त्रणम् ।

अत्रिः—" षड्भ्यस्तु पुरुषेभ्योऽर्वागश्राद्धेयास्तु गोत्रिणः ।
षड्भ्यस्तु परतो भोज्याः श्राद्धे स्युर्गोत्रजा अपि " ॥

असंभवेऽपि त्रिभ्यः परतो भोज्याः । यदाह गौतमः—" भोजयेदूर्ध्वं त्रिभ्यो गुणवन्तम् " । षड्भ्यस्त्रिभ्य इति सपिण्डपुरुषसंख्यानिर्देशः ।

अत्रिः—" पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः ।
न परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा ॥
ऋत्विक्पुत्रादयोऽप्येते सकुल्या ब्राह्मणा द्विजाः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥
सगोत्रा न नियोक्तव्याः स्त्रियश्चैव विशेषतः " ।

पङ्क्तिपावन इत्यनुवृत्तौ व्यासः—

" मातापित्रोर्यस्य वंश्याः श्रोत्रिया दश पूरुषाः ।
ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा " ॥

छागलेयः—" सर्वलक्षणसंयुक्तैर्विद्यारूपगुणान्वितैः ।
पुरुषत्रयविख्यातैः सर्वं श्राद्धं प्रकल्पयेत् " ॥

पुरुषत्रयविख्यातैरिति पूर्वोक्तासंभवे ।

देवलः—" एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य यः ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥
वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत्प्राप्तः सोऽनूचान इति स्मृतः ॥
अनूचानगुणोपेतो यज्ञस्वाध्यायमन्त्रवित् ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥
वैदिकं लौकिकं चैव सर्वं ज्ञानमवाप्य यः ।
आश्रमस्थो वशी नित्यमृषिकल्पः स उच्यते ॥

( श्राद्धप्रकरणम् ९ )

" अकृतान्नं घृणिक्रान्तं कृशवृत्तिमयाचकम् ।
एकान्तशीलं ह्रीमन्तं सदा श्राद्धेषु भोजयेत् " ॥

**अकृतान्नमकृतभोजनम् । घृणिक्रान्तं सूर्यातपखिन्नम् ।**

" षडङ्गविद्ध्यानयोगिसर्वतन्त्रास्तथैव च ।
यायावरश्च पञ्चैते विज्ञेयाः पङ्क्तिपावनाः " ॥

**सर्वतन्त्रः शालीनाख्यो[1] गृहस्थः । यायावरो गृहस्थविशेषः ।**

" श्राद्धकल्पं पठेद्यस्तु स नित्यं पङ्क्तिपावनः ।
चतुर्दशानां विद्यानामेकस्या अपि पारगः ॥
यथावद्वर्तमानश्च सर्वे ते पङ्क्तिपावनाः ।
ये च भाष्यविदः केचिद्ये च व्याकरणे रताः ॥
अधीयानाः पुराणं ये धर्मशास्त्रमथापि वा ।
पुण्येषु ये च तीर्थेषु कृतस्नानाः कृतश्रमाः ॥
मखेषु ये च सर्वेषु भवन्त्यवभृथप्लुताः ।
ये च सत्यव्रता नित्यं स्वधर्मनिरताश्च ये ॥
अक्रोधनाः क्षान्तिपरास्ताञ्श्राद्धेषु निमन्त्रयेत् ।
प्रत्यासन्नमधीयानं व्यतिक्रामति[2] यो द्विजम् ॥
भोजने चैव दाने च हन्यात्त्रिपुरुषं कुलम् " ।

**देवलः**—" ज्येष्ठाश्रमनिविष्टश्च शतायुर्ज्येष्ठसामगः ।
अग्निचित्सोमपश्चेति ब्राह्मणः पङ्क्तिपावनः " ॥

**ज्येष्ठाश्रमो गृहस्थाश्रमः । अग्निचिच्छाकराग्निचयनकृत् । चयनान्तरग्रहणे सोमप इत्यनर्थकं स्यात् ।**

**मत्स्यपुराणे**—" यश्च व्याकुरुते वेदं यश्च मीमांसतेऽध्वरम् ।
सामस्वरविधिज्ञश्च पङ्क्तिपावनपावनाः ॥
अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते ।
सा गौरी तत्सुतो गौरः पङ्क्तिपावन एव सः " ॥

**मनुः**—" किं ब्राह्मणस्य पितरं किं वा पृच्छसि मातरम् ।
श्रुतं चेदस्ति वेद्यं वा तन्मातापितरौ स्मृतौ " ॥

**यमः**—" पञ्चाग्निर्वा यजुर्वेदी अथर्वा ब्रह्मशीर्षकः ।
आत्मविद्याङ्गविच्चैव ब्रह्मदेयासुतस्तथा " ॥

**यदि यजुर्वेदी पञ्चाग्निविद्याध्यायी[3], आथर्वणश्च ब्रह्मशीर्षाध्येता ।**

---

१ क. ब्राह्मणः । २ क. ग. घ. 'क्रामेत्तु यो । ३ क. घ. 'ञ्चाङ्गवि' ।

" सत्यवन्तश्च धीराश्च नित्यदानरताश्च ये ।
मङ्गलाचारयुक्ताश्च ते द्विजाः पङ्क्तिपावनाः ॥
अग्निहोत्ररताः शान्ताः क्षमावन्तोऽनसूयकाः ।
ये प्रतिग्रहनिःस्नेहास्ते द्विजाः पङ्क्तिपावनाः " ॥

अनसूयकाः पैशुन्यरहिताः ।

**कार्ष्णाजिनिः**—" ब्रह्मदेयानुसंतानो ब्रह्मदेयाप्रदायकः ।
ब्रह्मदेयापतिश्चैव ब्राह्मणाः पङ्क्तिपावनाः ॥
अपि स्यात्स कुले जन्तुर्भोजयेद्यस्तु योगिनम् ।
विप्रं श्राद्धे प्रयत्नेन तेन तृप्यामहे वयम् " ॥

**विष्णुः**–" अथ पङ्क्तिपावनाः । वेदाङ्गस्याप्येकस्य पारगः पुराणेतिहास-व्याकरणपारगो धर्मशास्त्रस्याप्येकस्य पारगः । तीर्थपूतो यज्ञपूतस्तपःपूतः सत्यपूतो गायत्रीजपनिरतो जामाता दौहि-त्रश्चेति पात्रविशेषेण च योगिनः " ।

**ब्रह्माण्डपुराणात्**–" ये तु वृत्ते स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा ।
शिखिभ्यो धातुरक्तेभ्यस्त्रिदण्डिभ्यश्च दापयेत् ॥
अलाभे ध्यानभिक्षूणां भोजयेद्ब्रह्मचारिणम् ।
तदलाभे ह्युदासीनं गृहस्थमपि भोजयेत् " ॥

ध्यानयोगाद्वानप्रस्थोऽत्र ध्यानशब्देनोक्तः । भिक्षुः प्रव्रजितः । उदासीनो रागादिरहितः ।

" सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमाम् ।
तस्मादतिथिमायातमभिगच्छेत्कृताञ्जलिः ॥
पूजयेदर्घ्यपाद्याभ्यां पादाभ्यञ्जनभोजनैः ।
उर्वीं सागरपर्यन्तां दिवा योगीश्वराः सदा ॥
नानारूपाश्चरन्त्येते प्रजाधर्मेण योगिनः ।
तस्माद्दद्यात्सदा श्राद्धं विप्रायातिथये नरः " ॥

सिद्धा विदितात्मतत्त्वाः । प्रजाधर्मेण प्राकृतरूपेण ।

" पिपासिताय श्रान्ताय संबुद्धाय बुभुक्षवे ।
तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता " ॥

संबुद्धाय विज्ञानवते ।

---

१ क. घ. °गः । तीर्थ° । २ ख. शान्ताय ।

" वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेयो[1] ब्राह्मणः पङ्क्तिपावनः " ॥

प्रवक्ता धर्मार्थमध्यापकः । सहस्रदो बहुप्रदः ।

गौतमः—" श्रोत्रियान्वाग्रूपवयःशीलसंपन्नान् " निमन्त्रयेतेत्यन्वयः ।
" युवभ्यो दानं प्रथममेके पितृवत् " ।

पितृपितामहप्रपितामहब्राह्मणा वृद्धवृद्धतरवृद्धतमा इत्यर्थः ।

वसिष्ठः—" यतीन्गृहस्थसाधून्वा परिणतवयसः[2] सुकर्मसंस्थाञ्श्रोत्रियान-शिष्याननन्तेवासिनः । अन्तेवासिनो नैष्ठिका[न्] ब्रह्मचारिणः शिष्यानपि गुणवतो भोजयेत् ।
अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।
अदुष्टं तं यमः प्राह पङ्क्तिपावन एव सः " ॥

शारीरैः श्वित्रादिभिः[3] ।

यमः[4]—" पीतसोमा विरजसो धर्मज्ञाः शान्तबुद्धयः ।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः " ॥

विरजसो वीतरागाः । व्रतिनो नियमस्था ब्रह्मचारिणः संयताः ।

" पञ्चाग्निरप्यधीयानो यजुर्वेदविदेव च ।
बह्वृचो यस्त्रिसौपर्णस्त्रिमधुर्वाऽपि यो भवेत् " ॥

पञ्चाग्निविद्या नाम च्छान्दोग्यु(ग्यो)पनिषत्पठितविद्या तामधीयानः ।

त्रिना(णा)चिकेतो विरजाश्छन्दोगो ज्येष्ठसामगः ।
अथर्वशिरसोऽध्येता चत्वारः पङ्क्तिपावनाः " ॥

विरजा नाम मन्त्रविशेषः । तदध्ययनाद्विरजाः । अथर्वशिरा नामाथर्ववेदैकदेशः ।

" गृहस्थो ब्रह्मचारी च यजुर्वेदविदेव च ।
वेदविद्याव्रतस्नाता[5] ब्राह्मणाः पङ्क्तिपावनाः ॥
मन्त्रिणो नियमस्थाश्च ये विप्राः श्रुतिसंगताः ।
प्राणिहिंसानिवृत्ताश्च ते द्विजाः पङ्क्तिपावनाः " ॥

मन्त्रिणो रुद्रादिमन्त्राभ्यासरताः[6] । श्रुतिसंगताः श्रुत्यभिमताः । श्रुत्यर्थानुष्ठायिन इत्यर्थः ।

---

१ क. घ. °ज्ञेया ब्राह्मणाः पङ्क्तिपावनाः । प्र° । २ क. ग. °सः स्वक° । घ. °सः स्वकर्मस्था° । ३ क. ख. श्विग्र्यादि° । ४ क ख. °मः । येपी° । ५ ख. °स्नातो ब्राह्मण' पङ्क्तिपावनः । म° । ६ ग. °सपराः । श्रु° ।

यथोदकं प्राप्यत एवं देवपितृभिस्तथाविधविप्रमार्गेण[1] हव्यकव्यानि प्राप्यन्ते। अतिथिर्दातुरत्यन्तोपकारकः।

" सहस्रं तु सहस्राणामनृचां यत्र भुञ्जते।
एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति धर्मतः " ॥

सर्वानर्हति स एकोऽपि सर्वैस्तुल्य इत्यर्थः।

" ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथा परे।
तपःस्वाध्यायनिष्ठाश्च कर्मनिष्ठास्तथैव च " ॥

निष्ठा तात्पर्यम्।

" ज्ञानोत्कृष्टेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः।
हव्यानि च यथान्यायं सर्वेष्वेव चतुर्ष्वपि " ॥

चतुर्षु ज्ञाननिष्ठादिष्वित्यर्थः।

" वेदविद्याव्रतस्नाताञ्श्रोत्रियान्गृहमेधिनः।
पूजयेद्धव्यकव्येन[2] विपरीतांस्तु वर्जयेत् " ॥

वेद एव विद्या वेदविद्या। गृहमेधिनो गृहस्थाः।

" एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥
मातामहं मातुलं वा स्वस्रीयं श्वशुरं गुरुम्।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् " ॥

विट्पतिर्जामाता।

" व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्।
कुतपं चाऽऽसनं दद्यात्तिलैश्चावकिरेन्महीम् ॥
अपाङ्क्त्योपहता पाङ्क्तिः पाव्यते यैर्द्विजोत्तमैः।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान्पङ्क्तिपावनान् ॥
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः " ॥

प्रोच्यत एभिर्वेदार्थ इति प्रवचनानि निरुक्तादीनि वेदाङ्गानि।

" त्रिना(णा)चिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्।
ब्रह्मदेयानुसंतानो ज्येष्ठसामग एव च " ॥

ब्रह्मदेयानुसंतानो ब्राह्मविवाहोढापत्यम्।

---

१ ख. घ. °विधिवि°। २ क. °व्येषु वि°।

ऋष्यशृङ्गः—" स्त्रीणामाद्यस्य भर्तुर्वै यद्गोत्रं तेन निर्वपेत् ।
यदि त्वक्षतयोनिः स्यादन्यपक्षसमाश्रिता ॥
तद्गोत्रेण तथा देयं पिण्डं[1] श्राद्धं तथोदकम् " ॥ २१७॥२१८ ॥

श्राद्धसंपत्तिहेतून्विप्राञ्श्लोकत्रयेणाऽऽह—

अग्र्यः[2] सर्वेषु वेदेषु[3] श्रोत्रियो ब्रह्मविद्युवा ॥
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ २१९ ॥
स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ॥
त्रिना(णा)चिकेतदौहित्रशिष्यसंबन्धिबान्धवाः[4]॥२२०
ज्ञाननिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ॥
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदे ॥ २२१ ॥

अग्र्यो मुख्योऽध्येतॄणां, सर्वेषु चतुर्षु वेदेषु । श्रोत्रियो यथाविध्येकशाखाध्यायी । ब्रह्मविदौपनिषदपुरुषवित् । युवा मध्यवयाः । वेदार्थविद्वेदवाक्यार्थवित् । ज्येष्ठसामा ज्येष्ठसामाख्यं व्रतं कृत्वा ज्येष्ठाख्यसामाध्येता । त्रिमध्वाख्यं व्रतं कृत्वा यस्तदाख्यमेव वेदभागमधीते स त्रिमधुः । एवं त्रिसुपर्णः । त्रिना(णा)चिकेतव्रतपूर्वकं तदाख्यवेदभागाध्यायी त्रिना(णा)चिकेतः । संबन्धिनो[5] वैवाह्याः । बान्धवा मातामहप्रभृतयः । ज्ञाननिष्ठा अध्यात्मविदः । कर्मनिष्ठा इति पाठे विहितानुष्ठानपराः । एवं तपोनिष्ठाः । सभ्या[6]वसथ्यौ[7] त्रेता चेति पञ्चाग्नयस्तद्वान्पञ्चाग्निः । ब्रह्मचारिण इत्येकस्मिन्बहुवचनं जात्यभिप्रायम् । अन्ये प्रसिद्धाः । एते ब्राह्मणा भोज्यमानाः श्राद्धस्य संपदे समृद्धये भवन्ति ।

अत्र मनुः—" श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥
एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति नामन्त्रज्ञान्बहूनपि ॥
दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः " ॥

पितृप्रभृतिबहुतरपुरुषपरीक्षा दूरात्परीक्षा । तीर्थं जलप्राप्तिमार्गः । तेन

---

१ ग. पिण्डदानं त॰ । २ ङ. अग्र्याः । ३ घ. वर्णेषु । ४ ङ. ॰वाः । कर्मनिष्ठास्त॰ । ५ क. घ. ॰नो बाह्याः । ६ क. ख. ग. सत्याव॰ । ७ ॰क. ग. ॰सथै त्रे ।

यदाह स्कन्दः—" श्राद्धं मातामहानां तु[1] अवश्यं धनहारिणा ।
दौहित्रेणार्थनिष्कृत्यै कर्तव्यं विधिवत्सदा " ॥

अत्रोपपत्तिमाह—" मलमेतन्मनुष्याणां द्रविणं यत्प्रकीर्तितम् ।
तद्गृह्णन्मलमादत्ते दुर्भिदं ज्ञानिनामपि ॥
ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावना परा ।
आ देहपतनात्कुर्यात्तस्य पिण्डोदकक्रियाम् " इति ॥

यस्तु दौहित्रो न पुत्रिकापुत्रो न च मातामहस्य धनं गृह्णाति स तस्यापुत्रस्य श्राद्धं कुर्वन्निःश्रेयसेन युज्यते । न पुनरकुर्वन्प्रत्यवायी स्यात् ।

क्षेत्रजोऽपि द्व्यामुष्यायणो यः क्षेत्रिकबीजिभ्यां पितृभ्यां संबद्धस्तं प्रति देवल आह—

" द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् ।
द्वाभ्यां देयास्तु षट्पिण्डा एवं कुर्वन्न मुह्यति " ॥

द्वाभ्यां पितृवर्गाभ्यामित्यर्थः । एवं ब्राह्मणभोजनेऽपि । अत्रासमर्थं प्रति बौधायन आह—

" द्विपितुः पिण्डदानं स्यात्पिण्डः पिण्डो द्विनामकः ।
द्वाभ्यां देयास्त्रयः पिण्डा एवं कुर्वन्न मुह्यति " ॥

अत्र क्रमविशेषमाह ऋष्यशृङ्गः—

" क्षेत्रिकस्य पितुस्त्वादौ दद्यात्पिण्डं तथोदकम् ।
पश्चात्तु येन ये जातास्तेभ्यो दद्याज्जलाञ्जलिम् " ॥

मरीचिः—" सगोत्रो वाऽन्यगोत्रो वा यो भवेद्विधवासुतः ।
पिण्डं श्राद्धविधानं च क्षेत्रिणे प्राग्विनिर्वपेत् ॥
बीजिने च ततः पश्चात्क्षेत्री जीवति चेत्क्वचित् ।
बीजिने दद्युरादौ च मृते पश्चात्प्रदीयते ॥
उभौ यदि मृतौ स्यातां बीजिन्यादौ तदा ददेत् ।
क्षेत्रिण्यादौ न दत्तं चेद्बीजिने नोपतिष्ठति " ॥

नारदः—" जाता ये त्वनियुक्तायामेकेन[3] बहुभिस्तथा ।
अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुताः ॥
दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता ।
अशुल्कोपनतायां ते पिण्डदा वोढुरेव ते " ॥

शुल्कं मूल्यम् ।

---

१ क. तु चाव' । २ क. तु चाव' । ३ घ. 'निकेताया° ।

पारशवो विन्नायां शूद्रायां ब्राह्मणाज्जातः । स च ब्राह्मण्यादिपुत्रान्तराभावेऽधिकारी ।

कार्ष्णाजिनिः—" पुत्रः शिष्योऽथवा पत्नी पिता भ्राता स्नुषा गुरुः ।
स्त्रीहारी धनहारी च कुर्यात्पिण्डोदकक्रियाम् " ॥

ब्रह्मपुराणम्—" ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन ।
कामान्मोहाद्भयाल्लोभात्कृत्वा तज्जातितां व्रजेत् ॥
पुत्राः कुर्वन्ति विप्राय क्षत्रविट्शूद्रयोनयः ।
स तादृशेभ्यः पुत्रेभ्यो न करोति कदाचन ॥
स्वमाता कुरुते तेषां तेऽपि तस्याश्च कुर्वते " ।

स्मृत्यन्तरम्—" स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासुतस्य च ।
प्राग्द्विजातेर्व्रतादेशात्तेऽपि कुर्युस्तथैव तत् " ॥

अथ द्व्यामुष्यायणाधिकारो निरूप्यते ।

तत्र यमः—" कुर्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरथ संबद्धः कुर्यात्स उभयोरपि " ॥

द्विविधः पुत्रिकापुत्रः । एको मातामहेनैव संबद्धोऽपरः पितृमातामहाभ्यामिति । तत्र प्रथमो मातामहश्राद्धं नियमेन कुर्यात्पितृश्राद्धमिच्छया[1] । यस्तूभयसंबद्धः स उभयोर्नियमेन कुर्यात् । तत्र मातामहश्राद्धमेकोद्दिष्टं त्रिपुरुषं[2] वेति जिज्ञासायां कात्यायन आह—

" मातामहस्यापुत्रस्य श्राद्धादि पितृवद्भवेत् ।
संबन्धिबान्धवादीनामेकोद्दिष्टं तु सर्वदा " ॥

एतच्च दौहित्रमात्रविषयमविशेषात् । न तु पुत्रिकापुत्रविषयमेव । यस्य तु पुत्रिकापुत्रस्य मातैव मातामहेन पुत्रतया परिगृहीता तं प्रति मनुराह—

" मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः " ॥

यस्तु दौहित्रो न तु पुत्रिकापुत्रः किंतु—

" अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम् ।
पौत्री पितामहस्तेन दद्यात्पिण्डं हरेद्धनम् "

इति मनुवचनबलान्मातामहधनादायी स नियमेन मातामहश्राद्धं कुर्यात् ।

---

१ ग. °तृपिता° । २ घ. त्रिपौरु° ।

पितृमातृसपिण्डैस्तु समानसलिलैस्तथा[1] ॥
तत्संघान्तर्गतैश्चैव राज्ञा वा धनहारिणा ।
पूर्वक्रियास्तु कर्तव्याः पुत्राद्यैरेव चोत्तराः ॥
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा[2] ।
मृताहनि[3] तु कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः ॥
प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः " इति ।

**स्मृत्यन्तरम्**—" पुत्रो भ्राता तथा शिष्यः सगोत्रोदकभागिनः ।
विहिताः पिण्डदाने तु तथा बन्धुः समाश्रितः " ॥

**गौतमः**—" पुत्राभावे सपिण्डमातृसपिण्डाः शिष्याश्च दद्युः । तदभाव ऋत्विगाचार्यौ " इति ।

**धर्मः**—" मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च ।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च ॥
एतेषां चैव भार्याभ्यः स्वसुर्मातुः पितुस्तथा ।
श्राद्धदानं तु कर्तव्यं नामभिस्तत्तथैव च " ॥

**मार्कण्डेयपुराणात्**—" पुत्राभावे सपिण्डस्तु तदभावे सहोदकः ।
मातुः सपिण्डा वा ये स्युर्ये वा मातुः सहोदकाः ॥
सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम् ।
तदभावे तु नृपतिः कारयेत्स्वकुटुम्बवत् ॥
तज्जातीयैर्नरैः सम्यग्दाहाद्याः सकलाः क्रियाः ।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः " ॥

**स्त्री**शब्दोऽत्र भुजिष्यावरोधनाद्यपरिणीतस्त्रीविषयः । ततश्च " पत्न्यभावे तु सोदरः " इत्यनेनाविरोधः ।

" प्रीत्या श्राद्धं तु कर्तव्यं सर्वेषां[4] वर्णालिङ्गिनाम् ।
एवं कुर्वन्नरः सम्यङ्महतीं श्रियमाप्नुयात् " ॥

**लिङ्गिन** आश्रमिणः ।

अत्र विषये विशेषैरपवादमाह **पारस्करः**—

" न ब्राह्मणेन कर्तव्यं शूद्रस्याप्यौर्ध्वदैहिकम् ।
शूद्रेण वा ब्राह्मणस्य विना पारशवात्कचित् " ॥

---

१ ग. °लिलैः सह । तथा—उत्सङ्गान्त' । २ क. 'था । उत्सङ्गान्त° । ३ ग. मृतेऽह' । ४ क. घ. °षयवि° ।

इति, तदंशहरत्वाभावे पित्रादेर्द्रष्टव्यम् । अंशहरत्वेऽपि पित्रादिरपि कुर्यादेव । बौधायनः—

“ पितुः पुत्रेण कर्तव्यं न कुर्वीत पिता सुते ।
अतिस्नेहात्तु कर्तव्यं सपिण्डीकरणं त्यजेत् ” ॥

विष्णुः—“ यश्चार्थहरः स पिण्डदायी पुत्रः पितृवित्ताभावेऽपि पिण्डं दद्यात् ” ।

पिण्डशब्दः श्राद्धोपलक्षणार्थः । पुत्रसंस्तुता भ्रातृपुत्रसपत्नीपुत्रानुजभ्रातरो रिक्थग्रहणेऽपि श्राद्धं दद्युः । तथा च मनुः—

“ भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥
सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ” ॥

तथा—“ पुत्रवत्पालयेच्चैनाञ्ज्येष्ठो भ्राता यवीयसः ” ।

तथा—“ मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ” ॥

विष्णुपुराणे त्वन्यथा क्रम उक्तः—

“ पुत्रः पौत्रः प्रपौत्रो वा तद्वद्भ्रात्रादिसंततिः ।
सपिण्डसंततिर्वाऽपि क्रियार्हा नृप जायते ॥
तेषामभावे सर्वेषां समानोदकसंततिः ।
मातृपक्षस्य पिण्डेन संबद्धो यो जलेन वा ॥
कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप ।
तत्संघान्तर्गतैर्वाऽपि कार्याः सर्वा मताः क्रियाः ॥
उत्सन्नबन्धो रिक्थाद्वा कारयेदवनीपतिः ।
पूर्वक्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदाञ्शृणुष्व मे ” ।

आदाहाद्वार्यायुधादिस्पर्शादन्त्याश्च(?) याः क्रियाः पिण्डदानाद्या अशौचमध्यभवास्ताः पूर्वाः । मध्यमा मासि मास्येकोद्दिष्टसंज्ञकाः ।

“ प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥

---

१ ख. °स्तुतभ्रा° । २ घ. °तिः । पिण्डदः सं° । ३ ख. चोत्पन्ने । ४ क. ग. °प । उत्सन्नान्तर्ग° । ५ घ. °त्संज्ञान्त° । ६ क. °क्तात्मा का° । ७ घ. युगादि ।

इति, तदयुक्तम् । न ह्यत्र वाक्यद्वयेऽपि पित्रा सह मातुः सपिण्डनमवबोध्यते । येन तद्विषयत्वे पूर्ववाक्यस्यैतत्प्रमाणं स्यात् । यत्तु सपिण्डीकरणे कृत एकमूर्तित्वमित्युक्तं तत्पित्रादिदै(दे)वत्ये श्राद्धे तत्पत्नीनां सहभावलक्षणमेकमूर्तित्वमवबोधयति । न पुनरभेदलक्षणम् । न हि यो येन सपिण्डी क्रियते स तेनाभिन्नस्तद्दै(द्दे)वत्ये वा श्राद्धे सह[1]भावेन देवतात्वमनुभवति प्रमाणाभावात् । तस्मात्पितामह्यां[2][3] सपिण्डीकृतायां मातर्यप्येतद्वचनमुपपद्यते । सपिण्डीकरणोत्तरकालमेव पित्रादिदै(दे)वत्ये मातॄणां सहभावेन देवतात्वमित्येतावन्मात्रविधिपरत्वात्तस्य । अत एव षट्त्रिंशन्मते गोत्रसूतकसाहचर्येण भर्त्रा सहैकपिण्डत्वं नार्याः कीर्त्यते ।

" एकत्वं सा गता भर्तुः पिण्डे गोत्रेऽथ सूतके ।
न पृथक्पिण्डदानं तु तस्मात्पत्नीषु विद्यते " इति ॥

ततश्च पितामह्यां पितामहेन वा सपिण्डीकृताया मातुर्न[4] पृथक्श्राद्धम् । एतच्चानियतमिति गम्यते चतुर्विंशतिमतात्—

" क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया ।
केचिदिच्छन्ति नारीणां पृथक्श्राद्धं महर्षयः " इति ॥

ततश्चान्वष्टकादित्रये स्त्रीणां श्राद्धं पृथगेव । गयामहालयादौ तु पृथक्सह वा स्वभर्तृभिरिति सिद्धम् ।

" पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया " ।

इति पिण्डदानग्रहणं सकलौर्ध्वदैहिकोपलक्षणार्थम् । पुत्रशब्दो यद्यप्यौरसे मुख्यः क्षेत्रजादिषु गौणस्तथाऽपि "पुत्राभावे तु पत्नी स्यात्" इत्यत्र मुख्ये गौणे च वर्तते । अन्यथा गौणपुत्रकरणे यदुक्तं—

" पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः "

इति, तद्विरुध्यते । " पत्न्यभावे तु सोदरः " इति सोदरग्रहणं पत्न्यभावे यो दायहरस्तदुपलक्षणार्थम् । ततश्च दुहित्रादीनां श्राद्धदत्वमुक्तं भवति । अत्र च पत्नीशब्दो विवाहयज्ञसंयोगिन्यां भार्यायां वर्तते ।

यत्पुनराह कात्यायनः—" अष्टकायां पतिर्दद्यादपुत्रायां न तु क्वचित् ।
न पुत्रस्य पिता चैव नानुजस्य तथाऽग्रजः "

---

१ ग. °ह देवेन । २ क. °मह्यां पितामहेन स° । ३ ग. °ह्या मातामहेन वा स° । घ. °ह्या पितामहेन वा स° । ४ क. ख. ग. °ह्या माता° ।

सपिण्डीकृता अप्युच्यन्ते नवश्राद्धादेः श्राद्धत्वसिद्ध्यर्थम् । आमश्राद्धादौ च प्रणाड्या ब्राह्मणभोजनपर्यन्ततया[1] विद्यमानत्वोन्मुख्यमेव[2] श्राद्धत्वम्[3] । किंतु पाकपरिवेषणाद्यङ्गाननुष्ठानात्तत्र गौणत्वोक्तिः । तस्मात्सिद्धं श्राद्धस्य होमात्मकत्वम् । तत्र पुत्रादेरधिकारस्तस्य तत्र कर्तृत्वस्मरणात् । यत्कर्तृकं हि यत्कर्म स एव तत्राधिकारी यथा राजा राजकर्तृके राजसूये । तत्र शङ्खः—

" पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।
पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः " इति ॥

अत्र पितृग्रहणं प्रदर्शनार्थम् । तेन मातुरप्यौर्ध्वदैहिकं पुत्रेण कार्यम् । यत्तु शातातपेनोक्तम्—" अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा ।
अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह "

इति, तत्सपिण्डीकरणादुत्तरकालविषयम् । प्रेतत्वविमोक्षार्थं श्राद्धजातं[4] सर्वमेव मातुः पृथक्कार्यम् । यदाह शङ्खः—

" अन्वष्टकां तथा मातृश्राद्धं चैव मृताहनि ।
एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत्पृथग्भवेत् " इति ॥

अत्र चैकोद्दिष्टशब्देन प्रेतत्वविमोचकं सर्वमेव श्राद्धमुच्यते न पुनरन्वष्टकादिश्राद्धान्येकोद्दिष्टान्येव[5] कार्याणीत्युच्यते । अत एव विष्णुः—

" अन्वष्टकासु दैवपूर्वं शाकमांसापूपैः श्राद्धं कृत्वाऽन्वष्टकास्वष्टकावद्धृत्वा[6] हुत्वा दैवपूर्वमेव मात्रे पितामह्यै प्रपितामह्यै च पूर्ववद्ब्राह्मणान्भोजयित्वा दक्षिणाभिश्चाभ्यर्च्यानुव्रज्य विसर्जयेत् " ।

अत एव वृद्धिश्राद्धे शङ्खः पार्वणमेव विधिमाह—

" पित्रादित्रयपत्नीषु भोज्या मातुः प्रति द्विजाः ।
स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते " इति ॥

केचिदन्यत्र पतिना सहेति वचनं पित्रा सह सपिण्डीकृतायां मातरीति व्यवस्थापयन्ति । तत्प्रमाणतया च शातातपीयं वचनं पठन्ति—

" एकमूर्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नी पतिपितॄणां तु तस्मादंशेषु[7] भागिनी " इति ॥

बार्हस्पत्यमपि—" स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम् ।
पितामही च स्वेनैव स्वेनैव प्रपितामही " ॥

---

१ ग. घ. °र्यन्ताया । २ क. ख. °त्वात्पुण्यमे° । ३ ख. °द्धम् । किं° । ४ ख. °द्धव्रातं । ५ ख. घ. °ष्टक्यादि° । ६ क. घ °मेवं मा° । ७ क. °शेन भा° ।

देवलः—" यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते " ॥

यत्र ग्रहो(सूर्यो)दयादूर्ध्वं ग्रस्तस्य चन्द्रस्यास्तमयस्तत्र सूर्योदयात्प्रागेव राहुदर्शननिमित्तं स्नानदानादि कार्यम् । न तु पश्चादित्यर्थः । ग्रहणनिमित्तं च श्राद्धमावश्यकम् । तथा लिङ्गपुराणे—

" सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुद*र्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति " ॥

शातातपः—" आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव तु ॥
स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् " ॥

श्राद्धं प्रति रुचिश्चैवेति । अत्र रुचिरिच्छा । सा च यदा श्राद्धानुष्ठानविषया भवति तदैव श्राद्धं कुर्यात् । निमित्तेन[2] च कालतुल्यत्वात्तस्या औपचारिकं श्राद्धकालत्वम् । एवं श्राद्धं प्रति कालविधिरुक्तः । श्राद्धस्वरूपमापस्तम्बश्चाऽऽह—

" अथैतन्मनुः । श्राद्धशब्दकर्म[3] प्रोवाच प्रजानिःश्रेयसाय तत्र
पितरो देवता[4] ब्राह्मणास्त्वाहवनीयार्थे " इति ।

अनेन होमात्मकः श्राद्धशब्दार्थो निरूपितः । ब्राह्मणा आहवनीयार्थ आहवनीयकार्ये[5] प्रक्षिप्यमाणहविर्धारणलक्षणे वर्तन्ते । न चाभुञ्जानास्ते तत्कार्यं कर्तुं शक्नुवन्तीत्यर्थाद्ब्राह्मणभोजनपर्यन्तता श्राद्धस्यानेनोक्ता । अत एव वक्ष्यति—

" ततो यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः " इति ।

अत एव गृह्यकृच्छौनकः[6]—" नवावराञ्श्रोत्रियान्भोजयेदयुजो वा " इत्याह ।

मनुरपि—" द्वौ दैवे पितृकृत्ये[7] त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे " इत्याह ॥

पितृशब्देनात्र यस्य यस्य मातामहादेर्देवतात्वं शास्त्रान्तरेण विधीयते तस्य सर्वस्य परिग्रहः क्रियते । तथा हि सति बहुवचनमुपपद्यते । पितृशब्देनात्रा-

---

* दर्शनमत्र सूर्यस्य मेघाच्छन्नस्यापि दिवा गणितदृष्ट्या । रात्रौ मेघाच्छन्नस्य चन्द्रस्य गणितदृष्ट्येति क. पुस्तके ।

---

१ ग. घ. प्रस्तोद' । २ ग. घ. °मित्तत्वेन । ३ क. घ. °द्धक° । ४ ख. °वताः पितरस्त्वा' । ५ ग. 'नीयकार्ये यज्ञि अ° । ६ क. °कः—त्र° । ७ ख. पित्र्यकृ° ।

**मत्स्यपुराणे**—" गङ्गाकनखले पुण्ये प्रयागं पुष्करं गया ।
कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे " ॥

**ऋष्यशृङ्गः**—" राहुग्रस्ते यदा सूर्ये यस्तु श्राद्धं प्रकल्पयेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे " ॥

**मार्कण्डेयः**—" चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ।
ग्रहणं तु भवेत्तत्र न पूर्वं भोजनक्रिया ॥
नाऽऽचरेत्सग्रहे तस्मिंस्तथैवास्तमुपागते ।
यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु " ॥

**एवं च सति**—" चन्द्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोः ।
अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि "

**इत्यत्र चन्द्रसूर्यग्रहशब्दस्तद्युक्तमहोरात्रं लक्षयति । अन्यथा** " न पूर्वं भोजनक्रिया "**इति वाक्यविरोधः स्यात् । सर्वत्राहनि रात्रौ च भोजनस्य प्रतिषिद्धस्य प्रतिप्रसवार्थमुक्तम्** " अद्यात्स्नात्वा विमुक्तयोः " **इति । प्रसिद्धमन्यत् । दृष्ट्वेत्युदयोपलक्षणार्थम् ।** " यावत्स्यान्नोदयस्तस्य " **इति वचनात् ।**

**तथा**—" ग्रहणं च भवेदिन्दोः प्रथमादपि यामतः ।
भुञ्जीताऽऽवर्तनात्पूर्वं पश्चिमे प्रथमादधि(धः) " ॥

**प्रथमयामादूर्ध्वमित्यर्थः । आवर्तनं दिनमध्यम् । पश्चिमे तु रात्रियामे रात्रेश्चतुर्थप्रहरे यदि ग्रहणं तदा रात्रेरेव तस्याः प्रथमप्रहरादधो भुञ्जीतेति ।**

**तथा**—" अपराह्णे तु मध्याह्ने मध्याह्ने यदि संगवे ।
भुञ्जीत संगवे चेत्स्यान्न पूर्वं भोजनक्रिया" ॥

**अत्यन्तासमर्थविषयमेतत् । समर्थस्य तु भोजने प्रायश्चित्तमुक्तं कात्यायनेन**—
" चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यति " ॥

**षट्त्रिंशन्मतात्**—" सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥
नवश्राद्धस्य यच्छिष्टं ग्रहपर्युषितं[1] च यत् ।
दंपत्योर्भुक्तिशिष्टं[2] तु भुक्त्वा चान्द्रायणं चरेत् ॥
सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहो यदि ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् " ॥

**यद्भूभागव्यवस्थितानामुपरागो दर्शनायोग्यस्तद्विषयमेतत् ।**

---

१ ख. °पत्युषितं । २ क. ग. °र्भुक्तशि° ।

स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ।
सूर्यवारे रवेर्ग्रासः सोमे सोमग्रहस्तथा ॥
चूडामणिरिति ख्यातस्तत्रानन्तं फलं भवेत् ।
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ॥
तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतम् " ।

**लिङ्गपुराणे**—" चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि च ।
अस्नायी मृत्युमाप्नोति[1] स्नायी पापं न विन्दति ॥
सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते " ॥

**स्नानविषयमेतत् । ततश्च समन्त्रकमेव स्नानं राहुदर्शने सूतकादावपि कार्यम् ।**

**तथा**—" त्रिरात्रं समुपोष्यैवं ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वा दत्त्वा च विधिवन्मोदते ब्रह्मणा सह ॥
एकरात्रमुपोष्यैवं स्नात्वा दत्त्वा च शक्तितः ।
कञ्चुकादिव सर्पस्य निष्कृतिः पापकोशतः " ॥

**कात्यायनः**–" उपाकर्मण्यथोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते " ॥

**देवीपुराणे**[2]–" कार्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसंगमे ।
मार्गे तु ग्रहणं पुण्यं देविकायां महामुने ॥
पौषे तु नर्मदा पुण्या माघे संनिहिता शुभा[3] " ।

**संनिहिता शुभा नर्मदा कुरुक्षेत्रमध्यगेत्यर्थः ।**

" फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती ।
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ॥
ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी ।
श्रावणे सिन्धुनामा च प्रोष्ठे श्रेष्ठा च गण्डकी ॥
आश्विने सरयूः श्रेष्ठा[4] भूयःपुण्या तु नर्मदा[5] ।
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ॥
सूर्ये च शशिना ग्रस्ते तमोरूपे महामते ।
नर्मदातोयसंसर्गात्कृतकृत्यो भवेन्नरः ।
एवं गङ्गाऽपि द्रष्टव्या तद्वद्देवी सरस्वती " ॥

---

१ क. मृत्युं । २ क. °णे कार्तिकादिमासेषु ग्रहणफलनिर्णयः । का° । ३ क. °भा । कुरुक्षेत्रमध्यगा संनिहिता । फा° । ४ क. ग. घ. पुण्या । ५ ग. घ. नन्ददा ।

गजच्छाया हस्तिच्छाया, तथा च काठकी श्रुतिः—

" एतद्धि देवपितॄणां चायनं यद्धस्तिच्छाया " ।

तथा—" हस्तिच्छायायां श्राद्धं दद्यात् " । महाभारते पितृगाथा—

" अजेन सर्वलोहेन वर्षासु नियतव्रतः ।
हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम् " इति ॥

श्राद्धं दद्यादिति शेषः । कर्णव्यजनवीजितमित्यभिधानात्प्रत्यक्षहस्तिच्छायाविषयमेवैतद्वाक्यम्। पारिभाषिकी च गजच्छाया, सा चोक्ता स्मृत्यन्तरे—

" यदेन्दुः पितृदै(दे)वत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणीया च गजच्छायेति सा स्मृता " इति ॥

पितृदै(दे)वत्यं मघा । हंस आदित्यः । करो हस्तनक्षत्रम् । वैश्रवणीया त्रयोदशी । एतत्रितययोगो गजच्छाया ।

ग्रहणमुपरागः । अत्र च राज्यादावपि श्राद्धमिष्यते । यदाह विष्णुः—

" संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् " इति ॥

मत्स्यपुराणे—" चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम् " ॥

प्रसङ्गाद्ग्रहणविषयमन्यदपि किंचिदुच्यते ।

तत्र मार्कण्डेयः—" चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे ।
अक्षयं कथितं पुण्यं तत्रार्के तु विशेषतः " ॥

दृष्टे दर्शनयोग्य इत्यर्थः ।

व्यासः—" सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे " ॥

दिवाकर इति चन्द्रस्याप्युपलक्षणं, यतः—

" इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः ।
गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश ॥
गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे ॥
दिवाकरे पुनस्तद्वद्दशसंख्यमुदाहृतम् ।
चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् ॥

---

१ ख. °इत्युपलक्षणं तेन निशाकर इति ज्ञेयम् । इन्दो° ।

यत्तु विष्णुनोक्तम्—" आदित्यसंक्रमणं विषुवद्वयं विशेषेणायनद्वयं व्यतीपातो जन्मर्क्षमभ्युदयश्च ।
एतांस्तु श्राद्धकालान्वै काम्यानाह प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते "

इति, तत्पितृतृप्तिरूपफलानन्त्यकामस्य विधायकमित्ययनश्राद्धस्य नित्यतां न विहन्ति । सर्वमेव हि श्राद्धं पितृतृप्तिप्रदं पितॄंस्तर्पयेदित्यादिवचनबलादवगम्यते । अथवाऽयनादिश्राद्धस्य भवतु नित्यता काम्यता च वचनद्वयबलादग्निहोत्रादिवत् । अथवाऽयनद्वयशब्देनैव मकरकर्कटसंक्रान्त्योरभिधानम् । किं तु ताभ्यां पृथगेव रवेरुत्तरां दक्षिणां च दिशं प्रति गमनयोः ।

द्रव्यब्राह्मणसंपत्तिर्द्रव्यस्य श्राद्धार्हस्य ब्राह्मणस्य वा पङ्क्तिपावनस्य संपत्तिर्लाभो यत्र काले स श्राद्धकालः । एतच्च नैमित्तिकत्वादावश्यकम् । यदाह हारीतः—

" तीर्थद्रव्योपपत्तौ तु न कालमवधारयेत् ।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते " इति ॥

तीर्थं पुष्करादि । विषुवे मेषे तुलायां च सूर्यस्य संक्रान्तिः । अयनवदस्यापि पृथग्वचने प्रयोजनम् । अत्र पुलस्त्योक्तो विशेषः—

" अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते " इति ॥

सूर्यसंक्रमः सूर्यस्य राशितो राश्यन्तरगमनम् ।

व्यतीपातो योगविशेषः पारिभाषिको वा । तत्र वृद्धमनुः—

" श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते " ॥

नागदैवतमाश्लेषा । मस्तके प्रथमपादे यदि चन्द्र इत्यर्थः ।

वराहपुराणे—" श्राद्धार्हमागतं द्रव्यं विशिष्टमथ वा द्विजम् ।
श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ॥
विषुवे चैव संप्राप्ते ग्रहणे चन्द्रसूर्ययोः[१] ।
समस्तेष्वेव विप्रेन्द्र राशिष्वर्केऽधिगच्छति ॥
न[२]क्षत्रे ग्रहपीडासु दुष्टस्वप्नावलोकने ।
इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा " ॥

---

१ ग. घ. °योः । मस्तकेष्वे' । २ ग. घ. 'क्षत्रग्र° ।

अयनद्वयं मकरकर्कटसंक्रान्ती तदुपलक्षितः कालः श्राद्धकालः । "सूर्यसंक्रमः" इत्यनेनैवायनपरिग्रहसिद्धौ पृथग्वचनमयनश्राद्धस्य नित्यत्वं बहुफलत्वं वा गमयति । तथा च जातूकर्ण्यः—

"ग्रहोपरोगे स्वसुते च जाते पित्र्ये मघायामयनद्वये च ।
नित्यं च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम्" ॥

नित्यशब्दश्रवणादुपरागादिश्राद्धसाहचर्याच्चायनश्राद्धमावश्यकम् । निष्कसहस्रदानतुल्यमधिकफलम्[1] । पित्र्ये पितृक्षयाहनि । यद्वा पित्र्ये नभस्यापरपक्षे या मघा तस्यामित्यर्थः ।

"शङ्खमाहुरमावस्यां क्षीणसोमां द्विजोत्तमाः ।
अष्टका तु भवेत्पद्मं तत्र दत्तमथाक्षयम्" ॥

विष्णुपुराणे—"वैशाखशुक्लस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥
एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतं चाऽऽशु भवेदनन्तम् ।
उपप्लवश्चन्द्रमसो रवेश्च तिस्रोऽष्टकाया अयनद्वयं च ॥
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदन्ति" ॥

पानीयमप्यत्रेतिवचनादेषां श्राद्धानामावश्यकत्वविनिश्चयः । कृष्णपक्ष इति त्रयोदश्याः पञ्चदश्याश्च विशेषणमिति केचित् । तन्न, शास्त्रान्तरेऽन्यथादर्शनात् । तथा च ब्रह्मपुराणे—

"वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्तिके शुक्लपक्षे च त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे कृष्णत्रयोदश्यां तु द्वापरम् ।
माघे तु पूर्णमास्यां तु घोरं कलियुगं तथा ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः" इति ।

एतेन—"द्वे शुक्ले द्वे तथा कृष्णे युगाद्ये परिकीर्तिते"

इति कस्यचिद्व्याख्यानं प्रत्याख्यातम् ।

यमः—"आषाढ्यामथ कार्तिक्यां माघ्यां त्रीन्पञ्च वा द्विजान् ।
तर्पयेत्पितृपूर्वं[2] तु तदप्यक्षयमुच्यते ॥

गौतमः—"श्रावण्याग्रहायण्योश्चान्वष्टकासु पितृभ्यो दद्यान्माघीवैशाख्योश्च" ।

१ ग. घ. °महाफलम् । २ क. ग. घ. °तत्पितरो व° ।

रस्मिन्वा पक्षे कन्यासंक्रान्तौ सत्यामुत्तरः पक्षः श्राद्धकालः । यत्तु ब्रह्माण्डपुराणे—

" कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि तत्र दत्तं महाफलम् "

तत्फलाधिक्याभिप्रायम् । तदाह शाट्यायनिः—

" पुण्यः कन्यागतस्तावत्पुण्यः पक्षश्च पञ्चमः ।
कन्यागतः पञ्चमश्च सोऽत्यन्तं पुण्य उच्यते " ॥

ततश्च सवितुः कन्यागतत्वे पृथक्श्राद्धकालत्वम् । अतः पुनरेव कार्ष्णाजिनिः—

" कन्यागते सवितरि पितरो यान्ति वै सुतान् ।
तावत्प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम् " ॥

ब्रह्मपुराणम्—" यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा " इति ॥

पञ्चमपक्षश्राद्धं नित्यम् । यदाह जातूकर्ण्यः—

" नैयोगिको विधिर्ह्येष पक्षे वै पञ्चमे स्मृतः ।
तस्मिन्दत्तं हविर्भूतं पितॄणामक्षयं भवेत् " इति ॥

नैयोगिको नैयमिकः । अत एव व्यासः—

" हस्ते वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे दद्यादुभयोर्वंशयोर्ऋणम् " ॥

ऋणमवश्यं देयत्वात् । उभयोर्वंशयोर्मातापितृवंशयोः । पञ्चम्योः कृष्णशुक्लपक्षपञ्चम्योरित्यर्थः । अत्राऽऽनुकूल्यमाह सुमन्तुः—

" सूर्ये कन्यास्थिते कुर्याच्छ्राद्धं यो न गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृनिःश्वासपीडनात् ॥
येयं दीपान्विता राजन्ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये " ॥

महालये कन्यागतपक्षे । यदपि स्मृत्यन्तरम्—

" बन्धूनामपि सर्वेषां श्राद्धं कन्यागते रवौ ।
निर्वपेदानुलोम्येन मृताहतिथिमाश्रितः " ॥

इति, तदनपत्यबन्धुविषयम् ।

---

१ ग. घ. पक्षो वै पञ्चमः स्मृ° ।

प्रतिमासं कृष्णपक्षविधानेनैव प्रोष्ठपद्या अपरपक्षोऽपि[1] प्राप्तः[2] ।
तथाऽस्य[3] यमेन यः पृथग्विधिः क्रियते—

" आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ।
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा "

इति, सोऽमावस्याश्राद्धेन समुच्चयार्थः । प्रत्यहं तत्र श्राद्धप्राप्त्यर्थश्च । अत एव ब्रह्मपुराणम्—

" अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा " ॥

अत्र पौर्णमास्यन्तमासाभिप्रायेण प्रोष्ठपद्या अपरपक्षोऽश्वयुक्कृष्णपक्ष उक्तः । त्रिभागहीनपक्षेऽपि प्रत्यहं श्राद्धं कार्यम् । पक्षमिति द्वितीयावशादत्यन्तसंयोगावगमात् । एवमुत्तरत्रापि ।

" त्रिभागहीने पक्षे पञ्चमीप्रभृति वाऽपरपक्षस्य "

इति गौतमवचनात् । पञ्चमीप्रभृतिकरणपक्ष आद्याश्चतस्रस्तिथयो हीयन्ते चतुर्दशी चेति तिथिपञ्चकहानाद्भवति त्रिभागहीनः पक्षः । त्रिभागपक्षे दशम्यामुपक्रमः । चतुर्दशीपरित्यागाच्च त्रिभागत्वम् । अर्धपक्षे पुनरष्टम्यामुपक्रमः । चतुर्दशीवर्जनाच्चार्धत्वम् । विकल्पश्चायं कर्तृशक्त्यपेक्षः । मलमासापरपक्षेऽपि प्रोष्ठपद्या अपरपक्षः कदाचिद्भवति । तन्निवृत्त्यर्थमाह शाट्यायनिः—

" नभस्यस्यापरे पक्षे तिथिषोडशकं तु यत् ।
कन्यागतान्वितं चेत्स्यात्स कालः श्राद्धकर्मवत् " इति ॥

शुक्लप्रतिपदमन्तर्भाव्य षोडशसंख्या पूरणीया । नभस्यः प्रोष्ठपदः ।
कन्यागतान्वये विशेषमाह कार्ष्णाजिनिः—

" अन्ते वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत् ।
पक्षः स पञ्चमः पूज्यः श्राद्धषोडशकं प्रति " इति ॥

तेन सिंहगतेऽपि सूर्येऽस्ति श्राद्धषोडशकारम्भः । तथा च जातूकर्ण्यः—

" आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ।
श्राद्धकालः स विज्ञेयः कन्यां गच्छतु वा न वा " इति ॥

पक्षोपक्रमाभिप्रायमेतत् । कन्यागतान्वयेन तु पक्षस्य भवितव्यमेव । " कन्यागतान्वितं चेत्स्यात् " इति वचनात् । ततश्च प्रोष्ठपद्याः पूर्वस्मिन्नप-

---

१ ग.घ.छ.ञ. °पक्षेऽपि । ख. °पक्षेति प्राप्ता । त° । २ क. प्राप्ताः । ३ क. ग. घ. °थाऽस्या य° ।

इति वदन्नष्टमीचतुष्टयमष्टकाङ्गत्वेनाऽऽह । विष्णुस्तु त्रयमेवाऽऽह—

" अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका । माघीप्रो-
ष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ चेति ।
एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते " इति ॥

अत एव नित्यता ह्यष्टकाश्राद्धस्य सिध्यति । ब्रह्मपुराणे पुनरष्टकाश्चतस्रः—

" ऐन्द्यां तु प्रथमायां च शाकैः संतर्पयेत्पितॄन् ।
प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत् ॥
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम् ।
वर्षासु मेध्यैः शाकैस्तु चतुर्थ्यामेव सर्वदा " ॥

श्रावणादयश्चत्वारो मासा वर्षाः । माध्यंदिनशाखागृह्ये च मध्यावर्षे सा तुरीया शाकाष्टका । तथा—ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति च । वृद्धिर्विवाहादिः । वैदिकः कर्मगणः पुत्रजन्मादिश्च । सा च निमित्तत्वादनुपादेयेति कालतुल्यत्वाच्छ्राद्धकालाः प्रकीर्तिता इति कालशब्देन शक्या संग्रहीतुम् । ततश्च वृद्धिश्राद्धं नैमित्तिकत्वादावश्यकम् । अत एव वृद्धशातातपः—

" वृद्धौ न तर्पिता यैर्वै देवता गृहमेधिभिः ।
तद्दानमफलं सर्वमासुरो विधिरेव सः " इति ॥

कृष्णपक्षः प्रसिद्धः । तस्य श्राद्धकालत्वं श्राद्धाङ्गभूतापराह्णावच्छेदकप्रतिपदादितिथिनिरूपणद्वारेण । एतच्चाऽऽवश्यकम्—

" शाकेनाप्यपरपक्षं नातिक्रामेन्मासि मासि[२] वोऽशनमिति श्रुतिः "

इति कात्यायनवचनात् । एतच्चाऽऽमावास्येन श्राद्धेन विकल्पते,

" अथ श्राद्धममावास्यायां पितृभ्यो दद्यात्पञ्चमीप्रभृति वाऽपरपक्षस्य "

इतिगौतमवचनात् । न च पञ्चमीप्रभृतित्वं नियतम् । यतः स एवाऽऽह— " सर्वस्मिन्वा " इति । न च प्रत्यहं श्राद्धमाशङ्कनीयम् । यदाह कात्यायनः—

" अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं चतुर्थ्या यदहः संपद्यते " इति ।

मनुस्तु—" कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः "

इति दशम्यादिपक्षमप्युक्तवान् ।

---

१ ग. घ. मध्यवर्षे चातुरीया मासा शा° । २ क. °सि योऽश° ।

तत्राप्यसामर्थ्ययुतः कराग्राग्रस्थितांस्तिलान् ।
प्रणम्य द्विजमुख्याय कस्मैचिन्नृप दास्यति ॥
तिलैः सप्ताष्टभिर्वाऽपि समवेतं जलाञ्जलिम् ।
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति ॥
यतः कुतश्चित्संप्राप्य गोभ्यो वाऽपि गवाह्निकम् ।
अभावे प्रयतस्तस्माच्छ्रद्धायुक्तः प्रदास्यति ॥
सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति " ॥

**[ + तद्यथा मार्कण्डेयपुराणे योगिन्या मदालसयोक्तम् ]—**

" न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोगि स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य ॥
इत्येवं पितृभिर्गीतं भावाभावप्रयोजनम् ।
यः करोति कृतं तेन श्राद्धं भवति पार्थिव " ॥

**स्मृत्यन्तरम्**—" अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
स तदा वाचयेद्विप्रान्साकल्यात्सिद्धिरस्त्विति " ॥

**पितृयज्ञः श्राद्धम् । एवममावास्याश्राद्धस्य नित्यत्वादुपात्तदुरितक्षयोऽकरणानिमित्तप्रत्यवा[1]यपरिहारो वा नियोगसिद्धिर्वा प्रयोजनम् । ब्रह्मज्ञानसहितस्य तु मुक्तिः । वक्ष्यति हि तत्त्वज्ञाननिष्ठः श्राद्धकृद्विमुच्यत इति । अन्येषामपि नित्यकर्मणामेतत्प्रयोजनमनुसंधेयम् ।**

**न च**—" पिण्डानामङ्गभूतं हि मासिकं श्राद्धमुच्यते ।
पश्चादिदं भवेद्यस्मात्प्रशस्तामिषयोगतः "

**इति भविष्यत्पुराणवचनादमावास्याश्राद्धस्याङ्गत्वमवगम्यते । न पृथक्प्रयोजनमस्यास्तीति वाच्यम् । यतः पिण्डानां पितृयज्ञस्य योऽङ्गममावास्याख्यः कालस्तत्र भूतं तदङ्गभूतमिति तस्यार्थः । न पुनः पितृयज्ञाङ्गत्वं, तथा हि सति निरग्नेस्तच्छ्राद्धमविधेयं स्यात् ।**

**अष्टका मार्गशीर्षादिमासत्रयापरपक्षाष्टम्यः । अष्टकाशब्दो यद्यपि कर्मविशेषनाम तथाऽपि तदङ्गभूतं कालमिह लक्षयति नान्यथा श्राद्धकालाः प्रकीर्तिता इति युज्यते । तत्र गृह्यकृच्छौनकः—**

" हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः "

---

+ धनुश्चिह्नान्तर्गतं न विद्यते क. ग. घ. पुस्तकेषु ।

---

१ क. °वायो वा विनि° ।

पिण्डदानासंभवे निरशनत्वम् ।

तथा—“ पात्राभावे परं कृत्वा पितृयज्ञविधिं नरः ।
निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो गतिः ” ॥

पितृयज्ञविधिं कृत्वा यत्र ब्राह्मणस्तत्र तदन्नं नीत्वा ब्राह्मणाय दद्यादित्यर्थः ।

तथा—“ निधाय वा दर्भचाटूनासनेषु[1] समाहितः ।
प्रैषानुप्रैषसंयुक्तं[2] विधानं प्रतिपद्यते ॥
सर्वाभावे क्षिपेदग्नौ गवे दद्यात्तथाऽप्सु वा ।
न तु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः ॥
एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ।
षडर्घ्यान्दापयेत्तत्र षड्भ्यो दद्यात्तथाऽऽसनम् ॥
पिता भुङ्क्ते द्विजकरे मुखे भुङ्क्ते पितामहः ।
प्रपितामहस्तु तालुस्थः कण्ठे मातामहः स्मृतः ॥
प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थितः ।
एवमप्याचरेच्छ्राद्धं षड्दैवत्यं महामुने ॥
विलुप्तिं कारयेद्यस्तु पितृहा स प्रजायते ” ॥

वृद्धो वृद्धप्रमातामहः ।

मनुः—“ अनेन विधिना श्राद्धं त्रिरब्दस्येव निर्वपेत् ।
हेमन्तग्रीष्मवर्षासु पञ्चयज्ञिकमन्वहम्[3] ” ॥

देवलः—“ अनेन विधिना श्राद्धं कुर्यात्संवत्सरे सकृत् ।
त्रिश्चतुर्वा यथा श्राद्धं मासे मासे दिने दिने ” ॥

वृद्धवसिष्ठः—“ किंचिद्दद्यादशक्तस्तु उदकुम्भादिकं द्विजे ।
तृणानि वा गवे दद्यात्पिण्डान्वाऽप्यथ निर्वपेत् ॥
तिलदर्भैः पितॄन्वाऽपि तर्पयेत्स्नानपूर्वकम् ।
अग्निना वा दहेत्कक्षं श्राद्धकाले समागते ॥
तस्मिन्वोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् ” ॥

विष्णुपुराणे—“ असमर्थोऽन्नदानस्य धान्यमामं[4] स्वशक्तितः ।
प्रदास्यति द्विजाग्र्येभ्यः स्वल्पाल्पामपि दक्षिणाम् ॥

---

१ ग. °र्भवटू° । घ. छ. ञ. °र्भचटू° । २ क. म. °नुप्रेष° । ३ ग. °ज्ञियम° । ४ ग. घ. °मात्रं स्व° ।

" मध्याह्नात्परतो यत्र चतुर्दश्येव[1] वर्तते ।
सिनीवालीति सा ज्ञेया पितृकार्ये[2] तु निष्फला " ॥

**कार्ष्णाजिनिः**—" भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।
श्राद्धकर्माणि[3] ये कुर्युस्तेषामायुः प्रहीयते " **इत्यादयः** ॥

**यत्तु प्रचेतसोक्तम्**—" नागविद्धा च या षष्ठी सप्तम्या च तथाऽष्टमी ।
दशम्येकादशीविद्धा त्रयोदश्या चतुर्दशी ॥
भूतविद्धा त्वमावास्या न ग्राह्या मुनिपुंगवैः "

**इति, तच्छ्राद्धादन्यत्र द्रष्टव्यम् ।**

**हारीतः**—" तुलामकरमेषेषु कन्यायां मिथुने तथा ।
भूतविद्धा त्वमावास्या पूज्या भवति यत्नतः " ॥

**एतदपि व्रतोपवासादिविषयम् ।**

**बौधायनः**—" घटिकैकाऽप्यमावास्या[4] प्रतिपत्सु न चेत्तदा ।
भूतविद्धाऽपि कर्तव्या दैवे पित्र्ये च कर्मणि " ॥

**अनग्निभिरपि भूतविद्धैव श्राद्धे कार्येत्यर्थः । घटिकैकाऽपीति कर्मकालं[5] व्याप्नोतीत्यर्थः । तेनापराह्णव्यापिनी कुहूः श्राद्धकर्मणि सर्वैरेव त्याज्या ।**

**तथा च जाबालः[6]**—" प्रतिपत्स्वप्यमावस्या पूर्वाह्णव्यापिनी यदि ।
पूर्वविद्धैव सा कार्या पित्र्ये कर्मणि सर्वदा " ॥

**अमावस्याश्राद्धस्याऽऽवश्यकत्वम्, असामर्थ्ये च प्रतिविधिविशेषमाह[7] हारीतः**—

" अष्टकान्वष्टकाभ्युदयतीर्थपात्रोपपत्तयः ।
पितॄणामतिरेको वै मासिकोऽर्थो ध्रुवः स्मृतः ॥
अपि मूलैः फलैर्वाऽपि तथाऽप्युदकतर्पणैः ।
अविद्यमाने कुर्वीत न तु प्राप्तं विलङ्घयेत्" इति ॥

**मासिकोऽर्थः पार्वणं श्राद्धम् ।**

**अत्रैव विषये देवलः**—" यदेव तर्पयत्यद्भिराहिताग्निर्दिने दिने ।
पित्र्यं तेनैव चाऽऽप्नोति वार्षिकादिक्रियाफलम् ॥
पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोऽपि वा " ॥

---

१ क. °दश्यनुव° । २ क. °तृयज्ञे तु । ३ क. °कर्माणि । ४ क. °का त्वमा° । ५ क. ख. °काले व्या° ६ ख. °लः । न प्र° । ७ ख. °तिनिधि° ।

इति, तद्यत्र क्षये सिनीवाल्यां पितृयज्ञो भवति तद्विषयं ग्राह्यम्। यदा तु कुहां पितृयज्ञस्तदा साग्निकैरपि सैव ग्राह्या। पितृयज्ञानन्तरं हि श्राद्धं विहितम्। यदाह मनुः—"पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" इति॥

वीप्सातो नित्यममावास्याश्राद्धमिति संबध्यते। तथा च लौगाक्षिः—

"श्राद्धं कुर्यादवश्यं तु प्रमीतपितृकः स्वयम्।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च" इति॥

एतच्च निरग्निनाऽपि कार्यम्। तथा चोशना—

"कुर्यादहरहः श्राद्धं प्रमीतपितृको द्विजः।
साग्निकोऽनग्निको वाऽपि प्रतिमासे तथाऽऽब्दिकम्" इति।

प्रमीतपितृक इति वचनाज्जीवत्पितृकस्यानियमो गम्यते। तथा च हारीतः—

"जीवे पितरि वै पुत्रः श्राद्धकर्म विवर्जयेत्।
येभ्यो वाऽपि पिता दद्यात्तेभ्य एके प्रचक्षते"॥

तेभ्य एवेति च पक्षः साग्निकस्यैव। यदाह सुमन्तुः—

"न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः।
येभ्य एव पिता कुर्यात्तेभ्य एव तु साग्निकः"॥

अत्र विशेषो मैत्रायणीयपरिशिष्टात्—

"उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः"॥

जीवत्पितृकस्य षडेते श्राद्धकाला इत्यर्थः। पित्र्येष्टिश्चातुर्मास्येषु सौमिके मखे पुरोडाशात्पिण्डदानम्। अत्र च पितृग्रहणमुपलक्षणार्थं, यदाह विष्णुः—

"पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेभ्यः कुर्यात्।
पितामहे जीवति येषां पितामहः। पितरि पितामहे प्रपितामहे
च जीवति नैव कुर्यात्" इति।

एवं तावज्जीवत्पितृक इतरो वा साग्निः सिनीवाल्यां श्राद्धं कुर्यादित्युक्तम्। तत्र ये सिनीवालीप्रतिषेधास्ते निरग्निविषयाः पिण्डपितृयज्ञायोग्यसिनीवालीविषया वा ग्राह्याः। ते तावदुदाह्रियन्ते। तत्र बौधायनः—

---

१ क. °वत्पितृ°। २ ख. ग. घ. °वपितृ°। ३ ख. ग. घ. °वपितृ°। ४ क. ख. पितरि पितामहे च ये°। ५ ग. घ. छ. ञ. इत्यर्थः। ए°। ६ क. °वत्पितृ°।

अथ सटीकयाज्ञवल्क्यस्मृतौ

## श्राद्धप्रकरणम् । ( ९ )

श्राद्धं स्वधनत्यागरूपत्वाद्दानेन सदृशमिति दानविधानानन्तरं बुद्धिस्थं[1]मतो दानप्रकरणानन्तरं श्राद्धकल्पमारभते । तत्र कालोऽङ्गम[3]प्यनुपादेय इति स्वरूपेणैवाधिकारहेतुः । न हि कालान्तरे वर्तमानः कर्ताऽङ्गभूतं कालान्तरविशिष्टं कर्म शक्नुयात्कर्तुम् । किं तु तत्काल एवेति युक्तं कालस्याधिकारहेतुत्वम् । विष्णुक्रमादीनां तूपादेयाङ्गानां न स्वरूपमधिकारहेतुः किं तु तद्विषया शक्तिस्तस्मात्कालस्याधिकारहेतुत्वादधिकारायत्तत्वाच्चानुष्ठानस्य श्राद्धकालांस्तावदाह—

अमावस्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ॥
द्र[4]व्यब्राह्मणसं[5]पत्तिर्विषुवत्सूर्यसंक्रमः ॥ २१७ ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ॥
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥२१८॥

अमावस्यादयः श्राद्धस्याङ्गभूताः काला मन्वादिभिः प्रकीर्तिताः । अत्रामावास्या कृष्णपक्षस्य पञ्चदशी तिथिः । सा च सिनीवाली कुहूश्चेति द्विविधा ।

" दृष्टचन्द्रा सिनीवाली नष्टच[6]न्द्रा कुहूस्तथा " ।

तत्र साग्निकैः सिनीवाल्यां श्राद्धं कार्यमितरैः कुह्वाम् । तथा च व्यासः—

" दृष्टचन्द्रा सिनीवाली कार्या विप्रैस्तु साग्निकैः ।
नष्टचन्द्रा कुहूः कार्या शूद्रैर्विप्रैरनग्निकैः " ॥

शूद्रैरनग्निकैर्विप्रैश्चेति योज्यम् ।

यत्तु प्रचेतसोक्तम्—" सिनीवाली कुहूश्चैव श्रुत्युक्ते पितृकर्मणि ।
स्या[7]तां चैते तु मध्याह्ने श्राद्धादि स्यात्कथं तदा ॥
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः "

---

१ ग. °द्धिस्थागतो । २ घ. °स्थमितो । ३ क. °मप्युपा° । ४ ङ. द्रव्यं ब्रा° । ५ क. °संपूर्तिर्वि° । ६ क. °चन्द्रकला कुहूः । त° । ७ ग. °तां ते चेत्तु म° ।

कितम् । हिरण्यवर्णा इति चतसृभिः शं नो देवीरिति च स्नापयेत् । स्नातमलंकृतमलंकृताभिश्चतसृभिर्वत्सतरीभिः सार्धमानीय रुद्रान्पुरुषसूक्तं कूष्माण्डांश्च जपेत् । पिता वत्स इति च मन्त्रं वृषभस्य दक्षिणे कर्णे ।

इदं च—वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ।
वृणोमि तमहं भक्त्या स मे रक्षतु सर्वतः ॥

एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण [ तै० सं० का० ३ प्र० ३ अ० ९ ] मा हा स्म हि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥

वृषं वत्सतरीयुक्तमैशान्यां कारयेद्दिशि ।
होतुर्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च ॥
अयस्कारस्य दातव्यं वेतनं मनसेप्सितम् ।
भोजनं बहुसर्पिष्कं ब्राह्मणांश्चात्र भोजयेत् ॥
उत्सृष्टो वृषभो यस्मिन्पिबत्यथ जलाशये[१] ।
तर्पयित्वाऽखिलान्देवान्पितॄंस्तस्योपतिष्ठति ॥
शृङ्गेणोल्लिखते[२] भूमिं यत्र क्वचन दर्पितः ।
पितॄणामन्नदानं तत्प्रभूतमुपतिष्ठति " ॥

**ब्रह्माण्डपुराणे**—" फलं वृषस्य वक्ष्यामि गदतो मे निबोधय ।
वृषोत्सृष्टः[३] पुनात्येव दश पूर्वान्दशापरान् ॥
यत्किंचित्पिबते तोयमवतीर्णो नदीं वृषः ।
वृषस्पृष्टं पितॄणां तदक्षयं समुदाहृतम् ॥
येन येन स्पृशेत्तोयं लाङ्गूलादिभिरन्ततः[४] ।
सर्वं तदक्षयं तस्य पितॄणां नात्र संशयः ॥
शृङ्गैः खुरैश्च यद्भूमिमुल्लिखत्यनिशं वृषः ।
मधुकुल्याः पितॄणां तु अक्षया हि भवन्ति ताः ॥
सहस्रनल्वमात्रेण तडागेन[५] यथाविधि ।
तृप्तिस्तु या पितॄणां तु सा वृषेणेति कथ्यते ॥ २१६ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिर्बन्धे[६] दानप्रकरणं समाप्तम् ॥ ८ ॥

---

१ ग. घ. °ये । जलाशयं तत्सकलं पितॄ° । २ ख. °लिख्यते । ३ ग. घ.छ. ज. °षोत्सर्गः पु° । ४ ख. ग. घ. लाङ्गला° । ५ ख. °डाकेन । ६ ग. घ. °बन्धने दा° ।

कांस्योपदोहां सौवर्णशृङ्गाभ्यामतिशालिनीम् ।
पयस्विनीं वृक्षमध्यामुत्सृजेद्गामुदङ्मुखीम् ॥
ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ।
ऋग्यजुःसाममन्त्रैर्वा वारुणैरभितस्तदा ॥
तैरेव कुम्भैः स्नपनं कुर्युर्ब्राह्मणपुंगवाः ।
स्नातः शुक्लाम्बरधरो यजमानोऽभिपूजयेत् ॥
गोभिर्विभवतः सर्वानृत्विजस्तान्समाहितः ।
हेमसूत्रैः सकटकैरङ्गुलीयपवित्रकैः ॥
वासोभिः शयनीयैश्च तथोपस्करपादपैः ।
क्षीराभिषेचनं दद्युर्यावद्दिनचतुष्टयम् ॥
होमश्च सर्पिषा कार्यो यवैः कृष्णतिलैरपि ।
पलाशसमिधः शस्ताश्चतुर्थेऽह्नि तथोत्सवः ॥
दक्षिणा च पुनस्तद्वद्देया तत्रापि शक्तितः ।
यद्यदिष्टतमं तद्वत्तत्तद्द्द्यादमत्सरः ॥
आचार्ये द्विगुणं दत्त्वा प्रणिपत्य क्षमापयेत् ।
अनेन विधिना यस्तु कुर्याद्वृक्षोत्सवं बुधः ॥
सर्वान्कामानवाप्नोति पदं चाऽऽनन्त्यमश्नुते ।
यश्चैकमपि राजेन्द्र वृक्षं संस्थापयेद्बुधः ॥
सोऽपि स्वर्गे वसेद्राजन्यावदिन्द्रायुतत्रयम् ।
भूतान्भव्यांश्च मनुजांस्तारयेद्रोमसंमितान् ॥
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् " ।

**विष्णुः**—" एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

अथ वृषोत्सर्गविधिः ।

कार्तिक्यामाश्वयुज्यां वा तत्राऽऽदावेव वृषभं परीक्षेत । जीववत्सायाः पयस्विन्याः पुत्रं सर्वलक्षणोपेतं नीलं लोहितं वा मुखपुच्छपादसर्वशुक्लं यूथस्याऽऽच्छादकं ततो गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं पयसा श्रपयित्वा पूषा गा अन्वेतु नः । इह रडिरिति च हुत्वा वृषभमयस्कारस्त्वङ्कयेत् । एकस्मिन्पार्श्वे चक्रेणापरस्मिञ्शूलेनाङ्-

---

१ ख. °स्तथा । तै° । २ ख. °पस्कार° । ३ क. ख. °नन्तम° । ४ क. ग. घ. °येन्नरः । सो° । ५ क. ख. °येद्धोम° ।

षिक्तं लोकालोकं तरते तीर्यत इति पुच्छाग्रे स्वयं लग्नोऽन्वारब्ध उत्तीर्य आपो अस्मान्मातरः शुन्धयन्तु [ ऋ० अ० ७ अ० ६ व० २४ ] इत्यथापराजितायां दिश्युत्थापयेत् । सूयवसाद्भगवती हि भूया [ ऋ० अ० २ अ० ३ व० २१ ] इति । हिं कृतं चेद्धिं कृण्वती वसुपत्नी वसूनामिति । सचेलघण्टां काञ्चनशृङ्गीं वृषभप्रजां[1] रौप्यखुरां कांस्योपदोहां विप्राय दद्यादितरां वा शक्त्या दक्षिणां तत उत्सर्गं कुर्यात् । देवपितृमनुष्याः प्रीयन्तामिति । यद्वोत्सृजेत्याह शौनको ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयेत "।

## अथ वृक्षविधिः ।

तत्र मत्स्यपुराणे—" पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु ।
तडागविधिवत्सर्वमासाद्य[2] जगतीश्वर ॥
ऋत्विग्मण्डपसंभारमाचार्यश्चापि[3] तद्विधः[4] ।
पूजयेद्ब्राह्मणांस्तद्वद्धेमवस्त्रानुलेपनैः ॥
सर्वौषध्युदकैः सिक्तान्पिष्टातकविभूषितान् ।
वृक्षान्माल्यैरलंकृत्य वासोभिरभिवेष्टयेत् ॥
सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम् ।
अञ्जनं चापि दातव्यं तद्वद्धेमशलाकया ॥
फलानि सप्त चाष्टौ वा कलधौतानि कारयेत् " ।

कलधौतानि[5] रूप्यमयाणीत्यर्थः ।

" प्रत्येकं सर्ववृक्षाणां वेद्यन्तान्यधिवासयेत्[6] ।
धूपोऽत्र गुग्गुलुः श्रेष्ठस्ताम्रपात्रैरधिष्ठितान् ॥
सर्वधान्यस्थितान्कृत्वा वस्त्रगन्धानुलेपनैः ।
कुम्भान्सर्वेषु वृक्षेषु स्थापयित्वा नरेश्वर ॥
सहिरण्यानशेषांस्तान्कृत्वा बलिनिवेदनम् ।
यथावल्लोकपालानामिन्द्रादीनां विधानतः ॥
वनस्पतेरधीवासमेवं[7] कार्यं द्विजातिभिः ।
ततः शुक्लाम्बरधरां सौवर्णकृतशेखराम् ॥

---

१ ख. ग. घ. °भपूजां । २ ख. °डाकवि° । ३ क. °पि तादृशः । पू° । ४ ग. °द्विदः पू° । ५ क. °नि रौप्य° । ६ क. वेद्यान्ता° । ७ ख. ग. °स्पतरि° ।

प्रावृट्कालस्थितं तोयमग्निष्टोमसमं स्मृतम् ।
शरत्कालस्थितं[1] यत्स्यादमुष्यफलदायकम् ॥
वाजपेयातिरात्राभ्यां हेमन्ते शिशिरे स्थितम् ।
अश्वमेधसमं प्रोक्तं वसन्तसमये स्थितम् ॥
ग्रीष्मेऽपि यत्स्थितं तोयं राजसूयाद्विशिष्यते ।

एतान्महाराज विशेषधर्मान्करोति योऽग्र्यामलशुद्धबुद्धिः ।
स याति रुद्रालयमाशुपूतः कल्पाननेकान्दिवि मोदते च ॥
अनेक[2]लोका[3]न्समहस्तपादीन्भुक्त्वा परार्धद्वयमङ्गनाभिः ।
सहैव विष्णोः परमं पदं तत्प्राप्नोति तद्योगबलेन भूयः " ॥

परार्धलक्षणमुक्तम्—" एकं दश शतं चैव सहस्रमयुतं तथा ।
लक्षं च नियुतं चैव कोटिरर्बुदवृन्दके ॥
खर्वं निखर्वं शङ्खं च पद्मं[4] सागरमेव च ।
अन्त्यं मध्यं परार्धं च क्रमेण परिकीर्तिताः ॥
स्थानान्यष्टादशैतानि दशभिर्गणयेत्पुमान् " ।

इति मात्स्ये तडागप्रतिष्ठाविधिः ।

बह्वृचगृह्यपरिशिष्टम्—

" अथातो वारुणो विधिः । वापीकूपतडागसेतुयज्ञं व्याख्यास्यामः । पुण्ये तिथिकरणे शुभे नक्षत्रे वा प्राचीं दिशं गत्वा प्राक्प्रवणमुदकसमीपेऽग्निमुपसमाधाय[5] वारुणं चरुं श्रपयित्वाऽऽज्यभागान्तं कृत्वाऽऽज्याहुतीर्जुहुयात् । समुद्रज्येष्ठा [ ऋ० अ० ५ अ० ४ व० १६ ] इति तिसृभिः प्रत्यृचं ततो हविषाऽष्टाभिर्जुहुयात् । तत्त्वा यामि ब्रह्मणा वन्दमान [ ऋ० अ० १ अ० २ व० १९ ] इति पञ्च । त्वं नो अग्ने वरुणस्य विद्वान् [ ऋ० अ० ४ अ० १ व ४ ] इति द्वे । इमं मे वरुण श्रुधि [ ऋ० अ० १ अ० २ व० १९ ] इति च । स्विष्टकृतं च नवमं नव वै प्राणाः प्राणा वा आपस्तस्मादपो नवभिर्जुहोति । मार्जनान्ते [6]धेनुमवतारयेदवतीर्यमाणामनुमन्त्रयेतेदं सलिलं पवित्रं कुरुष्व शुद्धाः पूता अमृताः सन्तु नित्यं तारयन्ती तीर्थाभि-

१ ग. घ. °तं तद्वद° । २ ख. °ककल्पान्स° । ३ ग. घ. °कान्मम हस्तपादा भुक्त्वा । ४ ग. घ. पद्मसा° । ५ क. ख. °मादाय । ६ क. ख. धेनुं ता° ।

ब्राह्मणेभ्यः प्रदातव्यम[1]ष्टाषष्टिरथापि वा ।
पञ्चाशद्वाऽथ षट्त्रिंशत्पञ्चविंशतिरेव च ॥
ततः सांवत्सरैः प्रोक्ते शुद्धलग्ने सुशोभने ।
वेदशब्दैः सगन्धर्वैर्वाद्यैश्च विविधैः शुभैः ॥
कनकालंकृतां कृत्वा जले गामवतारयेत् ।
सामगाय च सा देया ब्राह्मणाय विशांपते ॥
पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ।
ततो निक्षिप्य मकरं मत्स्या[2]दींस्तांश्च सर्व[3]तः ॥
भृतां चतुर्भिर्विप्रैश्च वेदवेदाङ्गपारगैः ।
महानदीजलोपेतां दध्यक्षतविभूषिताम् ॥
उत्तराभिमुखीं न्युब्जां जलमध्ये तु कारयेत् ।
अथर्वणेन साम्ना च पुनर्मामित्यृचेति च ॥
आपो हि ष्ठेति मन्त्रेण क्षिप्त्वाऽऽगत्य[4] च मण्डपम् ।
पूजयित्वा सदस्यांस्तु बलिं दद्यात्समन्ततः ॥
पुनर्दिनानि होतव्यं चत्वारि मुनिसत्तम ।
चतुर्थी[5]कर्म कर्तव्यं देयास्तत्रापि शक्तितः ॥
दक्षिणा राजशार्दूल वरुणं संस्मरेत्ततः ।
कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ॥
ऋत्विग्भ्यस्तु समं दत्त्वा मण्डपं विभजेत्पुनः[6] ।
हेमपात्रीं च शय्यां च स्थापकाय निवेदयेत् ॥
ततः सहस्रं विप्राणामथवाऽष्टशतं तथा ।
भोजयेत यथाशक्ति पञ्चाशद्वाऽथ विंशतिम् ॥
एवमेव पुराणेषु तडागविधिरुच्यते ।
कूपवापीषु सर्वासु तथा पुष्करिणीषु च ॥
एष एव विधि[8]र्दृष्टः प्रतिष्ठासु तथैव च ।
मन्त्रतस्तु विशेषः स्यात्प्रासादोद्यानभूमिषु ॥
अयं त्वशक्तावर्धेन विधिर्दृष्टः स्वयंभुवा ।
स्वल्पेष्वेवाग्निवत्कार्यं वित्तशाठ्यादृते नृभिः ॥

---

१ क. ख. °मष्टपष्ट्यथवा पुनः । प° । २ ख. °त्स्यान्दीप्ताश्च । ३ क. °र्वशः । भृ° । ४ ग. घ. गत्वा च मण्डलम् । पू° । ५ क. °तुर्थे क° । ६ ख. °नः । हंसपा° । ७ ख. घ. °शाकवि° । ८ क. ग. घ. °धिर्ज्येष्ठः प्र° ।

( दानप्रकरणम् ८ )

सामगौ पश्चिमे स्थाप्यावुत्तरेण त्वथर्वणौ।
उदङ्मुखो दक्षिणतो यजमान उपाविशेत् ॥
यजध्वमिति तान्ब्रूयाद्धोतृकान्पुनरेव च।
उत्कृष्टमन्त्रजप्येन तिष्ठध्वमिति जापकान् ॥
एवमामन्त्र्य तान्सर्वान्पर्युक्ष्याग्निं च मन्त्रवित्।
जुहुयाद्वारुणैर्मन्त्रैराज्यं च समिधस्तथा ॥
ऋत्विग्भिश्चैव होतव्यं वारुणैरेव सर्वशः।
ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च ॥
मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्मणे।
रात्रिसूक्तं च रौद्रं च पावमानं सुमङ्गलम् ॥
जपेरन्पौरुषं सूक्तं पूर्वतो बह्वृचः पृथक्।
शार्ङ्गं रौद्रं च सौम्यं च कूष्माण्डं जातवेदसम् ॥
सौरं सूक्तं जपेरंस्ते दक्षिणेन यजुर्विदः।
वैराजं पौरुषं सूक्तं सौपर्णं[1] रौद्रसंहिताम् ॥
शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च।
वामदेव्यं[2] बृहत्साम रौरवं सरथन्तरम्[3] ॥
गवां[4] व्रतं विकीर्णं च रक्षोघ्नं च यशस्तथा।
गायन्ति सामगा राजन्पश्चिमद्वारमाश्रिताः ॥
अथर्वणश्चोत्तरतः[5] शान्तिकं पौष्टिकं तथा।
जपेरन्मनसा देवमाश्रित्य वरुणं प्रभुम् ॥
पूर्वेद्युरभितो रात्रावेवं कृत्वाऽधिवासनम्।
गजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलात् ॥
मृदमादाय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा।
रोचनां च ससिद्धार्थां गन्धान्गुग्गुलुमेव[6] च ॥
स्नपनं तस्य कर्तव्यं पञ्चरत्नसमन्वितैः।
पूर्वं कर्तुर्महामन्त्रैरेवं कृत्वा विधानतः ॥
एवं क्षपामतीवाह्य विधियुक्तेन कर्मणा।
तत्र प्रभाते विमले संजाते तु शतं गवाम् ॥

---

१ क. ग. घ. °र्णं रुद्र° । २ क. ग. घ. °देवं बृ° । ३ ग. घ. °रथान्त°। ४ क. ख. गजं व्र°। ५ क. घ. °र्वणाश्चो° । ६ क. ग. °ग्गुलमे° ।

आचार्यः प्रक्षिपेद्भूमावनुमन्त्र्य विचक्षणः ।
त्रिरत्निमात्रो यूपः स्यात्क्षीरवृक्षविनिर्मितः ॥
यजमानप्रमाणं वा संस्थाप्यो भूतिमिच्छता ।
हेमालंकारिणः कार्याः पञ्चविंशतिऋत्विजः ॥
कुण्डलानि च हैमानि केयूरकटकानि च ।
तथाऽङ्गुलीपवित्राणि वासांसि विविधानि च ॥
दक्षयेच्च समं सर्वानाचार्यं द्विगुणं पुनः ।
दद्याच्छयनसंयुक्तमात्मनश्चापि यत्प्रियम् ॥
सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ ।
ताम्रौ कुलीरमण्डूकौ वायसः शिशुमारकः ॥
एवमासाद्य तान्सर्वानादावेव विशांपते ।
शुक्लमाल्याम्बरधरः शुक्लमाल्यानुलेपनः ॥
सर्वौषध्युदकस्नातः स्नापितो वेदपुंगवैः ।
यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ॥
पश्चिमं द्वारमाश्रित्य प्रविशेद्यागमण्डपम् ।
ततो मङ्गलशब्देन भेरीणां निनदेन च ॥
रजसा मण्डलं कुर्यात्पञ्चवर्णेन तत्त्ववित् ।
षोडशारं ततश्चक्रं पद्मगर्भं चतुर्मुखम् ॥
चतुरश्रं च परितो वृत्तं मध्ये सुशोभनम् ।
वेद्याश्चोपरि तत्कृत्वा ग्रहलोकपतींस्ततः ॥
विन्यसेन्मन्त्रतः सर्वान्प्रतिदिक्षु विचक्षणः ।
झषादीन्स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः ॥
ब्रह्माणं च शिवं विष्णुं तत्रैव स्थापयेद्बुधः ।
विनायकं च विन्यस्य कमलामम्बिकां तथा ॥
शान्त्यर्थं सर्वलोकानां भूतग्रामं न्यसेत्ततः ।
पुष्पभक्षफलैर्युक्तमेवं कृत्वाऽधिवासयेत् ॥
कुम्भांश्च रत्नगर्भांश्च वासोभिरभिवेष्ट्य च ।
पुष्पगन्धैरलंकृत्य द्वारपालान्समन्ततः ॥
पठध्वमिति तान्ब्रूयादाचार्यस्त्वभिपूजयेत् ।
बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणेन यजुर्विदौ ॥

---

१ ख. °रत्नमा° । २ क. ख. समान्सर्वा° । ३ ग. °भक्ष्यफ° ।

( दानप्रकरणम् ८ )

यत्र विप्रोऽथ गौरेका पायिनी सलिलं क्वचित् ।
तडा[2]गं तादृशं कृत्वा स्वर्गे दश युगान्वसेत् " ॥

तथा—" यो वापीमग्निसाक्ष्ये च विधिवत्प्रतिपादयेत् ।
कोणेषूदककुम्भस्थान्समुद्रानर्च्य श्रद्धया ॥
चतुरश्चतुरन्ता तु तेन दत्ता मही भवेत् ।
तत्संनिधौ द्विजानर्च्य विधिवत्पानभोजनैः ॥
स याति वारुणं लोकं दिव्यकामसमन्वितम् " ।

मत्स्यपुराणे—

" मत्स्य उवाच—शृणु राजन्महाबाहो तडा[3]गादिषु यो विधिः ।
प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ॥
पुण्येऽह्नि विप्रैः कथिते कृत्वा ब्राह्मणवाचनम् ।
प्रागुदक्प्रवणे देशे तडागस्य समीपतः ॥
चतुर्हस्ता शुभा वेदिश्चतुरश्रा चतुर्मुखी ।
तथा षोडशहस्तः स्यान्मण्डपश्च चतुर्मुखः ॥
वेद्याश्च परितो गर्ता रत्निमात्रास्त्रिमेखलाः ।
नव सप्ताथ वा पञ्च योनिवक्त्रान्विता नृप ॥
वितस्तिमात्रा योनिः स्यो[4]त्प्राक्सप्ताङ्गुलिनिःसृता ।
गर्ताश्च तत्र हस्ताः स्युस्त्रिपर्वोच्छ्रितमेखलाः ॥
सर्वतः सर्ववर्णाः स्युः पताकाध्वजसंयुताः ।
अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि तु ॥
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् ।
शुभास्तत्राष्ट होतारो द्वारपालास्तथाऽष्ट वै ॥
अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः ।
सर्वलक्षणसंपूर्णा मन्त्रवन्तो जितेन्द्रियाः ॥
कुलशीलसमायुक्ताः स्थापकाः स्युर्द्विजोत्तमाः ।
प्रतिगर्ते तु कलशा यज्ञोपकरणानि च ॥
व्यजनं चामरं शुभ्रं[5] ताम्रपात्रं सुविस्तरम् ।
ततस्त्वनेकवर्णाः स्युर्चलयः प्रतिदैवतम् ॥

---

१ ग. घ. पिबेत् । २ ख. घ. °डाकं ता° । ३ ख. °डाकादि° । ४ ग. घ. स्यात्षट्सप्ताङ्गुलिविस्तृता । ५ ग. घ. छत्रं ।

ब्राह्मणस्य निमित्तान्तरेण सर्वतः प्रतिग्रहमाह—

देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च ॥
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ २१६ ॥

इति दानप्रकरणम् ॥ ८ ॥

देवार्चनाद्यर्थं[1] सर्वतः क्षत्रियादितोऽपि गृह्णीयात् । सकलावश्यककर्मोपलक्षणं चैतत् । आत्मवृत्तिः शरीरधारणमात्रम् । न तु तृप्तिः । यदाह विष्णुः—

"गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन् ।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥
एतेष्वपि च कार्येषु समर्थः सन्प्रतिग्रहे ।
नाऽऽदद्यात्कुलटाशण्ठ(ण्ढ)पतितेभ्यस्तथा द्विषः" ॥

अङ्गिराः—"गुर्वर्थमतिथीनां वा भृत्यानां च विशेषतः ।
शूद्रान्नं प्रतिगृह्णीयान्न तु भुङ्क्ते स्वयं ततः" ॥

यमः—"कूपाराममप्रपाकारी तथा वृक्षप्ररोपकः ।
कन्याप्रदः सेतुकारी स्वर्गमाप्नोत्यसंशयम् ॥
तडागे यस्य पानीयं सततं खलु तिष्ठति ।
स्वर्गलोकगतिस्तस्य नात्र कार्या विचारणा ॥
येषां तडागानि[2] शुभाः प्रपाश्चाऽऽरामाश्च कूपाश्च प्रतिश्रयाश्च ।
अन्नप्रदानं मधुरा च वाणी तेषामयं चैव परश्च लोकः" ॥

विष्णुः—"अथ कूपकर्तुस्तत्प्रवृत्ते पानीये दुष्कृतार्धं नश्यति । तदुत्सर्गकृन्नित्यतृप्तो वारुणं लोकमश्नुते । नालप्रदः सदा[3] तृप्तो भवति । वृक्षरोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति । वृक्षप्रदस्य वृक्षाः प्रसूनैर्देवान्प्रीणयन्ति । फलैश्चातिथींश्छायया चाभ्यागतान्देवे वर्षत्युदकेन पितॄन् । सेतुकृत्स्वर्गमाप्नोति" ।

तथा—"कूपारामतडागेषु[4] देवतायतनेषु च ।
पुनःसंस्कारकर्ता च लभते मौलिकं फलम्" ॥

नन्दिपुराणे—"यो वापीमथ कूपं वा देशे तोयविवर्जिते[5] ।
खानयेत्स नरो याति बिन्दौ बिन्दौ शतं समाः ॥
देवैरेकत्वमतुलं[6] तृष्णाक्षुद्वर्जितस्तथा ।
तडागकर्ता[7] वसते स्वर्गे युगचतुष्टयम् ॥

---

१ ग. घ. देवताद्यर्चनार्थं सर्वतः शूद्रादिभ्योऽपि । २ ख. °डाकानि । ३ ख. स च तृ° ।
४ ख. °डाकेषु । ५ क. ख. °ते । खन° । ६ क. 'त्वमाप्नोति तृ° । ७ ख. °डाककर्ता ।

( दानप्रकरणम् ८ )

विच्छिन्नेष्वथ पक्षेषु हविःष्वाग्रा(ग्र)यणेषु च ।
इष्टिं त्वधिकृतां कुर्यात्सुकृतं च न लोपयेत् " ॥

पक्षशब्देन पक्षान्ते विहितानि कर्माणि लक्ष्यन्ते । इष्टिं त्वधिकृतां कुर्यादिति यागमुद्दिश्य याचेतेत्यर्थः । न चैवं सुकृतं लुप्यते ।

" पक्वान्नवर्जं विप्रेभ्यो गोदानं क्षात्रियादपि ।
वैश्यात्तु सर्वधान्यानि शूद्राद्ग्राह्यं न किंचन " ॥

अभोज्यविप्रादिविषयमेतत् ।

[यत्तु–]" यत्तु क्षेत्रगतं धान्यं खले वाऽथ गृहाद्बहिः ।
सर्वकालं ग्रहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम् ॥
संस्कारैः शुध्यति ह्येवं धान्यं तेन शुचि स्मृतम् ।
तस्मादामं ग्रहीतव्यं मृतसूत्यन्तरेष्वपि "

इति, तदापद्विषयम् ॥ २१४ ॥

**अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ॥**
**अन्यत्र कुलटाशण्ठ(ण्ढ)पतितेभ्यस्तथा द्विषः ॥ २१५ ॥**

अयाचितमप्रार्थितमात्मानं प्रति दातुमानीतं कुलटादिवर्जितस्य दुष्कृतकारिणोऽपि ग्राह्यम् । कुलटा स्वैरिणी स्त्री ।

मनुः—" आहृतामुद्यतां भिक्षां पुरस्तादप्रचोदिताम् ।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः ॥
नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवपद्यते ॥
चिकित्सककृतघ्नानां शल्यहर्तुस्तु वार्धुषेः ।
शंण्ठ(ण्ढ)स्य कुलटायाश्च उद्यतामपि वर्जयेत् " ॥

भिक्षाशब्देनात्र पक्वान्नमुपलक्ष्यते ।

यमः—" चिकित्सकस्य मृगयोर्वेश्यायाः कृतकस्य च ।
षण्ढनर्तकयोरेव उद्यतां परिवर्जयेत् " ॥

वसिष्ठः—" शस्त्रं विषं सुरा चाप्रतिग्राह्याणि " ॥ २१५ ॥

---

१ ख. ग. घ. °र्यात्स्वकृ° । २ क. ख. °न्तेन वि° । ३ क. ग. घ. °भोज्यं वि° । ४ ङ. °टाषण्डप° । ५ ग. घ. °ष्कृतादिका° । ६ ख. °मुदितां । ग. °मुद्यतां । ७ ख. °दप्रचो° । ८ क. वा । ९ क. ग. घ. °हर्तुश्च वा° । १० क. षण्ढस्य ।

" कल्मषं ब्राह्मणे दत्त्वा दाता यात्यशुभां गतिम् ।
विनिर्मोकविनिर्मुक्तः पन्नगेन्द्रः क्षतो यथा " ॥

नन्दिपुराणे—" पापदः पापमाप्नोति नरो लक्षगुणं सदा ।
पुण्यदः पुण्यमाप्नोति शतशोऽथ सहस्रशः ॥
तथा पात्रविशेषेण दानं स्यादुत्तरोत्तरम् ।
गुरुमातृपितृब्रह्मवादिनां दीयते तु यत् ॥
तल्लक्षगुणितं विद्यात्पुण्यं वा पापमेव वा " ।

शातातपः—" प्रश्नपूर्वं तु यो दद्याद्ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् " ॥

इदं पठेत्यादेशः प्रश्नः ।

" मा ददस्वेति यो ब्रूयाद्गवाग्निब्राह्मणेषु च ।
तिर्यग्योनिशतं गत्वा[2] ब्राह्मणेष्वभिजायते " ॥ २१२ ॥

इदानीमददतोऽपि दानफलप्राप्त्युपायमाह—

**प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम् ॥**
**ये लोका दानशीलानां[3] तान्स[4] प्राप्नोति पुष्कलान् ॥ २१३ ॥**

प्रतिग्रहसमर्थोऽपि पात्रभूतोऽपि सन्यो गोभूहिरण्यादि न प्रतिगृह्णाति स गवादिदानशीलानां ये लोकास्तान्पुष्कलानविकलान्प्राप्नोति ॥ २१३ ॥

सर्वाप्रतिग्रहे प्राप्ते क्वचिदपवादमाह—

**कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः ॥**
**मांसं शय्याऽऽसनं धानाः प्रत्याख्येयं न वारि च ॥ २१४ ॥**

कुशादिकं दीयमानं न प्रत्याख्येयम् । भृष्टा यवा धानाः ।

मनुः—" शय्यां गृहान्कुशान्गन्धानापः पुष्पं मणीन्दधि ।
मत्स्यान्धानाः पयो मांसं शाकं चैव न निर्णुदेत् " ॥

तथा—" एधोदकं मूलफलमन्नमभ्युद्यतं च यत् ।
सर्वतः[5] प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् " ॥

अभयदक्षिणामभयदानमित्यर्थः ।

अङ्गिराः—" खलक्षेत्रगतं धान्यं वापीकूपगतं जलम् ।
अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः ॥

१ क. ग. घ. इति प° । २ क. °त्वा चण्डालेष्व° । ३ ङ. °नां स तानाप्नो° । ४ ग. घ. °न्समाप्नो° । ५ खं. °र्वथा प्र° ।

( दानप्रकरणम् ८ )

पक्कमन्नं गृहस्थस्य वानप्रस्थस्य गोरसः[1] ।
वृत्तिश्च भैक्षवृत्तिभ्यो न देयं पुण्यमिच्छता " ॥

वृत्तिः क्षेत्रादिका[2] । भैक्षवृत्तयो ब्रह्मचारिपरिव्राजकाः ।

" न शूद्राय हविर्दद्यात्स्वस्ति क्षीरं तिलान्मधु ।
न शूद्रात्प्रतिगृह्णीयात्तेषामन्यन्निवेदयेत् " ॥

स्वस्तीति न ब्रूयादित्यर्थः । एतच्च प्राक्प्रणामात् । तथा च स्मृत्यन्तरम्—

" अप्रणामगते शूद्रे न ब्रूयात्स्वस्ति कुत्रचित् " इति ।

तेषां क्षीरादीनां क्रयार्थमन्यद्द्रव्यं शूद्राय निवेदयेत् ।

अङ्गिराः—" बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि " ॥

विभक्तः पृथग्भूत एक इति यावत् । तत्संबन्धिन्यो दक्षिणा विभक्तदक्षिणाः ।

क्वचित्पाठः—" विभक्तदक्षिणा ह्येते दातारं न भजन्ति हि " इति ।

तस्यार्थः—एते प्रतिग्रहीतारः कृतदक्षिणाविभागा दातारं न भजन्ति दानफलनिमित्ततयेति ।

" एका ह्येकस्य दातव्या न बहुभ्यः कथं चन ।
सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम् " ॥

एका गौर्द्विबहुभ्यो दत्ता विक्रयमापद्यते । तत्रायं दातुर्दोषः ।

" देवतानां गुरूणां च मातापित्रोस्तथैव च ।
पुण्यं देयं प्रयत्नेन[3] नापुण्यं चोदितं क्वचित् " ॥

पापं देयतया[4] न क्वचिद्विहितमित्यर्थः । ननु च पुण्यमन्यस्मै न शक्यं दातुमन्येन सह तस्य स्वस्वामिभावापादनासंभवात् । न च ब्रह्मदानाभयदानवद्यथाकथंचित्संबन्धमात्रं तद्दानमिति वाच्यम् । संप्रदानस्य[5] पुण्यस्य[6] च संबन्धमात्रमशक्यं यतः । मैवम् । वचनप्रामाण्याद्देयस्य पात्रस्य च संबन्धः पुण्यं फलं ददाति पात्रं तत्फलं भुङ्क्त इत्येवमात्मा कल्प्यते । तदन्यथानुपपत्त्या दीयमानात्पुण्यात्पात्रे[7] पुण्यान्तरोदयः फलभोगानुगुणः परिकल्प्यते । यत्तु न्यायविद्भिरुक्तं—शास्त्रफलं प्रयोक्तरीति । तत्प्रथमपुण्योदयविषयम् । द्वितीयादिधर्मोत्पत्तिस्तु वचनप्रामाण्यादप्रयोक्तर्यपि कल्प्यत एवेति ।

न केवलं पापदानमविहितं निषिद्धं च । तथा च यमः—

---

१ क. ख. °रसम् । वृ° । २ ख. °दिकी । भै° । ३ ख. ग. घ. °न न पु° । ४ ख.ग. देयं तथा न । ५ ग. घ. °नपु° । ६ क. °स्य सं° । ७ क. °त्रे पात्रान्त° ।

पितृकल्पस्तथाऽन्ते तु या कुहूर्ब्रह्मणः[1] स्मृता ।
इत्ययं ब्राह्मणो मासः सर्वपापप्रणाशनः ॥
आदावेव हि माहात्म्यं यस्मिन्यस्मिन्विधीयते ।
तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा ॥
यस्तु दद्यादिमान्कृत्वा हैमान्पर्वणि पर्वणि ।
ब्रह्मविष्णुपुरे कल्पं मुनिभिः पूज्यते दिवि ॥
सर्वपापक्षयकरं कल्पदानं ततो भवेत् ।
मुनिरूपांस्ततः कृत्वा दद्यात्कल्पान्विचक्षणः " ॥

इति मात्स्ये कल्पदानम् ।

अथादेयानि ।

तत्र दक्षः—" सामान्यं याचितं न्यस्तमाधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः " ॥

सामान्यं साधारणम् । याचितकं परकीयं कार्यसिद्ध्यर्थमानीतम् । न्यस्तनिक्षिप्तयोर्भेदो द्वितीयेऽध्याये वक्ष्यते । दाराः कलत्रम् । तद्धनं स्त्रीधनम् । अन्यस्मै दातुमन्येन यदर्पितं तदन्वाहितम् ।

कात्यायनः—" विक्रयं[2] चैव दानं च न देयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मनैव तु योजयेत् " ॥

योजयेत्संधयेदित्यर्थः ।

" आपत्काले तु कर्तव्यं दानं विक्रय[3] एव वा ।
अन्यथा नैव कर्तव्यमिति शास्त्रस्य निश्चयः " ॥

शातातपः—" वेदविक्रयनिर्विष्टं स्त्रीषु यच्चार्जितं धनम् ।
अदेयं पितृदेवेभ्यो यच्च क्लीबादुपागतम् " ॥

निर्विष्टं प्राप्तम् । स्त्रीषु विक्रीतास्विति शेषः । क्लीबान्नपुंसकात् ।

तथा—" द्रव्येणान्यायलब्धेन यः करोत्यौर्ध्वदैहिकम् ।
न स तत्फलमाप्नोति तस्यार्थस्य दुरागमात् " ॥

यमः—" सुवर्णं रजतं ताम्रं यतिभ्यो यः प्रयच्छति ।
न स तत्फलमाप्नोति तत्रैव परिवर्तते ॥

---

१ ग. घ. °हूर्ब्राह्मणैः स्मृ° । २ ग. विक्रेयश्चैव । ३ क. ख. °यमेव ।

( दानप्रकरणम् ८ )

स जातो मनुजो लोके स धन्यः स च कीर्तिमान् ।
यो विद्यादानसंपर्कप्रसक्तः पुरुषोत्तमः ॥
यथाविभवतो दद्याद्विद्यां शाठ्यविवर्जितः ।
याति पुण्यमयाँल्लोकानक्षयान्भोगभूषितान् ॥
येऽपि पत्रमषीपात्रलेखनीसंपुटादिकम् ।
दद्युः शास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम्[1] ॥
यान्ति लोकाञ्शुभान्मर्त्याः पुण्यलोका[2] महाधियः ।
इति विद्याप्रदानस्य महाभाग्यं प्रकीर्तितम् ॥
श्रुत्वैतत्पातकैर्मुक्तो नियतं सप्तजन्मजैः ”।

इति नन्दिपुराणे विद्यादानविधिः ।

अथ मत्स्यपुराणे कल्पदानम् ।

“ कल्पानुकीर्तनं वक्ष्ये[3] सर्वपापप्रणाशनम् ।
यस्यानुकीर्तनादेवं[4] वीरपुण्येन युज्यते ॥
प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः ।
वामदेवस्तृतीयस्तु ततो राथंतरोऽपरः ॥
रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः ।
सप्तमस्तु बृहत्कल्पः कन्दर्पोऽष्टम उच्यते ॥
सत्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः[5] ।
व्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः ॥
त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः ।
कौर्मः पञ्चदशः प्रोक्तः पौर्णमासी प्रजापतेः ॥
षोडशो नारसिंहस्तु समानस्तु ततोऽपरः ।
आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्ततः[6] परः ॥
मानकल्प इति प्रोक्तस्तत्पुमानिति चापरः ।
वैकुण्ठश्चापरस्तस्य लक्ष्मीकल्पस्तथाऽपरः ॥
चतुर्विंशस्ततः प्रोक्तः सावित्रीकल्पसंज्ञितः ।
पञ्चविंशतमो घोरो[7] वाराहस्तु ततोऽपरः ॥
सप्तविंशस्तु वैराजो गौरीकल्पस्ततः परः ।
माहेश्वरस्ततः प्रोक्तस्त्रिपुरं यत्र घातितम् ॥

---

१ ख. °यिनः । या° । २ क. °लोकम° । ग. घ. °लोके म° । ३ ग. नाम । ४ क. °व वेदपु° । ५ ख. ग. घ. °तः । ध्यान° । ६ ख. °तः पुनः । मी° । ७ क. घ. °रो वरा° ।

ततः समाप्तावथ शास्त्रसर्गैः कथोदये वाऽपि विनीत[1]बुद्धिः ॥
शक्त्याऽर्चयेद्वाचकमग्र्यमेवं गुरुं च भक्त्या पितृवत्रिकार्थी " ।

धर्मार्थकामा[2]स्त्रिकः ।

" एष विद्याप्रदानस्य प्रधानो विधिरुच्यते ।
अनेनैव विधानेन ब्राह्मणे शीलशालिनि ॥
प्रबोध[3]वति धीयुक्ते युक्तिज्ञे वेदवेदिनि ।
विन्यसेच्च शुभं शास्त्रं महापुण्यजिगीषया " ॥

वेदवेदि[4]नि लब्धवेद इत्यर्थः ।

" धनैर्वा विपुलैर्दक्षे[5]द्गुरुं कृत्वा सुतर्पितम् ।
अध्यापयेच्छुभा[6]ञ्शिष्यानभिजातान्सुमेधसः ॥
एवं विद्याप्रदानं तु सर्वदानोत्तमं स्मृतम् ।
सर्वदा सर्ववर्णानां नरकप्लवमुत्तमम् " ॥

प्लव उत्तारः ।

" अनेन विधिना दत्त्वा विद्यां पुण्यपरो नरः ।
यत्फलं त्वश्वमेधानां शतस्याऽऽशु कृतस्य वै ॥
राजसूयसहस्रस्य सम्यगिष्टस्य यत्फलम् ।
तत्फलं लभते मर्त्यो विद्यादानेन भाग्यवान् ॥
सर्वसस्यसुसंपूर्णां सर्वरत्नोपशोभिताम् ।
ब्राह्मणेभ्यो महीं दत्त्वा ग्रहणे चन्द्रसूर्ययोः ॥
यत्फलं लभते मर्त्यो विद्यादानेन तत्फलम् ।
यावदक्षरसंख्यानं विद्यते शास्त्रसंश्रये ॥
तावद्वर्षसहस्रा[7]णि स्वर्गे विद्याप्रदो वसेत् ।
यावत्यः पङ्क्तयस्तत्र पुस्तकेऽक्षरसंमिताः ॥
तावतो नरकात्कुल्यानुद्धृत्य नयते दिवि ।

कुल्या वंश्याः ।

" यावच्च पत्रसंख्यानं विद्यते पुस्तके न[8]रः ।
तावद्वर्षसहस्राणि सकुलो मोदते दिवि ॥
यावच्च पातकं तेन कृतं जन्मशतैरपि ।
तत्सर्वं नश्यते तस्य विद्यादानेन देहिनः ॥

---

१ क. विशुद्धबु° । २ क. ख. °स्त्रिकाः । ए° । ३ क. ख. °धयति । ४ क. °नि धर्मज्ञ इ० ।
५ ग. घ. °दक्षगुरुं । ६ ग. °भिज्ञाता° । ७ ख. °णि सकुलो मोदते दिवि । या° । ८ ख. °रः । या° ।

( दानप्रकरणम् ८ )

यश्च श्रुत्वाऽन्यतः शास्त्रं संस्कारं प्राप्य वा शुभम् ।
अन्यस्य जनयेत्कीर्तिं गुरोः स ब्रह्महा भवेत् ॥
विस्मारयेच्च वा मौढ्याद्योऽपि शास्त्रमनुत्तमम् ।
स याति नरकं घोरमक्षयं भीमदर्शनम् ॥
यस्तु बुद्ध्वा नरः शास्त्रं[1] किंचित्कुर्याच्छुभाशुभम् ।
भवेच्छतगुणं तद्धि विज्ञाननिरतस्य वै ॥
एवं विधानतो वाच्यं वाचकेन विपश्चिता ।
तपः शमात्मकं भोगस्वर्गादिफलसाधकम् ॥
शनैर्विबोध्य[2] वै वाच्यमध्यात्मादि च यद्भवेत् ।
क्रुद्धोक्तिं[3] युद्धसंक्षोभं[4] धारावर्तेन वाचयेत् ॥
सरागललितैर्वाक्यैर्वाचयेद्बृद्धसंगमे[5] ।
नानावृत्तानुरूपेण लालित्येन च वाचयेत् ॥
सर्गाध्यायसमाप्तौ च कथापर्यन्त एव वा ।
प्रशस्तपदसंयोगे कुर्यादिति विरामणम् ॥
समाप्ते वाचनेऽभीष्टं स्तुये[6](स्तुया)देवं विचक्षणः ।
अवधार्य जगच्छान्तिमन्ते शान्त्युदकं स्पृशेत् ॥
सदेहसुश्रुतं भूयादस्तु व्याख्याननित्यता ।
लोकः प्रवर्ततां धर्मे राजा[7] चास्तु जयी सदा ॥
धर्मबान्धवसंपन्नो गुरुश्चास्तु निरामयः ।
इति प्रोच्य यथायातं गन्तव्यं च विभाव्य तैः ॥
शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः ।
कथावस्तुप्रसङ्गेन नानाव्याख्यानुभावनैः ॥
युक्तिभिश्च स्मरेद्व्याख्यां चिह्नैश्चापि स्वयंकृतैः ।
एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः ॥

समग्रशास्त्रश्रवणेन पुंसां श्रद्धाप्रधानं भवतीह चेतः ।
रागं च शास्त्रात्मकमभ्युपैति दोषाश्च नाशं निखिलेन यान्ति ॥
यथाकथंचिच्छृणुयान्न शास्त्रमश्रद्धयोदाहृतधर्मसंग्रः[8] ।

१ ख शास्त्रात्किं° । २ क. °वोधकैर्वाच्य° । ३ क. °क्तिं क्रुद्ध° । ४ ख. युगसंक्षेपं धा° । ५ घ. °गमैः । नानावृ° । ६ ग. घ. °येद्देवं । ७ क. °जा भवतु मे जयी । ध° । ख. °जा शास्तु । ८ क. ख. °र्मसङ्गः । त° ।

विप्रः प्रकृतिसंशुद्धः श्रुतिस्मृतिमुखः सदा ।
सुवृत्तस्तर्कशास्त्रज्ञो धर्मशास्त्रविशारदः ॥
स्वभ्यस्तशास्त्रसंदोहः प्रकृतार्थप्रवर्तकः ।
नाप्रक्रमकृतव्याख्यः पौर्वापर्यार्थ[1]विष्टधीः ” ॥

विष्टधीः प्रकृष्टवागित्यर्थः ।+पौर्वापर्यविशिष्टधीरिति पाठे पौर्वापर्ये विशिष्टा सविशेषा संबन्धप्रापणात्मिका धीर्यस्येति भावः ।

“ अध्यायसर्गविच्छेदविभक्तार्थप्रयोजकः* ॥
संस्कारैः संस्कृतां विद्यां[2] प्राकृतैः प्राकृतामपि ॥
आलापमात्रैर्व्याख्यानैर्यश्च शिष्यान्प्रबोधयेत् ।
देशाभिधानविन्यासैर्बोधयेच्चापि यो गुरुः ॥
स गुरुः स पिता माता स तु चिन्तामणिः स्मृतः ।
यः शास्त्रोपायमाख्याय नरकेभ्यः समुद्धरेत् ॥
कस्तेन सदृशो लोके बान्धवो भुवि विद्यते ।
यस्य वाग्रश्मिसंघेनै[3] नश्यते हृद्गतं तमः ॥
महासंसारै[4]रजनीभवं शोकं महाद्युतेः[5] ।
नोद्विजेत्तस्य पारुष्ये न च वै[6] लोप्य पृच्छतः ॥
न चास्य व्याधिदुःखेषु मलानां चापि शोधने ।
प्रसादयेत्तु कुपितं दुःखमग्नं समुद्धरेत् ॥
रोगेभ्यश्चापि यत्नेन परिरक्षेन्न चोद्विजेत् ।
एवं व्याख्यां शुभां श्रुत्वा[7] गुरुवक्त्रान्नरोत्तमः ॥
विधेयं चिन्तयेद्यत्नात्परत्र हितकारणम् ।
शृणुयाच्छ्रद्धया युक्तः प्रणतोऽभिमतो गुरोः ॥
भिषजां वचनं कार्यं[8] गुरूणां च महात्मनाम् ।
न तर्क्कितं स्वयं कुर्यात्ते[9] समिद्धानलत्विषः ॥
अप्रस्तुतकथाक्षेपं यः कुर्यादग्रतो गुरोः ।
स ब्रह्महत्यामाप्नोति गुरुवाक्ये[10]ष्वनिश्चयात् ॥

---

+ इत आरभ्य भाव इत्यन्तं न विद्यते ग. घ. पुस्तकयोः । * एतदग्रेऽधिकमर्धं ग. घ. पुस्तकयोः । तद्यथा—श्रद्धेयो वागगतालस्यः श्रौत्यचित्तावबोधकः ।

---

१ क. ख. °र्थेनिष्टधीः । निष्टधीः प्रकृतवा° । २ ख. °द्यां प्रकृ° । ३ ख. °न दृश्यते दृग्गतं । ४ ग. °रजननीं° । ५ ग. घ. °द्युतिः । नो । ६ क. वैलोम्यमृच्छ° । ७ ख. ग. घ. कृत्वा । ८ ख. °स्कृते स्व° । ९ ग. घ. °त्ते संसिद्धा° । १० क. ख. घ. °क्येषु नि° ।

तं भजेत्सर्वभावेन भक्तियोगेन सर्वदा ।
आदित्येन विना यद्वज्जगदन्धं विभाव्यते ॥
गुरुवाक्यं विना सर्वं तथैव हि तमोमयम् ।
तस्माद्यथा महादेवं तद्वदेव गुरुं सदा ॥
यः पश्यति स पुरुषः सर्वधर्मानवाप्नुयात् ।
विद्या च मुख्यं दानानां गुरुतोऽस्य विधिं पुनः ॥
श्रुत्वा विधेयं विधिवच्छ्रद्धया भावितात्मना ।
सत्यां तेभ्यस्तु तां दद्याद्विशेषाद्गुणशालिषु ॥
उपयोग्यं च यद्यस्य तत्तस्य प्रतिपादयेत् ।
सुरालयेषु सर्वेषु यथाविभवविस्तरैः ॥
दातव्यास्तु प्रयत्नेन महापुण्यफलार्थिभिः ।
दत्त्वा तु पुस्तकं तत्र पितॄणां धर्ममुद्दिशेत् ॥
बान्धवानां च ह्यद्यानामनन्तं फलमिच्छता ।
ततो दत्त्वा विधानेन तां विद्यां शिवमन्दिरे ॥
ततश्च[1] भोजयेद्विप्रान्रुद्रभक्तांश्च मानवान् ।
यथाशक्ति च कर्तव्य उत्सवः स्वेषु वेश्मसु ॥
राज्ञा च नगरे कार्यो ग्रामे ग्रामाधिपैस्तथा ।
गृहे गृहस्थैः कर्तव्य उत्सवो बन्धुभिः सह ॥
स्नातैर्भुक्तैः समालब्धैः स्रग्विभिः सुसमाहितैः ।
प्रतियुक्तैस्ततः श्राव्यं शास्त्रं श्रद्धासमन्वितैः ॥
वाचकं दक्षयेत्तत्र यथाविभवविस्तरैः ।
गुरुं च भक्त्या मतिमान्यथाशक्ति न मायया ॥
ततः पुष्पैश्च धूपैश्च श्रावकान्संप्रपूजयेत् ।
वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः ॥
अभ्यस्ताक्षरविन्यस्तो[2] वृत्तशास्त्रविशारदः ।
शब्दार्थवित्प्रगल्भश्च विनीतो[3] मेधयाऽन्वितः ॥
गीतज्ञो वाक्यविच्छ्राव्यस्वरो[4]ऽनाविलभाषकः[5] ।
गुरुश्च धर्मवान्प्राज्ञः श्रुतशास्त्रो[6] विमत्सरः ॥

१ क. ख. ग. °श्च भक्षये° । २ घ. °विन्यासो वृ° । ३ घ. °नीतः सदया° । ४ क. ख. °विच्छ्रव्य° । ५ ग. घ. °रोऽवावि° । ६ ग. °शास्त्रविशारदः । वि° ।

यत्नेन पात्रे दातव्यं रहस्यं ह्येतदुत्तमम् ।
उद्दिश्य देवतादत्तं प्रदानं यत्र कुत्रचित् ॥
तस्यासमाप्तपुण्यस्य केन पुण्यं निरूप्यते " ।

**असमाप्तं पुण्यं येन सोऽसमाप्तपुण्यः ।**

" गुरुमाराध्य यत्नेन विद्याव्याख्यानपारगम् ।
शक्त्या भक्त्या प्रणामेन धनैः सर्वैर्गुणैस्तथा ॥
यथा घटप्रतिच्छन्ना रत्नराजा[1] महाप्रभाः ।
अकिंचित्करतां प्राप्तास्तद्वद्विद्याश्चतुर्दश ॥
विना तु गुरुणा सम्यग्बोधकेन विपश्चिता ।
नैव विद्याफलप्राप्तिर्गुरुं तस्मात्तु पूजयेत् ॥
स्रग्दामभूषणैर्नित्यं यथा देवं पिनाकिनम् ।
यो गुरुं पूजयेन्नित्यं स्थितं वा प्रस्थितं च वा ॥
तत्प्रसादेन यस्मात्स प्राप्नुयात्सर्वसंपदम् ।
तस्माद्गुरुं प्रयत्नेन महादेववदर्चयेत् ॥
भक्त्या प्रीत्या प्रयत्नेन श्रद्धया च सदैव हि ।
एष माता पिता ह्येष एष एव च बान्धवः ॥
एष चिन्तामणिश्चैव एष एव च मे सुहृत् ।
एवं श्रद्धापरो नित्यं गुरुमाराधयेद्बुधः ॥
अज्ञानदुःखशमनं नरकोद्धारणं तथा ।
कुतो माता पिता वाऽपि बान्धवोऽपि महागुणः ॥
तादृगभ्युदयं कुर्याद्यादृक्कुर्याद्गुरुर्महत्[2] ।
कोऽन्यो ज्ञानेन दुःखौघादुद्धरेद्भवबन्धनात् ॥
सम्यक्शास्त्रार्थबोद्धारं महादेववदर्चयेत् ।
वस्तुमात्रेण यो ज्ञानं शास्त्ररूपमुपन्यसेत् ॥
स तावच्छिववत्पूज्यो भक्त्या भवभयापहः ।
यस्तु शास्त्रविवक्षाख्यं विशेषार्थं प्रपूजयेत् ॥
पदवाक्यार्थबोधेन सम्यक्शास्त्रप्रवर्तनात् ।
पूर्वोत्तरार्थसंगत्या समुदायार्थनिश्चयात् ॥
स्वशास्त्राभिमता वाचः सम्यग्यो वेत्ति तत्त्वतः ।
स तु साक्षान्महाबुद्धिर्भगवानिह शंकरः ॥

---

१ क. °त्नजाला म° । २ ख. °र्याद्यत्कुर्यात्तु गुरु° ।

पुण्यस्य गदितुं सम्यगपि वर्षशतायुतैः ।
एतावच्छक्यते वक्तुं[1] यत्कल्पायुतमुत्तमम् ॥
सत्यलोके वसेन्मर्त्यो यत्र ब्रह्मा वसेत्प्रभुः ।
अप्येकं नीरुजीकृत्य जन्तुं यादृशतादृशम् ॥
आयुर्वेदप्रदानेन[2] किं न दत्तं भवेद्भुवि ।
सस्यवेदप्रदानेन[3] संपन्ना यस्य शालयः ॥
किं नाम न कृतं तत्र[4] पुण्यं भवति शाश्वतम् ।
मीमांसाशास्त्रमाहात्म्याद्बुद्ध्वा वै वेदनिर्णयम् ॥
किं न नाम शुभं दत्तं यज्ञकर्मप्रवर्तनात् ।
आत्मविद्या च पौराणी धर्मशास्त्रात्मिका च या ॥
एतद्विद्यात्रयं मुख्यं सर्वदानक्रियाफलैः ।
धर्मशास्त्रं नरो बुद्ध्वा यत्किंचिद्धर्ममाश्रयेत्[5] ॥
तस्य धर्मं दशगुणं धर्मशास्त्रप्रदस्य वै ।
पुराणाख्यानविद्वांसः पितृदेवार्चने रताः ॥
लोकान्सर्वान्कामपूर्णान्यान्ति सर्वशुभोदयान् ।
पुराणविद्यादातारस्त्वनन्तफलभागिनः ॥
आत्मविद्याप्रदातारो नरा धर्मसमाश्रयाः ।
न पुनर्योनिनिरयं प्रविशन्ति दुरत्ययम् ॥
उत्तीर्णाः सर्वपापेभ्यः सपुत्रपशुबान्धवाः ।
मुच्यन्ते निरयैर्घोरैरसंख्यैर्यातनात्मकैः " ॥

तथा—" श्लोकं प्रहेलिकां गाथामथान्यद्वा सुभाषितम् ।
दत्त्वा प्रीतिकरं याति लोकमप्सरसां शुभम् ॥
यदेतत्पुण्यमाख्यातं विद्यादानस्य सांप्रतम् ।
देशकालविधिश्रद्धापात्रयोगात्तथाविधम् ॥
प्राप्नोति कोटिगुणितं फलं विद्याप्रदो नरः ।
यस्तु पुण्यपरो मर्त्यो जिगीषुः कीर्तिसाधकः ॥
स विधानेन वै दद्याद्विद्यां विविधकामदाम् ।
एवं विद्याप्रदानेन सर्वकामगुणान्वितम् ॥

---

१ ख. घ. °क्तुं यः कल्पा° । २ क. ख. ग. °प्रसादेन । ३ क. सम्पवे° । ४ क. ग. तेन । ५ क. ग. °माचरेत् । त° ।

“ ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥
भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ।
तद्ब्रह्माण्डपुराणं तु ब्रह्मणा समुदाहृतम् ॥
यो दद्यात्तद्व्यतीपाते पैत्रोर्णयुगसंयुतम् ।
राजसूयसहस्रस्य फलं प्राप्नोति मानवः ” ॥

ग्रन्थः १२२०० इति ब्रह्माण्डपुराणदानविधिः । ( १८ )

इति मात्स्ये विद्यादानम् ।

नन्दिपुराणे—“ शास्त्रे यस्माज्जगत्सर्वं संश्रितं च शुभाशुभम् ।
तस्माच्छास्त्रं प्रयत्नेन दातव्यं शुभकर्मणा ॥
विद्याश्चतुर्दश प्रोक्ताः क्रमेण तु यथास्थिति ।
षडङ्गाश्चतुरो वेदा धर्मशास्त्रं पुराणकम् ॥
मीमांसा तर्क इति च एता विद्याः प्रकीर्तिताः ।
आयुर्वेदः सामवेदो बहुभेदः प्रकीर्तितः ॥
सर्वोत्तमा चाऽऽत्मविद्या संसारभयनाशिनी ।
सर्वदुःखान्तकरणी सर्वपापविनाशिनी ॥
एता विद्याः समाख्याता बहुभेदोपभेदतः ।
कला विद्यास्तथा चान्याः शिल्पविद्यास्तथा पराः ॥
सर्वा एव महाभाग सदा सर्वार्थसाधिकाः ।
स्थिताश्च तारतम्येन विशिष्टफलसाधिकाः ॥
आत्मविद्या प्रधाना तु तथाऽऽयुर्वेदसंज्ञिता ।
धर्मप्रणयिनीरेताः कलाः सर्वार्थसाधिकाः ॥
सस्यविद्या च वितता एता विद्या महाफलाः ।
ययैको जीवति प्राणी कयाऽपि किल कुत्रचित् ॥
प्रयच्छत्यक्षयाँल्लोकान्विधिना वाऽविधानतः ।
शिल्पविद्यां नरो दत्त्वा वैष्णवं लोकमाप्नुयात् ॥
धर्मशास्त्रं नरो दत्त्वा स्वर्गे कल्पत्रयं वसेत् ।
आत्मविद्यां तु यो दद्यात्तस्य संख्या न विद्यते ॥

---

१ क. घ. पत्तोर्ण° । २ क. ग. °संवृत° । ३ घ. °थाविधि । ष° । ४ क. ख. ग. °दः सस्यवे° । ५ ख. °नी सर्वाकलाशिल्पार्थ° । ६ घ. °काः । सामवेदा च । ७ क. ग. °त्यखिलाँल्लो° । ८ ग. °वं पदमा° । ९ घ. स्वर्गलोके महीयते । दश मन्वन्तरान्मनुयस्तारयेन्नरकात्पितॄन् । वेदविद्यां नरो दत्त्वा स्वर्गे ।

( दानप्रकरणम् ८ )

परिलेख्य च यो दद्याद्धेमशूलसमन्वितम् ।
शैवं पदमवाप्नोति मीने चोपगते रवौ ” ॥

ग्रन्थः ८११०० इति स्कन्दपुराणदानविधिः । ( १३ )

“ त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गमभ्यधाद्यत्र[1] वामनं परिकीर्त्यते ॥
पुराणं दशसाहस्रं ख्यातं कल्पानुगं[2] शिवम् ।
यच्च तद्विषुवे दद्याद्वैष्णवं यात्यसौ पदम् ” ॥

ग्रन्थः १०००० इति वामनपुराणदानविधिः । ( १४ )

“ यत्र धर्मार्थकामानां मोक्षस्य च रसातले ।
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥
इन्द्रद्युम्नप्रसङ्गेन ऋषीणां शक्रसंनिधौ ।
सप्तदश[3] सहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ॥
यो दद्यादयने कौर्मं हेमकूर्मसमन्वितम् ।
गोसहस्रप्रदानस्य स फलं प्राप्नुयान्नरः ” ॥

ग्रन्थः १७००० इति कूर्मपुराणदानविधिः । ( १५ )

“ श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ।
मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् ॥
अधिकृत्याब्रवीत्सप्त सप्तकल्पमुनिव्रतम् ।
तन्मात्स्यमिति जानीध्वं सहस्राणि त्रयोदश ॥
विषुवे हैममत्स्येन धेन्वा चैव समन्वितम् ।
यो दद्यात्पृथिवी तेन दत्ता भवति चाखिला ” ॥

ग्रन्थः १३००० इति मत्स्यपुराणदानविधिः । ( १६ )

“ यदा च गारुडे कल्पे विश्वान्ते गरुडो भवेत् ।
अधिकृत्याब्रवीत्कृष्णो गारुडं तदिहोच्यते ॥
तदष्टादशकं[4] चेह सहस्राणां प्रपठ्यते ।
सौवर्णहंससंयुक्तं यो ददाति शुभेऽहनि ॥
स सिद्धिं लभते मुख्यां शिवलोके च संस्थितिम् ” ।

ग्रन्थः १८००० इति गरुडपुराणदानविधिः । ( १७ )

---

१ क. ख. °मभ्यधा° । २ घ. विधिम् । ३ ख. घ. सप्ताद° । ४ घ. °श चैकं च सहस्राणीह प° ।

भविष्यचरितप्रायं भविष्यत्तदिहोच्यते ।
तत्पौषे मासि यो दद्यात्पौर्णमास्यां विशेषतः ॥
गुडकुम्भसमायुक्तमग्निष्टोमफलं लभेत् " ।

ग्रन्थः १४५०० । इति भविष्यत्पुराणदानविधिः ( ९ )

" रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
सवर्णिनारदायाऽऽह कृष्णमाहात्म्यमुत्तमम् ॥
यत्र ब्रह्मवराहस्य चरितं वर्ण्यते महत् ।
तदष्टादशसाहस्रं ब्रह्मवैवर्तमुच्यते ॥
पुराणं ब्रह्मवैवर्तं यो दद्यान्माघमासि च ।
पौर्णमास्यां च भगवन्ब्रह्मलोके महीयते " ॥

ग्रन्थः १८००० इति ब्रह्मवैवर्तदानविधिः ( १० )

" यत्राग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः ।
धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ॥
कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ।
तदेकादशसाहस्रं फाल्गुने यः प्रयच्छति ॥
तिलधेनुसमायुक्तं स याति शिवसात्म्यताम् " ।

ग्रन्थः ११००० इति लिङ्गपुराणदानविधिः । ( ११ )

" महावराहस्य पुनर्माहात्म्यमधिकृत्य च ।
विष्णुनाऽभिहितं क्षोण्यै तद्वराहमिहोच्यते ॥
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तमाः ।
चतुर्विंशतिसाहस्रं पुराणं तदिहोच्यते ॥
काञ्चनं गरुडं कृत्वा तिलधेनुसमन्वितम् ।
पौर्णमास्यां च यो दद्याद्ब्राह्मणाय कुटुम्बिने ॥
वराहस्य प्रदानेन पदमाप्नोति वैष्णवम् " ।

ग्रन्थः २४००० इति वाराहपुराणदानविधिः । ( १२ )

" यत्र माहेश्वरं धर्ममधिकृत्य च षण्मुखः ।
कल्पे तान्पुरुषे वृत्तचरितैरुपशोभितम् ॥
स्कान्दं नाम पुराणं तदेकाशीतिर्निगद्यते ।
सहस्राणि शतं चैकमिति यत्नेन पठ्यते ॥

---

१ ग. तद्वारा° । २ क. ख. ग. °शतसहस्राणि पु° ।

( दानप्रकरणम् ८ )

यो दद्याद्घृतसंयुक्तं ब्राह्मणाय कुटुम्बिने ।
शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः " ॥

ग्रन्थः २४००० इति वायुपुराणदानविधिः । ( ४ )

" यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् ॥
अष्टादश सहस्राणि पुराणं तत्प्रकीर्तितम् " ।

ग्रन्थः १८००० इति भागवतपुराणदानविधिः । ( ५ )

" यत्राऽऽह नारदो धर्मान्बृहत्कल्पाश्रयांस्त्विह ।
पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ॥
तदिषे पञ्चदश्यां तु यो दद्याद्धेनुसंयुतम् ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् " ॥

ग्रन्थः २५००० इति नारदपुराणदानम् । ( ६ )

" यत्राधिकृत्य शकुनीन्धर्माधर्मविचारणम् ।
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ॥
परिलेख्य[1] च यो दद्यात्सौवर्णकरिसंयुतम् ।
कार्तिक्यां पौण्डरीकस्य यज्ञस्य फलभाग्भवेत् " ॥

ग्रन्थः ९००० इति मार्कण्डेयदानविधिः । ( ७ )

" यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ।
वसिष्ठायाग्निना प्रोक्तमाग्नेयं तत्प्रचक्षते ॥
लेखयित्वा च यो दद्याद्धेमपद्मसमन्वितम् ।
मार्गशीर्ष्यां विधानेन तिलधेनुयुतं तथा ॥
तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम् " ॥

ग्रन्थः १६००० इत्याग्नेयपुराणदानविधिः । ( ८ )

" यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्स्थितिम् ॥
मनवे कथयामास भूतग्रामस्य लक्षणम् ।
चतुर्दश सहस्राणि तथा पञ्च शतानि च ॥

---

१ घ. °रिलिख्य ।

इति भविष्योत्तरे विद्यादानविधिः। मत्स्यपुराणे—

" मत्स्यउवाच—पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।
अनन्तरं च वक्त्रेभ्यो वेदा यस्य विनिर्गताः॥
पुराणमेकमेवाऽऽसीत्तस्मिन्कालान्तरेऽपि च।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्॥
तदर्थोऽत्र चतुर्लक्षैः संक्षेपेण प्रदर्शितः।
पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते॥
नामतस्तान्प्र(नि)वक्ष्यामि शृणुध्वमृषिसत्तमाः।
ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये॥
ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्त्यते।
लिखित्वा तच्च यो दद्याज्जलधेनुसमन्वितम्॥
वैशाखपौर्णमास्यां तु ब्रह्मलोके महीयते "।

ग्रन्थः १०००० इति ब्रह्मपुराणदानविधिः। ( १ )

" एतदेव यदा पद्ममभूद्धैरण्मयं जगत्।
तत्कथान्ताश्रयं[१] तद्वत्पाद्ममित्युच्यते बुधैः॥
पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह पठ्यते।
तत्पुराणं च यो दद्यात्सुवर्णकमलान्वितम्॥
ज्येष्ठे मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत् "।

ग्रन्थः ५५००० इति पद्मपुराणदानविधिः। ( २ )

" वाराहकल्पवृत्तान्तमधिकृत्य पराशरः।
यत्प्राह धर्मानखिलांस्तद्युक्तं वैष्णवं विदुः॥
तदाषाढे तु यो दद्याद्घृतधेनुसमन्वितम्।
पौर्णमास्यां विपूतात्मा स पदं याति वारुणम्॥
त्रयोविंशतिसाहस्रं तत्पुराणं विदुर्बुधाः "।

ग्रन्थः २३००० इति[२] विष्णुपुराणदानविधिः। ( ३ )

" श्रुतकल्पप्रसङ्गेन धर्मान्वायुरिहाब्रवीत्।
यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम्॥
चतुर्विंशति[३]साहस्रं पुराणं तदिहोच्यते।
श्रावण्यां श्रावणे मासि गुडधेनुसमान्वितम्॥

---

१ ग. °था चाऽऽश्व°। २ घ. °ति वराहपु°। ३ क. ख. ग. °शत्सहस्राणि पु°।

पुराणं भारतं वाऽपि रामायणमथापि वा ।
दत्त्वा यत्फलमाप्नोति पार्थ तत्केन वर्ण्यते ॥
प्रातरुत्थाय यः शिष्यानध्यापयति यत्नतः ।
वेदशास्त्रं तु पठितं कीर्तितं सदृशं कृतम् ॥
उपाध्यायस्य यो वृत्तिं दत्त्वाऽध्यापयते द्विजान्[1] ।
किं न दत्तं भवेत्तेन धर्मकामार्थदर्शिना ॥
छात्राणां भोजनाभ्यङ्गं वस्त्रं भिक्षामथापि वा ।
दत्त्वा प्राप्नोति पुरुषः सर्वकामानसंशयः ॥
विवेको जीवितं दीर्घं सर्वकामार्थसंपदः ।
सर्वं तेन भवेद्दत्तं छात्राणां भोजने कृते ॥
शस्त्रशास्त्रकलाशिल्पं यो यमिच्छेदुपार्जितम् ।
तस्योपकारकरणे पार्थ कार्यं सदा मनः ॥
वाजपेयसहस्रस्य सम्यगिष्टस्य यत्फलम् ।
तत्फलं समवाप्नोति विद्यादानान्न संशयः ॥
शिवालये विष्णुगृहे सूर्यस्य भवने तथा ।
यः कारयति धर्मात्मा सदा पुस्तकवाचनम् ॥
गोभूहिरण्यवासांसि शयनान्यासनानि च ।
प्रत्यहं तेन दत्तानि भवन्ति पुरुषर्षभ ॥
धर्माधर्मौ न जानाति विद्याविरहितः पुमान् ।
तस्मात्सर्वत्र धर्मात्मा विद्यादानरतो भवेत् ॥
त्रैलोक्यं चतु(त्वा)रो वर्णाश्चत्वारश्चाऽऽश्रमाः पृथक् ।
ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ॥
चतुर्युगानि(णि) राजेन्द्र एकसप्ततिसंख्यया ।
कल्पं विष्णुपुरे तिष्ठन्पूज्यमानः सुरोत्तमैः ॥
क्षितिं चाऽऽगत्य कालान्ते[2] राजा भवति धार्मिकः ।
हस्त्यश्वरथयानाढ्यो दाता भोक्ता विमत्सरी ॥
रूपसौभाग्यसंपन्नो दीर्घायुर्नीरुजो भवेत् ।
पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् ॥

दानं विशेषफलदं जगतीह नान्यद्विद्यां विहाय वदनाब्जकृताधिवासाम् ।
गोभूहिरण्यगजवाजिरथादि सर्वं तां यच्छता किमिह पार्थ भवेन्न दत्तम् " ॥

---

१ ख, घ, द्विजम् । २ क, घ, कल्पान्ते ।

शुभेऽह्नि विप्रकथिते गोमयेन सुशोभनम् ।
कारयेन्मण्डलं दिव्यं चतुरस्रं समन्ततः ॥
पुष्प[1]प्रकरसंयुक्तं स्वस्तिकादिसमन्वितम् ।
पुस्तकं तत्र संस्थाप्य गन्धपुष्पैः समर्चयेत् ॥
सौवर्णी लेखनी कार्या रौप्यं च मषिभाजनम् ।
दीपज्वालासमुद्भूतकज्जलेन मषी भवेत् ॥
[2]औदुम्बरामत्रपाणिघृष्टबोलरसान्विता ।
लेखकं पूजयित्वा[3] तु प्रारम्भं कारयेत्सुधीः ॥
विनीतश्चाप्रमत्तश्च ततः प्रभृति लेखकः ।
मात्रानुस्वारसंयुक्तं[4] पदच्छेदैः समन्वितम् ॥
समानि समशीर्षाणि वर्तुलानि घनानि च ।
*मात्रासु प्रतिबद्धानि यो जानाति स लेखकः ॥
लेखयेदक्षराणीह तद्गतेनान्तरात्मना ।
ग्रन्थानां पञ्चकं वाऽथ दशकं विंशमेव वा ॥
त्रिंशं वा चत्वारिंशं वा परं पञ्चाशकं सुधीः ।
पदवाक्यप्रमाणज्ञो मधुरस्निग्धभुक्शुचिः[5] ॥
सामाजिकेषु तृप्तेषु हृष्टेषु च शनैः शनैः ।
+निष्पादयित्वा सच्छास्त्रं शैवं वाऽप्यथ वैष्णवम् ॥
निष्पादिते पुनः पूज्यो लेखको वस्त्र[6]भूषणैः ।
संपूजयित्वा तच्छास्त्रं देयं गुणवते तथा ॥
शास्त्र[7]संभावविदुषे वाचके च प्रियंवदे ।
वस्त्रयुग्मेन[8](ण) संयुक्तं पुस्तकं प्रतिपादयेत् ॥
सामान्यं सर्वलोकानां स्थापयेदथ वा मठे ।
अनेन विधिना दत्त्वा यत्फलं प्राप्नुयान्नरः ॥
तदहं ते प्रवक्ष्यामि युधिष्ठिर निबोध मे ।
यत्फलं तीर्थयात्रायां यत्पुण्यं यज्ञयाजिनाम् ॥
कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् ।
तत्फलं समवाप्नोति पुस्तकैकप्रदानतः ॥

---

* एतदर्धं न विद्यते क. ग. घ. पुस्तकेषु । + ल्यबभाव आर्षः । एवमग्रेऽपि ।

---

१ ग. घ. °प्रकार° । २ क. घ. औंडम्ब° । ग. औडुम्ब° । ३ ग. °त्वाऽऽदौ प्रा° । ४ ग. घ. °क्तं पाद° । ५ क. ग. घ. °चिः । समा° । ६ ग. वसुभू° । ७ ग. °स्त्रसद्भाव° । ८ घ. सहितं ।

तथैव पुरुषं हैमं तस्यां संस्थापयेत्तदा ।
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ।
स्वर्गे पुरंदरगृहे सूर्यपुत्रालये तथा ॥
सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ।
पीडयन्ति न तं याम्याः पुरुषा भीषणा नरम् ॥
न घर्मेण न शीतेन बाध्यते स नरः क्वचित् ।
अपि पापसमायुक्तः स्वर्गलोकं स गच्छति ॥
विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ।
आभूतसंप्लवं यावत्तिष्ठेत्पातकवर्जितः ॥
शय्याप्रदानममलं तव पाण्डुपुत्र संकीर्तितं सकलसौख्यनिधानभूतम् ।
तद्यो ददाति विधिवत्स्वयमेव नाके कल्पं विकल्परहितः स विभाति सौख्यम् " ॥

इति भविष्योत्तरे शय्यादानविधिः ॥ २११ ॥

किंच—

**सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ॥**
**तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतः ॥ २१२ ॥**

ब्रह्म वेदस्तदध्यापयन्ब्रह्मलोकमविच्युतोऽनपभ्रष्टः प्राप्नोति । अत्र हेतुः— ब्रह्मणः सर्वधर्ममयत्वेनान्येभ्यः प्रदेयेभ्योऽधिकम् । प्राचुर्ये मयट्प्रत्ययः । यथा शालिमया मगधाः । अन्नमयो यज्ञ इति । अभेदे वा यथा—आनन्दमयं ब्रह्मेति । अभेदश्चात्र प्रमाणप्रमेययोरभेदोपचारेण ।

बृहस्पतिः—" सहस्रमेव धेनूनां शतं चानडुहां समम् ।
शतानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
भूमिदानात्समं नास्ति विद्यादानं ततोऽधिकम् " ॥

यमः—" इमां पृथ्वीं च यो दद्यात्सर्वरत्नोपशोभिताम् ।
दद्याच्छास्त्रं च विप्राणां तच्च तानि च तत्समम् " ॥

ब्रह्मदानप्रसङ्गेन विद्यान्तरदानविधिरुच्यते ।

तत्र भविष्योत्तरम्—" विद्यादानविधिं वक्ष्ये याथातथ्येन तेऽधुना ।
यथातथ्यं फलं यच्च दत्तेन यदुनन्दन ॥

---

१ क. स्वर्गे । २ ग. °मतुलं । ३ क. ग. °म् । तेभ्यो द° । ४ घ. सत्यम् । ५ ख. घ. तत्पदं सम° । ६ ग. ङ. °च्युतम् । ७ ख. घ. °म् । दशान° ।

मृतो मृत इति ज्ञात्वा क्षणात्स्नेहो निवर्तते ।
तस्माद्यत्नेन दातव्यं स्वयं भोज्यफलादिकम् ॥
आत्मैव ह्यात्मनो बन्धुरिति संचिन्त्य चेतसा ।
आत्मैव यदि नाऽऽत्मानं दानधर्मैः[1] प्रपूजयेत् ॥
कोऽन्यो हितकर[2]स्तस्माद्यः पश्चात्पूजयिष्यति ।
तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ॥
सुदन्तपत्ररचनां हेमपट्टैरलंकृताम् ।
हंसतूलीपरिच्छन्नां शुभगण्डोपधानकाम् ॥
प्रच्छादनपटीयुक्तां धूपगन्धाधिवासिताम् ।
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ॥
तच्छीर्षके घृतयुतं कलशं परिकल्पयेत् ।
विज्ञेयः पाण्डव सदा स निद्राकलशो बुधैः ॥
ताम्बूलकुङ्कुमक्षोदकर्पूरागुरुचन्दनम् ।
दीपकोपानहच्छत्रचामरासनभाजनम् ॥
पार्श्वेषु स्थापयेद्भक्त्या सप्त धान्यानि चैव हि ।
शयनस्थस्य भवति यदन्यदुपकारकम् ॥
शृङ्गारकरवाद्यं च पञ्चवर्णवितानकम् ।
शय्यामेवंविधां कृत्वा ब्राह्मणायोपपादयेत् ॥
सपत्नीकाय विप्राय पुण्येऽह्नि विधिपूर्वकम् ।
यथा न कृष्ण भवतः शून्या सागरजा[3] तथा ॥
शय्या ममाप्यशून्याऽस्तु तथा जन्मनि जन्मनि ।
दत्त्वैवं तल्पममलं प्रणिपत्य विसर्जयेत् ॥
एकादशो(शा)हेऽपि तथा विधिरेष प्रकीर्तितः ।
ददाति यदि धर्मार्थं बान्धवो बान्धवे मृते ॥
विशेषं चात्र राजेन्द्र कथ्यमानं[4] निशामय ।
तेनोपभुक्तं यद्वस्तु किंचित्पूर्वं [5]गृहे[6] सता ॥
तद्गात्रलग्नं च तथा वस्त्रवाहनभाजनम् ।
यद्यदिष्टं च तस्याऽऽसीत्तत्सर्वं परिकल्पयेत् ॥

१ ख. °धर्मः प्र° । २ क. °ततरस्त° । ख. 'तरतस्त' । ३ ख. °रगा त° । ४ क. ग. °नं मया शृणु । ते° । ५ ग. गृही मता । ६ क. घ. °हे मता ।

( दानप्रकरणम् ८ )

छत्रं शतशलाकं तु दत्त्वैवाऽऽतपवारणम् ।
सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥
याम्यं मार्गं तथा याति सुखेन द्विजसत्तम ।
उपानहौ तथा दत्त्वा श्लक्ष्णे स्नेहसमन्विते ॥
रथमश्वतरीयुक्तं त्रिदिवं प्रतिपद्यते ।
सर्वपापविनिर्मुक्तो[1] याम्यं मार्गं सुखं व्रजेत् ॥
माल्यदः श्रियमाप्नोति फलदः सफलाः क्रियाः ।
अनुलेपनदानेन सर्वतापैः प्रमुच्यते " ॥

**तथा**—" नरश्चन्दनदानेन रूपवानभिजायते ।
सौभाग्यकारकं प्रोक्तं प्रदानं कुङ्कुमस्य च ॥
तथा कर्पूरदानेन सर्वान्कामानवाप्नुयात् ।
मृगनाभिप्रदानेन यशसा भुवि राजते " ॥

**वायुपुराणे**—" चन्दनानां प्रदातारः शङ्खानां मौक्तिकस्य च ।
पापकर्तॄनपि पितॄंस्तारयन्ति यथा[2] श्रुतिः " ॥

**वृक्षदानं महाभारते**—"पुष्पोपगं वाऽथ फलोपगं वा यः पादपं लम्बयते द्विजाय ।
स स्त्रीसमृद्धं बहुरत्नपूर्णं प्राप्नोत्ययत्नोपगतं गृहं वै " ॥

**यमः**—" देवतापुष्पदानेन जायते श्रीसमन्वितः ।
ऊर्ध्वं गतिमवाप्नोति यश्च धूपप्रदो नरः ॥
गर्भौषधमथाभ्यङ्गं[3] माक्षिकं लवणं तथा ।
यः प्रयच्छति विप्राय सौभाग्यं तु स विन्दति ॥
अन्नप्रदानादाप्नोति यान्कामान्मनसेप्सितान् ।
पानीयस्य प्रदानेन तृप्तिं विन्दति शाश्वतीम् " ॥

**विष्णुः**—" यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता " ॥

**भविष्योत्तरे शय्यादानम्**—

" श्रीकृष्ण उवाच—शय्यादानं प्रवक्ष्यामि तव पाण्डुकुलोद्वह ।
यां दत्त्वा सुखभागी स्यादिह लोके परत्र च ॥
अनित्यं जीवितं यस्मात्पश्चात्कोऽन्यः प्रदास्यति ।
तावत्स बन्धुः स पिता यावज्जीवति भारत ॥

---

१ ख. 'र्वकामवि° । २ क. ग. तथा । ३ क. ग. गन्धौष' ।

भूमिदः स्वर्गमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः[1] ।
अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् " इति ॥

**संवर्तः**—" पादुकोपानहौ छत्रं शयनान्यासनानि च ।
विविधानि च रत्नानि दत्त्वा द्रव्यपतिर्भवेत् " ॥

**विष्णुः**—" छत्रदानेन च स्वर्गमाप्नोति । उपानहां प्रदानेनाश्वतरयुक्तं[2] रथम् " ।

**महाभारते**—" उपानहौ प्रयत्नाद्यो ब्राह्मणाय प्रयच्छति ।
मर्न्दरे[3][4] कण्टकान्[5]सर्वान्विषमान्संतरिष्यति[6] ॥
शकटं दम्यसंयुक्तं दत्तं भवति चैव हि " ।

**तथा**—" छत्रदो गृहमाप्नोति गृहदो नगरं तथा ।
उपानहां प्रदानेन रथमाप्नोत्यनुत्तमम् " ॥

**बृहस्पतिः**—" असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ।
तीक्ष्णातपं च तरति च्छत्रोपानत्प्रदो नरः " ॥

**देवीपुराणे**—" अन्नदानाश्वगोवस्त्ररौप्यच्छत्रासनानि च ।
प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ॥
क्षीरं दधि घृतं वाऽपि मधु तैलं गुडं तथा ।
यः प्रयच्छति विप्रेभ्यो स यमं नोपसर्पति " ॥

**शय्यादाने विष्णुधर्मोत्तरेषु**—

" शय्यादानेन चाऽऽप्नोति भार्यां ब्राह्मणसत्तमः ।
दत्त्वा द्विजाय शयनं स्वास्तीर्णं सोत्तरच्छदम् ॥
कुले महति संभूतां रूपद्रविणसंयुताम् ।
तथा पक्षवर्तीं भार्यां प्राप्नोति वशगां तथा ॥
अनेनैव च दानेन भार्या पतिमवाप्नुयात् " ।

**तथा**—" वितानकप्रदानेन सर्वपापैः प्रमुच्यते ।
छत्रदश्च तथा विप्रो नात्र कार्या विचारणा ॥

---

१ क. ख. ग. °मश्विदः । २ क. ग. °युतं र° । ३ घ. मर्दते । ४ ख. °न्दते कण्टका° । ५ ग. कन्दका° । ६ ख. ग. °तरत्यपि । श° ।

( दानप्रकरणम् ८ )

मयोष्टकानां दानेन लोकं वै नैर्ऋतं व्रजेत्।
सतीनचणके[1] दत्त्वा लोकं वारुणमाप्नुयात् ॥
वायव्यं च मसूराणि राजमाषाणि धानदम्।
अन्येषां शिष्टधान्यानां प्रदानात्स्वर्गमाप्नुयात् ॥
इक्षुमृद्वीकयोर्दानात्परं सौभाग्यमाप्नुयात् "।

इति धान्यदानम्। अथाभयदानम्।

तत्र विष्णुः—" अन्नप्रदानाधिकमभयदानम्। एतत्प्रदानेनाभीष्टलोकमाप्नुयते "।

संवर्तः—" भूताभयप्रदानेन सर्वान्कामानवाप्नुयात्।
दीर्घमायुश्च लभते सदा च सुमना भवेत् " ॥

नन्दिपुराणे—" महतां सूक्ष्मदेहानां तथा च व्याधितात्मनाम्।
हिंस्राणां सौम्यमूर्तीनां सर्वदा ह्यभयात्सुखम् ॥
वरमेकस्य सत्त्वस्य जीविताभयरक्षणम्।
न तु विप्रसहस्रस्य गोसहस्रं सदक्षिणम् " ॥

मार्कण्डेयपुराणे-" धिक्तस्य जीवितं पुंसः शरणार्थिनमातुरम्।
यो नाऽऽर्तमनुगृह्णाति वैरिपक्षमपि ध्रुवम् ॥
यज्ञदानतपांसीह परत्र च न भूतये।
भवन्ति तस्य यस्याऽऽर्तपरित्राणे न मानसम् " ॥

महाभारते—" लोभाद्द्वेषाद्भयाद्वाऽपि यस्त्यजेच्छरणागतम्।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः " ॥

तथा—" प्राणिनां वध्यमानं हि यः शक्तः समुपेक्षते।
स याति नरकं घोरमिति प्राहुर्मनीषिणः ॥
चतुःसागरपर्यन्तां यो दद्यात्पृथिवीमिमाम्।
सत्त्वेभ्योऽथाभयं यश्च तयोरभयदोऽधिकः " इति ॥

रामायणे—" विनष्टः पश्यतो यस्य रक्षितुः शरणागतः।
आदाय सुकृतं तस्मात्सर्वं गच्छत्यरक्षितः " ॥

मनुः—" यत्किंचिदपि दातव्यं याचितेनानसूयतः।
उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः ॥
वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः[2]।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥

---

१ ख. °तरिच°। ग. °तीणच°। २ क. ग °क्षय्यम°।

एवं ततः पश्चिमे भृङ्गराजः। ततः पश्चिम एकस्मिन्नेव मृगः। नैर्ऋतकोण एकस्मिन्नेव पितृगणः। तत उत्तर एकस्मिन्नेव दौवारिकः। तत उत्तरे सुग्रीवः। वियदुत्तरे वरुणः। एवं तदुत्तरे पुष्पदन्तः। एवं तदुत्तरे वरुणः। एवं तदुत्तरेऽसुरः। एवं तदुत्तरे शेषः। तदुत्तर एकस्मिन्नेव पापः। वायव्यकोणे रोगः। ततः पूर्वस्मिन्नहिः। ततः पूर्वस्मिन्मुख्यः। एवं तत्पूर्वस्मिन्भल्लाटः। एवं तत्पूर्वस्मिन्सोमः। एवं तत्पूर्वस्मिन्सूर्यः। एवं तत्पूर्वस्मिन्नदितिः। एकस्मिन्नेव दितिः। मध्ये नवसु पदेष्वेकीकृतेषु ब्रह्मा। तत्पूर्वस्मिन्दक्षिणोत्तराभ्यामेकीकृतेऽर्यमा। तस्य दक्षिणत एकस्मिन्सविता। तत्पश्चिमे पदत्रय एकीकृते विवस्वान्। ततः पश्चिम एकस्मिन्नेव[1] विबुधाधिपः। तत उत्तरे पदत्रय एकीकृते मित्रः। तत उत्तर एकस्मिन्नेव राजयक्ष्मा। ततः पूर्वस्मिन्पदत्रय एकीकृते पृथ्वीधरः। ततः पूर्वस्मिन्नेवाऽऽपवत्सः। पर्जन्यात्पश्चिम एकस्मिन्नेव पद आपः। आकाशात्पश्चिम एकस्मिन्नेव सावित्रः। दौवारिकात्पूर्वस्मिन्नेकस्मिञ्जयः। पापात्पूर्वस्मिन्नेकस्मिन्रुद्र इति+।

बृहस्पतिः—" रसान्नोपस्करान्[3]गेहं विप्रेभ्यो यः प्रयच्छति।
तस्य न क्षीयते वंशः स्वर्गमाप्नोत्यनन्तकम् " इति॥

इति गृहदानम्।

विष्णुधर्मोत्तरे—" धान्यानामुत्तमं धान्यं कथितं द्विजपुंगवैः।
धान्येभ्योऽपि परं धान्यं रक्तशालिः प्रकीर्तितः॥
रक्तशालिं नरो दत्त्वा सूर्यलोके महीयते।
तथा गोधूमदानेन वसूनां लोकमाप्नुयात्॥
प्रियो भवति लोकस्य प्रियङ्गुं यः प्रयच्छति।
ददाति यस्तु श्यामाकं तस्य* प्रीयन्ति देवताः॥
अन्येषां शूकधान्यानां प्रदाननिरतो नरः।
स्वर्गलोकमवाप्नोति नात्र कार्या विचारणा॥
मुद्गदः शक्रलोकं तु यमलोकं तु माषदः।
यथेष्टलोकमाप्नोति तथा विप्रस्तिलप्रदः॥

---

+ अतः परमेकश्लोकोऽधिको ग. पुस्तके—" अथ प्रवेशे नवमन्दिरस्य यात्रानिवृत्तावपि भूपतीनाम्। सौम्यायने पूर्वदिने विधाय वास्त्वर्चनं भूतबलिं च सम्यक् " इति॥

* अत्र परस्मैपदमार्षम्।

---

१ क. ग. ॰स्मिन्वल्ला॰। २ ख. ग. ॰व वसुधा॰। ३ ख. घ. ॰राद्गेहं। ४ क. ग. ॰ष्णुपुराणे। धा॰।

( दानप्रकरणम् ८ )

शून्यः[1] सत्यो भृशश्चैव आकाशो वायुरेव च ।
पूषाऽथ वितथश्चैव गृहक्षतेयमा[2]वुभौ ॥
गन्धर्वो भृङ्ग[3]राजश्च मृगः पितृगणस्तथा ।
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ॥
असुरः शेषपापौ च रोगोऽहिर्मुख्य[4] एव च ।
भल्लाटः[5] सोमसूर्यौ च अदितिश्च दितिस्तथा ॥
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ।
ईशानादिचतुष्कोणसंस्थितान्पूजयेद्बुधः ॥
आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च[6] ।
मध्ये नवपदे ब्रह्मा तस्याष्टौ च समीपगान् ॥
सर्वानेकान्तरान्विद्यात्पूर्वाद्यान्नामतः शृणु ।
अर्यमा सविता चैव विवस्वान्विबुधाधिपः ॥
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ।
अष्टमस्त्वापवत्सस्तु परितो ब्रह्मणः स्मृताः ॥
आपश्चैवा[7]पवत्सश्च पर्जन्योऽग्निर्दितिस्तथा ।
पदिकानां तु वर्गोऽयमेवं कोणे[8]ष्वशेषतः ॥
तन्मध्ये तु बहिर्विं[9]शद्द्विपदास्ते तु सर्वदा ।
अर्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा ॥
ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्वतः "।

**अत्रैवं प्रयोगः**—गृहमध्ये समां चतुरस्रां भूमिं कृत्वा तत्र सुधालिप्तानि दश सूत्राणि समान्तरालानि पातयेत्तथैवोत्तरायतानि । एवमेकाशीतिपदानि संपद्यन्ते । तत्रेशानकोणगे पदे शिखी पूज्यस्तस्य दक्षिणतोऽनन्तरे पर्जन्यः । तदनन्तरे दक्षिणे पदे[10] स्वपश्चिमेनैकीकृते जयन्तः । एवं[11] तद्दक्षिण इन्द्रः । तद्दक्षिणे शून्यः । एवं तद्दक्षिणे सत्यः । एवं तद्दक्षिणे भृशः । ततो दक्षिण एकस्मिन्नेव कोष्ठ आकाशः । तद्दक्षिण आग्नेयकोणगृह एकस्मिन्नेव कोष्ठे वायुः । ततः पश्चिमे पूषा । ततः पश्चिमे वितथः । एवं तथा[12] पश्चिमे गृहक्षतः । ततः पश्चिमे गन्धर्वः ।

१ क. ग. सूर्यः । २ ख. ग. °ततमा° । ३ क. भृगुरा° । ४ घ. °मुख ए° । ५ क. ग. चल्लाटः ; ६ ग. च । वामे न° । ७ क. ग. °वाथ व° । ८ क. °राणि पा° । ९ ख. घ. °दन्त° । १० ख. घ. °देनै° । ११ क. ग. °वं स्वदक्षिणे स्वपश्चिमेनैकीकृत इन्द्रः । तद्दक्षिणे पश्चिमेनैकीकृते सूर्यः । एवं तद्दक्षिणे स° । १२ क. घ. ततः प° ।

वदेदिदं ततो वाक्यं सर्वधान्ययुतं गृहम् ।
सर्वोपस्करसंयुक्तं गृहं *गृह्ण द्विजोत्तम ॥
तत्रोपकरणं सर्वं दंपत्योस्तु निवेदयेत् ।
पादुकोपानहच्छत्रभूषणासनभाजनम् ॥
संपन्नं चाप्यसंपन्नं गृहोपस्करभूषणम् ।
सर्वं संपूर्णमेवास्तु त्वत्प्रसादाज्जनार्दन ॥
अनेन विधिना यस्तु पक्केष्टं विनिवेदयेत् ।
कल्पकोटिशतं यावद्ब्रह्मलोके महीयते ॥
शैलजं दारुजं वाऽपि यो दद्याद्विधिपूर्वकम् ।
वसेत्क्षीरार्णवे[1] रम्ये नारायणसमीपतः ॥
मृन्मयं चैव यो दद्याद्गृहं सोपस्करान्वितम् ।
पुरेषु लोकपालानां प्रेत्या[2]ऽऽमन्वन्तरं वसेत् ॥
कलिकलुषविमुक्तः पूजितः सिद्धसंघैरमरचमरमालावीज्यमानोऽप्सरोभिः ।
पितृशतमपि बन्धून्पुत्रपौत्रप्रपौत्रानपि नरकनिमग्नांस्तारयेदेक एव ॥
दिव्यान्भोगांस्ततो भुक्त्वा राजराजो भवेद्भुवि ॥
नारायणबलोपेतो नारायणपरायणः ।
नारायणकथासक्तो जीवेद्वर्षशतं सुखी ॥
देवतापञ्चकं तत्र चत्वारिंशत्समन्वितम् ” इति ॥

अत्रायं विधिः—“ एकाशीतिपदं कृत्वा रेणुभिः कनकेन च ।
पश्चाल्लिम्पेच्चा[3]नुलिंम्पेत्सूत्रेणाऽऽलोड्य सर्वतः ॥
दश पूर्वायता रेखा दश चैवोदगायताः ।
सर्ववास्तुविभागेषु विज्ञेया नवका नव ॥
एकाशीतिपदं कृत्वा वास्तुवित्सर्ववास्तुषु ।
पदस्थान्पूजयेद्देवांस्त्रिंशत्पञ्चदशैव तु ॥
द्वात्रिंशद्बाह्यतः पूज्याः सूक्ष्माश्चान्तस्त्रयोदश ।
नामतस्तान्प्रवक्ष्यामि स्थानानि च निबोधत ॥
ईशानकोणादि सुरान्पूजयेत्पादिकान्नव ।
शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ॥

---

* इदमार्षमत्र गृहाणेति साधु ।

---

१ ग. 'वे मध्ये ना' । २ क. ग. प्रेत्य म° । ३ क. ग. °चावलि° ।

( दानप्रकरणम् ८ )

गृहदानं ततो देयं संसारभयभीरुणा ।
अनित्यं जीवितं यस्माल्लक्ष्मीश्चातीव चञ्चला ॥
एतज्ज्ञात्वा तु कर्तव्यमैशान्यां हस्तसंमितम् ।
चतुरस्रं समं कुण्डं मेखलायोनिभूषितम् ॥
पूर्वोत्तरे हस्तमिता च वेदी ग्रहादिदेवेश्वरपूजनाय ।
तत्रार्चनं ब्रह्मशिवाच्युतानां सूर्यस्य कार्यं फलपुष्पगन्धैः ॥
द्वारेषु कार्याणि च तोरणानि पत्रैरपि क्षीरवनस्पतीनाम् ।
मध्ये तु संस्थाप्य च पूर्णकुम्भं स्रग्गन्धधूपाम्बररत्नयुक्तम् ॥
गृह्योक्तेन विधानेन हुत्वा चाग्निमुखं ततः ।
गव्येन पयसा दिव्यं स्थालीपाकचरुं श्रपेत् ॥
ततश्च वै तं चरुकं जुहोति मध्यस्थिताभ्यो गृहदेवताभ्यः ।
बलिं च सम्यग्विधिसंप्रयोगात्क्षीरेण[1] धारां परितस्तु दद्यात् ॥
ब्रह्माणं द(दी)क्षयेत्पूर्वं[2] परितुष्टं क्षमापयेत् ।
शय्यां तु दक्षिणे भागे सोपधानां सदीपकाम् ॥
सितवस्त्रैस्तु संछन्नां लक्ष्मीनारायणान्विताम् ।
सिताम्बरं कुण्डलहेमभूषितं केयूरकण्ठाभरणाभिरामम् ।
पत्नीसमेतं च करे गृहीत्वा दाता पठेन्मन्त्रमिमं गृहस्थः ॥
एह्येहि नारायण दिव्यरूप सर्वामरैरर्चितपादपद्म[3] ।
शुभाशुभानां जगतामधीश लक्ष्मीयुतस्त्वं हि गृहं गृहाण ॥
नमः कौस्तुभनाथाय हिरण्यकवचाय च ।
क्षीरोदार्णवसुप्ताय जगद्धात्रे नमो नमः ॥
नमो हिरण्यगर्भाय विश्वगर्भाय वै नमः ।
चराचरस्य जगतो गृहभूताय वै नमः ॥
भूर्लोकप्रमुखा लोकास्तव देहे व्यवस्थिताः ।
नन्दन्ति यावत्कल्पान्तं तथाऽस्मिन्भवने गृही ॥
त्वत्प्रसादेन देवेश पुत्रैः पौत्रैर्युतो द्विजः ।
पञ्चयज्ञक्रियायुक्तो वसेदाचन्द्रतारकम् ॥
एवमुक्त्वा तु देवेशं सपत्नीकं द्विजोत्तमम् ।
तिलप्रस्थोपरिस्थायां शय्यायामुपवेश्य[4] च ॥

---

१ घ. °ण मिश्रं प° । २ क. ग. °त्पूर्वं प° । ३ ख. °पाणिप° । ४ घ. °य्यायां विनिवे° ।

यज्ञयाजी महातेजाः सर्वब्राह्मणपूजितः ।
यथोक्तस्ते महाराज[1] देयो यस्य वृषोत्तमः ॥
तदप्यहं ते वक्ष्यामि पात्रं प्राणप्रदं नृणाम् ।
ये क्षान्तदान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।
प्रतिग्रहे संकुचिता गृहस्थास्ते ब्राह्मणास्तारयितुं समर्थाः ॥
तेजस्विनं भरसहं दृढकन्धरं च यच्छन्ति ये वृषमशेषगुणोपपन्नम् ।
दत्तेन यद्भवति गोदशकेन पुण्यं सत्यं भवन्ति भुवि तत्फलभागिनस्ते " ॥
इति भविष्योत्तरे वृषदानम् ॥ २१० ॥

किं च—

**गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ॥**
**यानं वृक्षं प्रियं शय्यां दत्त्वाऽत्यन्तं सुखी भवेत् ॥२११॥**

गृहादिदाताऽत्यन्तमतिशयेन सुखी भवेत् । मत्स्यपुराणे गृहदानम्—

" मत्स्य उवाच—पक्वेष्टका(क)[2]चितं कृत्वा शैलजं वाऽपि दारुजम् ।
मृन्मयं वाऽपि कर्तव्यं शुभलक्षणसंयुतम् ॥
प्रभूतबलिपुष्पाढ्यं धेन्वा चैव समन्वितम् ।
अर्जुनैः स[3]रलैः शाकैरन्यैश्चैव मनोहरैः ॥
तिनिशैः सर्जवृक्षैश्च कदम्बैः सह वञ्जुलैः ।
शुभस्थानसमुत्पन्नैर्वास्तुलक्षणसंयुतम् ॥
स्थापनं च यथान्यायं भूमेश्चैव सुशोभनम् ।
मार्जनं सिञ्चनं चैव[4] शान्तातीयेन कारयेत् " ॥

शान्तातीयेन शं न इन्द्राग्नी इति सूक्तेन ।

" मङ्गलान्युपहाराश्च वास्तुविद्योदितास्तथा ।
देवतापञ्चकं तत्र चत्वारिंशत्समन्वितम् ॥
पूजयित्वा यथान्यायं ततो दद्याद्गृहं गृही ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥
युगादिषूपरागे च तथा मन्वन्तरादिषु ।
संक्रान्तौ वैधृतिदिने पौर्णमास्यष्टमीषु च ॥
यज्ञोत्सवविवाहेषु दुःस्वप्नानां च दर्शने ।
द्रव्यब्राह्मणसंपत्तौ श्रद्धा वा यत्र जायते ॥

---

१ ख. जन्यस्य देयो वृ° । २ घ. °ष्टकमयं कृ° । ३ ख. सलिलैः । ग. सरसैः । ४ घ. °व शंतातीयेन कारयेत् । शंताती° ।

सुवर्णं ये प्रयच्छन्ति वर्णदास्ते भवन्त्युत ।
अग्निर्हि देवताः सर्वाः सुवर्णं च तदात्मकम् ॥
तस्मात्सुवर्णं ददतो दत्ताः स्युः सर्वदेवताः " ।

**नन्दिपुराणे**—" कृष्णलाः पञ्च माषास्तु माषैः षोडशभिः स्मृतम् ।
सुवर्णमेकं तद्दानाद्दाता स्वर्गमवाप्नुयात् " ॥

**तथा**—" तस्मात्सर्वात्मना पात्रे दद्यात्कनकदक्षिणाम् ।
अपात्रे पातयेद्दत्तं[1] सुवर्णं नरकार्णवे " ॥

## इति सुवर्णदानम् ।

## अथ भविष्योत्तरे वृषभदानम् ।

" कृष्ण उवाच—" वृषदानफलं पुण्यं शृणुष्व कथयामि ते ।
पवित्रं पावनं चैव सर्वदानोत्तमं तथा ॥
दशधेनुसमोऽनड्वानेकश्चैव धुरंधरः ।
दशधेनुप्रदानाद्धि स एवैको विशिष्यते ॥
वोढा चरंश्च पुष्टाङ्गो ह्यरोगः पाण्डुनन्दन ।
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ॥
त्राता भवति संसारे नात्र कार्या विचारणा ।
अलंकृत्य वृषं शान्तं पुण्येऽह्नि समुपस्थिते ॥
रौप्यै[2]र्लाङ्गल[3]संयुक्तं ब्राह्मणाय निवेदयेत् ।
मन्त्रेणानेन राजेन्द्र तं शृणुष्व वदामि ते ॥
धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ॥
दत्त्वैनं दक्षिणायुक्तं प्रणिपत्य विसर्जयेत् ।
सप्तजन्मकृतं पापं वाङ्मनःकायकर्मणा ॥
तत्सर्वं विलयं याति गोदानेन कृतेन वै ।
दानं वृषभसंयुक्तं दीप्यमानं सुशोभितम् ॥
आरुह्य काम[4]गं दिव्यं स्वर्लोकमधिरोहति[5] ।
यावन्ति तस्य रोमाणि गोवृषस्य महीपते ॥
तावद्वर्षसहस्राणि गवां लोके महीयते ।
गोलोकादवतीर्णश्च इह लोके द्विजो भवेत् ॥

---

१ क. °त्तं सकुलं न° । २ ख. °प्यमङ्ग° । ३ क. ग. °लाङ्गूल° । ४ क. ग. °मदं दि° ।
५ ख. °धिरुह्यति ।

न भवेत्तत्फलं तस्य वैदिकीयं श्रुतिर्ध्रुवा ।
यज्ञदानव्रताद्यं च तीर्थयात्रादिकं च यत् ॥
यस्त्वेवं कारयेज्जन्तुस्तेन सर्वमनुष्ठितम् ।
स यात्यर्कसमानाभं विमानं रत्न[1]मालिनम् ॥
आरुह्य तत्पदं पुण्यं सुरस्त्रीभिरलंकृतम् ।
विमानैश्चापरैर्दिव्यैः सहस्रैः परिवारितम् ॥
सर्वलोकगतान्भोगान्भुक्त्वा तस्मिन्प्रपद्यते ।
ज्ञात्वा स्ववित्तसामर्थ्यादेकं चोद्वाह[2]ये[3]द्द्विजम् ॥
तेनाप्याप्नोति तत्स्थानं शिवभक्तो नरो ध्रुवम् ।
स्थानेन स्थानसंप्राप्तिर्विधिदत्तेन जायते " ॥

दक्षः—" मातापितृविहीनं तु संस्कारोद्वाहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते " ॥

आदित्यपुराणे—" भूमिपालं च्युतं राज्याद्यस्तु संस्थापये[4]द्द्विजः ।
तस्य वासो मुनीन्द्रेह नाकपृष्ठे न संशयः " ॥

हिरण्यदा[5]ने भार्गवरामं प्रति वसिष्ठवाक्यानि—

"सर्वरत्नानि निर्मथ्य तेजोराशिं समुत्थितम् ।
सुवर्णमेभ्यो विप्रेन्द्र रत्नं परम[6]मुत्तमम् ॥
एतस्मात्कारणाद्देवा गन्धर्वोरगराक्षसाः ।
मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत् ॥
मुकुटैरङ्गदयुतैरलंकारैः पृथग्विधैः ।
सुवर्णे विधृते तत्र विराजति भृगूत्तम ॥
तस्मात्सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम् ।
पृथिवीं गां च दत्त्वेह तथाऽन्यदपि किंचन ॥
विशिष्यते सुवर्णस्य दानं परमकं विभो ।
अक्षयं पावनं चैव सुवर्णा[7]मिति कथ्यते ॥
प्रयच्छ द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ।
सुवर्णमेव सर्वत्र दक्षिणासु विधीयते ॥

---

१ घ. °त्नशालि° । २ ख. °येत्ततः । ते° । ३ घ. °द्द्विजः । ते° । ४ क. ग. ° येद्बुधः । त° ।
५ ख. घ. °ने रा° । ६ क. ग. °मनुत्त° । ७ ख. घ. °र्णमतिरिच्यते ।

( दानप्रकरणम् ८ )

स्पष्टा सुशीतसलिला क्लमनाशिनी च प्राप्ते परस्य पथि पान्थसमूहभूमौ ।
यस्य प्रपा भवति सर्वजनस्य भोग्या धर्मान्नरः स खलु जीवति जीवलोके " ॥

इति भविष्योत्तरे प्रपादानविधिः ।

**महाभारते**—" तिला नित्यं प्रदातव्या यथाशक्ति द्विजातिभिः ।
नित्यदानात्सर्वकामांस्तिला निर्वर्तयन्त्युत ॥
घृतप्रदानेन तथा दीर्घं विन्दति जीवितम् ।
दत्त्वा प्रतिश्रयं लोके तथा दत्त्वैव चाभयम् ॥
तथा दत्त्वा क्षितिं विप्रो ब्रह्मलोके महीयते " ।

**नैवेशिकदाने कालिकापुराणम्**—

"कारयित्वा तथोद्वाहं श्रोत्रियाणां कुलेषु च ।
वेदविच्छीलवृत्तेषु द्विजेष्वेकादशस्वथ ॥
ततो गृहाणि रम्याणि कुर्यादेकादशैव तु ।
कारयित्वा तु धान्यैस्तु विविधैश्चैव पूजयेत् ॥
दासीगोमहिषीश्चापि शयनासनपादुकाः ।
भाजनानि विचित्राणि ताम्रमृन्मयकानि च ॥
पात्राणि भोजनार्थं च कृत्स्नं चोपस्करं च यत् ।
लोहं च काञ्चनं चैव वस्त्राणि तु विशेषतः ॥
संभृत्यैवं सुसंभारं[१] तद्गृहेषु नियोजयेत् ।
योजयेच्चैव वृत्त्यर्थं शक्तितो वा शतं शतम् ॥
पृथक्पृथग्लाङ्गलानां निर्वर्तनशतान्यपि ।
विषयं[२] खर्वटं[३] खेटं ग्रामार्धं[४] ग्राममेव वा ॥
योजयेत्सोममूर्तिं च चिन्त्य तेषु द्विजेषु वै ।
एकादशैव तास्तत्र दंपत्योः प्रतिमात्मकाः ॥
विचिन्त्य परया भक्त्या तद्गृहेषु निवेशयेत् ।
ग्राहयेदग्निहोत्राणि प्रविश्यैतद्द्विजोत्तमान्[५] ॥
विधिपूर्वं यथान्याय्यमात्मनः श्रेयसे नरः ।
अदुष्टकुलजानां च विधिरेष[६] चिरंतनः ॥
शिवशक्त्योर्विभक्तानां द्विजानां कारयेत्सदा ।
यश्च प्रेष्यान्निजान्मूढो[७] योजयेद्धव्यकव्ययोः ॥

---

१ क. °भारांस्तद्गृ° । २ ख. घ. °यं स्ववतं खे° । ३ क. खवटं । ४ ख. ग्रासार्धं, ग्रासमे° । घ. मासार्धं । ५ क. ग. °श्यैतान्द्विजो° । ६ क. ग. °ष सनात° । ७ घ. °ष्यान्द्विजा° ।

प्रदद्यादप्रतिहतं श्रद्धावानवलोकयन् ।
प्रत्यहं कारयेत्तस्य[1] भोजनं शक्तितो द्विजे ॥
अनेन विधिना यस्तु ग्रीष्मे शोषविनाशनम् ।
पानीयमुत्तमं दद्यात्तस्य पुण्यफलं शृणु ॥
कपिलाशतदानस्य सम्यग्दत्तस्य यत्फलम् ।
तत्पुण्यफलमाप्नोति सर्वदेवैस्तु पूजितः ॥
पूर्णचन्द्रप्रतीकाशं[2] विमानं सोऽधिरुह्य वै ।
याति देवेन्द्रभवनं पूज्यमानोऽप्सरोगणैः ॥
त्रिंशत्कोट्यो[3] हि वर्षाणां यक्षगन्धर्वसेवितः ।
पुण्यक्षयादिहाऽऽगत्य चतुर्वेदो द्विजो भवेत्[4] ॥
ततः परमिदं याति पुनरावृत्तिदुर्लभम् ।
प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना ॥
प्रत्यहं धर्मघटकः कर्पटावेष्टिताननः ।
ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः ॥
तस्य वोद्यापनं कार्यं मासि मासि नराधिप ।
मण्डकावेष्टिका[5]भिश्च पक्वान्नैः[6] सर्वकामिकैः ॥
उद्दिश्य शंकरं विष्णुं ब्रह्माणं वासवं तथा ।
सलिलं[7] प्रोक्षयित्वा तु मन्त्रेणानेन मानवः ॥
एष धर्मघटो[8] दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रसादा(दाना)त्सकला मम सन्तु मनोरथाः ॥ धर्मघटदानमन्त्रः ।
अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति ।
प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः ॥
धर्मकुम्भप्रदानेऽपि अशक्तो यः पुमान्भवेत् ।
तेनाश्वत्थतरोर्मूलं नित्यं सेव्यं यतात्मना ॥
अश्वत्थरूपी भगवान्प्रीयतां मे जनार्दनः ।
इत्युच्चार्य नमस्कृत्य प्रत्यहं पापनाशनम् ॥
यः करोति तरोर्मूले सेकं मासचतुष्टयम् ।
सोऽपि तत्फलमाप्नोति श्रुतिरेषा सनातनी ॥

---

१ क. ग. °त्तत्र भो° । २ ख. घ. °र्णकुम्भप्र° । ३ घ. °त्कोटीन्हि व° । ४ क. ग. °त् । अतः । ५ क. ग. °वेटका° । ६ ग. °न्नैः सार्व° । ७ क. ग. °लं मोक्ष° । ८ ख. धर्मः परो द° ।

दत्त्वा वल्कलजं वासो वसूनां लोकमाप्नुयात् ।
वस्त्रप्रदानात्तेजस्वी सर्वेषां प्रियदर्शनः ॥
भवेत्संभोगवांश्चैव स्त्रीणां चैव मनोहरः " ।

इति वस्त्रदानम् । अथोदकदानम्[1]—

**संवर्तः**—" वारिदस्तृप्तिमतुलां वितृष्णः सर्ववस्तुषु " ।

**भविष्योत्तरे**—

" श्रीकृष्ण उवाच—अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे ।
पुण्येऽह्नि विप्रकथिते ग्रहचन्द्रबलान्विते ॥
तडा[2]कं कारयेद्विद्वान्वनच्छायं मनोरमम् ।
पुरस्य मध्ये ह्यथ वा कान्तारे तोयवर्जिते ॥
देवतायतने[3] वाऽपि चित्रवृक्षतलेऽपि वा ।
सुशीतलतरं रम्यं विचित्रासनसंयुतम् ॥
कारयेन्मण्डपं दिव्यं शीतातपसहं दृढम् ।
तन्मध्ये स्थापयेद्द्र[4]व्यान्मणीन्कुम्भांश्च शोभनान् ॥
अकालमू[5]ला[6]न्कवकान्वस्त्रेणाऽऽवेष्टिताननान् ।
ब्राह्मणः शीलसंपन्नो भृतिं दत्त्वा यथोचिताम् ॥
प्रपापालः प्रकर्तव्यो बहुपुत्रपरिच्छदः ।
पानीयपानमश्रान्तो यः कारयति मानवान् ॥
एवंविधां प्रपां कृत्वा शुभेऽह्नि विधिपूर्वकम् ।
यथाशक्त्या नरश्रे[7]ष्ठः प्रारम्भे भोजयेद्द्विजान् ॥
ततश्चोत्सर्जयेद्विद्वान्मन्त्रेणानेन मानवः ।
प्रपेयं सर्वसामान्या[8] भूतेभ्यः प्रतिपादिता ॥
अस्याः प्रदानात्पितरस्तृप्यन्तु[9] च पितामहाः ।
अनिवार्यं ततो देयं जलं मासचतुष्टयम् ॥
त्रिपक्षं वा महाराज जीवानां जीवनं परम् ।
गन्धाढ्यं सरसं शीतं शोभने भाजने स्थितम् ॥

१ क. ग. °म् । नारदः । वा° । २ क. ग. °डागं का° । ३ क. ग. °पि चैत्यवृ° । ४ ख. °द्भक्त्या मणी° । ५ क. °मूकान्क° । घ. °मूलं कव° । ६ ग. °लार्कबका° । ७ क. ग. घ. °श्रेष्ठ प्रा° । ८ क. ख. ग. °न्याह्नूते° । ९ क. ग. °न्तु सपि° ।

बृहस्पतिः—" अन्नदानं गुणकरं सर्वदानाधिकं स्मृतम् ।
अन्नात्प्राणप्रजननं नृणां संजायते सदा ॥
प्राणाप्यायनमात्रं तु यो विप्राय प्रयच्छति ।
दुर्भिक्षे तु विशेषेण स लभेताक्षयां[1] दिवम् ॥
हेमरत्नाम्बरयुतोऽभुञ्जानो म्रियते नरः ।
अश्नन्विनाऽप्यलंकारं जीर्णवस्त्रोऽपि जीवति ॥
तस्मात्प्रदद्याद्विप्रेभ्यः संस्कृतान्नं सदक्षिणम् ।
तेनेह कीर्तिमाप्नोति स्वर्गं चानन्तकं तथा " ॥

आदित्यपुराणे—" अन्नदानात्परं नास्ति न भूतं न भविष्यति ।
पुत्रं प्रजां पशून्मेधां स्त्रियः कामांश्च सर्वशः ॥
सर्वं चान्नप्रदानेन लभते नात्र संशयः ।
आदरेण तु भक्त्या च यदन्नमुपदीयते ॥
तत्प्रीणयति गात्राणि नामृतं मानवर्जितम् ।
दुर्लभस्तु मुदा दाता मुदा भोक्ता च दुर्लभः ॥
मुदा दाता च भोक्ता च तावुभौ स्वर्गगामिनौ(णौ)[2] ।
यो दद्यादप्रियेणान्नं[3] यश्चान्नं नाभिनन्दति ॥
तावुभौ नरके मग्नौ वसेतां शरदां शतम् " ।

विष्णुधर्मोत्तरे—" दानानामुत्तमं दानं वस्त्रदानं प्रकीर्तितम् ।
वासो हि सर्वदै(दे)वत्यं[4] सर्वसायुज्यमश्नुते[5] ॥
वस्त्रदाता सुवेशः स्याद्रूपद्रविणसंयुतः ।
नीलीरक्तं[6] तथा शीर्णं न देयं ब्राह्मणस्य तु ॥
देयं न चाप्युपहतं बहुपुण्यमभीप्सता ।
दत्त्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते ॥
दत्त्वा सरोममपि तत्ततो दशगुणं लभेत्[7] ।
आविकं वसनं दत्त्वा भृगूणां लोकमाप्नुयात् ॥
छागं दत्त्वा चाङ्गिरसं क्षौमं दत्त्वा बृहस्पतेः ।
वसूनां लोकमाप्नोति कुशकौशेयवाससी ॥
कृमिजं च तथा दत्त्वा सोमलोके महीयते ।
अग्निष्टोममवाप्नोति दत्त्वैव मृगलोमिकम् ॥

१ क. ग. घ. °क्षयं दि°। २ ख. °र्गवासिनौ । ३ ख. °न्नं नाभिनन्दति तावुभौ । ता°। ४ घ. °वप्रायोज्यमुच्यते । ५ ख. °सायोज्यमुच्यते । ६ ग. नीलं र° । ७ ग. घ. भवेत् ।

( दानप्रकरणम् ८ )

"नारद उवाच—नान्नदानात्परं दानं किंचिदस्ति नरेश्वर ।
अन्नेन धार्यते कृत्स्नं चराचरमिदं जगत् ॥
अन्नं वै प्राणिनां प्राणा इत्युवाच प्रजापतिः ।
तस्मादन्नप्रदो राजन्प्राणदः प्रोच्यते बुधैः ॥
अन्नदः पशुमाँल्लोके धनवान्रूपवानपि ।
आयुष्मान्बलवांश्चैव सुखी च प्रेत्य जायते ॥
नित्यं ददाति यश्चान्नमतिथिभ्यः समाहितः ।
स याति ब्रह्मसालोक्यमेवमाह पराशरः ॥
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति साधवः ॥
कृत्वाऽपि सुमहत्पापं यः पश्चादन्नदो भवेत् ।
विमुक्तः सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥
आशंसन्तीह पितरः सुवृष्टिमिव कर्षकाः[1] ।
अस्माकमिह[2] पुत्रो वा पौत्रो वाऽन्नं प्रदास्यति ॥
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तिने ।
श्रान्तायादृष्टपूर्वाय स पुण्यां गतिमाप्नुयात् ॥
न पृच्छेद्गोत्रचरणं न स्वाध्यायं श्रुतं तथा ।
याचितो[3] ब्राह्मणेनान्नं दद्यादेवाविचारयन्[4] ॥
दुर्वृत्तः साधुवृत्तो वा मूर्खो वा यदि पण्डितः ।
यः प्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥
अदृष्टं दृष्टपूर्वं वाऽमित्रं वा[5] सुहृदं तथा ।
ब्राह्मणं भोजयेन्नित्यं शान्तं शीलसमन्वितम् ॥
यस्य ह्यन्नमुपाश्नाति ब्राह्मणानां शतं सताम् ।
हृष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत् ॥
भोजयित्वा दश शतं नरो वेदविदां नृप ।
न्यायविद्धर्मविदुषां स्मृतिभाष्यविदां तथा ॥
न याति नरकं घोरं संसारं च न सेवते ।
ब्राह्मणानां सहस्राणि दश भोज्यानि भारत ॥
नरोऽधर्मात्प्रमुच्येत पापेष्वपि रतः सदा " ॥

---

१ क. ख. ग. कार्षिकः । २ ख. घ. °कमपि पु°। ३ क. ग. °चितं ब्रा° । ४ क. ख ग. °चारितः । दु° । ५ क. ग. वा मित्रमेव वा । ब्रा° ।

दिवि पृष्ठे[1] अरोचताग्निर्वैश्वानरो मतान् ।
ज्योतिषा बाधते तमः ॥
कामो भूतस्य भव्यस्य सम्राडेको विराजति । इत्यन्तो मन्त्रः ।
एवमेतेन विधिना[2] ये प्रयच्छन्ति दीपकम् ।
विस्तीर्णे विपुले पात्रे[3] घृतकुम्भं निवेशितम्[4] ॥
यान्ति ते ब्रह्मसदनं विमानेनार्कतेजसा ।
तिष्ठन्ति द्योतमानास्ते यावदाभूमिसंप्लवम् ॥
घृतेन दीपो दातव्यो राजंस्तैलेन वा पुनः ।
वसामज्जादिभिर्दीपो न तु देयः कथं चन[5][6] ॥
दीपतैलेन कर्तव्यं न तु कर्म विजानता ।
निर्वापणं च दीपस्य हिंसनं च विगर्हितम् ॥
यः कुर्यात्तेन कर्माणि स्यादसौ[7] पुष्पितेक्षणः ।
दीपहर्ता भवेदन्धः काणो निर्वापको भवेत्[8] ॥
पद्मसूत्रोत्थितां वर्तिं गन्धतैलेन दीपकम् ।
नीरोगः सुभगश्चैव दत्त्वा भवति मानवः ॥
प्रज्वाल्य देवदेवस्य कर्पूरेण तु दीपकम् ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् " ॥

इति दीपदानम् । अथाश्वदानम्—

**देवीपुराणे**—" अश्वं वा यदि वा युग्यं शोभने वाऽथ पादुके ।
ददाति यः प्रदानं वै ब्राह्मणेभ्यः सुसंयतः ॥
तस्य दिव्यानि यानानि रथध्वजपताकिनः ।
दुष्टः पन्था न चैवेह भवत्येव कदा चन " ॥

**स्कन्दपुराणे**—" अश्वं यस्तु प्रयच्छेत हेमचित्रं[9] सुलक्षणम् ।
स तेन कर्मणा देवि गान्धर्वं[10] लोकमश्नुते " ॥

**अन्नदाने संवर्तः**—" अन्नदस्तु सुखी श्रीमान्सुतृप्तः सर्वकर्मसु " ।
**महाभारते**—

१ क. ग. घ. पृष्टो अ° । २ ख. घ. °ना यः प्रयच्छति दी° । ३ ख. °त्रे कृत° । ४ घ. नियोजित° । ५ क. ग. कदाच । ६ क. ग. न । न दीपो दीपतैलेन न तु । ७ ख. °सौ तेन पुष्पितः । दी° ८ ग. °तू । ब्रह्मसू° । ९ ग. °त्रं सल° । १० ख. गान्धारं ।

**कार्तिकनिर्णयश्च भविष्योत्तरे[1] बोद्धव्यः ।**

**तद्यथा**—“ विष्णोरायतने ये तु सहस्रं परिदीपकान् ॥
प्रज्वालयन्त्यनुदिनं दिवारात्रमनिर्वृताः ।
तामिस्रमाश्वयुक्पक्षं शुक्लपक्षं तु कार्तिकम् ” इति ॥

**दीपदाने मन्त्रः**—“ दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ” इति ॥

**तथा**—“ यदा यदा नरश्रेष्ठ पुण्यकालः प्रपद्यते ।
संक्रान्तिसूर्यग्रहणे चन्द्रे पर्वणि वैधृते ॥
उत्तरे त्वयने प्राप्ते दक्षिणे[2] त्वयने तथा ।
एकादश्यां शुक्लपक्षे चतुर्दश्यां दिनक्षये ॥
सप्तम्यामथ षष्ठ्यां वा स्नात्वा व्रतपरो नरः ।
भगवद्भूमि[3]देवेभ्यः प्रयच्छेत्प्रयतो गणे ॥
घृतकुम्भे च वस्त्रेण[4] प्रज्वलन्तं प्रदीपकम् ” ।

**गणे समुदाये वर्तमान[5] इत्यर्थः ।**

**तथा**—“ सूर्याय रक्तवस्त्रेण पूर्णवर्ति घृतेन ताम् ।
चतुष्प्रस्थैः प्रज्वलन्तीं[6] मन्त्रेणानेन दापयेत् ॥
तद्विष्णोरिति मन्त्रेण वर्ति दद्यात्सदैव हि ।
पीतवस्त्रेण कृष्णाय श्वेतवस्त्रेण शूलिने ॥
कौसुम्भ[7]घृतवस्त्रेण गौरीमुद्दिश्य दापयेत् ।
लाक्षारक्तेन दुर्गायै पूर्णवर्ति प्रबोधयेत् ॥
नेत्रपट्टेन मधुना घृतेन मधुकूपके ।
अर्चिते[8] च सिते चैव ललितायै प्रबोधयेत् ॥
मन्त्रेणानेन राजेन्द्र तं निशामय वैदिकान् ।

आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
अग्ने त्वां कामया गिरा ॥ [ ऋ० सं० अ० ६।८।३६ ]
ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रं घर्ममीमहे ॥

---

१ क. ग. °त्तराद्बोद्ध° । २ घ. °णे विषुवे तथा । स° ३ क. °वन्भूमि° । ४ क. °स्त्रे च प्र° ।
५ घ. °मानेभ्य इ° । ६ ग. °लन्तं म° । ७ क. °म्भपीत° । ८ घ. चर्चिते चै° ।

आस्फोटयन्ति पितरः प्रवल्गन्ति पितामहाः ।
भूमिदोऽस्मत्कुले जातः सोऽस्मान्संतारयिष्यति " ॥

आदित्यपुराणे" य एतां दक्षिणां दद्यात्पृथिवीं पृथिवीपतिः ।
पुनश्च जननं प्राप्य भवेत्स पृथिवीपतिः ॥
यथा दानं तथा भोग इति धर्मेषु निश्चयः ।
सङ्ग्रामे वा तनुं जह्याद्दद्याद्वा पृथिवीमिमाम् ॥
इत्येतां क्षत्रबन्धूनां वदन्ति परमाशिषम् ।
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ॥
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ।
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ॥
दानं वाऽप्यथ वा ज्ञानं नाम्नोऽस्याः परमं प्रियम् ।
यस्तु गोचर्ममात्रां वै प्रयच्छति वसुंधराम् ॥
विमुक्तः सर्वपापेभ्यो विष्णुलोकं स गच्छति ।
षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः ॥
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ।
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ॥
श्वविष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति " ।

मत्स्यपुराणे—" यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्षितः ॥
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ।
सुवर्णानां सहस्रेण लभेद्दत्तेन यत्फलम् ॥
गोचर्मभूमिमात्रेण[२] तत्फलं तु विधीयते ।

महाभारते—" न चोपरां न निर्दग्धां महीं दद्यात्कथं चन ॥
न श्मशानपरीतां च न च पापनिवेशिताम् " ॥

इति भूमिदानम् ।

दीपदाने संवर्तः—" देवागारे द्विजानां वा दीपं दत्त्वा चतुष्पथे ।
मेधावी ज्ञानसंपन्नश्चक्षुष्मांश्च सदा भवेत् " ॥

विष्णुधर्मेषु[३]—" उच्चैः प्रदीपमाकाशे यो दद्यात्कार्तिके नरः ।
स सर्वं कुलमुद्धृत्य विष्णुलोकमवाप्नुयात् " ॥

---

१ ग. पुनः सुज° । २ ग. घ. °मिदानेन त° । ३ क. ख. ग. °धर्माः । उ° ।

( दानप्रकरणम् ८ )

षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
दानानामपि सर्वेषां भूमिदानमिहोच्यते ।
अचला ह्यक्षया भूमिः सर्वान्कामान्प्रयच्छति ॥
भूमिदः स्वर्गमारुह्य शाश्वतीरेधते समाः ।
पुनर्जन्म च संप्राप्य भवेद्भूमिपतिर्ध्रुवम् ॥
यथा भूमिः सदा देवी दातारं कुरुते पतिम् ।
एवं सदक्षिणा दत्ता कुरुते गौर्जनाधिपम् ॥
अपि पापकृतं प्राप्य प्रतिगृह्णीत भूमिदम् ।
महीं ददत्पवित्रः स्यात्पुण्या हि जगती यतः ॥
नाम वै प्रियदत्तेति गुह्यमेतत्सनातनम् ।
तदाऽस्याः सततं प्रीत्यै कीर्तनीयं[1] प्रयच्छता ॥
यत्किंचित्कुरुते पापं पुरुषो वृत्तिकर्षितः ।
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥
सुवर्णं रजतं ताम्रं मणिमुक्तावसूनि च ।
सर्वानेतान्महाप्राज्ञ ददाति वसुधां ददत् ॥
फालकृष्टां महीं दत्त्वा सोदकां च फलान्विताम् ।
सोदकं वाऽपि शरणं प्राप्नोति परमं पदम् ॥
रत्नोपकीर्णां वसुधां यो ददाति द्विजातये ।
विमुक्तः किल्बिषैः सर्वैः स्वर्गलोके महीयते ॥
इक्षुभिः सहितां भूमिं यवगोधूमशालिभिः ।
ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पन्ति ते यमम् ॥
सर्वकामदुघां[2] भूमिं सर्वसस्यसमन्विताम् ।
यो ददाति द्विजेन्द्राय ब्रह्मलोकं स गच्छति ॥
भूमिदानं नरः कुर्यान्मुच्यते सर्वतो भयात् ।
न भूप भूमिदानाद्धि दानमन्यद्विशिष्यते ॥
पुण्यां सर्वरसां भूमिं यो ददाति नरर्षभः ।
न तस्य लोकाः क्षीयन्ते भूमिदस्य महात्मनः ॥
कृशाय कृशभृत्याय वृत्तिक्षीणाय सीदते ।
भूमिं वृत्तिकरीं दत्त्वा[3] सत्री भवति मानवः ॥

१ ख. °तं प्रेत्य की° । २ ख. घ. °धां धेनुं स° । ३ क. ख. ग. कृत्वा ।

अत एव—" मातापितृविहीनं तु संस्कारोद्वाहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते " इति ।
" न तच्छ्रेयोऽग्निहोत्रेण नाश्वमेधेन नान्यथा ॥
यच्छ्रेयः प्राप्यते प्रेत्य विप्रेण स्थापितेन तु " इ[1]ति ॥

स्थापितेन भवनादिदानेन प्रतिष्ठापितेनेत्यर्थः ।

दक्षः—" सुवर्णमेव स्वर्णमस्य च देशकालपात्रसुवर्णपरि-
माणाच्च फलवि[2]शेषः " ।

[3]तथा—" उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः "
[ अ० ८।६।२ ] इत्यमृतत्वं मुक्तिर्दर्शिता ॥

तथा—" स्वर्णधुर्यान्दत्त्वा स्वर्गे महीयते " इति ।

गर्गः—" भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् " इति ॥

एतच्च सुवर्णदानेऽपि वेदितव्यम् । अलंकारे तु फलविशेषः ।
" अलंकृतस्त्वलंकारं दत्त्वा स्वर्गे महीयते " इति ।

धुरमर्हतीति धुर्यः ।
" अनडुद्दः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् " इति ।

अत्रापि पात्रादिदेशकालविशेषाद्वित्तादिविशेषाच्च फलविशेषः । अत्र विष्णुधर्मेषु—

" भगवानुवाच—छत्रप्रदानेन गृहं वरिष्ठं रथं तथोपानहसंप्रदानात् ।
धुर्यप्रदानेन गवां तथैव लोकानवाप्नोति पुरंदरस्य ॥
स्वर्गीयमप्याह हिरण्यदानं तथा वरिष्ठं कनकप्रदानम् ।
नैवेशिकं सर्वगुणोपपन्नं प्रयच्छते यः पुरुषो द्विजाय ॥
स्वाध्यायचारित्र्यगुणान्विताय तस्यापि लोकाः प्रवरा भवन्ति ।
यो ब्रह्मदेयां प्रददाति कन्यां भूमिप्रदानं च करोति विप्रे ॥
वस्त्रान्नदानं च तथा विशिष्टं स शक्रलोकं लभते दुरापम् ।
भूदानेन समं दानं न भूतं न भविष्यति ।
इति धर्मविदः प्राहुस्तन्मे निगदतः शृणु ॥

---

१ ख. घ. °ति । द° । २ क. ख. °शेषता । यथा । ३ ग. घ. यथा ।

किं च—

**भूदीपान्नाश्ववस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ॥**
**नैवेशिंकस्वर्णधुर्यान्दत्त्वा स्वर्गे महीयते ॥ २१० ॥**

भूमिदीपादिदानेन स्वर्गमाप्नोतीति वाक्यार्थः । भूश्च सस्यवती फलप्रदा वा देया । तद्द्वारेणैव तद्गुरुत्वम् ।

" भूमिं सस्यवतीं श्रेष्ठां दत्त्वा स्वर्गे महीयते " इति संवर्तः ।

पापक्षयार्थमपि भवति । यथाऽऽह बृहस्पतिः—

" यत्किंचित्कुरुते पापं जन्मप्रभृति मानवः ।
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥
सप्तहस्तेन दण्डेन त्रिंशद्दण्डा निवर्तनम् ।
दश तानेव गोचर्म दत्त्वा स्वर्गे महीयते " ॥

चर्ममात्रगोप्रदानेनापि स्वर्गप्राप्तिः । "दिव्यं वर्षशतं यावद्भूमिदः स्वर्गमाप्नोति । दिव्यं वर्षशतं सार्धं तथा " इति, तद्द्गुण्यादितारतम्यादिति । यत्पुनर्मनुनोक्तम्—" भूमिदो भूमिमाप्नोति " इति, तत्स्वर्गच्युताभिप्रायेण न्यूनात्मदानाभिप्रायेण वा । तद्दानस्य वैश्वरूप्यात् । अत एव—

" सुवर्णं रजतं ताम्रं मणिमुक्तावसूनि च ।
सर्वमेतद्भवेद्दत्तं वसुधां यः प्रयच्छति " इति ॥

नच सकलवसुधाभिप्रायेणोच्यते । तस्या अशक्यत्वात् । एवं प्रदीपादिदानेऽपि पात्रविशेषादावृत्तौ वा स्वर्गप्राप्तिः ।

" पात्रस्य हि विशेषेण श्रद्दधानतयाऽपि च ।
अल्पं वा बहु वा प्रेत्य दानस्याऽऽप्नोति तत्फलम् "

इति वचनात् । अन्यथा—

" वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥
वासोदश्चन्द्रसालोक्यं सूर्यसालोक्यमश्वदः " इति ।

वस्त्रादिविशेषाच्च फलविशेषो द्वित्रादिसंख्यातश्च । क्षीणवृत्तेरायातस्यास्मिन्भवने स्थीयतामिति प्रतिश्रयः । निवेशार्थं कन्यादि दीयत इति नैवेशिकम् ।

---

१ ङ. °शिकं स्वर्णधुर्यं दत्त्वा । २ ग. °द्गुरवः । भू° । ३ ग. °ते । गोचर्ममात्रदा° । ४ क. ग. °ण्यात्तार° । ५ ग. वैस्वरू° । ६ क. ख. °द्भूदान° । ७ क. ख. प्रीत्य । ८ क. ग °न्या दी° ।

आरोग्यशालां कुरुते[1] महौषधिपरिच्छदाम् ।
विदग्धवैद्यसंयुक्तां घृतान्नमधुसंयुताम् ॥
वैद्यस्तु शास्त्रवित्प्राज्ञो दृष्टौषधिपरम्परः ।
ओषधीमूलपर्णज्ञः[2] समुद्धरणकालवित् ॥
रसवीर्यविपाकज्ञः शालिमांसौषधीगणे+ ।
योगविद्देहिनां देहं यो धिया प्रविशेद्बुधः ॥
धातुपथ्यामयज्ञश्च[3] निदानविदतन्द्रितः ।
व्याधीनां पूर्वलिङ्गज्ञस्तदुत्तरविधानवित् " ॥
*देशकालविधानज्ञश्चिकित्सामयवित्तथा ।
अष्टाङ्गायुर्वेदवेत्ता मुष्टियोगविधानवित् ॥
एवंविधः शुभो वैद्यो भवेद्यत्राभियोजितः ।
आरोग्यशालामेवं तु कुर्याद्यो धर्मसंश्रयः ॥
स पुमान्धार्मिको लोके स कृतार्थः स[4] शुद्धिमान् ।
सम्यगारोग्यशालायामौषधैः[5] स्नेहपाचनैः ॥
व्याधितं नीरुजीकृत्य अप्येकं करुणायुतः ।
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुतः ॥
आढ्यो वित्तानुसारेण दरिद्रः फलभाग्भवेत् ।
दरिद्रस्य कुतः शाला आरोग्याय भिषक्तथा[6] ॥
अपि मूलेन[7] केनापि[8] चन्दनाद्यैरथापि वा ।
स्वस्थीकृते[9] लभेन्मर्त्यो[10] पूर्वोक्तं लोकमव्ययम् ॥
वातपित्तकफाद्यानां चयापचयभेदिनाम् ।
यस्तु स्वल्पाभ्युपायेन मोक्षयेद्व्याधिपीडितान् ॥
सोऽपि याति शुभाँल्लोकाँनवाप्यान्यज्ञयाजिभिः[11] " ।
" शल्यं शालक्यं कायचिकित्सा भूतविद्या कौमारप्रभृ[12]-
त्यमश्वतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रम् "

इति सुश्रुतोक्तान्यष्टाङ्गान्यायुर्वेदस्य । इत्यारोग्यदानम् ॥ २०९ ॥

---

+ इतः परं सार्धश्लोको न विद्यते ग. पुस्तके । * एतच्छ्लोको न विद्यते क. ख. ग. पुस्तकेषु ।

---

१ क. ग. कुर्वीत सर्वौष° । २ क. ग. °लमन्त्रज्ञः । ३ ख. °श्च विधान° । ४ ग. स बुद्धि° । ५ ख. ग. °यामोष° । ६ ख. °पक्तुवान् । अ° । ७ क. ग. मूल्येन । ८ घ. °पि मर्दना° । ९ घ. °हस्त ट° । १० ल. ग. घ. °न्मर्त्यः पू° ११ क. °नव्याप्या° । १२ घ. °रभृ° ।

घृतं च क्षीरकुम्भाश्च घृतधेनुस्तथैव च ।
श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिते ॥
मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषी ।
हृषीकेशप्रीणनाय लवणं सगुडौदनम् ॥
तिलास्तुरङ्गवृषभदधिताम्ररसादिकम् ।
प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः ॥
रजतं कनकं दीपा मणिमुक्ताफलादिकम् ।
दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः ॥
खरोष्ट्राश्वतरा नागाः शकटोक्षमजाविकम् ।
दातव्यं केशवप्रीत्यै मासि मार्गशिरे नरैः ॥
प्रासादनगरादीनि गृहप्रावरणानि च ।
नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः ॥
दासीदासमलंकारमन्नं षड्रससंयुतम् ।
पुरुषोत्तमतुष्ट्यर्थं पौषे देयानि यत्नतः ॥
अथवा चतुर्थपादः प्रदेयं सार्वकामिकम् ।
यद्यदिष्टतमं किंचिद्यच्चाप्यस्ति शुभं गृहे ॥
तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः " इति ॥ २०८ ॥

गोप्रदानप्रसङ्गाद्दानान्युक्तानि, प्रकृतमुच्यते—

**श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ॥**
**पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥ २०९ ॥**

श्रान्तसंवाहनादिकं प्रत्येकं गोदानेन फलतः समं भवति । श्रान्तः खिन्नस्तस्य संवाहनं श्रमापनयनम् । रोगिपरिचर्या चिकित्सादि । प्रसिद्धमन्यत् । पादशौचद्विजोच्छिष्टमार्जने समोत्तमवर्णविषये ।

यमः—" देवमाल्यापनयनं देवागारसमूहनम् ।
स्नापनं सर्वदेवानां गोप्रदानसमं मतम् " ॥

नन्दिपुराणे—धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः ।
अतस्त्वारोग्यदानेन नरो भवति सर्वदः ॥

---

१ क. घ. °तं सक्षी° । २ ग. तिलांस्तु° । ३ ग. °दिकान् । प्री° । ४ घ. बुधैः । ५ क. °मथाऽऽवि° । ६ घ. °र्थं प्रदेयं सर्वं° । ७ क. ग. प्रथमं सा° । ८ ख. °यं सर्व° । ९ क. ग. °मं स्मृत° ।

देवीब्रह्मेशसूर्यान्वा विष्णुं वाऽथ यथाविधि ।
स्वभाववृत्तसंपन्ने पूजयित्वा द्विजोत्तमे ॥
दातव्याऽलंकृता धेनुः कामक्रोधविवर्जिते ।
अयाचके सदाचारे विनीते विनयान्विते ॥
गोप्रदानाल्लभेत्कामान्स्वे[1] स्वे लोके मनोरमान् ।

तथा—" आषाढे तोयधेनुः स्याद्धेनुर्भाद्रपदे सदा ।
माघे तु तिलधेनुः स्याद्यां दत्त्वा लभते हितम् ॥
माघे मासि तिलान्यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्त्वसमाकीर्णं नरकं न स पश्यति " ॥

यमः—" महापातकसंघातः कामतो वाऽप्यकामतः ।
शुद्धिं तस्य प्रवक्ष्यामि स्वर्गसाधनमेव च ॥
शुक्लैः कृष्णैस्तथा लब्धैर्द्वात्रिंशदङ्गुलोच्छ्रितः ।
राशिस्तिलैः समे देशे कर्तव्यः पुरुषायतः[2] ॥
प्रतिमाऽष्टाङ्गुलोत्क्षेप्या सौवर्णी विभवे सति ।
क्षौद्रेण पयसा दध्ना घृतेनाऽऽपूरयेद्घटान् ॥
यथाविभवविस्तारं ब्राह्मणे श्रोत्रियेऽर्थिनि ।
दद्यान्माघेऽथ वैशाखे विषुवे चोत्तरायणे ॥
यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति " ।

वामनपुराणे—" माघे मासि तिला देयास्तिलधेनुश्च दानव ।
इध्मेन्धनादयश्चैव माधवप्रीणनाय वै ॥
फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् ।
गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभ ॥
चैत्रे विचित्रवस्त्राणि शयनान्यासनानि च ।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ ॥
गन्धांश्च[3] माल्यानि तथा वैशाखे सुरभीणि च ।
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥
उदकुम्भाम्बुधेनुं च तालवृन्तं सचन्दनम् ।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिः सदा ॥
उपानद्युगलं छत्रं लवणामलकानि च ।
आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः ॥

---

१ घ. °मान्स्वर्गे लो° । २ ख. °षायुतः । ३ ख. °न्धानि मा° ।

इति भविष्योत्तरे नक्षत्रदानविधिः ।

अथ मासदानानि ।

**विष्णुः**–"आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा रूपभाग्भवति । अस्मिन्नेव मासि प्रत्यहं गोरसैर्ब्राह्मणान्भोजयित्वाऽऽरोग्यभाग्भवति । माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कुल्माषं ब्राह्मणान्भोजयित्वा च दीप्ताग्नित्वमवाप्नोति "।

**तथा**—" घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये ।
प्रीणयित्वाऽश्विनौ देवौ रूपभागभिजायते ॥
तिलप्रदः प्रजामिष्टां पुरुषः खलु विन्दति ।
माघे मासि विशेषेण तत्तमिस्रे विशेषतः " ॥

**यमः**—" कृसरं भोजयित्वा तु स्वशक्त्या शिशिरे द्विजान् ।
दीप्ताग्नित्वमवाप्नोति स्वर्गलोकं च गच्छति ॥
मासि मासि च रेवत्यां ब्राह्मणान्घृतपायसम् ।
सदक्षिणं भोजयित्वा रूपभागभिजायते " ॥

**आदित्यपुराणे**—" ज्येष्ठे मासि तिलान्दत्त्वा पौर्णमास्यां विशेषतः ।
अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः " ॥

**देवीपुराणे**—" धेनुं तिलमयीं माघ्यां दद्याद्यश्चोत्तरायणे ।
विचित्राणि च वस्त्राणि चैत्रे दद्याद्द्विजोत्तमः ॥
वैशाखे यवगोधूमाञ्ज्येष्ठे तोयभृतान्घटान् ।
आषाढे चन्दनं देयं सकर्पूरं महाफलम् ॥
नवनीतं नभोमासि च्छत्रं प्रोष्ठपदे मतम् ।
गुडशर्करवर्णाढ्याँल्लड्डुकानाश्विने मुने ॥
दीपदानं महापुण्यं कार्तिके यः प्रयच्छति ।
सर्वान्कामानवाप्नोति क्रमान्मार्गाद्युदाहृतान् ॥
धेनुं पौषे [1]घृतमयीं माघे तिलमयीं तथा ।
ज्येष्ठे तोयमयीं दद्याद्घृतवत्सां महाफलाम् ॥
सुरूपां श्रावणे दद्याद्गां महाफलदायिकाम् ।
सर्वहेममयैः शृङ्गै रौप्यपादा उदाहृताः ॥
कांस्यपात्राः सघण्टास्तु किङ्किणीभिः सुशोभिताः ।
[2]सयुगाः सस्रजो वत्सा दातव्या विधिना मुने ॥

१ ख. घृतां दद्यान्माघे । २ क. ग. सगुडाः ।

कुलवृत्तेन संपन्ने ब्राह्मणे वेदपारगे ।
प्रदाय जायते प्रेत्य कुले[1] स बहुगोधने ॥
पुत्रपौत्रैः परिवृतः पशुमान्धनवांस्तथा[2] ।
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ॥
दत्त्वोत्तरास्वषाढासु सर्वान्कामानवाप्नुयात् ।
दुग्धं त्वभिजिता योगे दत्त्वा घृतमधुप्लुतम् ॥
धर्मविद्भ्यो मनीषिभ्यः स्वर्गे वसति पुण्यभाक् ।
श्रवणे पुस्तकं श्रेष्ठं प्रददातीह यो नरः ॥
स्वेच्छया याति यानेन सर्वाँल्लोकानसंवृतान् ।
गोयुगं च धनिष्ठासु दत्त्वा विप्राय मानवः ॥
सर्वात्रसानवाप्नोति यत्र यत्रेह जायते ।
तथा शतभिषायोगे दत्त्वा सागुरुचन्दनम् ॥
प्राप्नोत्यप्सरसां लोकान्प्रेत्य गन्धांश्च शोभनान् ।
पूर्वभद्रपदा[3]योग राजमाषान्प्रदापयेत् ॥
सर्वभक्ष्यफलोपेतः स वै प्रेत्य सुखी भवेत् ।
औरभ्रमुत्तरायोगे सवस्त्रं यः प्रयच्छति ॥
पितॄन्प्रीणाति सकलान्प्रेत्य चाऽऽनन्त्यमश्नुते ।
कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति ॥
सा प्रेत्य कामानादाय दातारमुपतिष्ठति ।
रथमश्वसमायुक्तं दत्त्वाऽश्विन्यां नरोत्तमः ॥
हस्त्यश्वरथसंपन्ने वर्चस्वी जायते कुले ।
भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ॥
गाः सुप्रसूताः प्राप्नोति नरः प्रेत्य यशस्तथा ।
इत्येष दक्षिणोद्देशः प्रोक्तो नक्षत्रयोगतः ॥
देवक्या नारदेनेह मया च कथितस्तव ।
सर्वपापप्रशमनः सर्वोपद्रवनाशनः ॥
न चात्र कालनियमो न नक्षत्रक्रमस्तथा ।
वित्तं श्रद्धा च राजेन्द्र कारणं चात्र कथ्यते ॥

यद्यत्र ते भगवता कमलासनस्य पुत्रेण दानमुदितं प्रसमीक्ष्य वेदान् ।
तद्यो ददाति विभवे सति साधुवृत्ते किं तेन पार्थ न कृतं भवतीह लोके " ॥

---

१ घ. 'ले स्वबहुशाध° । २ क. ख. 'था । तद° । ३ ग. 'र्वभाद्र° ।

( दानप्रकरणम् ८ )

पुष्ये च काञ्चनं दत्त्वा कृतं चाकृतमेव[1] च ।
अनालोकेषु लोकेषु सोमवत्स विराजते ॥
अश्लेषासु तथा रौप्यं यः[2] सुरूपं प्रयच्छति ।
स सर्वभयनिर्मुक्तः शास्त्रवानभिजायते ॥
मघासु तिलपूर्णानि वर्धमानानि मानवः ।
प्रदाय पशुमांश्चैव पुत्रवांश्चाभिजायते ॥
फल्गुनी[3]पर्वसमये वडवां द्विजपुंगवे ।
दत्त्वा पुण्यकृतां लोकान्प्राप्नोति सुरसेवितान् ॥
उत्तराफल्गुनीयोगे दत्त्वा सौवर्णपङ्कजम् ।
सूर्यलोकमवाप्नोति सर्वबाधाविवर्जितः ॥
हस्ते तु हस्तिनं दत्त्वा काञ्चनं शक्तितः कृतम् ।
प्रयाति शक्रसदनं वरवारणै[4]र्भूर्गतः ॥
चित्रासु वृषभं दत्त्वा पुण्यगन्धांश्च भारत ।
चरत्यप्सरसां लोके मोदते नन्दने वने ॥
स्वातिष्वथ धनं दत्त्वा यदभीष्टमिहाऽऽत्मनः ।
प्राप्नोति सुशुभाँल्लोकानिह लोके महद्यशः ॥
विशाखासु महाराज धुरंधरविभूषितम् ।
सोपासङ्गं च शकटं धान्यवस्त्रादिसंयुतम् ॥
दत्त्वा प्रीणाति स पितॄन्प्रेत्य चाऽऽनन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति रौरवादीनि मानवः ॥
दत्त्वा यथेष्टं विप्रेभ्यो गतिमिष्टां स विन्दति[5] ।
कम्बलाननुराधासु दत्त्वा प्रावरणानि च ॥
स्वर्गे वर्षशतं साग्रमास्ते सुरगणैर्वृतः ।
कालशाकं च विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ॥
ज्येष्ठासु ज्येष्ठतामेति गतिमिष्टां च विन्दति ।
मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः ॥
पितॄन्प्रीणयते सर्वान्गतिमाप्नोत्यनुत्तमाम् ।
अथ पूर्वास्वषाढासु दधिपात्राणि मानवः ॥

---

१ ख. °ते । आश्ले° । २ ख. घ. यः स्वरू° । ३ ग. घ. °नीपूर्व° । ४ क. ग. °णपूर्वतः ।
५ क. ग. °न्दते । मू° ।

दत्त्वा तु ब्राह्मणायाऽऽशु सर्वं तरति दुष्कृतम् ।
धेनुं दत्त्वोभयमुखीं भूदानफलमाप्नुयात् ॥
माघान्धकारद्वादश्यां तिलैर्हुत्वा हुताशनम् ।
तिलान्दत्त्वा द्विजातिभ्यः सर्वपापैः प्रमुच्यते ॥
आदित्यवारे विप्राय सहिरण्यं सदैव तु ।
यः प्रयच्छत्यपूपं च तस्य तुष्यति वै यमः ” ॥

**स्कन्दपुराणे**—“ तिलपात्राणि यो दद्याद्विप्रेभ्यः शुद्धमानसः ।
अमावस्यां तु संप्राप्य कृष्णानां तु समाहितः ॥
पितॄंश्च तर्पयित्वा तु अक्षयं नरपुंगवः ।
पितृलोकं समाप्नोति चिरं च सुखमेधते ” ॥

## अथ नक्षत्रदानानि ।

**तत्र विष्णुः**—“ प्रतिमासं रेवतीगते चन्द्रमसि मधुघृतयुतं परमान्नं ब्राह्मणान्भोजयित्वा[1] रूपभाग्भवति ।
मासि मासि च रेवत्यां ब्राह्मणान्घृतपायसैः ।
सदक्षिणं भोजयित्वा रूपभागभिजायते ” ॥

**भविष्योत्तरे**—

“ श्रीकृष्ण उवाच–नक्षत्रयोगे यद्यस्मिन्देयं भवति भारत ।
तत्तेऽहं संप्रवक्ष्यामि[2] सर्वपातकनाशनम् ॥
कृत्तिकासु महाभाग पायसेन ससर्पिषा ।
संतर्प्य ब्राह्मणान्साधूँल्लोकानाप्नोति चाक्षयान् ॥
रोहिण्यां पाण्डवश्रेष्ठ मांसैरन्नेन सर्पिषा ।
पयोऽन्नदानं दातव्यमानृण्यार्थं द्विजातये ॥
दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते ।
दत्त्वा दिव्यविमानस्थः स्वर्गमाप्नोत्यनुत्तमम् ॥
आर्द्रायां कृसरं दत्त्वा तैलसिद्धं समाहितः ।
नरस्तरति दुर्गाणि सर्वाण्येव नरोत्तम[3] ॥
पूपान्पुनर्वसौ दत्त्वा तिलपूर्णान्सुपाचितान् ।
यशस्वी रूपसंपन्नो बह्वन्नो जायते कुले ॥

---

१ घ. °त्वा रेवतीं प्रीणयित्वा रू° । २ ग. °मि महापा° । ३ क. ग. °म । पुमान्पु° ।

( दानप्रकरणम् ८ )

यमः—" वैशाख्यां पौर्णमास्यां तु ब्राह्मणान्सप्त पञ्च वा ।
क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाऽर्चयेद्यदि वेतरैः ॥
प्रीयतां धर्मराजेति यद्वा मनसि वर्तते ।
यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति " ॥

तथा—" वैशाख्यामेव विधिवद्ब्राह्मणान्भोजयेद्दश ।
त्रिरात्रमुषितः स्नात्वा कृसरं प्रयतः शुचिः ॥
गौरान्वा यदि वा कृष्णांस्तिलान्क्षौद्रेण संयुतान् ।
दत्त्वा दशसु विप्रेषु तानेव स्वस्ति वाचयेत् ॥
प्रीयतां धर्मराजेति पितॄन्देवांश्च तर्पयेत् ।
यावज्जीवं कृतं पापं तत्क्षणादेव मुञ्चति ॥
अयुतायुतं च[1] तिष्ठेत्स्वर्गलोके न संशयः ।
मामेव च न पश्येत्तु न च पापेन लिप्यते " ॥

जाबालः—" शृतान्नमुदकुम्भं तु वैशाख्यां च विशेषतः ।
निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ॥
सुवर्णतिलैर्युक्तैस्तु[2] ब्राह्मणान्सप्त पञ्च वा ।
तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति " ॥

महाभारते—" वैशाख्यां पौर्णमास्यां तु तिलान्दद्याद्द्विजातिषु ।
तिला भक्षयितव्याश्च सदा[3] चाऽऽलभनं च तैः ॥
कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना[4] गृहे " ।

अनादिष्टप्रायश्चित्तमाह संवर्तः—
" माघमासे तु संप्राप्ते पौर्णमास्यामुपोषितः ।
ब्राह्मणेभ्यस्तिलान्दत्त्वा सर्वपापैः प्रमुच्यते " ॥

अत्र दानं पौर्णमास्यां विधीयते प्रधानत्वात्तत्रश्चार्थाच्चतुर्दश्यामुपवासः ।
" उपवासरतो भूत्वा पौर्णमास्यां तु कार्तिके ।
हिरण्यमन्नं वस्त्रं च दत्त्वा तरति दुष्कृतम् " ॥

यमः—" कार्तिकस्य तमिस्रे तु मघासु नवमीतिथौ[5] ।
अहोरात्रोषितो भूत्वा धर्मराजाय भोजयेत् ॥
विधिवद्ब्राह्मणान्भक्त्या स्वर्गलोके महीयते ।
तिलान्कृष्णाजिने कृत्वा हिरण्यं मधुसर्पिषी ॥

---

१ ग. च स ति° । २ ग. °लसंयुक्तैर्ब्राह्म° । घ. °लपात्रैस्तु । ३ घ. सदैवाऽऽल° । ४ ख. °त्मनो गृ° । ५ ख. घ. °वमे ति° ।

जायते। पौषी चेत्पुष्ययुक्ता स्यात्तस्यां गौरसर्षपकल्केनोत्सादित-शरीरो गव्यघृतकुम्भेनाभिषिक्तः सर्वौषधीभिः सर्वगन्धैः सर्वबीजैश्च स्नातो घृतेन च भगवन्तं वासुदेवं स्नापयित्वा पुष्पधूपदीपगन्धनै-वेद्यादिभिश्चाभ्यर्च्य वैष्णवैः सूक्तैर्बार्हस्पत्यैश्च मन्त्रैः पावकं हुत्वा ससुवर्णेन घृतेन ब्राह्मणं स्वस्ति वाचयेत्। वासोयुगं च कर्त्रे दद्यात्। अनेन कर्मणा पुष्यते। माघी मघायुक्ता चेत्स्यात्तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति। फाल्गुनी फल्गुनेन युक्ता चेत्स्यात्तस्यां ब्राह्मणाय [1]सुसंस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्यां मनोज्ञां पक्षवतीं रूपवतीं द्रविणवतीं चाऽऽप्नोति नार्यप्येवंविधं भर्तारम्। चैत्री चित्रायुक्ता चेत्स्यात्तस्यां ब्राह्मणाय चित्रवस्त्रदानेन सौभाग्यमाप्नोति। वैशाख्यां पौर्णमास्यां ब्राह्मणानां सप्तकं क्षौद्रयुक्तैस्तिलैः संतर्प्य धर्मराजं प्रीणयित्वा पापेभ्यः पूतो भवति। ज्यैष्ठी ज्येष्ठायुक्ता चेत्स्यात्तस्यां छत्रोपानत्प्रदानेन नगराधिपत्यमाप्नोति। आषाढ्यामा(म)[2]षाढायुक्तायाम-न्नपानदानेन तदेवाक्षय्यमाप्नोति। श्रावण्यां श्रवणयुक्तायां जलधेनुं सान्नां वासोयुगाच्छादितां दत्त्वा स्वर्गलोकमवाप्नोति। प्रोष्ठपद्यां तद्युक्तायां गोदानेन सर्वपापविनिर्मुक्तो भवति। आश्वयुज्यामश्विनी-गते चन्द्रमसि घृतपूर्णभाजनं सुवर्णयुतं विप्राय दत्त्वा दीप्ताग्नि[3]र्भ-वति। कार्तिकी चेत्कृत्तिकायुक्ता स्यात्तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्वसस्यरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दद्यात्। कान्तारभयं न[4] पश्यति। वैशाखमासतृतीयायामुपोषितोऽक्षतैर्वासुदे-वमभ्यर्च्य तानेव हुत्वा दत्त्वा सर्वं यच्च तस्मिन्नहनि प्रयच्छति तदक्षय्यमाप्नोति। पौष्यामतीतायां कृष्णपक्षद्वादश्यां सोपवास-स्तिलैः स्नातस्तिलोदकं दत्त्वा तिलैर्वासुदेवमभ्यर्च्य तानेव हुत्वा भुक्त्वा च सर्वपापेभ्यः पूतो भवति। माघ्यां समतीतायां कृष्णद्वा-दशीं सश्रवणां प्राप्य वासुदेवाग्रतो महावर्तिद्वयेन दीपद्वयं दद्यात्। दक्षिणपार्श्वे[5] महारजनरक्तेन समग्रेण वाससा घृततुलामष्टाधिकां दत्त्वा वामपार्श्वे तिलतैलतुलां साष्टां दत्त्वा श्वेतेन समग्रेण वाससै-तत्कृत्वा यस्मिन्राष्ट्रेऽभिजायते यस्मिन्देशे यस्मिन्कुले च तत्रो-ज्ज्वलो भवति"।

१ ख. सुकृतं। २ क. ग. घ. छ. ञ. °षाढयु°। ३ घ. दीप्तिमान्भव°। ४ ग. नश्य°। ५ क. ग. °श्वेन म°।

पुमान्कृष्णतिलैः कार्यो रूप्यदन्तः सुवर्णदृक् ।
खड्गोद्यतकरो दीर्घो जपाकुसुममण्डितः ॥
रक्ताम्बरधरः स्रग्वी शङ्खमालाविभूषितः ।
तीक्ष्णासिपुत्र्या बन्धेन प्रभावितकटीतटः ॥
उपानद्युगयुक्तोऽपि कृष्णकम्बलपार्श्वगः[1] ।
गृहीतमांसपिण्डश्च वामे करतले तु सः ॥
एवंविधं तु तं कृत्वा गृहीतकुसुमाञ्जलिः ।
यजमानः प्रसन्नात्मा इमं मन्त्रमुदीरयेत् ॥
संपूज्य गन्धकुसुमैर्नैवेद्यं विनिवेद्य च ।
सर्वं[2] कालयसे यस्मात्कालस्तेनैव चोद्यसे[3] ॥
ब्रह्मविष्णुशिवादीनां त्वमसाध्योऽसि सुव्रत ।
पूजितस्त्वं मया भक्त्या प्रार्थितश्च मया सुखम् ॥
यद्युज्यते तव विभो तत्कुरुष्व नमो नमः ।
एवं संपूजयित्वा तं ब्राह्मणाय निवेदयेत् ॥
ब्राह्मणः प्रथमं पूज्यो वासोभिर्भूषणैस्तथा ।
दक्षिणां शक्तितो दत्त्वा प्रणिपत्य विसर्जयेत् ॥
अनेन विधिना यस्तु दानमेतत्प्रयच्छति ।
अपमृत्युभयं तस्य न च व्याधिकृतं[4] भवेत् ॥
भवत्यव्याहतैश्वर्यः सर्वबाधाविवर्जितः ।
देहान्ते सूर्यभवनं भित्त्वा याति परां गतिम् ॥
पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ।
यज्ञयाजी श्रिया युक्तः पुत्रपौत्रसमन्वितः ॥

संपूज्य कालपुरुषं विधिवद्द्विजाय दत्त्वा शुभाशुभफलोदयहेतुभूतम् ।
रोगामयैः सकलरोगमयैः शरीरे देही न मोहमुपगच्छति तत्प्रभावात् " ॥

## इति भविष्योत्तरे कालपुरुषदानविधानम् ।

**अथ तिथिदानानि । तत्र विष्णुः—**

" मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरसा युक्तायां चूर्णितलवणस्य सुवर्ण[5]-नाभं प्रस्थमेकं ब्राह्मणाय प्रतिपादयेत् । अनेन कर्मणा रूपसौभाग्यं

---

१ ग. °श्वेतः । गृ° । २ क. ग. घ. °र्वे कल° । ३ ग. चोच्यते । ४ ग. °धिभयं भ° । ५ क. °वर्णाभं ।

सुवर्णपात्रदानेन नाशयाऽऽशु जनार्दन ।
हेम मुक्ता विद्रुमं च दाडिमं[1] बीजपूरकम् ॥
प्रशस्तपात्रे श्रवणे खुरशृङ्गाटकानि च ।
एवं कृत्वा यथोक्तेन सर्वशाकफलानि च ॥
तत्प्रतिग्रहविद्विद्वानाहिताग्निर्द्विजोत्तमः ।
स्नातो वस्त्रयुगच्छन्नः स्वशक्त्या वाऽप्यलंकृतः ।
प्रतिग्रहश्च तस्योक्तः[2] पुच्छदेशे महीपते ॥
सुवर्णनाभकं दद्यात्प्रीयतां वृषभध्वजः ।
अनेन विधिना दत्त्वा यथावत्कृष्णमार्गणम्[3] ॥
न स्पृश्यः स द्विजो राजंश्चितियूपसमो हि सः ।
दाने च श्रद्धधाने[4] च दूरतः परिवर्जयेत् ॥
स्वगृहान्निप्रेष्य[5] तं विप्रं मण्डले स्नानमाचरेत् ।
पूर्णकुम्भेन राजेन्द्र शाखायां चणकस्य[6] च ॥
कृत्वा चाऽऽचार्यकलशं मन्त्रेणानेन मूर्धनि ।
आप्यायतां[7] समुद्रस्त्वामृचो[8][9] जप्यास्तु षोडश ॥
अहते वाससी कृत्वा[10] चाऽऽचान्तः शुचितामियात् ।
तद्वत्सुसंहितं[11] कुम्भं नीत्वोत्क्षिप्य[12] चतुष्पथे ॥
कृतेनानेन या व्युष्टिर्न सा क्रतुशतैरपि ।
वक्तुं च नृपतिश्रेष्ठ तथाऽप्युद्देशतः शृणु ॥
समग्रभूमिदानस्य फलं प्राप्नोत्यसंशयम् ।
सर्वांश्च लोकाञ्जयति कामचारी विहंगमः ॥
आभूतसंप्लवं यावत्स्वर्गं[13] प्राप्नोत्यसंशयम् ।
न पिता पुत्रमरणं वियोगं भार्यया सह ॥
धनदेशपरित्यागं न चैवेहाऽऽप्नुयात्क्वचित् ” ।

## इति कृष्णाजिनदानविधिः ।

## अथ कालपुरुषदानम् ।

“ श्रीकृष्ण उवाच—पुण्यं दिनमथाऽऽसाद्य भूमिभागे समे शुभे ।
चतुर्दश्यां चतुर्थ्यां वा विष्ट्यां[14] वा पाण्डुनन्दन ॥

१ घ. °मं मातुलिङ्गक° । २ क. ग. °स्योक्तं पु° । ३ क. ग. °र्गजम् । न । ४ क. ख. श्रद्धदाने । ५ ग. घ. °हात्प्रेष्य । ६ क. ख. चण्यक° । घ. चम्पक° । ७ ग. °तां सुपुत्रस्त्वमृ° । ८ क. सपुत्रस्त्वमृ° । ९ ख. घ. °चो दाप्या° । १० घ. धृत्वा । ११ ख. °संहृतं । १२ ख. °त्वोत्क्षेप्यं च° । १३ क. ग. °वत्फलं प्राप्नो° । १४ ग. षष्ट्यां ।

( दानप्रकरणम् ८ )

यथा येन विधानेन तन्मे निगदतः शृणु ।
गोमयेनोपलिप्ते तु शुचौ देशे नराधिप ॥
आदावेव समास्तीर्य शोभनं वस्त्रमाविकम् ।
ततः सशृङ्गं सखुरमाविके[1] कृष्णमार्गणम्[2] ॥
कर्तव्यं[3] रूप्यशृङ्गं तद्रूप्यदन्तं तथैव च ।
लाङ्गूलं[4] विद्रुमं चैव नेत्रयोर्मौक्तिकं तथा ॥
तिलैरात्मसमं कृत्वा वाससाऽऽच्छादयेद्बुधः[5] ।
सुवर्णनाभं तत्कुर्यादलं कुर्याद्विशेषतः ॥
गन्धैरन्नैर्यथा शक्त्या तस्य दिक्षु च विन्यसेत् ।
धातुपात्राणि चत्वारि दिक्षु दद्याद्यथाक्रमम् ॥
हिरण्मयेषु पात्रेषु पूर्वादिक्रमणेन तु ।
घृतं क्षीरं दधि क्षौद्रमेवं दत्त्वा यथाविधि ॥
चम्पकस्य तथा शाखामव्रणं कुम्भमेव च ।
वाद्योपस्थापनं कृत्वा शुभचित्तो निवेशयेत् ॥
जीर्णवस्त्रेण पीतेन सर्वाङ्गानि(णि) च मार्जयेत् ।
धातुमयानि[6] पात्राणि पादेष्वस्य[7] प्रदापयेत् ॥
यानि काम्यानि पापानि मया लोके कृतानि वै ।
लोहपात्रप्रदानेन प्रणश्यन्तु ममाऽऽशु वै ॥
तिलपूर्णं तु तं कृत्वा वामपादे निवेशयेत् ।
यानि पापान्यकाम्यानि[8] कामोत्थानि कृतानि च ॥
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ।
मधुपूर्णं तु तं कृत्वा पादे वै दक्षिणे न्यसेत् ॥
परापवादपैशुन्यात्पृष्ठमांसस्य भक्षणात् ।
तत्रोत्थितं च मे पापं ताम्रपात्रात्प्रणश्यतु ॥
कन्यानृतं गवां चैव परदारप्रधर्षणम् ।
रूप्यपात्रप्रदानाद्धि क्षिप्रं नाशं प्रयातु मे ॥
ऊर्ध्वपादौ त्विमौ कार्यौ ताम्रस्य रजतस्य च ।
जन्मजन्मसहस्रेषु कृतं पापं कुबुद्धिना ॥

---

१ ख. °के शृङ्गमार्गजम् । क° । २ क. °र्गजम् । क° । ३ घ. °व्यं रुक्मशृ° । ४ घ. °ङ्गूले वि° । ५ क. ग. °समाच्छा° । ६ क. ग. °मय्यानि । ७ क. ग. पात्रेष्व° । ८ ख. °कामानि ।

आयुरारोग्यसंपन्नो यावज्जन्मार्बुदत्रयम् ।
भोजनं शक्तितः कुर्यात्सर्वशैलेष्वमत्सरः ॥
सर्वत्र क्षारलवणमश्नीयात्तदनुज्ञया ।
पर्वतोपस्करान्सर्वान्[1]प्रापयेद्ब्राह्मणालये ॥
पश्येदमून्मानघनो हि भक्त्या स्पृशेन्मनुष्यैरिह दीयमानान् ।
शृणोति भक्त्याऽथ मतिं ददाति विकल्मषः सोऽपि दिवं प्रयाति " ॥

इति शर्कराचलदानम् ।

अथ कृष्णाजिनदानं[2] विचार्यते । तत्र विष्णुः—

" अथ वैशाख्यां पौर्णमास्यां कृष्णाजिनं[3] सखुरं[4] सुवर्णशृङ्गं रूप्यखुरं मुक्तालाङ्गूलभूषितं कृत्वाऽऽविकवस्त्रे प्रसारयेत् । तत्र तिलैः प्रच्छादयेत् । सुवर्णनाभं च कुर्यादहतेन वाससोर्युगलेन[5] प्रच्छादयेत् । सर्वरत्नगन्धैश्चालं कुर्यात् । चतसृषु दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिमधुसर्पिःपूर्णानि निधायाऽऽहिताग्नये ब्राह्मणायालंकृताय वासोर्युगेन प्रच्छादिताय दद्यात् । अथ गाथा भवन्ति—

यस्तु कृष्णाजिनं दद्यात्सखुरं शृङ्गसंयुतम् ।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलंकृतम् ॥
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥
कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय स संतरति दुष्कृतम् " इति ॥

यमगाथासु—" गोभूहिरण्यसंयुक्तमर्गमेकं[6] ददाति यः ।
हित्वा[7] दुष्कृतकर्माणि सायुज्यं ब्रह्मणो व्रजेत् ॥
गोभिश्चतसृभिर्युक्तं तथा भूमिसमन्वितम् ।
प्रतिग्रहसमर्थाय विदुषे ब्रह्मचारिणे " ॥

मत्स्य पुराणे—

" मत्स्य उवाच—वैशाखी पौर्णमासी च ग्रहणं चन्द्रसूर्ययोः ।
पौर्णमासी तथा माघी आषाढी कार्तिकी तथा[8] ॥
तुरायणं तु द्वादश्यां तस्यां दत्तं महाफलम् ।
आहिताग्निर्द्विजो यश्च तद्देयं कस्य पार्थिव ॥

---

१ ख. °र्वान्दाप° । २ ख. °नविधानं । ३ ख. 'नं सुखु' । ४ ग. °रं सशृङ्गसु° । ५ क. ग. °युगलेन । ६ ख. °मात्मने° । ७ ग. कृत्वा । ८ क. ग. घ. °था । उत्तरा° ।

( दानप्रकरणम् ८ )

" अथातः संप्रवक्ष्यामि शर्कराचलमुत्तमम् ।
यस्य प्रदानाद्विष्णवर्करुद्रास्तुष्यन्ति सर्वदा ॥
अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः ।
चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामवरो मतः ॥
भारेण वाऽर्धभारेण कुर्याद्यः स्वल्पवित्तवान् ।
विष्कम्भपर्वतान्कुर्यात्तुरीयांशेन मानवः ॥
धान्यपर्वतवत्सर्वमासाद्यामरसंयुतम् ।
मेरोरुपरि तत्तद्वत्स्थाप्यं हेमतरुत्रयम् ॥
मन्दारः पारिजातश्च तृतीयः कल्पपादपः ।
एतद्वृक्षत्रयं मूर्ध्नि सर्वेष्वपि निवेशयेत् ॥
हरिचन्दनसंतानौ पूर्वपश्चिमभागयोः ।
निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले[1] ॥
मन्दारे कामदेवस्तु प्रत्यग्वक्त्रः सदा भवेत् ।
गन्धमादनशृङ्गे च धनदः स्यादुदङ्मुखः ॥
प्राङ्मुखो वेदमूर्तिश्च हंसः स्याद्विपुलाचलः ।
हैमी सुपार्श्व[2]सुरभी दक्षिणाभिमुखी भवेत् ॥
धान्यपर्वतवत्सर्वमावाहनमखादिकम् ।
कृत्वाऽथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥
ऋत्विग्भ्यश्चतुरः शैलानिमान्मन्त्रानुदीरयेत् ।
सौभाग्यामृतसारोऽयं परमः शर्कराचलः ॥
तस्मादानन्दकारी त्वं भव शैलेन्द्र सर्वदा ।
अमृतं पिबतां ये तु निपेतुर्भुवि शीकराः ॥
देवानां तत्समुत्थोऽयं पाहि नः शर्कराचल ।
मनोभवधनुर्मध्यादुद्भूता शर्करा यतः ॥
तन्मयोऽपि महाशैल पाहि संसारसागरात् ।
यो दद्याच्छर्कराशैलमनेन विधिना ततः ॥
सर्वपापविनिर्मुक्तः[3] स याति शिवमन्दिरम् ।
चन्द्रादित्याग्निसंकाशमधिरुह्यानुजीविभिः ॥
सहैव यानमातिष्ठेत्स तु विष्णुप्रभो दिवम् ।
ततः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ॥

१ क. °चले । है° । ग. °चभे । है° । २ ग. घ. °पार्श्वे सु° । ३ ख. ग. °क्तः प्रया° ।

यस्माद्रत्नप्रदानेन[1] तुष्टिं प्रकुरुते हरिः ।
सदानन्दप्रसादेन तस्मान्नः पाहि भूधर ॥
अनेन विधिना यस्तु दद्याद्रत्नमहागिरिम् ।
स याति वैष्णवं लोकममरेश्वरपूजितः ॥
यावत्कल्पशतं साग्रं वसित्वेह नराधिपः ।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥
ब्रह्महत्यादिकं किंचिद्यदत्रामुत्र वा कृतम् ।
तत्सर्वं नाशमायाति गिरिर्वज्रहतो यथा " ॥

इति रत्नपर्वतदानम् ।

" अथातः संप्रवक्ष्यामि रूप्याचलमनुत्तमम् ।
यत्प्रदानान्नरो[2] याति सोमलोकं नराधिप ॥
दशभिः पलसाहस्रैरुत्तमो[3] रजताचलः ।
पञ्चभिर्मध्यमः प्रोक्तस्तदर्धेनावरः[4] स्मृतः ॥
अशक्तो विंशतेरूर्ध्वं कारयेच्छक्तितः सदा ।
विष्कम्भपर्वतांस्तद्वत्तुरीयांशेन कारयेत् ॥
पूर्ववद्राजतान्कुर्यान्मन्दरादीन्विधानतः ।
कलधौतमयांस्तद्वल्लोकेशानर्चयेद्बुधः ॥
ब्रह्मविष्ण्वर्कवान्कार्यो नितम्बोऽत्र हिरण्मयः ।
राजतं स्याद्यदन्येषां सर्वं तदिह काञ्चनम् ॥
शेषं च पूर्ववत्कुर्याद्धोमजागरणादिकम् ।
दद्यात्तद्वत्प्रभाते तु गुरवे रौप्यपर्वतम् ॥
विष्कम्भशैलानृत्विग्भ्यः[6] प्राज्यवस्त्रविभूषणान्[7] ।
इमं मन्त्रं पठन्दद्याद्दर्भपाणिर्विमत्सरः ॥
पितॄणां वल्लभं यस्माद्धरीन्द्राणां शिवस्य च ।
रजतं पाहि तस्मान्नः शोकसंसारसागरात् ॥
इत्थं निवेद्य यो दद्याद्रजताचलमुत्तमम् ।
गवायुतसहस्रस्य फलमाप्नोति मानवः ॥
सोमलोके स गन्धर्वैः किंनराप्सरसां गणैः ।
पूज्यमानो वसेद्विद्वान्[5]यावदाभूतसंप्लवम् " ॥

इति रजतपर्वतदानम् ।

---

१ क. ग. °प्रसादेन । २ ख. घ. °त्प्रसादान्न° । ३ ख. ध. °मो राज° । ४ क. ग. °न कल्पये° । ५ क. ग. °द्विद्विभा° । ६ ख. °ग्भ्यः पूज्याव° । ७ क. ख. ग. °पणः । इ° ।

वेष्टयेच्छुक्लवासोभिरिक्षुदण्डफलादिभिः ।
धान्यपर्वतवच्छेषं विधानमिह पठ्यते ॥
अधिवासनपूर्वं तु तद्वद्धोमसुरार्चनम् ।
प्रभातायां विभावर्यां गुरवे तु निवेदयेत् ॥
विष्कम्भपर्वतांस्तद्वदृत्विग्भ्यः शान्तमानसः ।
संयोगाद्घृतमुत्पन्नं यस्मादमृततेजसोः ॥
तस्माद्घृतार्चिर्विश्वात्मा प्रीयतां मम शंकरः[1] ।
यस्मात्तेजोमयं ब्रह्म घृते तच्च[2] व्यवस्थितम् ॥
घृतपर्वतरूपेण तस्मान्नः पाहि भूधर ।
अनेन विधिना दद्याद्घृतपर्वतमुत्तमम् ॥
महापातकयुक्तोऽपि लोकमायाति[3] शंकरम् ।
हंससारसयुक्तेन किङ्किणीजालमालिना ॥
विमानेनाप्सरोभिश्च सिद्धविद्याधरैर्वृतः ।
विहरेत्पितृभिः सार्धं यावदाभूमिसंप्लवम् " ॥

इति घृतपर्वतदानम् ।

" अथातः संप्रवक्ष्यामि रत्नाचलमनुत्तमम् ।
मुक्ताफलसहस्रेण पर्वतः स्यादनुत्तमः ॥
मध्यमः पञ्चशतिको द्विशतेनावरः स्मृतः ।
चतुर्थांशेन विष्कम्भपर्वताः स्युः समन्ततः ॥
पूर्वेण वज्रगोमेदैर्दक्षिणेनेन्द्रनीलकैः ।
पुष्परागयुतैः[4] कार्यो विद्वद्भिर्गन्धमादनः ॥
वैडू(दू)र्यविद्रुमैः पश्चात्संमिश्रो विपुलाचलः ।
पद्मरागैः ससौवर्णैरुत्तरेण च विन्यसेत् ॥
धान्यपर्वतवत्सर्वमत्रापि परिकल्पयेत् ।
तद्वदावाहनं कृत्वा वृक्षान्देवांश्च काञ्चनान् ॥
पूजयेत्पुष्पपानीयैः प्रभाते स्याद्विसर्जनम् ।
पूर्ववद्गुरुऋत्विग्भ्य इमान्मन्त्रानुदीरयेत् ॥
यथा देवगणाः सर्वे सर्वरत्नेष्ववस्थिताः ।
त्वं हि रत्नमयो नित्यमतः पाहि महाचल[5] ॥

१ घ. केशवः । २ घ. °च्च प्रतिष्ठित° । ३ घ. °माप्नोति । ४ ग. घ. °युतः का° । ५ क. ग. समाच° ।

पूर्ववच्चापरं सर्वं विष्कम्भपर्वतादिकम् ।
दानमन्त्रं प्रवक्ष्यामि यथावन्मुनिपुंगव ॥
यस्मान्मधुवधे विष्णोर्देहस्वेदसमुद्भवाः ।
तिला मुद्गाश्च माषाश्च तस्माच्छं नो भवन्त्विह ॥
हव्यकव्येषु यस्माच्च तिलैरेवाभिरक्षणम् ।
भवादुद्धर शैलेन्द्र तिलाचल नमोऽस्तु ते ॥
इत्यामन्त्र्य च यो दद्यात्तिलाचलमनुत्तमम् ।
स वैष्णवपदं याति पुनरावृत्तिदुर्लभम् ॥
दीर्घायुष्यमवाप्नोति इह चामुत्र मानवः ।
पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत् " ॥

इति तिलपर्वतदानम् ।

" कार्पासपर्वतस्तद्वद्विंशद्भारैरिहोत्तमः ।
दशभिर्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिर्मतः ॥
भारेणाल्पधनो दद्याद्वित्तशाठ्यविवर्जितः ।
धान्यपर्वतवत्सर्वमासाद्य मुनिपुंगव ॥
प्रभातायां तु शर्वर्यां दद्यादिदमुदीरयेत्[1] ।
त्वमेवाऽऽवरणं यस्माल्लोकानामिह सर्वदा ॥
कर्पासाचल तस्मात्त्वमघौघध्वंसनो भव ।
एवं कार्पासशैलेन्द्रं यो दद्यात्पर्वसंनिधौ ॥
रुद्रलोके वसेत्कल्पं ततो राजा भवेदिह " ॥

इति कार्पासपर्वतदानम् ।

" अथातः संप्रवक्ष्यामि घृताचलमनुत्तमम् ।
तेजोमृतमयं[2] दिव्यं महापातकनाशनम् ॥
विंशत्या घृतकुम्भानामुत्तमः स्याद्घृताचलः ।
दशभिर्मध्यमः प्रोक्तः पञ्चभिस्त्ववरः स्मृतः ॥
अल्पवित्तोऽपि यः कुर्याद्द्वाभ्यामिह विधानतः ।
विष्कम्भपर्वतांस्तद्वच्चतुर्भागेन(ण) कल्पयेत् ॥
शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत् ।
कारयेत्संहतानुच्चान्यथाशोभं विधानतः ॥

---

१ ग. घ. °रयन्। त्व° । २ ग. °जोघृत° ।

तथा रसानां प्रवरः सदैवेक्षुरसो मतः ।
मम तस्मात्परां लक्ष्मीं ददस्व गुडपर्वत[1] ॥
सुरासुराणां सर्वेषां नागयक्षर्क्षपक्षिणाम् ।
निवासश्चापि पार्वत्यास्तस्मान्मां पाहि सर्वदा ॥
अनेन विधिना यस्तु दद्याद्गुडमयं गिरिम् ।
पूज्यमानः स गन्धर्वैर्गौरीलोके महीयते ॥
पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ।
आयुरारोग्यसंपन्नः शत्रुभिश्चापराजितः " ॥

इति गुडपर्वतदानम् ।

" अथातः संप्रवक्ष्यामि हिरण्याचलमुत्तमम् ।
यस्य प्र[2]दानाद्भवनं वैरिञ्चं याति मानवः ॥
उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः ।
तदर्धेनावरस्तद्वदल्पवित्तो[3]ऽपि शक्तितः ॥
दद्यादेकपलादूर्ध्वं यथा शक्त्या विमत्सरः ।
धान्यपर्वतवत्सर्वं विदद्या(ध्या)न्मुनिपुंगव ॥
विष्कम्भशैलांस्तद्वच्च कृत्वा मन्त्रमुदीरयेत् ।
नमस्ते ब्रह्मबीजाय[4] ब्रह्मगर्भाय वै नमः ॥
यस्मादनन्तफलदस्तस्मात्पाहि शिलोच्चय ।
यस्मादग्नेरपत्यं त्वं यस्मा[5]दुत्वं जगत्पतेः ॥
हेमपर्वतरूपेण तस्मात्पाहि नमो नमः ।
अनेन विधिना यस्तु दद्यात्कनकपर्वतम् ॥
स याति परमं स्थानं ब्राह्ममानन्दकारम् ।
तत्र कल्पशतं तिष्ठेत्ततो याति परां गतिम् ॥

इति सुवर्णपर्वतदानम् ।

" अथातः संप्रवक्ष्यामि तिलशैलं विधानतः ।
यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥
उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिर्मतः ।
त्रिभिः कनिष्ठो विप्रेन्द्र तिलशैलः प्रकीर्तितः ॥

---

१ ग. °त । तथा सुराणां । २ ख. प्रसादाद्ध° । ३ ग. °त्तोऽल्पश° । ४ क. ग. °य सर्वबीजाय
५ ख. घ. °स्मादूर्ध्वं जगत्पते । हे° ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ।
यत्प्रदानान्नरो लोकानाप्नोति शिवसंमतान् ॥
उत्तमः षोडशद्रोणः कर्तव्यो लवणाचलः ।
मध्यमः स्यात्तदर्धेन चतुर्भिरवमः स्मृतः ॥
वित्तहीनो यथा शक्त्या द्रोणादूर्ध्वं तु कारयेत् ।
चतुर्थांशेन विष्कम्भपर्वतान्कारयेत्पृथक् ॥
विधानं पूर्ववत्कुर्याद्ब्रह्मादीनां च सर्वदा ।
तद्वद्धेममयान्सर्वाँल्लोकपालान्निवेशयेत् ॥
सरांसि कामदेवादींस्तद्वच्चात्र निवेशयेत् ।
कुर्याज्जागरमत्रापि दानमन्त्रान्निबोध मे ॥
सौभाग्यरससंभूतो यतोऽयं लवणाचलः ।
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम ॥
यस्मादन्नरसाः सर्वे नोत्कटा लवणं विना ।
प्रियं च शिवयोर्नित्यं तस्माच्छान्तिं प्रयच्छ मे ॥
विष्णुदेहसमुद्भूतं यस्मादारोग्यवर्धनम् ।
तस्मात्पर्वतरूपेण पाहि संसारसागरात् ॥
अनेन विधिना यस्तु दद्याल्लवणपर्वतम् ।
उमालोके वसेत्कल्पं ततो याति परां गतिम् " ॥

इति लवणपर्वतदानम् ।

" अथातः संप्रवक्ष्यामि गुडपर्वतमुत्तमम् ।
यत्प्रदानान्नरः श्रीमान्स्वर्गमाप्नोति पूजितः ॥
उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः ।
त्रिभिर्भारैः कनिष्ठः स्यात्तदर्धेनाल्पवित्तवान् ॥
तद्वद्धोमन्त्रणं पूजा हेमवृक्षसुरार्चनम् ॥
विष्कम्भपर्वतांस्तद्वल्लोकपालाधिवासनम् ।
धान्यपर्वतवत्कुर्यादिमं मन्त्रमुदीरयेत् ।
यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्दनः ॥
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ।
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ॥

---

१ क. ग. घ. °रधमः । २ घ. °दालम्बनं पू° । ३ क. °न्त्रणे पू° । ४ घ. °द्वत्सरांसि वनदेवताः । होमो जागरणं तद्वल्लो° ।

गन्धर्ववनशोभावानतः कीर्तिर्दृढाऽस्तु मे ।
यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ॥
हिरण्मयैश्च शिखरैस्तस्मा[1]त्पुष्टिर्ध्रुवाऽस्तु मे ।
उत्तरैः कुरुभिर्यस्मात्सावित्रेण वनेन च[2] ॥
सुपा[3]र्श्वे राजसे नित्यमतः श्रीरक्षयाऽस्तु मे ।
एवमामन्त्र्य तान्सर्वान्प्रभाते विमले पुनः ॥
स्नात्वाऽथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ।
विष्कम्भपर्वतान्पश्चादृत्विग्भ्यः क्रमशो मुने ॥
गाश्च दद्याच्चतुर्विंशदथ वा दश नारद ।
शक्तितः सप्त वाऽष्टौ वा पञ्च दद्यादशक्तिमान् ॥
एकां वा गुरवे दद्यात्कपिलां च पयस्विनीम् ।
पर्वतानामशेषाणामेष एव विधिः स्मृतः ॥
त एव पूजने विप्रास्त एवोपस्कराः स्मृताः ।
ग्रहणं लोकपालानां ब्रह्मादीनां च सर्वदा ॥
स्वमन्त्रेणैव सर्वेषु होमः शैलेषु पठ्यते ।
उपवासी भवेन्नित्यमशक्तौ नक्तमिष्यते ॥
विधानं सर्वशैलानां क्रमशः शृणु नारद ।
दानकालेषु ये मन्त्राः पर्वतेषु च यत्फलम् ॥
अन्नं ब्रह्म यतः प्रोक्तम[4]न्नं प्राणाः प्रकीर्तिताः ।
अन्नाद्भवन्ति भूतानि जगदन्नेन वर्तते ॥
अन्नमेव यतो लक्ष्मीरन्नमेव जनार्दनः ।
धान्यपर्वतरूपेण पाहि तस्मान्नगोत्तम ॥
अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् ।
मन्वन्तरशतं सा[5]ग्रं देवलोके महीयते ॥
अप्सरोगणगन्धर्वैराकीर्णेन विराजता ।
विमानेन दि[6]वः पृष्ठमायाति ऋषिसेवितः ॥
कर्मक्षये राजराज्यमा[7]प्नोतीह न संशयः " ॥

इति धान्यपर्वतदानम् ।

---

१ क. ग. °स्मात्तुष्टि° । २ ग. च । स्वपार्श्वे रा° । ३ क. °पार्श्वे रा° । ४ ग. °मन्ने प्रा° ।
५ क. ग. °ग्रं ब्रह्मलो° । ६ ख. दिवापृ° । ७ क. ग. °मायाती° ।

ततस्तु विष्कम्भगिरीन्क्रमेण तुरीयभागेण चतुर्दिशं च ।
संस्थापयेत्पुष्पविलेपनाढ्या[1]न्मनोरमान्वस्त्रगणावृतांश्च† ॥

युक्तं यवैः करभभद्रकदम्बचिह्नं कामेन काञ्चनमयेन विराजमानम् ।
तं कारयेत्कुसुमवस्त्रविलेपनाढ्यं क्षीरारुणोद[2]स[3]र[4]सा च वनेन चैव ॥
रौप्येण[5] शुक्तिघटितेन विराजमानं याम्येन गन्धमदनोऽत्र निवेशनीयः ।
गोधूमसंचयमयः कलधौतजो वा हैमेन यक्षपतिना घृतमानसेन ॥
वस्त्रैश्च राजतवनेन च संयुतः स्यात्पश्चाच्च मैनाकतिलाचलं च ।
सुगन्धधूपेन विलेपनेन पुष्पोत्करैर्मण्डितविग्रहाभम् ॥
सौवर्णपिप्पलहिरण्मयसंप्रयुक्तमाकारयेद्रजतपुष्पवनेन तद्वत् ।
वस्त्रान्वितं दधिसितोदसरस्तथाऽग्रे संस्थाप्य[6] तं विपुलशैलमथोत्तरेण ॥
शैलं[7] स्वपार्श्वमपि धातुमयं सुवस्त्रं विन्यासभूषितमहाकृतिसंनिवेशम् ।
पुष्पैश्च हेमवटपादपशेखरं तमाकारयेत्कनकधेनुविराजमानम् ॥
साक्षिकभद्रसुरसावसनेन तद्वद्रौप्येण भासुरवता[8] च युतं विहार्यं[9] ।
होमं चतुर्भिरथ वेदपुराणविद्भि[10]र्मान्यैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ॥
पूर्वेण हस्तिमुखवच्च विधाय कुण्डं कार्यस्तिलैर्यवघृतेन समित्कुशैश्च ।
रात्रौ च जागरमनुद्धतगीततूर्यैरावाहनं च कथयामि शिलोच्चयानाम् ॥
त्वं सर्वदेवगणधामनिधे विरुद्धमस्मद्गृहेष्वमरपर्वत नाशयाऽऽशु ।

त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्तामूर्तं परं बीजमतः पाहि सनातन ॥
यस्मात्त्वं लोकपालानां विश्वमूर्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनां च तस्माच्छान्तिं प्रयच्छ मे ॥
यस्मादशून्यममरैर्नारीभिश्च शिरस्तव ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥
एवमभ्यर्चितं मेरुं मन्दरं चाभिपूजयेत् ।
यस्माच्चैत्ररथेन[11] त्वं भद्राश्ववर्षेण च ॥
शोभसे मन्दर क्षिप्रमतस्तुष्टिकरो भव ।
यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन ॥

† एतदनन्तरं " पूर्वेण मन्दरमनेकफलोपलाली " इत्यधिकं क. ग. पुस्तकयोः ।

१ घ. °ढ्यान्पूर्वेण मन्दरमनेकफलोपलाली । युक्तं° । २ क. °दमर° ; ३ ग. सहसा । ४ ख. °रमाच । ५ ख °ण शक्ति° । ६ ख. संप्राप्य । ७ क. °लं सुपा° । ८ क. ग. घ. भास्वर° । ९ ग. छ. ब. °य मान्यै° । १० ख. °द्भिर्दानैरनि° । ११ ख. ग. त्वं रुद्रा° ।

राजतो नवमस्तद्वद्दशमः शर्कराचलः ।
वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
कृष्णपक्षे तृतीयायामुपरागे शशिक्षये ॥
विवाहोत्सवयज्ञेषु द्वादश्यामथ वा पुनः ।
शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः ॥
धान्यशैलादयो देया यथाशास्त्रं विधानतः ।
तीर्थे वाऽऽयतने वाऽपि गोष्ठे वा संगमेऽपि वा ॥
मण्डलं कारयेद्भक्त्या चतुरश्रमुदङ्मुखम् ।
प्रागुदक्प्रवणं तद्वत्प्राङ्मुखं वा विधानतः ॥
गोमयेनोपलिप्तायां भूमावास्तीर्य वा कुशान् ।
तन्मध्ये पर्वतं कुर्याद्विष्कम्भैः पर्वतैर्युतम् ॥
धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ।
मध्यमः पञ्चशतिकः कनिष्ठः स्यात्त्रिभिः शतैः ॥
मेरुर्महाव्रीहिमयस्तु मध्ये सुवर्णवृक्षत्रयसंयुतः स्यात् ।
पूर्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपुष्परागैः ॥
पश्चाच्च गारुत्मतनीलरत्नैः सौम्येन वैडू(दू)र्यसरोजनालैः ।
श्रीखण्डखण्डैरभितः प्रवाललतान्वितः शुक्तिशिलातलः स्यात्[1] ॥
ब्रह्मा च विष्णुर्भगवान्पुरारिर्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
मूर्ध्नि व्यवस्थानममत्सरेण कार्यं सुवर्णेन तथा द्विजौघैः ॥
चत्वारि शृङ्गाणि च राजतानि नितम्बभागेष्वपि राजतः स्यात् ।
तथेक्षुवंशावृतकन्दरश्च घृतोदकप्रस्रवणश्च दिक्षु ॥
शुक्लाम्बराण्यम्बुधरावली स्यात्पूर्वेण पीतानि च दक्षिणेन ।
वासांसि पश्चादथ कर्बुराणि रक्तानि चैवोत्तरतो घनाली[2] ॥
रौप्यान्महेन्द्रप्रमुखांस्तथाऽष्टौ संस्थाप्य[3] लोकाधिपतीन्क्रमेण ।
नानाफलाली च समन्ततः स्यान्मनोरमं माल्यविलेपनं च ॥
वितानकं चोपरि पञ्चवर्णमम्लानपुष्पाभरणं सितं च ।
इत्थं निवेद्यामरशैलमग्र्यं तं काञ्चनेनातिविराजमानम्* ॥

---

* एतदग्रेतनं ततस्त्विवत्यारभ्य विराजमानमित्यन्तं ख. पुस्तके न विद्यते ।

---

१ ग. °त् । तथे° । २ घ. °नावली । ३ ख. घ. संप्राप्य ।

ऋग्वेदस्याक्षसूत्रं स्याद्यजुर्वेदस्य पङ्कजम् ।
सामवेदस्य वीणा स्याद्वेनुं दक्षिणतो न्यसेत् ॥
अथर्ववेदस्य पुनः स्रुक्स्रुवौ कमलं करे ।
पुराणवेदो वरदः साक्षसूत्रकमण्डलुः ॥
परितः सर्वधान्यानि चामरासनदर्पणम् ।
पादुकोपानहच्छत्रदीपका भूषणानि च ॥
शय्याऽथ जलकुम्भश्च पञ्चवर्णं वितानकम् ।
स्नात्वाऽधिवासनान्ते तु मन्त्रमेतदु(मु)दीरयेत् ॥
नमो वः सर्वदेवानामाधारेभ्यश्चराचरे ।
महाभूतादिदेवेभ्यः शान्तिरस्तु शिवं मम ॥
यस्मान्न किंचिदप्यस्ति महाभूतैर्विना कृतम् ।
ब्रह्माण्डे सर्वभूतानां तस्माच्छ्रीरक्षयाऽस्तु मे ॥
इत्युच्चार्य महाभूतघटं यो विनिवेदयेत् ।
सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥
विमानेनार्कवर्णेन[१] पितृबन्धुसमन्वितः ।
स्तूयमानो वरस्त्रीभिः पदमभ्येति वैष्णवम् ॥
षोडशैतानि यः कुर्यान्महादानानि मानवः ।
न तस्य पुनरावृत्तिरिह लोकेऽभिजायते ॥

इति पठति य इत्थं वासुदेवस्य[२] पार्श्वे ससुतपितृकलत्रः संशृणोतीह सम्यक् ।
पुररिपुभवने वै मन्दिरे[३] चार्कलक्ष्म्योरमरपुरवधूभिर्मोदते सोऽपि कल्पम् ॥

**इति मात्स्ये महाभूतघटदानम् । अथ पर्वतदानानि मत्स्यपुराणे—**

" उमापतिरुवाच—मेरुप्रदानं वक्ष्यामि[४] दशधा मुनिसत्तम ।
यत्प्रदानान्नरो लोकानाप्नोति सुरपूजितान् ॥
पुराणेषु च वेदेषु कृतेष्वेषु यदश्नुते ।
तस्माद्विधानं वक्ष्यामि पर्वतानामनुक्रमात् ॥
प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ।
गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ॥
पञ्चमस्तिलशैलः स्यात्षष्ठः कार्पासपर्वतः ।
सप्तमो घृतशैलः स्याद्रत्नशैलस्तथाऽष्टमः ॥

---

१ क. ग. °न भूत्यव° । २ ग. °कृ । मुर° । ३ ख. °रे शार्क° । ४ ख. °मि शतधा ।

( दानप्रकरणम् ८ )

गोमूत्रमाज्येन तथा दधिदुग्धं स्वरूपतः ।
पुच्छाग्रे चमरं दद्यात्समीपे ताम्रदोहनम् ॥
कुण्डलानि च हैमानि भूषणानि स्वशक्तितः ।
कारयेदेवमेवं तु चतुर्थांशेन वत्सकम् ॥
तथा धान्यानि सर्वाणि पादाश्चेक्षुमयाः शुभाः ।
नाना फलानि सर्वाणि पञ्चवर्णं वितानकम् ॥
एवं विरचनां कृत्वा तद्वद्धोमादिकं परम् ।
ऋत्विग्भ्यो दक्षिणां दत्त्वा धेनुमामन्त्रयेत्ततः ॥
गुडधेनुवदावाह्य इमं चोदाहरेत्ततः ।

त्वां सर्वदेवगणधाम यतः पठन्ति रुद्रेन्द्रसोमकमलासनवासुदेवाः ।
तस्मात्समस्तभुवनत्रयदेवयुक्ते मां पाहि देवि भवसागरपीड्यमानम् ॥
आमन्त्र्य चेत्थमभितः परि[1]वृत्य भक्त्या दद्याद्द्विजाय गुरवे जलपूर्वकं ताम् ।
यः पुण्यमाप्य दिनमत्र कृतोपवासः पापैः स मुक्ततनुरेति पदं मुरारेः ॥
इति सकलविधिज्ञो रत्नधेनुप्रदानं वितरति स विमानं प्राप्य देदीप्यमानम् ।
सकलकलुषमुक्तो बन्धुभिः पुत्रपौत्रैः सह मदनसरूपः स्थानमभ्येति शंभोः "॥

इति मात्स्ये रत्नधेनुविधानम् ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
महाभूतघटं नाम महापातकनाशनम् ॥
पुण्यां तिथिमथाऽऽसाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विग्मण्डपसंभारभूषणाच्छादनादिकम् ॥
तुलापुरुषवत्कार्यं लोकेशावाहनादिकम् ।
कारयेत्काञ्चनं कुम्भं महारत्नचितं शुभम् ॥
प्रादेशादङ्गुलशतं यावत्कुर्यात्प्रमाणतः ।
क्षीराज्यपूरितं तच्च कल्पवृक्षसमन्वितम् ॥
पद्मासनग[2]तांस्तद्वद्ब्रह्मविष्णुमहेश्वरान् ।
वराहेणोद्धृतां तद्वत्कुर्याद्भूमिं सप[3]र्वताम् ॥
वरुणं चाऽऽसनगतं काञ्चनं मकरोपरि ।
हुताशनं मेषगतं वायुं मृगकृतासनम् ॥
तथाऽऽकाशाधिपं कुर्यान्मूषकस्थं विनायकम् ।
विन्यसेद्घटमध्ये तान्वेदपञ्चकसंयुतान् ॥

१ ख. °रिवर्त्य भ° । २ क. ग. °गतं तद्व° । ३ क. ग. घ. °पङ्कजाम् । व° ।

क्षीरोदकाज्यदधिमाधवलावणेक्षुसारामृतेन भुवनत्रयजीवसंघान् ।
आनन्दयन्ति वसुभिश्च यतो भवन्तस्तस्मान्ममाप्यघविघातमलं दिशन्तु ॥
यस्मात्समस्तभुवनेषु भवन्त एव तीर्थामरासुरसुगन्धिमणिप्रतानम्[1] ।
पापक्षयाध्वरविलेपनभूषणाय[2] लोकस्य बिभ्रति ततोऽस्तु ममापि लक्ष्मीः ॥
इति ददाति रसामरसंयुतान्सुचिरविस्मयवानिह सागरान् ।
अमलकाञ्चनरत्नचयानसौ पदमुपैति हरेरमरार्चितम् ॥
सकलपापविघातविराजितं पितृपितामहपुत्रशतत्रयम् ।
नरकलोकसमाकुलमप्यलं झगि(टि)ति नेतुमसौ शिवमन्दिरम् " ॥

## इति मात्स्ये सप्तसागरदानम् ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
रत्नधेनुरिति ख्यातं गोलोकफलदं नृणाम् ॥
पुण्यां तिथिं समासाद्य तुलापुरुषदानवत् ।
लोकेशावाहनं कृत्वा रत्नधेनुं प्रकल्पयेत् ॥
भूमौ कृष्णाजिनं कृत्वा लवणद्रोणसंयुतम् ।
धेनुं रत्नमयीं कुर्यात्संकल्पविधिपूर्वकम् ॥
स्थापयेत्पद्मरागाणामेकाशीतिं मुखे बुधः ।
पुष्परागशतं तद्वद्घोणायां परिकल्पयेत् ॥
ललाटे हैमतिलकं मुक्ताफलशतं दृशोः ।
भ्रूयुगे विद्रुमशतं शुक्ती कर्णद्वयं स्मृतम् ॥
काञ्चनानि च शृङ्गाणि शिरो वज्रशतात्मकम् ।
ग्रीवायां नेत्रपुटकं गोमेदकशतात्मकम् ॥
इन्द्रनीलशतं पृष्ठे वैडू(दू)र्यशतपार्श्वकौ ।
स्फटिकं चोदरे तद्वत्सौगन्धिकशतान्क(त्क)टिः ॥
खुरा हेममयाः कार्याः पुच्छं मुक्तावलीमयम् ।
सूर्यकान्तेन्दुकान्तानां प्राणे कर्पूरचन्दनम् ॥
कौङ्कुमानि च रोमाणि नाभिं रौप्यां च कल्पयेत् ।
गारुत्मतशतं तद्वदपाने परिकल्पयेत् ॥
अथान्यानि च रत्नानि स्थापयेत्सर्वसंधिषु ।
कुर्याच्छर्करया जिह्वां गोमयं च गुडात्मकम् ॥

---

१ त. °तापान् । पा° । २ क. ग. °याधर° । घ. °याशुर° ।

( दानप्रकरणम् ८ )

अभिमतफलदे स नागलोके वसति पितामहवत्सराणि विंशत् ॥
पितृशतमपि तारयेद्भवाब्धेर्गुरुदुरितौघविघातशुद्धदेहः ।
सुरवरवनितासहस्रसंघैः परिवृतमम्बुजसंभवाभिनन्द्यम् ॥
इति विधानमिदं सदिगङ्गनाकनककल्पलताविनिवेदने ।
पठति यः स्मरतीह तथेक्षते स पदमेति पुरंदरसेवितम् " ॥

इति मात्स्ये कल्पलतादानम् ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि महापातकनाशनम् ।
सप्तसागरकं नाम सर्वपापप्रणाशनम् ॥
पुण्यं दिनं समासाद्य कृत्वा ब्राह्मणवाचनम् ।
तुलापुरुषवत्कुर्याल्लोकेशावाहनं बुधः ॥
ऋत्विग्मण्डलसंभारभूषणाच्छादनादिकम् ।
कारयेत्सप्त कुण्डानि काञ्चनानि विचक्षणः ॥
प्रादेशमात्राणि तथाऽरत्निमात्राणि वा पुनः ।
कुर्यात्सप्तपलादूर्ध्वमासहस्राच्च शक्तितः ॥
संस्थाप्यानि च सर्वाणि पूर्णानि च तिलोपरि ।
प्रथमं पूरयेत्कुण्डं लवणेन विचक्षणः ॥
द्वितीयं पयसा तद्वत्तृतीयं सर्पिषा पुनः ।
चतुर्थं च गुडेनैव दध्ना पञ्चममेव च ॥
षष्ठं शर्करया तद्वत्सप्तमं तीर्थवारिणा ।
स्नापयेल्लवणस्यान्तर्ब्रह्माणं काञ्चनं शुभम् ॥
केशवं क्षीरमध्ये तु घृतमध्ये महेश्वरम् ।
भास्करं गुडमध्ये तु दधिमध्येऽमराधिपम् ॥
शर्करायां न्यसेल्लक्ष्मीं जलमध्ये तु पार्वतीम् ।
सर्वेषु सर्वरत्नानि धान्यानि च समन्ततः ॥
तुलापुरुषवच्छेषमत्रापि परिकल्पयेत् ।
ततो वारुणहोमान्ते स्नापितो वेदपुंगवैः ॥
त्रिः प्रदक्षिणमावृत्य मन्त्रानेतानुदाहरेत् ।
नमो वः सर्वसिन्धूनामाधारेभ्यः सनातनाः ॥
जन्तूनां स्थानदेभ्यश्च समुद्रेभ्यो नमो नमः ।

१ ग. नाकलो° । २ ग. पिबति ।

(दानप्रकरणम् ८)

पुण्यां तिथिं समासाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विग्मण्डपसंभारभूषणाच्छादनादिकम् ॥
तुलापुरुषवत्कुर्याल्लोकेशावाहनादिकम् ।
चामीकरमयीः कुर्याद्दश कल्पलताः शुभाः ॥
नानापुष्पफलोपेता नानांशुकविभूषिताः ।
विद्याधरसुवर्णानां मिथुनैरुपशोभिताः ॥
हारानादित्सुभिः सिद्धैः फलानि च विहंगमैः ।
लोकपालानुकारिण्यः कर्तव्यास्तासु देवताः ॥
ब्राह्मीमनन्तशक्तिं तां लवणस्योपरि न्यसेत् ।
अधस्ताल्लतयोर्मध्ये पद्मशङ्खकरे शुभे ॥
इभासनस्था च गुडे पूर्वतः कुलिशायुधा ।
अजेनावस्थिताऽऽग्नेयी स्रुवपाणिरथानले ॥
याम्यां महिषमारूढा दण्डिनी तण्डुलोपरि ।
घृतेन नैर्ऋती स्थाप्या सखड्गा दक्षिणाऽपरे ॥
वारुणी वारुणे क्षीरे[१] ऊषस्था नागपाशिनी ।
पताकिनी च वायव्ये मृगस्था शर्करोपरि ॥
सौम्या तिलेषु संस्थाप्या शङ्खिनी निधिसंस्थिता ।
माहेश्वरी वृषगता[२] नवनीते त्रिशूलिनी[३] ॥
मालिन्यो वरदास्तद्वत्कर्तव्या बालकान्विताः ।
शक्त्या पञ्चपलादूर्ध्वमासहस्रात्प्रकल्पयेत् ॥
सर्वासामुपरिष्टाच्च पञ्चवर्णं वितानकम् ।
धेनवो दश कुम्भाश्च वस्त्रयुग्मानि(णि) चैव हि ॥
संन्यसेद्वै[४] च गुरवे ऋत्विग्भ्योऽन्यास्तथैव च ।
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो बुधः ॥
त्रिः प्रदक्षिणमावृत्य मन्त्रांश्चैतानुदाहरेत् ।

नमो नमः पापविनाशिनीभ्यो ब्रह्माण्डलोकेश्वरपालिनीभ्यः ।
आशंसिताधिक्यफलप्रदाभ्यो दिग्भ्यस्तथा कल्पलतावधूभ्यः ॥
इति सकलदिगङ्गनाप्रदानं भवभयसूदनकारि यः करोति ।

---

१ ख. °रे कष° । २ ग. घ. वृषारूढा । ३ क. ग. °नी पालि° । ४ क. संक्रमेद्द्वे । ग. सक्रमेद्देवगु° ।

( दानप्रकरणम् ८ )

पूर्णकुम्भाष्टकं चैव वस्त्राणि विविधानि च ॥
माल्येक्षुफलरत्नानि वितानं चैव कल्पयेत् ।
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो गृही ॥
होमाधिवासनान्ते तु गृहीतकुसुमाञ्जलिः ।
इममुच्चारयेन्मन्त्रं त्रिः कृत्वाऽथ प्रदक्षिणम् ॥
नमो विश्वमयायेति विश्वचक्रात्मने नमः ।
परमानन्दरूपी त्वं पाहि नः पापकर्दमात् ॥
तेजोमयमिदं यस्मात्सदा पश्यन्ति योगिनः ।
तदिदं त्रिगुणातीतं विश्वचक्रं नमाम्यहम् ॥
वासुदेवे स्थितं चक्रं चक्रमध्ये च[1] माधवः[2] ।
अन्योन्याधाररूपेण प्रणमामि स्थिताविह ॥
चक्रं विश्वमयं यस्मात्सर्वपापहरं हरेः[3] ।
आयुधं चापि[4] वासश्च भवादुद्धर मामतः ॥
इत्यामन्त्र्य च यो दद्याद्विश्वचक्रममत्सरः ।
विमुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ॥
वैकुण्ठलोकमासाद्य चतुर्बाहुः सनातनः ।
सेव्यतेऽप्सरसां संघैर्वसेत्कल्पशतत्रयम् ॥
प्रणमेद्वा स्वयं कृत्वा विश्वचक्रं दिने दिने ।
तस्याऽऽयुर्वर्धते नित्यं लक्ष्मीश्च विपुला भवेत् ॥

इति सकलजगत्सुराधिवासं वितरति यस्तपनीयषोडशारम् ।
हरिभवनमुपागतः स सिद्धैश्चिरमभिगम्य नमस्यते शिरोभिः ॥
असुदर्शनतां प्रयाति शत्रोर्मदनसुदर्शनतां च कामिनीनाम् ।
स सुदर्शनकेशवानुरूपः कनकसुदर्शनदानदग्धपापः ॥
कृतगुरुदुरितारिषोडशारप्रवितरणप्रवराकृतिर्मुरारेः ।
अभिभवति भवोद्भवानि भित्त्वा भवमभितो भवने भयानि भूयः " ॥

## इति मात्स्ये विश्वचक्रदानम् ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
महाकल्पलता[5] नाम पातकावलिनाशनम् ॥

---

१ क. ग. च साधकः । अ° । २ घ. मानवः । ३ ख. °रेः । विश्वचक्रमिदं यस्मात्सर्वपापहरं हरेः । आ° । ४ क. ग. चाधिवा° । ५ क. ख. घ. °लतां ना° ।

नारायणपुरं गत्वा कल्पत्रयमथो वसेत् ।
पितृपौत्रप्रपौत्रांश्च तारयेदेकविंशतिः(तिम्) ॥

इति पठति य इत्थं यः शृणोति प्रसङ्गादपि कलुषवितानैर्युक्तदेहः समन्तात् ।
दिवममरवधूभिर्याति स प्रार्थ्यमानः पदममरसहस्रैः सेवितं चन्द्रमौलेः ” ॥

## इति मात्स्ये हैमपृथ्वीदानम् ।

“मत्स्य उवाच—अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
विश्वचक्रमिति ख्यातं महापातकनाशनम् ॥
तपनीयस्य शुद्धस्य विश्वचक्रं च कारयेत् ।
श्रेष्ठं पलसहस्रेण तदर्धेन तु मध्यमम् ॥
तस्यार्धेन कनिष्ठं स्याद्विश्वचक्रमुदाहृतम् ।
अन्यद्विंशपलादूर्ध्वमशक्तोऽपि निवेदयेत् ॥
षोडशारं ततश्चक्रं भूषणैरष्टधाऽऽवृतम् ।
नाभिपद्मे स्थितं विष्णुं योगारूढं चतुर्भुजम् ॥
शङ्खपद्मौ च पार्श्वे तु देव्यष्टकसमावृतम् ।
द्वितीयावरणे तद्वत्पूर्वतो जलशायिनम् ॥
अत्रिर्भृगुर्वसिष्ठश्च ब्रह्मा कश्यप एव च ।
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ॥
रामो रामश्च कृष्णश्च बुद्धः कल्कीति च क्रमात् ।
तृतीयावरणे गौरी मातृभिर्वसुभिर्वृता ॥
चतुर्थे द्वादशाऽऽदित्या वेदाश्चत्वार एव च ।
पञ्चमे पञ्च भूतानि रुद्राश्चैकादशैव तु ॥
लोकपालाष्टकं षष्ठे दिङ्मातङ्गांस्तथैव च ।
सप्तमेऽस्त्राणि सर्वाणि मङ्गल्यानि च कारयेत् ॥
अन्तरान्तरतो देवान्विन्यसेदष्टमे पुनः ।
तुलापुरुषवत्सर्वं समन्तात्परिकल्पयेत् ॥
ऋत्विग्मण्डलसंभारभूषणाच्छादनादिकम् ।
विश्वचक्रं ततः कुर्यात्कृष्णाजिनतिलोपरि ॥
तथाऽष्टादश धान्यानि रसाश्च लवणादयः ।

---

१ ग. घ. °ति संप्रा° । २ घ. °समूहैः से° । ३ ख. °रणं त° । ४ क. ग. घ. बुधः ।

( दानप्रकरणम् ८ )

तुलापुरुषवत्कुर्याल्लोकेशावाहनं बुधः ।
ऋत्विग्मण्डलसंभारभूषणाच्छादनादिकम् ॥
वेद्यां कृष्णाजिनं कृत्वा तिलानुपरि विन्यसेत् ।
तथाऽष्टादश धान्यानि रसांश्च लवणादिकान् ॥
तथाऽष्टौ पूर्णकलशान्समन्तात्परिकल्पयेत् ।
वितानकं च कौशेयं फलानि विविधानि च ॥
तथांऽशुकानि रम्याणि श्रीखण्ड[1]शकलानि च ।
इत्येवं रचयित्वा तामधिवासनपूर्वकम् ॥
शुक्लमाल्याम्बरधरः शुक्लाभरणभूषितः ।
प्रदक्षिणं ततः कृत्वा गृहीतकुसुमाञ्जलिः ॥
पुण्यकालमथाऽऽसाद्य मन्त्रानेतानुदाहरेत् ।
ॐ नमस्ते सर्वदेवानां त्वमे[2]व भवनं यतः ॥
[3]धात्री च सर्वभूतानामतः पाहि वसुंधरे ।
वसून्धारयते यस्माद्वसुधा तेन नि[4]र्मला ॥
वसुंधरा ततो जाता तस्मात्पाहि भयादलम् ।
चतुर्मुखोऽपि नो गच्छेद्यस्मादन्तं तवाचले ॥
अनन्तायै नमस्तस्मात्पाहि संसारकर्दमात् ।
त्वमेव लक्ष्मीर्गोविन्दे शिवे गौरीति संस्थिता ॥
गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा ।
बुद्धिर्बृहस्पतौ ख्याता मेधा मुनिषु संस्थिता ॥
विश्वं व्याप्य स्थिता यस्मात्ततो विश्वंभरा मता ।
स्थितिर्धृतिः क्षमा क्षोणी पृथ्वी वसुमती रसा ।
एताभिर्मूर्तिभिः पाहि देवि संसारसागरात् ॥
एवमुच्चार्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ।
धरार्धं वा चतुर्भागं गुरवे प्रतिपादयेत् ॥
शेषं चैवाथ ऋत्विग्भ्यः प्रणिपत्य विसर्जयेत् ।
अनेन विधिना यस्तु दद्याद्धेमधरां बुधः ॥
पुण्यकाले तु संप्राप्ते स पदं याति वैष्णवम् ।
विमानेनार्कवर्णेन किङ्किणीजालमालिना ॥

---

१ ख. °ण्डकलशानि । २ क. ग. घ. °व भुव° । ३ ख. दात्री । ४ ग. निर्मिता ।

इममुच्चारयेन्मन्त्रमथ संविनिवेदयेत्[1] ।
यस्माद्देवगणाः सर्वे स्थावराणि चराणि च ॥
[2]धुरंधराङ्गे तिष्ठन्ति तस्माद्भक्तिः शिवाऽस्तु मे ।
यस्माच्च भूमिदानस्य कलां नार्हन्ति षोडशीम् ॥
दानान्यन्यानि मे भक्तिर्धर्म एव दृढा भवेत् ।
दण्डेन सप्तहस्तेन त्रिंशद्दण्डा निवर्तनम् ॥
त्रिभागहीनं गोचर्ममानमाह प्रजापतिः ।
मानेनानेन यो दद्यान्निवर्तनशतं बुधः ॥
विधिनाऽनेन तस्याऽऽशु क्षीयते पापसंहतिः ।
तदर्धमथवा दद्यादपि गोचर्ममात्रकम् ॥
भवनस्थानमात्रं वा सोऽपि पापैः प्रमुच्यते ।

यावन्ति लाङ्[3]गलकमार्गमुखानि भूमेस्तासां पतेर्दुहितुरङ्गजरोमकाणि ।
तावन्ति शंकरपुरे स समानि तिष्ठद्भूमिप्रदानमिह यः कुरुते मनुष्यः ॥
गन्धर्वकिंनरसुरासुरसिद्धसंघैराधूतचामरमुपेत्य महद्विमानम् ।
संपूज्यते पितृपितामहबन्धुयुक्तः शंभोः पुरं व्रजति चामरनायकः सन् ॥
नेन्द्रत्वमप्यधिगतं क्षयमभ्युपैति गोभूमिलाङ्गलै[4]र्धुरंधरसंप्रदानात् ।
तस्मादघौघपटलक्षयकारि भूमेर्दानं विधेयमतिभूतिभ[5]वाभवाय ” ॥

इति मात्स्ये पञ्चलाङ्[6]गलकप्रदानम् ।

“ मत्स्य उवाच—अथातः संप्रवक्ष्यामि धरादानमनुत्तमम् ।
पापक्षयकरं नृणाममङ्गल्यविनाशनम् ॥
कारयेत्पृथिवीं हैमीं जम्बुद्वीपानुकारिणीम् ।
मर्यादापर्वतमयीं मध्ये मेरुसमन्विताम् ॥
लोकपालाष्टकोपेतां नववर्षसमायुताम् ।
नदीनद[7]शतोपेतां सप्तसागरवेष्टिताम् ॥
महारत्नसमाकीर्णां वसुरुद्रार्कसंयुताम् ।
हेम्नः पलसहस्रेण तदर्धेनाथ शक्तितः ॥
शतत्रयेण वा कुर्याद्द्विशतेन शतेन वा ।
कुर्यात्पञ्चपलादूर्ध्वमशक्तोऽपि विचक्षणः ॥

---

१ ख. °त् । हस्ताद्देवगणैः सर्वैः स्था° । २ ख. ग. °रंधुरा° । ३ क. ख. ग. °ङ्गलिक° । ४ ख. °लपुरंदर° । ५ घ. °भयाभ° । ६ क. ग. °ङ्गलिक° । ७ क. ख. ग. °दसमोपे° ।

( दानप्रकरणम् ८ )

तस्मादघौघशमनेन कुरु प्रसादं चामीकरेभरथमाधवसंप्रदानम् ॥
इत्थं प्रणम्य कनकेभरथप्रदानं यः कारयेत्सकलपापविमुक्तदेहः ।
विद्याधरामरमुनीन्द्रगणाभिजुष्टं प्राप्नोति तत्पदमतीन्द्रियमिन्दुमौलेः ॥
कृतदुरितवितानांस्तूल्लसद्वह्निजालव्यतिकरकृतदाहोद्वेगभाजोऽपि बन्धून् ।
नयति च पितृपौत्रान्रौरवादप्यशेषान्कृतगजरथदानः शाश्वतं सद्म विष्णोः" ॥

## इति मात्स्ये हस्तिरथदानम् ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
पञ्चलाङ्गलकं नाम महापातकनाशनम् ॥
पुण्यां तिथिं समासाद्य युगादिग्रहणादिकाम् ।
भूमिदानं नरो दद्यात्पञ्चलाङ्गलकान्वितम् ॥
खर्वटं खेटकं वाऽपि ग्रामं वा सस्यशालिनम् ।
निर्वर्तनशतं वाऽपि तदर्धं वाऽपि शक्तितः ॥
सुरदारुमयान्कृत्वा हलान्पञ्च विचक्षणः ।
सर्वोपकरणैर्युक्तांस्तथा तान्पञ्च काञ्चनान् ॥
वृषलक्षणसंयुक्तान्दशैवं च धुरंधरान् ।
सुवर्णशृङ्गाभरणान्मुक्तालाङ्गूलशोभितान् ॥
रौप्यपादाग्रतिलकान्रक्तकौशेयभूषणान् ।
स्रग्दामचन्दनयुताञ्शालायामधिवासयेत् ॥
पर्जन्यादित्यरुद्रेभ्यः पयसा निर्वपेच्चरून् ।
एतस्मिन्नेव कुण्डे तु गुरुर्यस्मै निवेदयेत् ॥
पलाशसमिधस्तद्वदाज्यं कृष्णतिलांस्तथा ।
तुलापुरुषवत्कुर्याल्लोकेशावाहनं बुधः ॥
ततो मङ्गलशब्देन शुक्लमाल्याम्बरोऽथ सः ।
आहूय द्विजदांपत्यं हेमसूत्राङ्गुलीयकैः ॥
कौशेयवस्त्रकटकैर्मणिभिश्चाभिपूजयेत् ।
शय्यां सोपस्करां तद्वद्धेनुमेकां पयस्विनीम् ॥
तथाऽष्टादश धान्यानि समन्तादधिवासयेत् ।
ततः प्रदक्षिणं कृत्वा गृहीतकुसुमाञ्जलिः ॥

१ क. ग. घ. °लेः । क्षतदुरितवितानानुल्ल° । २ क. घ. धाम । ३ घ. °ङ्गालिकं । ४ क. ख. ग. °ङ्गलिका । ५ क. °व च युगंध° ।

इति मात्स्ये हिरण्याश्वरथदानम् ।

"मत्स्य उवाच—अथातः संप्रवक्ष्यामि हेमहस्तिरथं शुभम् ।
यस्य प्र[1]दानाच्च हरेर्भवनं याति मानवः ॥
पुण्यां तिथिं समासाद्य तुलापुरुषदानवत् ।
विप्रवाचनकं कुर्याल्लोकेशावाहनं बुधः ॥
ऋत्विग्मण्डलसंभारभूषणाच्छादनादिकम् ।
अत्राप्युपोषितस्तद्वद्ब्राह्मणैः सह भोजनम् ॥
कुर्यात्पुष्परथाकारं काञ्चनं मणिमण्डितम् ।
वलभीभिर्विचित्राभिश्चतुश्चक्रसमन्वितम् ॥
लोकपालाष्टकोपेतं ब्रह्मार्कशिवसंयुतम् ।
मध्ये नारायणोपेतं लक्ष्मीपुष्टिसमन्वितम् ॥
कृष्णाजिने तिलद्रोणं कृत्वा संस्थापयेद्रथम् ।
तथाऽष्टादश धान्यानि भाजना[2]सनचन्दनैः ॥
दीपकोपानहच्छत्रदर्पणं पादुकान्वितम् ।
ध्वजे तु गरुडं कुर्यात्कूबराग्रे विनायकम् ॥
नानाफलसमायुक्तमुपरिष्टाद्वितानकम् ।
कौशेयकं पञ्चवर्णमम्लानकुसुमान्वितम् ॥
चतुर्भिः कलशैः सार्धं गोभिरष्टाभिरन्वितम् ।
चतुर्भिर्हेममातङ्गैर्मुक्तादामविभूषितम् ॥
स्वरूपतः करिभ्यां च युक्तं कृत्वा निवेदयेत् ।
कुर्यात्पञ्चपलादूर्ध्वमाभारादपि शक्तितः ॥
ततो मङ्गलशब्देन स्नपितो वेदपुंगवैः ।
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
इममुच्चार[3]येन्मन्त्रं ब्राह्मणेभ्यो निवेदयेत् ।
नमो नमः शंकरपद्मजार्कलोकेशविद्याधरवासुदेवैः ।
त्वं सेव्यसे वेदपुराणयज्ञैस्तेजोमय स्यन्दन पाहि तस्मात् ॥
यत्तत्पदं परमगुह्यतरं मुरारेरानन्दहेतु गुणरूपविमुक्तमन्तः ।
योगैकमानसदृशो मुनयः समाधौ पश्यन्ति तत्त्वमसि नाथ रथेऽधिरूढः ॥
यस्मात्त्वमेव भवसागर[4]संप्लुतानामानन्दभाण्डभृत[5]मन्थ[6]नयानपात्रम्(?) ।

---

१ क. ग. प्रसादाद्भवनं वैष्णवं या° । २ क. ग. °नानि सच° । ३ घ. °रयन्म° । ४ घ. °रमप्लु° । ५ घ. °तसक्करयानपा° । ६ क. ग. °न्थरया° ।

( दानप्रकरणम् ८ )

ऋत्विग्मण्डपसंभारभूषणाच्छादनादिकम् ।
कृष्णाजिने तिलान्कृत्वा काञ्चनं कारयेद्रथम् ॥
सप्ताश्वं चतुरश्वं वा चतुश्चक्रं सुकूबरम् ।
ऐन्द्रनीलेन कुम्भेन ध्वजरूपेण संयुतम् ॥
लोकपालाष्टकोपेतं पद्मरागदलान्वितम् ।
चत्वारः पूर्णकलशा धान्यान्यष्टादशैव तु ॥
कौशेयवस्त्रसंयुक्तमुपरिष्टाद्वितानकम् ।
माल्येक्षुफलसंयुक्तं पुरुषेण समन्वितम् ॥
यो यद्भक्तः पुमान्कुर्यात्स तन्नाम्नाऽधिवासनम् ।
छत्रचामरकौशेयवस्त्रोपानहपादुकाः ॥
गोभिर्विभवतः सार्धं दद्याच्च शयनासनम् ।
आभारात्रिपलादूर्ध्वं शक्तितः कारयेद्बुधः ॥
अष्टाभिरथ संयुक्तं चतुर्भिर्वाऽथ वाजिभिः ।
द्वाभ्यामथ युतं दद्याद्धेमसिंहध्वजान्वितम् ॥
चक्ररक्षावुभौ तद्वत्तुरगस्थावथाश्विनौ ।
पुण्यकालमथाऽऽसाद्य पूर्ववत्स्नापितो द्विजैः ॥
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।
शुक्लमाल्याम्बरो दद्यादिमं मन्त्रमुदीरयेत् ॥
ॐ नमो नमः पापविनाशनाय वेदात्मने वेदतुरंगमाय ।
धाम्नामधीशाय भवाभवाय पापौघदावानल देहि शान्तिम् ॥
वस्वष्टकादित्यमरुद्गणानां त्वमेव धाता परमं निधानम् ।
यतस्ततो मे हृदयं प्रयातु धर्मैकतानत्वमघौघनाशात् ॥
इति तुरगरथप्रदानमेवं भवभयसूदनमत्र यः करोति ।
स कलुषपटलैर्विमुक्तदेहः परममुपैति पदं पिनाकपाणेः ॥
देदीप्यमानवपुषा विजितप्रभावमाक्रम्य मण्डलमखण्डमचण्डभानोः ।
सिद्धाङ्गनानयनषट्पदपीयमानवक्त्राम्बुजोऽम्बुजभवेन चिरं सहाऽऽस्ते ॥
इति पठति शृणोति वा य इत्थं कनकतुरङ्गरथप्रदानमस्मिन् ।
न स नरकपुरं प्रयाति जातु नरकरिपोर्भवनं प्रयाति भूयः" ॥

---

१ क. घ. मालेक्षुरथसं°। २ घ. °जाङ्कित°। ३ ग. घ. °रयन्। ॐ। ४ घ. °यं पुनातु। ५ क. ग. °मेतं भव°। ६ घ. °ण्डरश्मिः। सि°।

पुण्यां तिथिं समासाद्य कुर्याद्ब्राह्मणवाचनम् ।
लोकेशावाहनं तद्वत्तुलापुरुषदानवत् ॥
ऋत्विग्मण्डपसंभारभूषणाच्छादनादिकम् ।
अल्पेष्वेकाग्निवत्कुर्याद्धेमवाजिमखं[1] बुधः ॥
स्थापयेद्वेदिमध्ये तु कार्ष्णाजिनतिलोपरि ।
कौशेयवस्त्रसंवीतं कारयेद्धेमवाजिनम् ॥
शक्तितस्त्रिपलादूर्ध्वमासहस्रपलं बुधः ।
पादुकोपानहच्छत्रचामरासनभाजनैः ॥
पूर्णकुम्भाष्टकोपेतं माल्येक्षुफलसंयुतम् ।
शय्यां सोपस्करां तद्वद्धेममार्तण्डसंयुताम् ॥
ततः सर्वौषधिस्नानस्नापितं[2] वेदपुंगवैः ।
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
नमस्ते देव देवेश वेदाहरणलम्पट ।
वाजिरूपेण मामस्मात्पाहि संसारसागरात् ॥
त्वमेव सप्तधा भूत्वा[3] छन्दोरूपेण भास्करम् ।
यस्माद्भ्रमयसे[4] लोकानतः पाहि सनातन ॥
एवमुच्चार्य गुरवे तमश्वं विनिवेदयेत् ।
दत्त्वा पापक्षयाद्भानोर्लोकमभ्येति शाश्वतम् ॥
गोभिर्विभवतः सर्वानृत्विजश्चाभिपूजयेत् ।
सर्वधान्योपकरणं गुरवे विनिवेदयेत् ॥
सर्वं शय्यादिकं दत्त्वा भुञ्जीत तिलमेव च ।
पुराणश्रवणं तद्वत्कारयेद्भोजनादिकम् ॥
इमं हिरण्याश्वविधिं करोति यः संपूज्यमानो दिवि[5] देवतेन्द्रैः ।
विमुक्तपापः स पुरं[6] मुरारेराप्नोति सिद्धैरभिपूजितः सन् " ॥

इति मात्स्ये हिरण्याश्वदानम् ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
पुण्यमश्वरथं नाम महापातकनाशनम् ॥
पुण्यं दिनमथाऽऽसाद्य कृत्वा ब्राह्मणवाचनम् ।
लोकेशावाहनं कुर्यात्तुलापुरुषदानवत् ॥

१ क. °जिमुखं । ख. °जिसखं । २ ख. घ. °स्नानं स्ना° । ३ ख. घ. कृत्वा । ४ क. ग. °स्माद्भ्राम° । ५ क. ग. °वि दैव° । ६ क. ग. °रं पुरा° ।

( दानप्रकरणम् ८ )

लोकेशावाहनं तद्वद्धोमः कार्यो विचक्षणैः ।
तुलापुरुषवत्कुर्यात्कुण्डमण्डपवेदिकाम् ॥
स्वल्पेष्वेकाग्निवत्कुर्याद्गुरुरेव समाहितः ।
काञ्चनस्यातिशुद्धस्य धेनुं वत्सं च कारयेत् ॥
उत्तमा पलसाहस्रा तदर्धेन तु मध्यमा ।
कनीयसी तदर्धेन कामधेनुः प्रकीर्तिता ॥
शक्तितस्त्रिपलादूर्ध्वमशक्तोऽपि हि कारयेत् ।
वेद्यां कृष्णाजिनं न्यस्य गुडप्रस्थसमन्विताम् ॥
न्यसेदुपरि तां धेनुं महारत्नैरलंकृताम् ।
कुम्भाष्टकफलोपेतां नानाफलसमन्विताम् ॥
तथाऽष्टादश धान्यानि समन्तात्परिकल्पयेत् ।
इक्षुदण्डाष्टकं तद्वन्नानाफलसमन्वितम् ॥
भाजनं चामरं तद्वत्ताम्रदोहनकं तथा ।
कौशेयवस्त्रद्वयसंप्रयुक्ता दीपातपत्राभरणाभिरामा ।
सचामरा कुण्डलिनी सघण्टा गलेंतिका[1] पादुकरौप्यपादा" ॥

**गलेंतिका[2] गलभूषणम् ।**

" रसैश्च सर्वैः परितोऽभिजुष्टा हरिद्रया पुष्पफलैरनेकैः ।
अजाजिकुस्तुंबुरु[3]शर्कराभिर्वितानकं चोपरि पञ्चवर्णम् ॥
स्नातस्ततो मङ्गलवेदघोषैः प्रदक्षिणीकृत्य सपुष्पहस्तः ।
आवाहयेत्तां गुरुणोक्तमन्त्रैर्द्विजाय दद्यादथ दर्भपाणिः ॥
त्वं सर्वदेवगणमन्दिरसङ्गभूता विश्वेश्वरात्रिपथगोदधिपर्वतानाम् ।
त्वद्दानशस्त्रशकलीकृतपातकौघः प्राप्तोऽस्मि निर्वृतिमतीव परां नमामि ॥
लोके यथेप्सितफलार्थविधायिनीं त्वामासाद्य को हि भवदुःखमुपैति मर्त्यः ।
संसारदुःखशमनाय ददस्व कामं त्वां कामधेनुरिति देवगणा वदन्ति ॥
आमन्त्र्य रूपकुलशीलगुणान्विताय विप्राय यः कनकधेनुमिमां प्रदद्यात् ।
प्राप्नोति धाम स पुरंदरदेवजुष्टं कन्यागणैः परिवृतः पदमिन्दुमौलेः " ॥

इति मात्स्ये कामधेनुप्रदानविधिः ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि हिरण्याश्वविधिं शुभम् ।
यस्य प्रदाना[4]द्भुवने अनन्तं फलमश्नुते ॥

---

१ क. ग. °लन्तिका । घ. °लत्रिका । २ क. ग. °लन्तिका । घ. °लत्रिर्गल° । ३ ख. °जिकुंतुम्बुरु° । ४ ख. घ. प्रसादाद्भु° ।

अष्टमूर्तेरधिष्ठानमतः पाहि सनातनम् ।
इत्यामन्त्र्य ततो दद्याद्गुरवे नन्दिकेश्वरम् ॥
सर्वोपकरणोपेतं गोयुगं च विचक्षणः ।
ऋत्विग्भ्यो धेनुमेकैकां दशानां विनिवेदयेत् ॥
दश पञ्चाथ वा दद्यादन्येभ्यस्तदनुज्ञया ।
नैका बहुभ्यो दातव्या यतो दोषकरी भवेत् ॥
बह्वयश्चैकस्य दातव्याः श्रीमतोऽऽरोग्यवृद्धये ।
पयोव्रतः पुनस्तिष्ठेदेकाहं गोसहस्रदः ॥
श्रावयेच्छृणुयाद्वाऽपि महादानानुकीर्तनम् ।
तद्दिनं ब्रह्मचारी स्याद्य इच्छेद्विपुलां श्रियम् ॥
अनेन विधिना यस्तु गोसहस्रप्रदो भवेत् ।
सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः ॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
सर्वेषां लोकपालानां लोके संपूज्यतेऽमरैः ॥
प्रतिमन्वन्तरं तिष्ठेत्पुत्रपौत्रसमन्वितः ।
सप्त लोकानतिक्रम्य ततः शिवपुरं व्रजेत् ॥
शतमेकोत्तरं तद्वत्पितॄणां तारयेद्बुधः ।
मातामहानां तद्वच्च पुत्रपौत्रसमन्वितः ॥
यावत्कल्पशतं तिष्ठेद्राजराजो भवेत्पुनः ।
अश्वमेधशतं कुर्याच्छिवध्यानपरायणः ॥
वैष्णवं लोकमास्थाय ततो मुच्येत बन्धनात् ।
पितरश्चाभिनन्दन्ति गोसहस्रप्रदं शुभम् ॥
अपि स्यात्स कुलेऽस्माकं पुत्रो दौहित्र एव वा ।
गोसहस्रप्रदो भूत्वा नरकादुद्धरिष्यति ॥
तस्य कर्मकरो वा स्यादपि द्रष्टा तथैव च ।
संसारसागरादस्माद्योऽस्मान्संतारयिष्यति " ॥

इति मात्स्ये गोसहस्रदानविधिः ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि कामधेनुविधिं परम् ।
सर्वकामप्रदं नृणां महापातकनाशनम् ॥

---

१ क. °ता सर्वसिद्ध° । २ ग. °स्रकम् । श्रा° । ३ घ. °दं नरम् । अ° । ४ ख. °मफलं नृ° ।

पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा ॥
लोकेशावाहनं कुर्यात्तुलापुरुषदानवत् ।
पुण्याहवाचनं कुर्याद्धोमकार्यं तथैव च ॥
ऋत्विग्मण्डलसंभारभूषणाच्छादनादिकम् ।
वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत् ॥
गोसहस्राद्विनिष्कृष्य गवां दशकमेव च ।
गोसहस्रं बहिष्कुर्याद्वस्त्रमाल्यविभूषितम् ॥
सुवर्णशृङ्गाभरणं रौप्यपादसमन्वितम् ।
अन्तः प्रवेश्य दशकं वस्त्रमाल्यैस्तु पूजयेत् ॥
सुवर्णघण्टिकोपेतं हेमपट्टैरलंकृतम् ।
कौशेयवस्त्रसंवीतं गन्धमाल्यसमन्वितम् ॥
हेमरत्नमयैः शृङ्गैश्चामरैरुपशोभितम् ।
पादुकोपानहच्छत्रभाजनासनसंयुतम् ॥
गवां दशकमध्ये स्यात्काञ्चनो नन्दिकेश्वरः ।
कौशेयवस्त्रसंवीतो गन्धमाल्यविभूषितः ॥
लवणद्रोणशिखरे मालेक्षुफलसंयुतः ।
कुर्यात्पलशतादूर्ध्वं सर्वमेतद[1]संशयम् ॥
शक्तितः पलसाहस्रं त्रितयं यावदेव तु ।
गोशतेऽपि दशांशेन सर्वमेतत्समाचरेत् ॥
पुण्यकालं समासाद्य गीतमङ्गलनिःस्वनैः ।
सर्वौषध्युदकस्नानैः स्नापितो वेदपुंगवैः ॥
इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ।
ॐ नमो विश्वमूर्तिभ्यो विश्वमातृभ्य एव च ॥
विश्वा[2]धिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ।
गवामङ्गेषु तिष्ठन्ति भुवनान्येकविंशतिः ॥
ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मातरः ।
गावो ममाग्रतः सन्तु गावः पृष्ठत एव हि ॥
गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम् ।
यस्मात्त्वं वृषरूपेण धर्म एव सनातनः ॥

---

१ क. °दशेषतः । श° । २ ख. घ. °श्वादिवा° ।

नमस्ते कल्पवृक्षाय चिन्तितार्थ[1]प्रदायक[2] ।
वृद्धिप्रदाय देवाय नमस्ते विश्वमूर्तये ॥
यस्मात्त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः ।
मूर्तामूर्तं परं बीजमतः पाहि सनातनम् ॥
एवमामन्त्र्य तं दद्याद्गुरवे कल्पपादपम् ।
चतुर्भ्यश्चाथ ऋत्विग्भ्यः संतानादीन्प्रकल्पयेत् ॥
अनेन विधिना यस्तु दानमेतत्प्रयच्छति ।
तस्य पुण्यफलं देवि शृणुष्व गदतो मम ॥
नारी वा पुरुषो वाऽपि स तावद्भुवि दुर्लभः ।
मातृतः पितृतश्चैव पुरुषानेकविंशतिम् ॥
तारयेत्कृतकृत्यश्च भवेज्जन्मनि जन्मनि ।
अवस्थात्रितये यच्च पापं जन्मदशार्जितम् ॥
तत्क्षालयत्यसंदेहं ब्रह्मलोकं च गच्छति ।
तत्र ब्रह्मदिनं स्थित्वा पुनर्याति शिवालयम् ॥
तत्रापि सुचिरं काल[3]ं *गमित्वा पुण्यलोकतः ।
एवमादि वसित्वा तु मनुष्यो जायते पुनः ॥
अरोगी बलवाञ्शूरो रूपवान्सुभगस्तथा ।
दश जन्मानि कुरुते राज्यं निहतकण्टकः ॥
नारी वा दानमेतद्धि दत्त्वा चैतत्फलं लभेत् ।
एतद्गौर्याः समाख्यातं भवेन भर्[4]वभेदिना ॥
मया च कथितं सर्वं तव पाण्डुकुलोद्वह ।
हैमं सुरद्रुमचतुष्टयसंयुतं च संकल्प्य कल्पविटपं प्रतिपादयेद्यः ।
विप्राय वेदविदुषे प्रयतोऽह्नि पुण्ये प्राप्नोत्यनल्पमविकल्पमसावभीष्टम् " ॥

इति भविष्योत्तरे कल्पवृक्षदाने विशेषः ।

" मत्स्य उवाच—अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
गोसहस्रप्रदानाख्यं सर्वपापहरं परम् ॥
पुण्यां तिथिं समासाद्य युगमन्वन्तरादिकम् ।

---

* अत्रान्तर्भावितण्यर्थो गमिः । इडागमश्चाऽऽर्षः ।

---

१ क. ख. घ. °प्रभागुर । द्रं । २ क. ग. °क । ऋद्धि । ३ क. ग. °लं वसित्वा । ४ ख. घ. °बवेदि° ।

( दानप्रकरणम् ८ )

सुवर्णस्य प्रमाणं तु कथयामि वरानने ।
सहस्रेण तदर्धेन तस्याप्यर्धेन वा पुनः ॥
कारयेत्कल्पवृक्षं तु सर्वकामसमृद्धये ।
चन्द्रसूर्योपरागे तु दुःस्वप्नाद्भुतदर्शने ॥
जन्मर्क्षे विषुवे चैव युगाद्यास्वथ वा पुनः ।
नद्यास्तीरे गृहे वाऽपि देवतायतनेऽपि वा ।
प्रागुदक्प्रवणे देशे मण्डपं तत्र कारयेत् ॥
दशहस्तप्रमाणेन कुण्डमेकं सुशोभनम् ।
आग्नेय्यां कारयेद्राजन्मेखलात्रयभूषितम् ॥
तत्र च ब्राह्मणा योज्या ऋग्यजुःसामपा[1]ठकाः ।
उपदेष्टा च तत्रैव द्वितीयः पञ्चमोऽपि वा ॥
सर्वाभरणसंपन्नास्ताम्रपात्रविभूषिताः ।
गुडप्रस्थोपरिष्टाच्च स्थापयेत्कल्पपादपम् ॥
ब्रह्मविष्णुशिवोपेतं पञ्चशाखं सभास्करम् ।
कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत् ॥
संतानं सह गायत्र्या पूर्वतो लवणोपरि ।
मन्दारं दक्षिणे पार्श्वे श्रिया सह तथा घृते ॥
पश्चिमे पारिजातं च उमया सह जीरके ।
सुरभीसहितं तद्वत्तिलेषु हरिचन्दनम् ॥
कौशेयवस्त्रसंयुक्तानिक्षुमाला[2]समन्वितान् ।
तथाऽष्टौ [3]पूर्वकलशान्स[4]मन्तात्परिकल्पयेत् ॥
अग्नौ प्रणयनं कृत्वा अधिवास्य तु पादपम् ।
होमं च ब्राह्मणाः कुर्युः सुशुद्धेनान्तरात्मना ॥
आघारावाज्यभागौ च पूर्वं हुत्वा विचक्षणः ।
तल्लिङ्गैः स्थापितान्देवान्होमेनाऽऽप्यायये[5]त्ततः ॥
महाव्याहृतिभिश्चैव होमं कुर्युस्ततः परम् ।
अयुतेन भवेत्सिद्धिर्यज्ञस्य वरवर्णिनि ॥
ततः प्रभाते चोत्थाय स्नात्वा शुक्लाम्बरः शुचिः ।
त्रिः प्रदक्षिणमावृत्य मन्त्रमे[6]तमुदीरयेत् ॥

---

१ घ. °पारगाः । उ° । २ क. घ. °लाफलान्वि° । ३ क. घ. पूर्णक° । ४ ख. °मन्त्रान्परि° । ५ ख. °येत्पुनः । म° । ६ ख. ग. °तदुदी° ।

एवमामन्त्र्य तं दद्याद्गुरवे कल्पपादपम् ।
चतुर्भ्यश्चापि ऋत्विग्भ्यः संतानाद्यान्प्रकल्पयेत् ॥
(*स्वल्पेष्वेकाग्निवत्कुर्याद्गुरुरेवाभिपूजितः ।
न वित्तशाठ्यं कुर्वीत न च विस्मयवान्भवेत् ॥
अनेन विधिना यस्तु महादानं निवेदयेत् । )
सर्वपापविनिर्मुक्तः सोऽश्वमेधफलं लभेत् ॥
अप्सरोभिः परिवृतः सिद्धचारणकिंनरैः ।
भूतान्भव्यांश्च मनुजांस्तारयेद्रोमसंमितान् ॥
स्तूयमानो दिवः पृष्ठे पुत्रपौत्रप्रपौत्रकान् ।
विमानेनार्कवर्णेन विष्णुलोकं स गच्छति ॥
दिवि कल्पशतं तिष्ठेद्राजराजो भवेन्नरः ।
नारायणबलोपेतो नारायणपरायणः ॥
नारायणकथासक्तो नारायणपुरं व्रजेत् " ।

इति मात्स्ये कल्पवृक्षदानविधिः । अस्य भविष्योत्तरे विशेषः—

" श्रीभगवानुवाच—अपुत्रः पुरुषो यश्च नारी वा पर्वतात्मजे ।
सौवर्णस्तेन दातव्यः कल्पवृक्षो गुणान्वितः ॥
कृत्रिमं वाऽपि गृह्णीयाद्वृक्षं वा स्थावरादिकम् ।
अन्यजातोऽथ वा पुत्रः पुत्रत्वे परिकल्पयेत् ॥
तेन पुत्रवतां लोके गच्छेद्देवि न संशयः ।
कल्पवृक्षस्तु कर्तव्यः शुद्धकाञ्चनसंभवः ॥
बहुशाखः सुपर्णाङ्गो ह्यनेककुसुमान्वितः ।
महास्कन्धः सुरूपश्च रत्नालंकृतविग्रहः ॥
फलानि तस्य दिव्यानि सौवर्णानि प्रकल्पयेत् ।
राजतं चैव कुर्वीत समन्तात्पीठमुत्तमम् ॥
प्रवालाङ्कुरसंपृक्तं मुक्तादामविलम्बितम् ।
चतुष्कोणेषु कुर्वीत चतुरः काञ्चनद्रुमान् ॥

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके न विद्यते ।

---

१ क. घ. °नादीन्प्र° । २ ख. 'ल्पे स्वैका° । ३ ख. °प्रपुत्र° । ४ क. ख. °स्कन्दः स्वरू° । घ. °स्कन्दः सुरू° । ५ क. 'विभूषित° ।

( दानप्रकरणम् ८ )

पुण्यं दिनमथाऽऽसाद्य तुलापुरुषदानवत् ।
पुण्याहवाचनं कृत्वा लोकेशावाहनं तथा ॥
ऋत्विग्मण्डपसंस्कार[1]भूषणाच्छादनादिकम् ।
काञ्चनं कारयेद्वृक्षं नानाफलसमन्वितम् ॥
नानाविहगवस्त्राणि भूषणानि च कारयेत् ।
शक्तितस्त्रिपलादूर्ध्वमासहस्राद्धि [2]कारयेत् ॥
अथ तप्तसुवर्णस्य कारयेत्कल्पपादपम् ।
गुडप्रस्थोपरिष्टाच्च सितवस्त्रयुगा[3]वृतम् ॥
ब्रह्मविष्णुशिवोपेतं पञ्चशाखं सभास्करम् ।
कामदेवमधस्ताच्च सकलत्रं प्रपूजयेत् ॥
संतानं पूर्वतस्तद्वत्तुरीयांशेन कल्पयेत् ।
मन्दारं दक्षिणे पार्श्वे श्रिया सार्धं घृतोपरि ॥
पश्चिमे पारिभद्रं तु सविन्त्र्या सह जीरके ।
सुर[4]भीसंयुतं तद्वत्तिलेषु हरिचन्दनम् ॥
तृतीयांशेन कुर्वीत तिलेन फलसंयुतम् ।
कौशेयवस्त्रसंयुक्तानिक्षुमालासमन्वितान् ॥
तथाऽष्टौ पूर्णकलशान्पादुकासनभाजनम् ।
दीपकोपानहच्छत्रचामरासनसंयुतम् ॥
फलमाल्ययुतं तद्वदुपरिष्टाद्वितानकम् ।
तथाऽष्टादश धान्यानि समन्तात्परिकल्पयेत्+ ॥
ॐ नमस्ते कल्पवृक्षाय चिन्तितार्थप्रदायिने ।
विश्वंभराय देवाय नमस्ते विश्वमूर्तये ॥
यस्मात्त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः ।
मूर्तामूर्तं परं बीजमतः पाहि सनातनम् ॥
त्वमेवामृतसर्वस्वमनन्तः पुरुषोऽव्ययः ।
संतानाद्यैरुपेतः सन्पाहि संसारसागरात् ॥

---

+ इत उत्तरमेकः श्लोकोऽधिकः क. घ. पुस्तकयोः—" होमाधिवासनान्ते च स्नापितो द्विजपुंगवैः । त्रिः प्रदक्षिणमावृत्य मन्त्रमेतदु(मु)दीरयेत् " इति ॥

---

१ क. घ. °संभार° । २ ख. ग. °द्धि कल्पये° । ३ घ. °गान्वित° । ४ क. घ. °भीसहितं । ५ क. ख. पूर्वक° ।

" ब्रह्माण्डं काञ्चनं कृत्वा सर्वलक्षणसंयुतम् ।
देवासुरैर्मनुष्यैश्च गन्धर्वोरगराक्षसैः[१] ॥
संयुक्तं च नदीभिश्च समुद्रैः पर्वतैस्तथा ।
विमानशतकोटीभिर्भूषितं च सरोवरैः " ॥

तथा—" तस्याङ्के कल्पयेद्राजन्भुवनानि चतुर्दश " ।

तथा—" कलश(शकल)द्वयसंयुक्तं घटाकारं सुसंहतम् " ।

तथा—" पुष्पमण्डपिकां कृत्वा तत्र संस्थापयेद्बुधः ।
तिलद्रोणोपरिगतं कुङ्कुमक्षोदचर्चितम् ॥
वासोयुग्मेन संछाद्य धूपगन्धादिवासितम्[२] ।
अष्टादशैव धान्यानि द्रोणमात्राण्यथाऽऽहरेत् ॥
गृहे वा मण्डपे वाऽपि स्थापयेत्तं विचक्षणः " ।

तथा—" ब्रह्मविष्णुशिवानां च तन्नाम्ना जुहुयात्तिलान् ।
अयुतं होमयेत्पश्चान्महाव्याहृतिभिर्नृप ॥
रुद्रजापश्च कर्तव्यस्तस्यैवानन्तरं बुधैः ।
ततः पर्वसमीपे तु स्नातः शुक्लाम्बरः शुचिः ॥
ब्रह्माणं पूजयेद्भक्त्या गृहीतसुकुमाञ्जलिः ।
नमो जगत्प्रतिष्ठाय विश्वधाम्ने नमोऽस्तु ते ॥
वाङ्मयान्तर्निमग्नाय ब्रह्माण्डे शुभकृद्भव ।
ब्रह्माण्डोदरवर्तीनि यानि सत्त्वानि कानि चित् ॥
तानि सर्वाणि मे पुष्टिं प्रयच्छन्त्वतुलां[३] तथा ।
ब्रह्मा विष्णुश्च रुद्रश्च[४] लोकपालास्तथा ग्रहाः ॥
नक्षत्राणि तथा नागा ऋषयो मरुतस्तथा ।
सर्वे भवन्तु मे प्रीताः सप्त जन्मान्तराणि च ॥
इत्युच्चार्य ततो दद्याद्ब्रह्माण्डं सर्वकामदम्[५] ।
सदक्षिणं च तत्कृत्वा दिक्संस्थान्पूजयेद्द्विजान् " ॥

इति भविष्योत्तरे विशेषतो ब्रह्माण्डदानविधिः ।

" मत्स्य उवाच—कल्पपादपदानाख्यमतः परमनुत्तमम् ।
महादानं प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥

---

१ क. °सैः । समन्वितं न° । २ क. ग. °न्धाधिवा° । ३ क. °न्त्वखिलां । ४ ख. रुद्राश्च । ५ क. घ. °म् । प्रद° ।

श्यामाकधान्य[1]यवमुद्गतिलाणुमाषगोधूमकोद्रवकुलत्थसतीनशिम्बैः[2] ।
अष्टादशं चणककलायमयोष्टराजमाषप्रियङ्गुसहितं च मसूरमाहुः ॥

पूर्वेणानन्तसंयुक्तं प्रद्युम्नं पूर्वदक्षिणे ।
प्रकृतिं दक्षिणे देशे संकर्षणमतः परम्[3] ॥
पश्चिमे चतुरो वेदाननिरुद्धमतः परम् ।
अग्निमुत्तरतो हेमवासुदेवमतः परम् ॥
समन्ताद्द्रु[4]डपीठस्थानर्चयेत्काञ्चना[5]न्बुधः ।
स्थापयेद्वस्त्रसंवीतान्पूर्णकुम्भान्दशैव तु ॥
दशैव धेनवो देयाः सहेमा वरदोहनाः ।
पादुकोपानहच्छत्रचामरासनदर्पणैः ॥
भक्ष्यभोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः ।
होमा[6]धिवासनान्ते तुं[7] स्नापितो वेदपुंगवैः ॥
इममुच्चारयेन्मन्त्रं त्रिः कृत्वाऽथ प्रदक्षिणम् ।

ॐ नमोऽस्तु विश्वेश्वर विश्वधाम जगत्सवित्रे भगवन्नमस्ते ।
सप्तर्षिलोकामरभूतलेश गर्भेण सार्धं वितराभिरक्षाम् ॥
ये दुःखि[8]तास्ते सुखिनो भवन्तु प्रयान्तु पापानि चराचराणाम् ।
त्वद्दानशस्त्राहतपातकानां ब्रह्माण्ड दोषाः प्रलयं प्रयान्तु ॥
देवं प्रणम्यामरविश्वगर्भं दद्याद्द्विजेभ्यो दशधा विभज्य ।
भागद्वयं तत्र गुरोः प्रकल्प्य समं भजेच्छेषमतः क्रमेण ॥
स्वल्पेषु होमं गुरुरेक एव कुर्यादथैकाग्निविधानयुक्त्या ।
स एव संपूज्यतमोऽल्पवित्तैर्यथोक्तवस्त्राभरणादिकेन ॥
इत्थं य एतदखिलं पुरुषोऽनुकुर्याद्ब्रह्माण्डदानमधिगम्य महद्विमानम् ।
निर्धूतकल्मषविशुद्धतनुर्मुरारेरानन्दकृत्पदमुपैति सहाप्सरोभिः ॥
संतारयेत्पितृपितामहपुत्रपौत्रै[9]र्बन्धुप्रियातिथिकलत्रशताष्टकं सः ।
ब्रह्माण्डदानशकलीकृतपातकौघमानन्दयेच्च जननीकुलमप्यशेषम् ॥

इति मात्स्ये ब्रह्माण्डदानविधिः ।

अत्र भविष्योत्तरीया विशेषाः—

---

१ क. °न्यतिलमुद्गयवाणु° । २ ख. ग. घ. छ. °शिष्टैः । अ° । ३ क. घ. °म् । स° । ४ क. °द्रुरुपी° । ५ ख. °नाद्बुधः । ६ ख. घ. °मादिवा° । ७ ख. तु स्थापि° । ८ क. °खिनस्ते । ९ क. °त्रभ्रातृप्रि° ।

ततो हिरण्यगर्भं तं तेभ्यो दद्याद्विचक्षणः ॥
ते पूज्याः सर्वभावेन बहवो वा तदाज्ञया ।
तत्रोपकरणं सर्वं गुरवे विनिवेदयेत् ॥
पादुकोपानहच्छत्रं चामरासनभाजनम् ।
ग्रामं वा विषयं वाऽपि यदन्यद्दयितं भवेत् ॥
अनेन विधिना यस्तु पुण्येऽह्नि विनिवेदयेत् ।
हिरण्यगर्भदानं स ब्रह्मलोके महीयते ॥
+पुरेषु लोकपालानां प्रतिमन्वन्तरं वसेत् ।
कल्पकोटिशतं यावद्ब्रह्मलोके महीयते ॥
कलिकलुषविमुक्तः पूजितः सिद्धसंघैरमल[1]चमरमालावीज्यमानोऽप्सरोभिः
पितृशतम[2]थ बन्धून्पुत्रपौत्रप्रपौत्रानपि नरकनिमग्नांस्तारयेदेक एव " ॥

## इति मात्स्ये हिरण्यगर्भदानवि[3]धिः ॥

"मत्स्य उवाच—अथातः संप्रवक्ष्यामि ब्रह्माण्डाभिधमुत्तमम् ।
यच्छ्रेष्ठं सर्वदानानां महापातकनाशनम् ॥
पुण्यं दिनमथाऽऽसाद्य तुलापुरुषदानवत् ।
ऋत्विग्मण्डलसंभारभूषणाच्छादनानि च ॥
लोकेशावाहनं तद्वदधिवासनकं तथा ।
कुर्याद्विंशपलादूर्ध्वमासहस्राच्च शक्ति[4]तः ॥
शकलद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः ।
दिग्गजाष्टकसंयुक्तं षड्वेदाङ्गसमन्वितम् ॥
लोकपालाष्टकोपेतं मध्यस्थितचतुर्मुखम् ।
शिवाच्युतार्कशिखरमुमालक्ष्मीसमन्वितम् ॥
वस्वादित्यमरुद्गर्भं महारत्नसमन्वितम् ।
[5]वितस्तेरङ्गुलशतं यावदायामविस्तरम् ॥
कौशेयवस्त्रसं[6]युक्तं तिलद्रोणोपरि न्यसेत् ।
तथाऽष्टादश धान्यानि समन्तात्परिकल्पयेत् ॥

---

+ अयं श्लोको न विद्यते क. घ. पुस्तकयोः ।

---

१ क. ख. घ. °मरच° । २ क. ग. °मपि ब' । ३ ख. घ. 'धिः । अ' । ४ ख. ग. °तः । कलशद्व° । ५ ग. विस्तृतेर° । ६ क. घ. °संवीतं ति° ।

( दानप्रकरणम् ८ )

सर्वौषध्युदकै[1]स्थानं स्नपितं[2] वेदपारगैः ॥
शुक्लमाल्याम्बरधरैः[3] सर्वाभरणभूषितः ।
इद(म)मुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥
नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
सप्तलोकसुराध्यक्ष जगद्धात्रे नमो नमः ॥
भूर्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः ।
ब्रह्मादयस्तथा देवा नमस्ते विश्वधारिणे ॥
नमस्ते भुवनाधार नमस्ते भुवनाश्रय ।
नमो हिरण्यगर्भाय गर्भे यस्य पितामहः ॥
यतस्त्वमेव भूतात्मा भूते भूते व्यवस्थितः ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥
एवमामन्त्र्य तन्मध्यमाविश्याऽऽस्त उदङ्मुखः ।
मुष्टिभ्यां परिसंगृह्य धर्मराजचतुर्मुखौ ॥
जानुमध्ये शिरः कृत्वा तिष्ठेदुच्छ्वासपञ्चकम् ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ॥
कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुंगवाः ।
गीतमङ्गल[4]घोषेण गुरुरु[5]त्थापयेत्ततः ॥
जातकर्मादिकाः कुर्युः क्रियाः षोडश चापराः ।
सूच्यादिकं च गुरवे दत्त्वा मन्त्रमिमं पठेत् ॥
ॐ नमो हिरण्यगर्भाय विश्वगर्भाय वै नमः ।
चराचरस्य जगतो गृहभूताय वै नमः ॥
मात्राऽहं जनितः पूर्वं मर्त्यधर्माऽमरोत्तम ।
त्वद्गर्भसंभवो[6] देव दिव्यदेहो भवाम्यहम् ॥
चतुर्भिः कलशैर्भूयस्ततस्ते द्विजपुंगवाः ।
स्नानं कुर्युः प्रसन्नाङ्गाः सर्वाभरणभूषिताः ॥
देवस्य त्वेति मन्त्रेण स्थितस्य कनकासने ।
अद्य जातस्य तेऽङ्गानि अभिप्रेक्ष्यामहे वयम् ॥
दिव्येनानेन वपुषा चिरं जीव सुखी भव ।

---

१ क. °कस्नानं स्न° । ग. °कस्नानैः स्नापितो वे° । २ क. घ. °पितो वे° । ३ क. ग. घ. °धरः स° । ४ ख. °ङ्गल्यघो° । ५ ग. °रुद्धापये° । ६ ख. °भवे देवे दि° ।

अणवो राजमाषाश्च माषा मुद्गाश्च कोद्रवाः ।
कुहीनकाः सहीनाश्च सप्तैते व्यन्तराः स्मृताः ” इति ॥

तथा—“ अत्रैव केचिदिच्छन्ति ऋषयः षोडशर्त्विजः ।
आघारावाज्यभागौ तु पूर्वं हुत्वा द्विजोत्तमः ॥
प्रणवादिस्वनाम्ना च स्वाहान्ते होम उच्यते ” ।

तथा—“ अनेनैव विधानेन केचिद्रौप्यमयं पुनः ।
कर्पूरेण तथेच्छन्ति केचिद्ब्राह्मणपुंगवाः ॥
तथा सिततृतीयायां नार्यः सौभाग्यदर्पिताः ।
कुङ्कुमेन प्रयच्छन्ति लवणेन गुडेन च ॥
तत्र मन्त्रा न होमा वा एवमेव प्रदापयेत् ” ।

इति तुलादाने विशेषः ।

“ अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
नाम्ना हिरण्यगर्भाख्यं महापातकनाशनम् ॥
पुण्यं दिनमथाऽऽसाद्य तुलापुरुषदानवत् ।
ऋत्विग्मण्डपसंभारभूषणाच्छादनादिकम् ॥
कुर्यादुपोषितस्तद्वल्लोकेशावाहनं बुधः ।
पुण्याहवाचनं कृत्वा तद्वत्कृत्वाऽधिवासनम् ॥
ब्राह्मणैरानयेत्कुण्डं तपनीयमयं शुभम् ।
द्वासप्तत्यङ्गुलोच्छ्रायं हेमपङ्कजगर्भवत् ॥
त्रिभागहीनविस्तारं प्रशस्तं मुरजाकृति ।
दशोन्तानि सरत्नानि दात्रं सूची तथैव च ॥
हेमनालं सपिटकं बहिरादित्यसंयुतम् ।
तथैवाऽऽवरणं नाभेरुपवीतं च काञ्चनम् ॥
पार्श्वतः स्थापयेत्तद्वद्धेमदण्डं कमण्डलुम् ।
पद्माकारं पिधानं स्यात्समन्तादङ्गुलाधिकम् ॥
मुक्तावलीसमोपेतं पद्मरागदलान्वितम् ।
तिलद्रोणोपरि गतं वेदिमध्ये ततोऽर्चयेत् ॥
ततो मङ्गलशब्देन ब्रह्मघोषरवेण च ।

---

१ क. घ. कुह्न° । २ क. घ. °श द्विजाः । आ° । ३ क. ख. °ति । अ° । ४ क. °त्कुम्भं त° । ५ क. °शास्त्राणि स° । ६ क. ख. °वाऽऽचर° ।

ततोऽवतीर्य गुरवे पूर्वमर्धं निवेदयेत् ।
ऋत्विग्भ्यः परमर्धं तु दद्यादुदकपूर्वकम् ॥
गुरवे ग्रामरत्नानि ऋत्विग्भ्यश्च निवेदयेत् ।
प्राप्य तेषामनुज्ञां च तथाऽन्येभ्योऽपि दापयेत् ॥
दीनानाथविशिष्टादीन्पूजयेद्ब्राह्मणैः सह ।
न चिरं धारयेद्गेहे हेम संप्रोक्षितं बुधः ॥
तिष्ठद्भयावहं यस्माच्छोकव्याधिकरं नृणाम् ।
शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलम् ॥
अनेन विधिना यस्तु तुलापुरुषमाचरेत् ।
प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत् ॥
विमानेनार्कवर्णेन किंकिणीजालमालिना[1] ।
पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ॥
कल्पकोटिशतं यावत्तस्मिँल्लोके महीयते ।
कर्मक्षयादिह पुनर्भुवि राजराजभूपालमौलिमणिरञ्जितपादपीठः ।
श्रद्धान्वितो भवति यज्ञसहस्रयाजी दीपप्रताप[2]जितसर्वमहीपलोकः ॥
यो दीयमानमपि पश्यति भक्तियुक्तो लोकान्तरे स्मरति वाचयतीह लोके ।
यो वा शृणोति पठतीन्दुसमानरूपं[3] प्राप्नोति धाम स पुरंदरदेवजुष्टम् " ॥

इति तुलापुरुषदानम् ।

**अत्र भविष्योत्तरीया विशेषाः—**

" तन्मध्ये कारयेद्वेदिं हस्तमात्रोच्छ्रितां[4] शुभाम् ।
चतुर्द्वारेषु संस्थाप्याः कुम्भाः स्युः पल्लवाननाः ॥
पञ्चरत्नसमायुक्ताः सप्तधान्योपरि स्थिताः " ।

**पञ्चरत्नानि—**" कनकं हीरकं नीलं पद्मरागं च मौक्तिकम् " इति ।

**सप्तधान्यानि ग्राम्याणि आरण्यानि[5] ग्राम्यारण्यानि वा ।**

" व्रीहयो यवगोधूमा उभौ च तिलसर्षपौ ।
इक्षुः प्रियङ्गवश्चैव ग्राम्या ओषधयः स्मृताः[6] ॥
वेणु[7]श्यामाकनीवारर्जर्तिला[8]श्च गवेधुकाः[9] ।
आरण्यजा मर्कटिकाः सप्त गन्दुतिकोत्तमाः ॥

---

१ ग. °ना । वीज्य° । २ ग. दीप्तप्र° । ३ क. °रूपः प्रा° । ४ क. °त्रोच्छ्रयां शु° । ५ ग. °नि वा । ६ ग. °ताः । वीणश्या° । ७ ख. वीणुश्या° । ८ ग. °जम्भिला° । ९ ख. गवीधु° ।

शान्तिकाध्यायम् " शं न इन्द्राग्नी " इति सूक्तम् ।

" उपोषिताश्च ते सर्वे कृत्वैवमधिवासनम् ।
आदावन्ते च मध्ये च कुर्याद्ब्राह्मणवाचनम् ॥
ततो मङ्गलशब्देन स्नापितो वेदपुंगवैः ।
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ॥
शुक्लमाल्याम्बरधरस्तां तुलामनुमन्त्रयेत् ।
नमस्ते सर्वदेवानां शक्ति त्वं सत्यमास्थिता ॥
साक्षिभूता[1] जगद्धात्री निर्मिता विश्वयोनिना ।
एकतः सर्वसत्यानि तथाऽनृतशतानि च ॥
धर्माधर्मकृतां मध्ये स्थापिताऽसि जगद्धिते ।
त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता ॥
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ।
योऽसौ तत्राधिपो देवः पुरुषः पञ्चविंशकः ॥
स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमो नमः ।
ॐ नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक ॥
त्वं हरे तारयस्वास्मांस्त्वस्मात्संसारकर्दमात् ।
पुण्यं कालं समासाद्य कृत्वैवमधिवासनम् ॥
पुनः प्रदक्षिणं कृत्वा तुलां तां प्रारुहेद्बुधः ।
सखड्गचर्मकवची सर्वाभरणभूषितः ॥
धर्मराजमथाऽऽधाय सोमसूत्रेण संयुतम् ।
कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन्हरेर्मुखम् ॥
ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुंगवाः ।
समादभ्यधिकं यावत्काञ्चनं चातिनिर्मलम् ॥
पुष्टिकामस्तु कुर्वीत भूमिसंस्थं नरेश्वर ।
क्षणमात्रं ततः स्थित्वा पुनरेवमुदीरयेत् ॥
ॐ नमस्ते सर्वभूतानां साक्षिभूते सनातने ।
पितामहेन देवि त्वं निर्मिता परमेष्ठिना ॥
त्वया धृतं जगत्सर्वं[6] सहस्थावरजङ्गमम् ।
सर्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि ॥

१ ग. °वंतीर्थानि । २ क. °रसागरात् । पु° । ३ क. ग. °थाऽऽदाय । ४ ग. °य हेम° । ५ ग. वाः । तस्माद° । ६ क. ग. घ. °र्वं सह° ।

( दानप्रकरणम् ८ )

ॐ निर्ऋतये नमः ।

ॐ एह्येहि पाथोगणवारिधीनां गणेन[1] पर्जन्य सहाप्सरोभिः ।
विद्याधरेन्द्रामरगीयमानः पाहि त्वमस्मान्भगवन्नमस्ते ॥

ॐ वरुणाय नमः ।

ॐ एह्येहि यज्ञं मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः ।
प्राणाधिपः कालकवेः सहायो गृहाण पूजां भगवन्नमस्ते ॥

ॐ वायवे नमः ।

ॐ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्धम् ।
सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥

ॐ सोमाय नमः ।

ॐ एह्येहि विश्वेश्वर नस्त्रिशूलिन्कपालखट्वाङ्गवरेण सार्धम् ।
लोकेश भूतेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥

ॐ ईशानाय नमः ।

ॐ एह्येहि पातालधरामरेन्द्र[2] नागाङ्गनाकिंनरगीयमानः ।
रक्षोगणेनामरलोकसार्धमनन्त रक्षाध्वरमस्मदीयम् ॥

ॐ अनन्ताय नमः ।

ॐ एह्येहि विश्वाधिपते मुनीन्द्र लोकेन सार्धं पितृदेवताभिः ।
विशाध्वरं नः सततं शिवाय पितामहस्त्वं भगवन्नमस्ते ॥

ॐ ब्रह्मणे नमः ।

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्णुसुरैः सार्धं रक्षां कुर्वन्तु तानि मे ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयो मनवो गावो देवा मातर एव च ॥
सर्वे ममाध्वरे रक्षां प्रकुर्वन्तु मुदाऽन्विताः ।
इत्यावाह्य सुरान्दद्यादृत्विग्भ्यो हेमभूषणम् ॥
कुण्डलानि च हैमानि सूत्राणि कटकानि च ।
तथाऽङ्गुलीपवित्राणि वासांसि शयनानि च ॥
द्विगुणं गुरवे दद्याद्भूषणाच्छादनादिकम् ।
जपेयुः शान्तिकाध्यायं जापकाः सर्वतोदिशम् " ॥

---

१ क. °णेशप° । २ क. °राधरेन्द्र ।

युता सुवर्णेन च रत्नमाला[1] विभूषिता माल्यविलेपनाढ्या[2] ॥
चक्रं लिखेद्वारिजगर्भयुक्तं नानारजोभिर्भुवि पुष्पकीर्णम् ।
वितानकं चोपरि पञ्चवर्णं संस्थापयेत्पुष्पफलोपशोभम् ॥
अथ द्विजा वेदविदश्च कार्याः सुरूपवेशान्वयशीलयुक्ताः ।
विधानदक्षाः पटवोऽनुकूला ये चाऽऽर्यदेशप्रभवा द्विजेन्द्राः ॥
गुरुश्च वेदार्थविदार्यदेशसमुद्भवः शीलकुलाभिरूपः ।
कार्यः पुराणाभिरतोऽतिदक्षः प्रसन्नगम्भीरसरस्वतीकः ॥
सिताम्बरः कुण्डलहेमसूत्रकेयूरकण्ठाभरणाभिरामः ।
पूर्वेण ऋग्वेदयुतौ[3] च शस्तौ यजुर्विदौ दक्षिणतश्च कार्यौ ॥
स्थाप्यौ द्विजौ सामविदौ च पश्चादाथर्वणावुत्तरतश्च कार्यौ ।
विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम् ॥
ब्रह्माच्युतेशार्कवनस्पतिभ्यः स्वमन्त्रतो[4] होमचतुष्टयं स्यात् ।
जप्यानि सूक्तानि तथैव चैषामनुक्रमेणैव यथास्वरूपम् ॥
होमावसाने कृततूर्यनादो[5] गुरुर्गृहीत्वा बलिपुष्पधूपम् ।
आवाहयेल्लोकपतीन्क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः ॥
ॐ एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरः[6] सुरेशः ।
संवीज्यमानो[7]ऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥

ॐ इन्द्राय नमः ।

ॐ एह्येहि सर्वामर हव्यवाह मुनिप्रवीरैरभितोऽभिजुष्टः ।
तेजोवतीलोक[8]गणेन सार्धं ममाध्वरं रक्ष[9] कवे नमस्ते ॥

ॐ अग्नये नमः ।

ॐ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चितदिव्यमूर्ते ।
शुभाशुभा[10]नन्दसुखामधीश शिवाय नः पाहि मखं नमस्ते ॥

ॐ यमाय नमः ।

ॐ एह्येहि रक्षोगणनायकस्त्वं[11] विशालवेतालपिशाचसंघैः ।
ममाध्वरं पाहि शुभाधिनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥

---

१ ख. °माल्यवि° । २ ग. °विभूषणाढ्या । ३ क. ग. घ. °दविदौ च । ४ ख. ग. स्वतन्त्र° । ५ ख. °तीव्रेण । ६ क. ग. घ. °धरामरेश । सं° । ७ ख. घ. °वीक्ष्यमाणोऽप्स° । ८ ग. °वता लो° । ९ क. घ. °क्ष विभो न° १० ग. °भाचारविचारसाक्षी शि° । ११ क ग. °क त्वं वि° ।

द्रव्यब्राह्मणलाभे वा श्रद्धा वा यत्र जायते ।
तीर्थे वाऽऽयतने गोष्ठे कूपारामसरित्सु च ॥
गृहे वाऽथ वने वाऽपि तडा[1]के निर्झरे तथा ।
महादानानि देयानि संसारभयभीरुणा ॥
अनित्यं जीवितं यस्माद्वसु चातीव चञ्चलम् ।
केशेष्विव गृहीतस्तन्मृत्युना धर्ममाचरेत् ॥
पुण्यां तिथिं समासाद्य कृत्वा ब्राह्मणवाचनम् ।
षोडशारत्निमात्रं तु दश द्वादश वा करान् ॥
मण्डलं कारयेद्विद्वांश्चतुर्भद्राननं बुधः ।
सप्तहस्ता भवेद्वेदी मध्ये पञ्चकराऽथ वा ॥
तन्मध्ये तोरणं कुर्यात्सारदारुमयं बुधः " ।

तोरणमिदं तुलाधारणार्थम् ।

" कुर्या[2]द्द[3]ण्डानि चत्वारि चतुर्दिक्षु विचक्षणः ।
सुमेखलायोनियुतानि[4] द्वारि संपूर्णकुण्डानि[5] सविष्टराणि ।
हस्तप्रमाणानि तिलाज्यधूपपुष्पोपहाराणि सुशोभनानि ॥
पूर्वोत्तरे हस्तमिताऽथ वेदी ग्रहादिदे[6]वेश्वरपूजनाय ।
तत्रार्चनं ब्रह्मशिवाच्युतानां सूर्यस्य कार्यं फलमाल्यवस्त्रैः ॥
लोकेशवर्णाः परितः पताका मध्ये ध्वजः किंकिणिकायुतः स्यात् ।
द्वारेषु कार्याणि च तोरणानि चत्वार्यपि क्षीरवनस्पतीनाम् ॥
द्वारेषु कुम्भद्वयमत्र कार्यं सुग[7]न्धधूपाम्बररत्नयुक्तम् ।
शाकेङ्गुदीचन्दनदेवदारुश्रीपर्णबिल्वैः प्रियकाञ्चनोत्थम् ॥
स्तम्भद्वयं हस्तयुगावखातं कृत्वा दृढं पञ्चकरोच्छ्रितं च ।
तदन्तरं हस्तचतुष्टयं स्यादथोत्तराङ्गं च तदङ्गमेव " ॥

तदङ्गं स्तम्भवृक्षजातिमत् ।

" समानजातिश्च तुलाऽवलम्ब्या हैमेन मध्ये पुरुषेण युक्ता ।
दैर्घ्येण सा हस्तचतुष्टयं तु पृथुत्वमस्यास्तु दशाङ्गुलानि[8] ॥
तुला सुवर्णाभरणा तु कार्या सलोहपाशद्वयशृङ्खलाभिः ।

---

१ ग. घ. °डागे नि° । २ ख. कुर्वन्दण्डा° । ३ क. घ. °र्यात्कुण्डा° । ४ क. घ. °नि तानि सं° । ५ क. घ. °नि महासनानि । सुताम्रपात्रद्वयसंयुतानि सयज्ञपात्राणि स° । ६ घ. °देवीश्व° । ७ क. °गन्धिधू° । ८ क. °नि । सुवर्णपत्राभ° ।

आद्यं तु सर्वदानानां तुलापुरुषसंज्ञकम् ।
हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ॥
कल्पपादपदानं च गोसहस्रं च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ।
पञ्चलाङ्गलिकं तद्वद्धरादानं तथैव च ॥
द्वादशं विष्णुचक्रं च ततः कल्पलतात्मकम् ।
सप्तसागरदानं च रत्नधेनुस्तथैव च ॥
महाभूतघटस्तद्वत्षोडशं परिकीर्तितम् ।
सर्वाण्येतानि कृतवान्पुरा शम्बरसूदनः ॥
वासुदेवोऽथ भगवानम्बरीषोऽथ भार्गवः ।
कार्तवीर्यार्जुनो रामः प्रह्लादः पृथुरेव च ॥
कुर्युरन्ये महीपालाः कानिचिद्भरतादयः ।
यस्माद्विघ्नसहस्राणि महादानानि भूतले ॥
एषामन्यतमं कार्यं वासुदेवप्रसादतः ।
न शक्यमन्यथा कर्तुमपि शक्रेण भूतले ॥
तस्मादाराध्य गोविन्दमुमापतिविनायकौ ।
महादाने मुखं कुर्याद्विप्रैश्चैवानुमोदितः ॥
एतदेवाऽऽह मनवे परितुष्टो जनार्दनः ।
यथा तदत्र वक्ष्यामि शृणुध्वमृषिसत्तमाः ॥
मनुरुवाच—महादानानि यानीह पवित्राणि शुभानि च ।
रहस्यानि प्रदेयानि तानि मे कथयाच्युत ॥
मत्स्य उवाच—नोक्तानि यानि दिव्यानि महादानानि षोडश ।
तानि ते संप्रवक्ष्यामि यथावदनुपूर्वशः ॥
तुलापुरुषयोगोऽयं येषामादौ विधीयते ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥
युगादिषूपरागेषु तथा मन्वन्तरादिषु ।
संक्रान्तौ वैधृतिदिने[1] चतुर्दश्यष्टमीषु च ॥
सितपञ्चदशीपर्वद्वादशीष्वष्टकासु च ।
यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ॥

---

१ क. ख. °धृतदि° ।

( दानप्रकरणम् ८ )

“ सत्पात्रं तु द्विजं दृष्ट्वा स्वागतं श्रोत्रियं गृहे ।
तादृशाय प्रदातव्या पुच्छदेशे निवेदयेत् ॥
पूर्वामुखः स्थितो दाता अथ वाऽपि ह्युदङ्मुखः ।
धेनुं पूर्वामुखीं कृत्वा वत्सं तूत्तरतो न्यसेत् ॥
दानकाले तु ये मन्त्रास्तान्पठित्वा समर्पयेत् ।
आच्छाद्य[1] दैवतं विप्रं मुद्रिकाकर्णवेष्टकैः ॥
स्वशक्त्या दक्षिणां दद्याद्वित्तशाठ्यविवर्जितः ।
हस्ते च दक्षिणां दद्याद्गन्धपुष्पं सचन्दनम् ॥
धेनुं समर्पयेत्तस्य मुखं च न विलोकयेत् ।
एकाहं शर्कराहारो ब्राह्मणस्त्रि[2]दिनं वसेत् ॥
सर्वपापहरा धेनुः सर्वकामप्रदायिनी ।
सर्वकामै[3]प्रसिद्धस्तु जायते नात्र संशयः[4] ॥
दीयमानां प्र[5]पश्यन्ति तेऽपि यान्ति परां गतिम् ।
य इदं शृणुयाद्भक्त्या पठते वाऽपि मानवः ॥
मुच्यते सर्वपापेभ्यो विष्णुलोकं[6] च गच्छति ” ।

**इति भविष्योत्तरे दानधर्मेषु शर्कराधेनुविधिः ।**

**अथ महादानानि । मत्स्यपुराणे—**

“ ऋषय ऊचुः—न्यायेनार्जनमर्थानां वर्धनं चाभिरक्षणम् ।
सत्पात्रप्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥
कृतकृत्यो भवेत्केन मनस्वी धनवान्बुधः ।
महादानेन दत्तेन[7] तात विस्तरशो वद ॥
सूत उवाच—दानधर्मेषु य[8]च्चोक्तं विष्णुना प्रभविष्णुना ।
तदहं संप्रवक्ष्यामि महादानमनुत्तमम् ॥
सर्वपापक्षयकरं नृणां दुःस्वप्ननाशनम् ।
यत्तु षोडशधा प्रोक्तं वासुदेवेन भूतले ॥
पुण्यं पवित्रमायुष्यं सर्वपापहरं शुभम् ।
पूजितं देवताभिश्च ब्रह्मविष्णु[9]हरादिभिः ॥

---

१ क. ग. °द्य चैव । २ क. °दिवे व° । ३ क. ग. घ. °मसमृद्ध° । ४ घ. °यः । ये दीयमानां प° । ५ ग. प्रशंसन्ति । ६ क. °कं स ग° । ७ घ. °न तन्मे वि° । ८ क. ख. यत्प्रोक्तं । ९ क. ख. °ष्णुसुरा° ।

अथ शर्कराधेनोर्विधानम् ।

" विनीताश्व उवाच—तद्वच्च शर्कराधेनुं शृणु राजन्यथार्थतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
धेनुः शर्करया राजन्सदा भारचतुष्टयम् ।
उत्तमा कथ्यते सद्भिश्चतुर्थांशेन वत्सकम्[1]* ॥
तदर्धं मध्यमा प्रोक्ता चतुर्थांशेन[2] कन्यसा(सी) ।
तद्वद्वत्सं प्रकुर्वीत चतुर्थांशेन मानवः ॥
अथ कुर्यादष्टशतैश्चतुर्थांशेन वत्सकम् ।
स्वशक्त्या कारयेद्धेनुं यथाऽऽत्मानं न पीडयेत् ॥
सर्वबीजानि संस्थाप्य चतुर्दिक्षु समन्ततः ।
सौवर्णमुखशृङ्गाणि मौक्तिकानयनानि च ॥
गुडेन च मुखं कार्यं जिह्वा पिष्टमयी तथा ।
कम्बलं पट्टसूत्रेण घण्टाभरणसंयुता[3] ॥
इक्षुपादा रौप्यखुरा नवनीतमयस्तनी ।
प्रशस्तपत्रश्रवणा सितचामरभूषिता ॥
पञ्चरत्नसमायुक्ता दर्भरोमसमन्विता ।
कांस्योपदोहना सम्यग्गन्धपुष्पैः समन्विता ॥
ईदृग्विधानसंयुक्ता वस्त्रैराच्छादितोपरि ।
गन्धपुष्पैरलंकृत्य ब्राह्मणाय निवेदयेत् ॥
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते ।
वेदवेदाङ्गविदुषे विशेषेणाग्निहोत्रिणे ॥
अनसूयवे[4] प्रदातव्या न मत्सरयुताय वै ।
अयने विषुवे चैव व्यतीपाते तु षण्मुखे ॥
एषु कालेषु पुण्येषु[5] यदृच्छायाऽपि दापयेत् " ।

षण्मुखं षडशीतिमुखम्[6] । यदृच्छाया यदृच्छया यादृगिच्छयेत्यर्थः । आर्षो दीर्घः ।

---

* इत उत्तरं सार्धश्लोको न विद्यते ग. पुस्तके ।

---

१ क. °त्सकः । त° । २ घ. छ. ब. °न वत्सकाः । अ° । ३ ग. °ता । प° । ४ ग. °सूयिने प्र° । ५ क. °षु स्वेच्छया वाऽपि । ६ क. °म् । स° ।

( दानप्रकरणम् ८ )

जायते पुरुषो लोके सर्वकामसमन्वितः ।
विधिं वक्ष्यामि राजेन्द्र लवणस्येह कल्पनाम् ॥
गोमयेनोपलिप्येत्तु[1] दर्भसंस्तरसंस्थितम् ।
आविकं चर्म विन्यस्य पूर्वाशाभिमुखस्थितम् ॥
वस्त्रेणाऽऽच्छादितं कृत्वा धेनुं कुर्वीत बुद्धिमान् ।
आढकेनैव कुर्वीत बहुवित्तोऽल्पवित्तवान् ॥
स्वर्णशृङ्गीं[2] रौप्यखुरामिक्षुपादां फलस्तनीम् ।
कार्या शर्करया जिह्वा गन्धघ्राणवतीं तथा ॥
समुद्रोदरजे शुक्ती कर्णौ तस्याः प्रकल्पयेत्[3] ।
शृङ्गे चन्दनकाष्ठाभ्यां यवानास्ये प्रदापयेत् ॥
तिलान्पार्ष्णिषु कुर्वीत गोधूमांश्चैव शक्तितः ।
एवं वै सप्त धान्यानि यथालाभं प्रकल्पयेत् ॥
कम्बलं पट्टसूत्रेण[4] ग्रीवायां[5] छत्रिकां तथा ।
पृष्ठे वै ताम्रपात्रं तु अपाने गुडपिण्डिकाम्[6] ॥
लाङ्गूले कर्पटं दद्याद्दशाः क्षीरप्रदेशतः ।
योनिप्रदेशे तु मधु सर्वतस्तु फलान्विताम् ॥
एवं सम्यक्परिस्थाप्य रससस्यमयीं दशाम् ।
स्थापयेद्वत्सकं चापि चतुर्भागेन(ण) मानवः ॥
एवं धेनुं समभ्यर्च्य माल्यवस्त्रविभूषणैः ।
स्नात्वा देवार्चनं कृत्वा ब्राह्मणानभिपूज्य च ॥
दत्त्वा सदक्षिणां गां तु पुत्रभार्यासमन्वितः ।
ब्राह्मणाय सुशीलाय[7] वृत्तयुक्ताय वै नृप ॥
सौभाग्यं परमां[8] बुद्धिरारोग्यं सर्वसंपदः ।
नृणां भवति दत्त्वा तु रसधेनुं न संशयः ॥
स्वर्गे च नियतो[9] वासो यावदाभूतसंप्लवम् ।
पत्रोर्णकम्बलगलां[10] लवणाढकेन कृत्वा फलस्तनवतीमविचर्म पृष्ठे ।
दत्त्वा द्विजाय विधिवद्रसधेनुमेनां लोके गवां सकलसौख्ययुतो वसेत्तु" ॥

इति भविष्योत्तरे लवणधेनुविधिः ।

---

१ क. ग. °लिप्ते तु । २ क. घ. °ङ्गीं रुप्य° । ३ ग. °त् । ओष्ठौ च° । ४ घ. °ट्टवस्त्रेण । ५ ग. °यां कर्टकं त° । ६ क. ग. घ. °पिण्डका° । ७ क. °य व्रतयु° । ८ क. ग. °मा वृद्धि° । ९ क. घ. °यतं वा° । १० ख. °गणां ल° ।

स्थगितं दधिपात्रेण घृतक्षौद्रवता मुखे[1] ।
उपोषितः समभ्यर्च्य वासुदेवं जलेश्वरम् ॥
पुष्पधूपोपहारैस्तु यथाविभवमादृतः ।
संकल्प्य जलधेनुं च कुम्भं तमभिपूज्य च ॥
पूजयेद्वत्सकं तद्वत्कृतं जलमयं ततः[2] ।
एवं संपूज्य गोविन्दं जलधेनुं सवत्सकाम् ॥
सितवस्त्रधरः शान्तो वीतरागो विमत्सरः ।
दद्याद्द्विजाय राजेन्द्र प्रीत्यर्थं जलशायिनः ॥
जलशायी जगद्योनिः प्रीयतां मम केशवः ।
इति चोच्चार्य भूनाथ विप्राय प्रतिपादयेत् ॥
अपक्वान्नाशिना स्थेयमहोरात्रमतः परम् ।
अनेन विधिना दत्त्वा जलधेनुं नराधिप ॥
सर्वाह्लादानवाप्नोति[3] ये दिव्या ये च मानुषाः ।
शरीरारोग्यमाबाधप्रशमः सार्वकालिकः ॥
नृणां भवति दत्तायां जलधेन्वां न संशयः " ॥

## इति जलधेनुविधानम् ।

## अथ लवणधेनुविधानम् ।

" युधिष्ठिर उवाच—कृष्ण कृष्ण महाबाहो सर्वशास्त्रविशारद ।
कथयस्वेह दानानामुत्तमं यत्प्रकीर्तितम् ॥
येन दत्तेन दानानि सर्वाण्येव भवन्त्युत ।
सर्वकामप्रसिद्धिश्च[4] सर्वपापक्षयो भवेत् ॥
प्रायश्चित्तं विशुद्धिश्च तन्मे कथय सुव्रत " ॥

" श्रीकृष्ण उवाच—शृणु राजन्प्रवक्ष्यामि दानानामुत्तमोत्तमम् ।
ख्यातं लवणधेन्वाख्यं सर्वकामप्रदं नृणाम् ॥
यद्दत्त्वा ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।
विश्वासघाती क्रूरात्मा सर्वपापरतोऽपि वा ॥
मुच्यते नात्र संदेहः शिवलोकं[5] च गच्छति ।
शुभगोधनसंपन्नो दीर्घायुरपराजितः ॥

---

१ क. मुखी । उ° । घ. मुखम् । उ° । २ क. ग. बुधः । ३ ग. घ. °र्वान्कामान° । ४ क. ग. °मसमृद्धि° । ५ ख. °लोके स ग° ।

तद्वत्कल्पनया धेनोर्घृतवत्सं प्रकल्पयेत् " ॥

**धेन्वाश्चतुर्थभागेन वत्सः कार्यः । अन्यत्र तथादृष्टत्वात्[1] ।**

" तां च विप्रं महाभागं मनसैव घृतार्चिषम् ।
कल्पयित्वा ततस्तस्मै प्रयतः प्रतिपादयेत् ॥
एतां ममोपकाराय गृह्णीष्व त्वं द्विजोत्तम ।
प्रीयतां मम देवेशो घृतार्चिः पुरुषोत्तमः ॥
इत्युदाहृत्य विप्राय दद्याद्धेनुं नराधिप ।
घृतरत्नसुवर्णानां सम्यक्कल्पनया कृताम् ॥
दत्त्वैकरात्रं स्थित्वा तु घृताहारो नराधिप ।
मुच्यते सर्वपापेभ्यस्तथा दानफलं शृणु ॥
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
तेषु लोकेषु सर्वेषु सुपुण्येषूपजायते ॥
पितुरूर्ध्वं नयेत्सप्त पुरुषांस्तस्य येऽप्यधः ।
तांस्तेषु नृप लोकेषु स नयत्यस्तकल्मषः ॥
सकामानामियं व्युष्टिः कथिता नृपसत्तम ।
विष्णुलोकं नरा यान्ति निष्कामा घृतधेनुदाः " ॥

**इति घृतधेनुः ।**

**अथ जलधेनुः । विष्णुधर्मेषु वसिष्ठः—**

" जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया ।
देवदेवो हृषीकेशः [2]सर्वदः सर्वभावनः ॥
जलकुम्भं नरव्याघ्र सुवर्णरजतान्वितम् ।
+रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम् ॥
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ॥
कु[3]ष्ठमांसी[4]पुरोशीरवालकामलकैर्युतम् ।
प्रियङ्गु[5]पात्रसहितं सितयज्ञोपवीतिनम्[6] ॥
सोपानत्कं च सच्छत्रं दर्भविष्टरसंस्थितम् ।
चतुर्भिः संभृतं भूप तिलपात्रैश्चतुर्दिशम् ॥

---

+ एतदर्धं न विद्यते क. पुस्तके ।

---

१ क. ग. °त् । तं च । २ क. सर्वेशः । ३ ग. कुष्ठामांसीमुरो° । ४ क. °सीसुरो° । ५ ग. °ह्न्गुपत्र° । ६ ख. ग. °म् । सच्छत्रं सउपानत्कं द° ।

सुवर्णं वाचयित्वाऽग्रे यथाशक्ति[1] प्रदापयेत्* ।
न वित्तशाठ्यं कुर्वीत आत्मनो विभवे सति ॥

अथ प्रतिग्रहीतृमन्त्रः—

" प्रतिगृह्णामि देवि त्वां कुटुम्बार्थे विशेषतः ।
भरस्व कामैर्मां सर्वैस्तिलधेनो नमोऽस्तु ते " ॥

**इति तिलधेनुः ।**

**अथ घृतधेनुदानम् । विष्णुधर्मेषु वसिष्ठः—**

" तिलालाभे[2] तथा दद्याद्घृतधेनुं यतव्रतः ।
येन भूप विधानेन तदिहैकमनाः शृणु ॥
वासुदेवं जगन्नाथं घृतक्षीराभिषेचनात्[3] ।
संपूज्य[4] पूर्ववत्पुष्पैर्गन्धधूपादिभिर्नरः ॥
अहोरात्रोषितो नाम्ना अभि[5]षिच्य घृतार्चिषम् ।
गव्यस्य सर्पिषः कुम्भं पुष्पमाल्यादिशोभितम् ॥
कांस्यापिधानसंयुक्तं सितवस्त्रयुगेन(ण) च ।
हिरण्यगर्भसहितं मणिविद्रुममौक्तिकैः " ॥

**गर्भो मध्यं, मध्यवर्तिना हिरण्येन सहितं मण्यादिभिश्च सहितं कुम्भमित्यर्थः ।**

" इक्षु[6]युग्ममयान्पादान्खुरान्रूप्यमयांस्तथा ।
सौवर्णे चाक्षिणी कुर्याच्छृङ्गे चागुरुकाष्ठजे ॥
सप्तधान्यमये पार्श्वे पत्रोर्णं नवकम्बलम् ।
कुर्यादगुरुकर्पूरैर्घ्राणं फलमयान्स्तनान् ॥
तद्वच्छर्करया जिह्वां गुडक्षीरमयं मुखम् ।
क्षौमसूत्रेण लाङ्गूलं रोमाणि सितसर्षपैः ॥
ताम्रपात्रमयं पृष्ठं[7] कुर्याच्छ्रद्धासमन्वितः ।
ई[8]दृक्स्वरूपां संकल्प्य घृतधेनुं नराधिप ॥

---

* एतदग्रेऽयं श्लोकोऽधिकः क. पुस्तके–" सहस्रमथ वाऽप्यर्धं शतं वाऽपि तदार्धकम् । तस्याप्यर्धं ततोऽप्यर्धं यथाशक्ति प्रदापयेत् " इति ।

---

१ ख. °शक्त्या प्र° । २ ग. °लाभावे त° । ३ ग. °चनम् । सं° । ४ ग. °ज्य विधिव° । ५ क. अर्चयित्वा घृ° । ६ क. ग. घ. °क्षुयष्टिम° । ७ ख. °यं कुर्याच्छ्रद्धाभक्तिस° । ८ ख. घ. °तः । तादृ° ।

( दानप्रकरणम् ८ )

गुडेन वदनं कृत्वा नेत्रे चैव तु मौक्तिके ।
प्रशस्तपत्रश्रवणा पृष्ठं ताम्रमयं स्मृतम् ॥
पुच्छं शणमयं तस्याः क्षुद्रमौक्तिकरोमिकाम् ।
श्वेतैश्च कम्बलै राजन्कम्बलं चैवं[1] कल्पयेत् ॥
फलानां विविधाकारां कण्ठिकां[2] चैव कल्पयेत् ।
स्तनाश्च नवनीतेन सर्वालंकारभूषिताम् ॥
स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नसमन्विताम् ।
दर्भैराच्छादयित्वा च वस्त्रैश्च तदनन्तरम् ॥
आच्छादयित्वा राजेन्द्र चन्दनेन विचर्चिताम् ।
पुष्पैश्च पूजयित्वा तु धूपगन्धैश्च पूजिताम् ॥
तादृशीं[3] कल्पयित्वा तु पात्रभूते द्विजोत्तमे ।
सुव्रताय सुशीलाय विशेषेणाऽऽहिताग्नये ॥
वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते ।
ईदृशाय प्रदातव्या तिलधेनुर्नराधिप ॥
मन्त्रेणानेन राजेन्द्र पूज्या स्तुत्या च सर्वतः[4] ।
ॐ या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता ॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु ।
देहस्था या च रुद्राणी शंकरस्य सदा प्रिया ॥
तेन रूपेण सा देवी मम शान्तिं प्रयच्छतु ।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ॥
चन्द्रार्क[5]शक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये ।
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ॥
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ।
स्वधा या पितृमुख्यानां(णां) स्वाहा यज्ञभुजामपि ॥
सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ।
अन्नं मे जायतां सद्यः पानं सर्वरसास्तथा ॥
कामान्संपादयास्माकं तिलधेनो द्विजार्पिते । इति दानमन्त्रः ।
एवं चाऽऽमन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ।
एवमुच्चारयित्वा तु दद्यात्तस्य च दक्षिणाम् ॥

---

१ क. °व कारयेत् । फ° । २ घ. घण्टिकां । ३ क. ईदृशीं । ४ क. नित्यशः । ५ ख. °र्कचक्र° ।

तिलद्रोणेन कुर्वीत आढकेन तु वत्सकम् ।
शुभवस्त्रयुगच्छन्नां चारुच्छत्रसमन्विताम् ॥
ईदृक्संस्थानसंपन्नां कृत्वा श्रद्धासमन्वितः ।
कांस्योपदोहनां दद्यात्केशवः प्रीयतामिति ॥
सम्यगुच्चार्य विधिना दत्त्वैतेन नराधिप ।
सर्वपापविनिर्मुक्तः पितरं सपितामहम् ॥
प्रपितामहं तथा पूर्वपुरुषाणां चतुष्टयम् ।
आत्मानं तनयं पौत्रं प्रपौत्रं तदधस्त्रयम् ॥
तारयत्यवनीपाल तिलधेनुप्रदो नरः ।
यश्च गृह्णाति विधिवत्तस्याप्येवंविधं फलम् ॥
चतुर्दश तथा ये च ददतश्चानुमोदतः ।
दीयमानां प्रपश्यन्ति तिलधेनुं च ये नराः ॥
तेऽप्यशे[२]षाविनिर्मुक्ताः प्रयान्ति परमां गतिम् ।
प्रशान्ताय सुशीलाय तथाऽमत्सरिणे बुधः ॥
तिलधेनुं नरो दद्याद्वेदपूर्णाय धर्मिणे ।
त्रिरात्रं यस्तिलाहारस्तिलधेनुं प्रयच्छति ॥
दत्त्वैकरात्रं स नरस्तिलानत्ति नराधिप ।
दानाद्विशुद्धपापस्य तस्य पुण्यवतो नृप ॥
चान्द्रायणाद[३]प्यधिकं शस्तं तत्तिलभक्षणम् " इति ।

**तिलधेनोः पद्मपुराणोक्तः परिमाणविशेषः—**

" षोडशाढकमयी धेनुश्चतुर्भिर्वत्सको भवेत् " ॥

**भविष्योत्तरे—**

" विनीताश्व उवाच–विधानं चैव धेनूनां तच्छृणुष्व नराधिप ।
तासां विधानं वक्ष्यामि विशेषश्चापि यादृशः ॥
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ।
वस्त्रप्रस्तरणं कृत्वा धेनुं तत्रोपकल्पयेत् ॥
उदङ्मुखीं सवत्सां तु स्थापयित्वा विचक्षणः ।
प्रस्थैः षोडशभिर्धेनुश्चतुर्भिर्वत्सको भवेत् ॥
इक्षुदण्डमयाः पादा दन्ताः फलमयाः स्मृताः ।
जिह्वा पिष्टमयी तस्या घ्राणं गन्धमयं स्मृतम् ॥

---

१ ख. ग. °धश्च य° । घ. °धस्त्रिय° । २ ख. घ. °शेषौघ° । ३ क. ग. घ. °दभ्यधि° ।

( दानप्रकरणम् ८ )

" पलद्वयं तु प्रसृतं[1] द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैस्तैश्चतुर्भिस्तु द्रोणस्तु कथितो बुधैः ।
कुम्भो द्रोणद्वयं शूर्पः[2] खारी द्रोणास्तु षोडश " ॥

" सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः ।
नवनीतेन रत्नैश्च तथाऽन्येऽपि महर्षयः ॥
एतदेवं[3] विधानं स्यादेते चोपस्कराः स्मृताः ।
मन्त्रावाहनसंयुक्ताः सर्वाः पर्वणि[4] पर्वणि ॥
यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः ।
गुडधेनुप्रसङ्गेन सर्वास्तव मयोदिताः ॥
अशेषयज्ञफलदाः सर्वाः पापहराः शुभाः ।
अयने विषुवे पुण्ये व्यतीपाते च वा पुनः ॥
गुडधेन्वादयो देया उपरागादिपर्वसु " ।

इति गुडधेनुः ।

**अथ तिलधेनुः । विष्णुधर्मोत्तरे वसिष्ठः—**

" तिलधेनुं प्रवक्ष्यामि केशवप्रीणनाय या ।
दत्ता भवति यश्चास्या नरेन्द्र विधिरुत्तमः ॥
यां दत्त्वा ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।
अगारदाही गरदः सर्वपापरतोऽपि वा ॥
महापातकयुक्तो वा युक्तो यश्चोपपातकैः ।
प्रमुच्यतेऽखिलैः पापैर्विष्णुलोकं च गच्छति ॥
उपलिप्ते महीपृष्ठे वस्त्राजिनसमावृते ।
धेनुं तिलमयीं कृत्वा सर्वरत्नैरलंकृताम् ॥
स्वर्णशृङ्गीं रौप्यखुरां गन्धघ्राणवतीं शुभाम्[5] ।
मिष्टान्नजिह्वां कुर्वीत गुडास्यां सूत्रकम्बलाम् ॥
इक्षुपादां ताम्रपृष्ठां कुर्यान्मुक्ताफलेक्षणाम् ।
प्रशस्तपत्रश्रवणां फलदन्तवतीं शुभाम् ॥
स्रग्दाम[6]पुच्छां कुर्वीत नवनीतस्तनान्विताम् ।
फलैर्मनोहरै[7]र्भक्ष्यैर्मणिमुक्ताफलान्विताम् ॥

१ ग. घ. °सृतिर्द्विगु° । २ ख. ग. शूर्पखा° । ३ ख. °व निधा° । ४ क. ग. घ. °धर्मेषु व° । ५ क. ग. घ. °म् । मृष्टा° । ६ क. ग. घ. स्रग्धाम° । ७ क. °नोरमैर्भ° ।

शुक्तिकर्णाविक्षुपादौ शुक्तिमुक्ताफलेक्षणौ ॥
सितसूत्रशिरालौ तौ सितकम्बलकम्बलौ ।
ताम्रगुडकपृष्ठौ तौ सितचामररोमकौ ॥
विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ ।
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ " ॥

तारके चक्षुर्मध्यभागौ ।

" सुवर्णशृङ्गाभरणौ खुरै रौप्यमयैर्युतौ ।
नानाफलयुतौ दन्तौ घ्राणगन्धकरण्डकौ ॥
इत्येवं रचयित्वा तौ धूपदीपैस्तथाऽर्चयेत् ।
या लक्ष्मीः सर्वभूतानां या च देवेष्ववास्थिता ॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु ।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसौ ॥
चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये ।
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ॥
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ।
स्वधा या पितृमुख्यानां(णां) स्वाहा यज्ञभुजां च या ॥
सर्वपापहरा धेनुस्तस्माच्छान्ति प्रयच्छ मे ।
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥
विधानमेतद्धेनूनां सर्वासामिह पठ्यते ।
यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः ॥
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ।
प्रथमा गुडधेनुः स्यात्तिलधेनुस्तथा परा ॥
घृतधेनुस्तृतीया च चतुर्थी जलधेनुका ।
क्षीरधेनुश्च विख्याता मधुधेनुस्तथा परा ॥
सप्तमी शर्कराधेनुर्दधिधेनुस्तथाऽष्टमी ।
रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः ॥
कुम्भाः स्युर्द्रवधेनूनामितरासां तु राशयः " ॥

कुम्भो द्वादशपलाधिकानि पलशतानि पञ्च । तदुक्तम्—

१ क. शुचिमु° । २ क. ग. घ. °त्रसिरा° । ३ क. ग. °णौ राजतखुरसंयु° । ४ ख. ग. घ. स्युर्दुग्धधे° ।

अत्र महाभारते–“ न कृशा[1]मपवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ” ॥
तथा—“ पीतोदकां जग्धतृणां दुग्धदोहां निरिन्द्रियाम् ।
उन्मत्तामङ्गहीनां च मृतवत्सां महाशनाम् ॥
केशचैलपुरीषास्थिक्रव्यादां स्यन्दिनीं खलाम् ।
पुनर्नवां[2] यमलसूं नित्यं प्रगलितस्तनीम् ॥
न दद्याद्ब्राह्मणेभ्यश्च सदोषं वृषभं तथा ” ।

पीतोदकत्वजग्धतृणत्वादिना वृद्धत्वमुपलक्ष्यते । खला दुःशीला । एकस्यापि गोदानादिकर्मणः क्वचिच्छास्त्रे बहुफलं कथ्यते[3] क्वचिच्चाल्पं तद्दातुर्देयस्य पात्रस्य देशकालयोश्च गुणभूयस्त्वाल्पत्वाभ्यां[4] व्यवस्थापनीयम् । यदाह मनुः—

“ पात्रस्य च विशेषेण श्रद्दधानतयाऽपि च ।
अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ” इति ॥

धेनुदानविधिप्रसङ्गेन गुडधेन्वादिविधय उदाह्रियन्ते । तत्र मत्स्यपुराणम्—

“ गुडधेनुविधानस्य यद्रूपमिह यत्फलम् ।
तदिदानीं प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि ।
गोमयेनोपलिप्तायां दर्भानास्तीर्य यत्नतः ” ॥

हस्तोऽरत्निः ।

“ लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत् ।
प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सकाम् ” ॥

प्राङ्मुखी प्राक्शिराः । वत्सोऽपि तथैव ।

“ उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयम् ।
वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ॥
अर्धभारेण वत्सः स्यात्कथिता भारकेण तु ।
चतुर्थांशेन वत्सः स्याद्गृहवित्तानुसारतः ” ॥

पलशतं तुला तुलानां विंशतिर्भारः । तदुक्तम्—

“ तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ” ॥
“ धेनुवत्सौ घृतास्यौ तौ सितसूत्राम्बरावृतौ ।

---

१ क. घ. कृशां पाप° । २ क. घ. °नर्वेनुं य° । ३ ग. दृश्यते । ४ ख. °त्वाद्यव° ।

ससमुद्रगुहा तेन सशैलवनकानना ।
रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥
पृथिवीदानतुल्येन दानेनानेन मानवः ।
तारितैर्याति पितृभिर्विष्ण्वाख्यं यत्परं पदम् ॥
ब्रह्मस्वहारको गोघ्नो भ्रूणहा पाकभेदकः ।
महापातकयुक्तोऽपि वञ्चको ब्रह्मदूषकः ॥
निन्दको ब्राह्मणानां च तेषां कर्माभिदूषकः ।
एवं पातकयुक्तोऽपि गवां दानेन शुध्यति ॥
यश्चोभयमुखीं दद्यात्प्रभूतकनकावृताम् ।
तद्दिनं पायसाहारः पयसा वाऽतिवाहयेत् ॥
सुवर्णस्य सहस्रेण तदर्धेनापि भामिनि ।
तस्याप्यर्धं शतं वाऽथ पञ्चाशच्च ततोऽर्धकम्[1] ॥
यथाशक्ति[2] प्रदातव्यं वित्तशाठ्यविवर्जितम् ।
इमां गृहाणोभयमुखीं भवांस्त्राता ममास्तु वै ॥
मम वंशविशुद्धिः स्यात्सदा स्वस्तिकरो भव ।
इरावती धेनुमतीति जप्त्वा देवस्योना तदनन्तरम् ॥
प्रतिगृह्णामि[3] तां धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु ते नित्यं भद्रं चान्ते नमो नमः ॥
द्यौस्ते प्रतिददामि पृथिवीं ते प्रति गृह्णामि । क
इदं कस्मा अदादिति च वसुंधरे ।
विसृजेद्ब्राह्मणं[4] दधि गां च तस्य गृहं नयेत् " ॥

इत्युभयमुखीदानम् ।

**यथाकथंचिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा ॥**
**अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ २०८ ॥**

यथाकथंचिद्यावत्पूर्वोक्तप्रकारवतीं गां धेनुमधेनुं वा रोगरहितामपरिक्लिष्टां दत्त्वा स्वर्गे महीयते पूज्यते । धेनुर्नवप्रसूता । अधेनुरनवप्रसूता । अपरिक्लिष्टाऽकृशा ।

---

१ क. घ. °तोऽर्धिक° । ख. °तोऽर्थिक° । २ क. घ. °शक्त्या प्र° । ३ क. °मि देवि त्वां क° । ४ क. °णं देवि गां ।

इत्यादिस्वस्त्ययनं वाचयीत। अथास्य व्युष्टिमुदाहरन्ति—अभक्ष्यभक्षणमपेयपानं ब्रह्मघ्नं मातृघ्नं पितृघ्नं सद्य एव पुनात्युपाध्यायीं स्वसुतां स्वामिभार्यां मातरं मातृष्वसारं पितृष्वसारं मातुलानीं भगिनीं भागिनेयीं शिष्यजायामन्यामप्यगम्यां गत्वोभयशिरसं सपरिकरां ब्राह्मणाय दद्यात्। परिकरः स्यात्सुवर्णरूप्यरत्नानि क्षेत्राणि धान्यानि वस्त्राणि रसा लवणाद्याश्चन्दनाद्या गन्धास्तदर्धमर्धं वा सर्वस्वं वा सह तया ब्राह्मणाय दद्यान्महापातकविमुक्तये" इति।

**मत्स्यपुराणे—**

"मत्स्य उवाच—रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलशोभिताम्।
कांस्योपदोहनां राजन्सवत्सां द्विजपुंगवे॥
प्रसूयमानां गां दत्त्वा महत्पुण्यफलं लभेत्।
यावद्वत्सो योनिगतो यावद्गर्भं न मुञ्चति॥
तावद्द्यौः पृथिवी ज्ञेया सशैलवनकानना।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः॥
यावन्ति धेनुरोमाणि वत्सस्य च नराधिप।
तावत्संख्यान्युगगणान्देवलोके महीयते।
पितॄन्पितामहांश्चैव तथैव प्रपितामहान्॥
उद्धरिष्यत्यसंदेहं नरकाद्भूरिदक्षिणः।
घृतक्षीरवहाः कुल्या दधिपायसकर्दमाः॥
यत्र तत्र गतस्यास्य भवन्तीप्सितकामदाः।
गोलोकः सुलभस्तस्य ब्रह्मलोकश्च पार्थिव॥
स्त्रियश्च तं चन्द्रसमानवक्त्राः प्रतप्तजाम्बूनदतुल्यवर्णाः।
महानितम्बस्तनवृत्तमध्याः सेवन्त्यजस्रं नलिनाभनेत्राः"॥

**वराहपुराणे—**"सुवर्णशृङ्गीं यः कृत्वा रौप्ययुक्तां खुरेष्वथो।
ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव वा॥
कपिलायास्तदा पुच्छं ब्राह्मणस्य करे न्यसेत्।
उदकं च करे दत्त्वा वाचयेच्छ्रद्धयाऽन्वितः॥

१ क. घ. °जायां धात्रीम°। २ क. °णि ग्रामधा°। ३ ख. °त्र यत°। ४ ख. ग. °नमध्यवृत्ताः से°।

[ ऋ० सं० अष्ट० ७ अ० २ व० ३३ ] इति पर्वतानाम् ।

वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम ।
यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ॥

[ ऋ० सं० अष्ट० ३ अ० १ व० ४ ] इति वनस्पतीनाम् ।

समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यन्त्यनिविशमानाः ।
इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥

[ ऋ० सं० अष्ट० ५ अ० ४ व० १६ ] इति समुद्राणाम् ।

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसं परि पातु विश्वतः ॥

[ ऋ० सं० अष्ट० ५ अ० १ व० २१ ] इति नागानाम् ।

" मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः " ॥

[ ऋ० सं० अष्ट० १ अ० ६ व० १८ ] इत्योषधीनाम् ।

इति देवादीनामोषधिपर्यन्तानां मन्त्राः । तदनु पार्थिवीभिः पृथ्वीं तर्पयेत् ॥

ईडे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥

[ ऋ० सं० अष्ट० १ अ० ७ व० ३३ ]

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः [ ऋ० सं० अष्ट० १ अ० २ व० ६ ] ॥
उर्वी पृथ्वी बहुले दूरे अन्ते उप ब्रुवे नमसा यज्ञे अस्मिन् ।
दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥

[ ऋ० सं० अष्ट० २ अ० ५ व० ३ ]

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

[ ऋ सं० अष्ट० २ अ० ३ व २२ ] ।

इत्यादिभिश्चतुरशीत्याज्याहुतीर्जुहोति । ब्राह्मणान्भोजयेत् ।

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना " ॥

[ ऋ० सं० अष्ट० ४ अ० ३ व० ७ ] ।

**यावद्वत्सस्य द्वौ पादौ मुखं योन्यां प्रदृश्यते ॥**
**तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ २०७ ॥**

यावद्वत्सस्य जायमानस्य द्वौ पादौ मुखं च योन्यां प्रजनने दृश्यते तावदसौ गौः पृथिवी ज्ञेयाऽऽ गर्भविमोचनात् । ततश्च तद्दानाद्दातुः पृथिवीदानफलावाप्तिर्भवति ।

उभयशिरसं दद्यादित्यनुवृत्तौ च्यवनः—

" तस्याः प्रदानकालः प्रसवकालो नान्यं कालं प्रतीक्षते । व्यतीपातविषुवायनषडशीतिमुखविष्णुपदाद्या ग्रहणान्ताः सर्व एव पुण्यकालाः । तदैव यत्र स्नाते ब्राह्मणं श्रेयांसं श्रुतशीलसत्यशौचवृत्तजातिगुणाद्यैर्गुणैरुपेतं विज्ञातं महता कालेन प्रणिपत्य ब्रूयात् । अहमतीवाऽऽर्तो भीतोऽस्मादगाधादपारात्संसारार्णवात्समुत्तारयामि दशावरान्दशापरानात्मानं च स्वामिन्भवन्तं दानपात्रमासाद्य मदनुग्रहबुद्ध्या नार्थलिप्सया गृह्यतामिति दाता तमनुमन्त्रयेत् । त्वं महीमवनिं विश्वधेनामिति [ ऋ०सं०अष्ट०३अ०६व०२ ] क इदं कस्मा इति गृहीतायां दक्षिणेन पाणिना वत्समाकर्षयेत् । गर्भे नु सन्नन्वेषामवेदमिति [ ऋ०सं०अष्ट०३अ०६ व० १६ ] जपति । निष्क्रान्तेऽग्निमुपसमाधाय देवान्पितॄन्नदीः पर्वतान्वनस्पतीनुदधीन्नागानोषधीस्तर्पयेत्स्वैः स्वैर्मन्त्रैः । तेषां मन्त्रपदानि भवन्ति—

ये देवासो दिव्येकादश स्थ पृथिव्यां मध्येकादश स्थ ।
अप्सुक्षितो महि नैकादश स्थ ते देवा यज्ञमिमं जुषध्वम् ।

[ ऋ० सं० अष्ट० २ अ० २ व० ४ ] इति देवानाम् ।

उशन्तस्त्वा हवामह उशन्तः समिधीमहि ।
उशन्नुशत आवह पितॄन्हविषे अत्तवे । इति पितॄणाम् ।
इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥

[ ऋ० सं० अष्ट० ८ अ० ३ व० ६ ] इति नदीनाम् ।

अद्रिभिः सुतो मतिभिश्च नो हितः प्ररोचयन्रोदसी मातरा शुचिः ।
रोमाण्यव्या समया वि धावति मधोर्धारा पिन्वमाना दिवेदिवे ॥

---

१ क. घ. °तिक्रियाद्यै° । २ क. ख. घ. °द्य सचानु° । ३ क. गृहीत दा° । ४ ख. घ. °स्मादिति । ५ गं. °स्पतींश्छन्दांस्युद° । ६ क. घ. °स्त्वा निधीम° ।

महाभारते—“ समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंपन्नां ब्रह्मलोके महीयते ” ॥

समानवत्सा सरूपवत्सा । सुव्रता सुशीला ।

“ रोहिणीं तुल्यवत्सां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंछन्नां ब्रह्मलोके महीयते ॥
समानवत्सां श्वेतां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते ॥
समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंछन्नां सोमलोके महीयते ॥
समानवत्सां कृष्णां तु धेनुं दत्त्वा पयस्विनीम् ।
सुवस्त्रां सुव्रतां पुण्यां स्वर्गलोके महीयते ॥
वातरेणुसवर्णां तु सवत्सां[1] कामदोहिनीम् ।
प्रदाय वस्त्रसंपन्नां वायुलोके महीयते ॥
गवां पुच्छं गृहीत्वा तु ससुवर्णेन पाणिना ।
गृहस्थो वेदविद्विप्रो वाचयेत्तत्प्रतिग्रहम् ॥
भोगमोक्षप्रदा श्वेता प्रसूता पापनाशिनी ।
कृष्णा स्वर्गप्रदा ज्ञेया गौरी च कुलवर्धिनी ॥
रक्ता रूपप्रदा ज्ञेया पीता दारिद्र्यघातिनी ।
पुत्रप्रदा कृष्णशारी नीला धर्मप्रवर्धिनी ॥
कपिला सर्वपापघ्नी नानावर्णा च मोक्षदा ” इति ॥

इति गोदानम्[2] ॥ २०५ ॥

उभयमुखीदानं[3] सेतिकर्तव्यताफलविशेषं प्रति साधनत्वेनाऽऽह—

**सवत्सारोमतुल्यानि युगान्युभयतोमुखी ॥**
**दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत् ॥२०६**

वत्सेन सह वर्तत इति सवत्सा तस्या रोमाणि[4] सवत्सारोमाणि तैस्तुल्यानि तुल्यसंख्याकानि युगान्युभयतोमुखी अर्धप्रसूता गौर्दातुरासप्तमं कुलं तारयति[5] । पूर्वोक्तेतिकर्तव्यतया ददत्प्रयच्छंस्तावन्त्येव युगानि स्वर्गमाप्नोति । युगं देवमानेन चत्वारि वर्षसहस्राणि ॥ २०६ ॥

---

१ क. °त्सां कांस्यदोहनाम् । प्र° । ग. °त्सां कांस्यदो° । २ घ. °म् । दशधेनुविधिः । उ° । ३ ख. ग. °दानमिति° । ४ ग. °णि तत्तुल्या° । ५ क. घ. °ति । अस्याश्च दाता पू° ।

**दाताऽस्याः स्वर्गमाप्नोति वत्सरान्रोमसंमितान्[1] ॥**

अस्या गोरुक्तप्रकाराया दाताऽस्या एव यावन्ति रोमाणि तावतो वत्सरान्स्वर्गमाप्नोति लभते ॥

गुणोत्फलातिशयमाह[2]—

**कपिला चेत्तारयति भूय आसप्तमं कुलम्[3] ॥ २०५ ॥**

उक्तप्रकारा गौः कपिला चेद्दीयते तदाऽसौ दातुः सप्त पुरुषान्नरकात्तारयति । भूयःशब्दाद्दातारं पूर्वोक्तेन फलेन योजयति ।

संवर्तः—" दशधेनुप्रदानेन तुल्यैका कपिला मता " ॥

बृहस्पतिः—" हेमशृङ्गीं रौप्यखुरां वस्त्रकांस्याज्यसंयुताम् ।
सवत्सां कपिलां दत्त्वा सप्त वंश्यान्समुद्धरेत् " ॥

आदिपुराणे—" कपिलां ये प्रयच्छन्ति चैलच्छन्नां स्वलंकृताम् ।
स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलशोभिताम् ॥
श्वेतवस्त्रपरिच्छन्नां घण्टास्वनरवैर्युताम् ।
सहस्रं यो गवां दद्यात्कपिलां वाऽपि सुव्रत ॥
सममेव पुरा प्राह ब्रह्मा ब्रह्मविदां वर[4] ।
यावन्ति रोमकूपाणि कपिलाङ्गे भवन्ति हि ॥
तावत्कोटिसहस्राणि वर्षाणां दिवि मोदते ।
कृष्णां गां ददते यस्तु पटच्छन्नां स्वलंकृताम् ॥
विधिवच्च द्विजातिभ्यो यमलोकं न पश्यति ।
आयुरारोग्यमैश्वर्यं दाता कामान्समाप्नुयात्+ ॥
सुवर्णशृङ्गाभरणा तथा[5] रौप्यखुरा शुभा ।
पटच्छन्ना शुभा चैव दातव्या वरयोगिने(णे) ॥
यश्च दद्यात्तु गां श्वेतां तस्य पुण्यफलं शृणु ।
जन्मप्रभृति यत्पापं मातृकं पैतृकं च यत् ॥
हस्तोद्धृतजलस्येव तत्क्षणादेव नश्यति ।
गां ददानीह इत्येव वाचा पूयेत[6] सर्वशः " ॥

+ एतदुत्तरमेतच्छ्लोकोऽधिकः क. घ. पुस्तकयोः—
श्वेतां गां ददते यस्तु दिव्यै रत्नैरलंकृताम् । घृतदीपः प्रदातव्यो घृतेनाऽऽस्यं च पूरयेत् ।

१ ङ. °मसंख्यया । अ° । २ ख घ. °णान् । फला° । ३ ख. घ. °सकुलान्न° । ४ क वरः ।
५ क. ख. ग. °था रूप्य° । ६ ख. ग. प्रीयेत ।

स तया मानुषे जातो गोसहस्री महाबलः ।
रूपवान्धनवांश्चैव बहुपुत्रश्च जायते " ॥

दुकूलं पत्रोर्णम् । क्षौममतसीवल्कलमयं वस्त्रम् । वासिताऽऽच्छादिता । देवैरध्यासितेत्यादिस्तस्याः स्तुतिः । हस्तद्वयेन बध्नीयादित्यर्थः । रज्जुना रज्ज्वेत्यर्थः ।

महाभारते—"द्विजातिमभिसंपूज्य[1] श्वःकाल्यमभिवाद्य च ।
प्रदानार्थेऽभियुञ्जीत रोहिणीं नियतव्रतः ॥
आह्वानं च प्रयुञ्जीत समङ्गा बहुलेति च " ।

ब्रह्मपुराणे—" गां दद्याद्वेदपूर्णाय विप्राय गृहमेधिने ॥
स्वर्णालंकृतशृङ्गीं तां वस्त्रघण्टाविभूषिताम् ।
रजतच्छन्नचरणां मुक्तालाङ्गूलशोभिताम् ॥
कांस्योपदोहनां[2] राजन्नरकात्सप्त पूरुषान् ।
सदक्षिणां ददद्गां तां मोक्षयन्स्वर्गमाप्नुयात् " ॥

महाभारते—" वृत्तिग्लाने सीदति[3] चातिमात्रं कृष्यर्थं वा होमहेतोः प्रसूत्याम् ।
गुर्वर्थं वा वंशसंवृद्धये वा धेनुं दद्यादेष कालो विशिष्टः " ॥

अङ्गिराः—" गौरेकस्मै प्रदातव्या श्रोत्रियाय विशेषतः ।
सा हि तारयते सर्वान्सप्त सप्त च सप्त च " ॥

नन्दिपुराणे—" अपात्रे सा तु गौर्दत्ता दातारं नरकं नयेत्[4] ।
कुलैकविंशत्या युक्तं ग्रहीतारं च पातयेत् ॥
पात्रेष्वाध्यात्मिका मुख्या विशुद्धाश्चाग्निहोत्रिणः ।
देवताश्च तथा मुख्या गोदाने[5] ह्येतदुत्तमम् " ॥

महाभारते—" न गोदानात्परं किंचिद्विद्यते वसुधाधिप ।
गौर्हि न्यायागता दत्ता सा हि तारयते कुलम् ॥
यानि कानि च दुर्गाणि दुष्कृतानि कृतानि च ।
तरन्ति चैव पाप्मानं ये धेनुं ददति प्रभो ॥
तिस्रो रात्रीरभ्युपोष्याथ भूमौ तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः प्रीताः सुव्रतैः[6] सोपचारास्त्र्यहं[7] दत्त्वा गोरसैर्वर्तितव्यम् " ॥

जाबालः—" होमार्थमग्निहोत्रस्य यो गां दद्यादयाचिताम् ।
त्रिवित्तपूर्णा पृथिवी दत्ता तेन न संशयः " ॥ २०४ ॥

अधुना फलमाह—

---

१ क. °भिसत्कृत्य श्वः° । २ ख. °हनं रा° । ३ क. घ. शीर्यति । ४ क. घ. °त् । युक्तं कुलैकविंशत्या ग्र° । ५ क. °दानं ह्ये° । ६ क. घ. °व्रताः सो° । ७ क. °पगायंत्र्यहं ।

गोदानेतिकर्तव्यतामाह—

हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ॥
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ २०४ ॥

हेमयुक्ते शृङ्गे यस्याः सा हेमशृङ्गी । रौप्यमयैः खुरैर्विशिष्टा । सुशीला साध्वी । वस्त्रसंयुता वस्त्राच्छादिता । कांस्यपात्रसहिता । क्षीरिणी बहुक्षीरा । सदक्षिणा सुवर्णदक्षिणासहिता गौर्दातव्या । स्कन्दपुराणे—

" यो नरो गां प्रयच्छेत् सवत्सां कांस्यदोहनाम् ।
हेमशृङ्गीं रौप्यखुरां दुकूलक्षौमवासिनाम् ॥
शय्यास्तरणसंपन्नां बहुपुष्पफलैर्युताम् ।
ब्राह्मणं पूजयित्वा तु गन्धमाल्यैरलंकृताम् ॥
देवैरध्यासितां तां तु सर्वैर्हस्तद्वयेन तु ।
मृदुबन्धेन बध्नीयादन्तःश्लक्ष्णेन रज्जुना ॥
कुशान्सुवर्णबीजानि तिलान्सिद्धार्थकांस्तथा ।
प्रदद्यात्तां ततोऽद्भिश्च मन्त्रेणानेन सुव्रत ॥
सर्वदेवमयीं दोग्ध्रीं सर्वलोकमयीं तथा ।
सर्वलोकनिमित्तां गां सर्वदेवनमस्कृताम् ॥
प्रयच्छामि महासत्त्वामक्षयाय शुभामिति ।

ॐ ह्रीं नमो भगवति ब्रह्ममातर्विष्णुभगिनि रुद्रदैवते सर्वपापप्रमोचिनि स्वरूपं स्मर इडे इडान्ते हव्ये चान्द्रे धृतिमति सरस्वति सुश्रुते एह्येहि हुं कुरु हुं कुरु सर्वलोकमये एह्यागच्छाऽऽगच्छ स्वाहा । इति धेनुकर्णजपः ।

प्रतिग्रहीता दाता च तावुभौ स्वर्गगामिनौ(नौ) ।
यदि स्मारयते पूर्वं कर्णेन द्विजसत्तम " इति ॥

मत्स्यपुराणे—" एवं दत्त्वा तु गां तां तु यत्र यत्र प्रजायते ॥
तत्र तत्र गता सा तु जन्तुं तारयते बलात् ।
स्वर्गलोकं नरो गत्वा रमते च यथाऽमरः ॥

---

१ क. प्रदद्यात्तु । २ ख. स दैहस्त° । ३ ग. घ. °देवेदम° । ४ क. ग. ॐ न° । ५ क. °ब्रह्मसुते विष्णु° । ६ ख. घ. °माते विष्णु° । ७ क. ग. °द्रदयिते । ८ क. घ. °मोचनि । ९ क. °न्ते हव्ये कव्ये चा° । १० घ. °व्ये कव्ये चा° । ११ क. घ. °वंदेवम° । १२ क. °कर्णे ज° । १३ क. घ. °ते भवात् । स्व° ।

आसन्नसंक्रमं पुण्यं दिनार्धं स्नानदानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने ॥
या याः संनिहिता[१] नाड्यस्तास्ताः पुण्यतमाः स्मृताः ” ॥

एवं चायमर्थः सिद्धो भवति—अतीतत्वं संक्रान्तेरनागतत्वं वाऽनादृत्य [२]यत्र दिनार्धेऽतीताऽनागता वा संक्रान्तिः प्रत्यासन्ना भवति तत्र स्नानदानादिकं कार्यमिति । अथ प्रकृतमुच्यते—क्रियाऽपि हिंसा[३]दिः प्रायश्चित्तरूपस्य दानस्य निमित्तं भवति । *यथोक्तं मनुना—

“ धनं वा जीवनायालं गृहं वा सपरिच्छदम् ।
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ”

इत्यादि प्रायश्चित्तप्रकरणे। अर्थोऽपि दाननिमित्तं भवति। यथोक्तं महाभारते-

“ एकां गां दशगुर्दद्याद्दश दद्यात्तु गोशती ।
शतं सहस्रगुर्दद्यात्सर्वे तुल्यफलाः स्मृताः ” इति ॥

याचितेनापि दातव्यमित्युक्तम् । तत्र येभ्योऽवश्यं दातव्यं तानाह मनुः—

“ सांतानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् ।
[४]गुर्वर्थिपितृमात्रार्थिस्वाध्यायार्थ्युपतापिनः ॥
नवैतान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभैक्षुकान् ।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥
एतेभ्यो हि द्विजोऽ[५]ग्र्येभ्यो देयमन्नं सदक्षिणम् ।
इतरेभ्यो बहिर्वेदि कृतान्नं भुवि दीयते ” इति ॥

सांतानिको यः संताना[६]य कन्यामुद्वोढुमिच्छति । यक्ष्यमाणः सोमयागं करिष्यमाणः । अध्वगो धर्माय प्रचलितः । सार्ववेदसः कृतविश्वजिद्यागः । गुरोरर्थो गुर्वर्थस्तदर्थी । एवं पित्रर्थी मात्रर्थी स्वाध्यायार्थी उपतापी रोगी च । ते सर्वे स्नातकाः समावृत्तत्वात् । धर्मभिक्षुकाः । विहितभिक्षा[७]कारित्वात् । ब्राह्मणशब्दात्क्षत्रियादिनिवृत्तिः । दक्षिणाशब्देनात्र गवादिद्रव्यमेवोच्यते । न तु ऋत्वि[८]क्परिक्रियोऽसंभवत्वात् । इतरे क्षत्रियादयः । बहिर्वेदि क्रतोरन्यत्रेत्यर्थः । बहिर्वेदीति देयमन्नं सदक्षिणमित्यनेन संबध्यते । “ बहि[९]र्वेदि भिक्षमाणेभ्यः ” इति गौतमवचनात् । कृतान्नं पक्वान्नम् ॥ २०३ ॥

---

* यथोक्तमित्यारभ्य भवतीत्यन्तग्रन्थो न विद्यते ख. पुस्तके ।

---

१ ख. °ता राड्यस्ता° । २ ख. यदि दिना° । ३ ग. °सादिप्रा° । ४ ग. घ. °र्वर्थपितृमात्रर्थस्वा° । ५ क. ग. °जाग्रेभ्यो । ६ क. °नार्थं क° । ७ घ. °क्षावृत्तित्वा° । ८ ग. °त्विक्पारि° । ९ ख. °दि भक्ष्यमा° ।

*पूर्वोत्तरागते रात्रौ भागैः संक्रमणं भवेत् ।
पूर्वाह्णे पञ्च[1] नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ॥
अपराह्णे तु पञ्चैव श्रौते स्मार्ते च कर्मणि " इति ॥

अनेन षडशीत्यां संक्रान्त्यां पूर्वरात्रे[2]र्भाविन्यामपराह्णे संक्रान्तिकार्यं कर्तव्यमित्युच्यते । नृयुग्मिथुनराशिः ।

" पुण्याख्या विष्णुपद्यां च प्राक्पश्चादपि षोडश ।
अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ॥
रात्रौ संक्रमणे प्रोक्तं[3] दिनार्धं स्नानदानयोः ।
अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ॥
ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ।
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ॥
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ " ॥

अत्र चेयं व्यवस्था—पूर्वरात्रसंक्रमणे पूर्वस्याह्न उत्तरार्धे स्नानादिकं कार्यमपरत्र संक्रमणे तूत्तरस्याह्नः पूर्वाह्णे । यत्तु वचनम्—

" राहुदर्शनसंक्रान्तिविवाहा[4]त्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च "

इति, तन्मकरकर्कटसंक्रान्तिविषयम्[5] । " मुक्त्वा मकरकर्कटौ " इति वचनात् । अनेन वचनेनायनद्वय एव रात्रौ स्नानाद्यनुज्ञायते । " रात्रौ स्नानं न कुर्वीत " इति निषेधः संक्रान्त्यन्तरे भवत्येव । यत्तु—

" त्रिंशत्कर्कटके पुण्यं मकरे विंशतिस्तथा ।
भविष्यद्दक्षिणे पुण्यमतीते चोत्तरायणे "

इति, तत्पुण्यातिशयप्रतिपादनार्थम् । न पुनर्नियमार्थम् । अत एव—

" मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चाऽऽदौ ।
षडशीतिमुखेऽतीते तथोदगयने च भूरिफलम् " इति स्मरन्ति ॥

अत एव तेनाविशेषेणोक्तम्—

" संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयोऽपि[6] मितेक्षणैः ।
तद्योगादप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥

---

* एतदर्धं न विद्यते क. ग. घ. पुस्तकेषु । एतच्चाधिकम् ।

---

१ ख. °ञ्च रात्र्यस्तु । २ क. घ. °त्रे भा° । ३ ग. पुण्यं । ४ क. °वाहव्यय° । ५ ख. °हा ञ्यय° । ६ ग. °पि शते° । घ. °पि शिते° ।

**व्यासः**—" संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥
शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् " ॥

**संवर्तः**—" अयनेषु च यद्दत्तं षडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे वा दत्तं भवति चाक्षयम् " ॥

**इन्दुक्षयेऽमावस्यायाम् ।**

" एकस्मिन्सावने त्वह्नि तिथीनां त्रितयं यदा ।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् " ॥

**वसिष्ठः**—" मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने " ।

**मृगो मकरः ।**

" विषुवे च तुलामेषे तयोर्मध्ये ततोऽपराः ।
वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः ॥
एतद्विष्णुपदं नाम विषुवादधिकं फलम् ।
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ॥
षडशीतिमुखी प्रोक्ता षडशीतिगु[१]णा फलैः ।
अतीतानागते पुण्ये द्वे तूदग्दक्षिणायने ॥
उपरागे तु तत्कालमतीते चोत्तरायणे " ॥

**पर्वकालस्तु सर्वसंक्रान्तिषु प्रागूर्ध्वं च भवति । अत एव वसिष्ठेनैव व्यवस्थोक्ता—**

" त्रिंशत्कर्कटके नाड्यो[२] मकरे विंशतिः स्मृताः " ।
वर्तमाने तुलामेषे नाड्यस्तूभयतो दश " इति ॥

**अत्र वर्तमान उभयत इति च सर्वैरेव कर्कटादिभिः संबध्यते । साकाङ्क्षत्वाविशेषात् । तदविशेषे चैकस्य पाठसंनिधिर्नान्वयनियामकोऽवर्जनीयत्वेनान्यथासिद्धत्वात् ।**

" षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिकाः " ।

**फलभूयस्त्वाभिप्रायमेतत् । अत एव षडशीतिमुखेऽपि पूर्वमपि पर्वकालमाह ।**

" विष्णुपद्यां धनुर्मीननृयुक्कन्या[३]सु वै यदा ।
पूर्वोत्तरगतै रात्रौ[४] यदा संक्रमणं भवेत् ॥

१ ख. °गुणाः फ° । २ घ. °ड्यो विंशतिर्मकरे स्मृताः । ३ क. °न्यामुखे य° । ४ क. घ. °त्रौ भागैः सं° ।

( दानप्रकरणम् ८ )

यमः—" दानं हि बहुमानाद्यो गुणवद्भ्यः प्रयच्छति ।
स तु प्रेत्य धनं लब्ध्वा पुत्रपौत्रैः सहाश्नुते " ॥

बहुमान आदरः ।

" परं चानुपहत्य[1]ेह दानं दत्त्वा विचक्षणः ।
सुखोदयं सुखोदर्कं प्रेत्य वै लभते धनम् " ॥

आपस्तम्बः—"सर्वाण्युदकपूर्वाणि दानानि " ॥ २०१ ॥

न केवलमपात्राय[2] न देयं किं तु तेन न प्रतिग्राह्यमपीत्याह—

**विद्यातपोभ्यां हीनेन नैव ग्राह्यः प्रतिग्रहः ॥**
**गृह्णन्प्रदातारमधो नयत्यात्मानमेव च ॥ २०२ ॥**

विद्यातपोभ्यां हीनेन पात्रलक्षणरहितेन । प्रतिगृह्यत इति प्रतिग्रहः । स न ग्राह्यः । यतो विद्यादिरहितः प्रतिगृह्णन्दातारमात्मानं च नरकं नयति ॥२०२॥

**दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ॥**
**याचितेनापि दातव्यं श्रद्धापूतं च शक्तितः ॥ २०३ ॥**

प्रत्यहमनुदिनं पात्रे दातव्यम् । निमित्तेषु संक्रान्त्यादिषु तु विशेषत आदरेण दातव्यम् । याचितेन दातव्यमपिशब्दादयाचितेन च। तत्रा[3]याचितदानं प्रशस्ततमम् । तथा च शातातपः—

" अभिगम्य तु यद्दानं यत्तु दानमयाचितम् ।
विद्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते " ॥

तथा—" गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् ।
सहस्रगुणमाहूते याचिते तु तदर्धकम्[4] " ॥

पात्रे श्रद्धापूतं शक्तित इति च प्रतिवाक्यं संबध्यते । दाननिमित्तं कालः क्रियाऽर्थ इत्युक्तं देवलेन—" कालापेक्षं क्रियापेक्षम् " इत्यादिना । तत्र कालो विधीयते प्रत्यहमित्यादिनाऽहर्मात्रम् । अनेन च रात्रिर्व्युदस्यते। निमित्तेष्वित्यनेन कालविशेषा अयनादयो निर्दिश्यन्ते। तथा च शातातपः[5]—

" अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु यत् ।
षडशीतिमुखे चैव[6] विमुखे चन्द्रसूर्ययोः " ॥

विमोक्षे वर्तमानयोर्न[7] तु मुक्तयोरित्यर्थः । " उपरागे तु तत्कालम् " इति वसिष्ठवचनात् ।

---

१ ग. घ. °हत्येह । २ ख. ग. °य दे° । ३ ख. तत्र या° । ४ क. ख. घ. °दार्धिक° । ५ घ. मनुः । ६ ग. °खेनैव । ७ क. घ. °माने न तु विमु° ।

बहुत्वादर्थजातानां संख्याशेषेषु नेष्यते ।
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः " ॥

विनाशित्वमाह—" इष्टं दत्तमधीतं वा प्रणश्यत्यनुकीर्तनात् ।
श्लाघानुशोचनाभ्यां च भग्नतेजो विपद्यते ॥
तस्मादात्मकृतं पुण्यं न वृथा परिकीर्तयेत् ।
उक्तवन्तमिति प्राहुस्तमेवं कृतवेदनम् ॥
एवं सर्वगुणोपेतमुक्तदोषैर्विवर्जितम् ।
कामधुग्धेनुवद्दानं फलत्यात्मेप्सितं फलम् ॥
इह कीर्तिं च दानाख्यां स्फीतान्भोगांस्त्रिविष्टपे ।
दानश्रद्धां तृतीये च जन्मनि प्रसवोत्तमे ॥
अन्यायाधिगतां दत्त्वा सकलां पृथिवीमपि ।
श्रद्धावर्जमपात्राय न कांचिद्भूतिमाप्नुयात् ॥
प्रदाय शाकमुष्टिं वा श्रद्धाभक्तिसमुद्यताम् ।
महते पात्रभूताय सर्वाभ्युदयमाप्नुयात् " ॥

मनुः—" श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यात्प्रयत्नतः ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः " ॥

महाभारतम्—" एकाग्निकर्म हवनं त्रेतायां यच्च हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टमित्यभिधीयते ॥
वापीकूपतडाकानि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते " ॥

नारदः—" आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते[३] ।
पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ॥
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ।
ग्रहोपरागे यद्दानं सूर्यसंक्रमणेषु च ॥
द्वादश्यां चैव यद्दानं पूर्तमित्यभिधीयते " ।

अनेन चाऽऽदिशब्देन यज्ञदक्षिणादानाद्दानान्तरं गृह्यते ।

" इष्टापूर्तौ द्विजातीनां धर्मः सामान्य उच्यते ।
अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके " ॥

मनुः—" योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव तु ।
तावुभौ गच्छतः स्वर्गं नरकं च विपर्यये " ॥

---

१ ख. घ. °मदुग्धे° । २ ख. °द्भूमिमा° । ३ क. घ. °ते । प्र° ।

( दानप्रकरणम् ८ )

**षड्विपाकत्वमाह**—" दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।
षड्विपाकयुगुद्दिष्टं षडेतानि विपाकतः ॥
नास्तिकस्तेनहिंस्रेभ्योऽवराय पतिताय च ।
पिशुनभ्रूणहर्तृभ्यां प्रदत्तं दुष्फलं भवेत् " ॥

**अवरः क्षत्रियादिः ।**

" महदप्यफलं दानं श्रद्धया परिवर्जितम् ।
परबाधकरं दानं परमप्यूनतां व्रजेत् ॥
यथोक्तमपि यद्दत्तं चित्तेन कलुषेण तु ।
तत्तु संकल्पदोषेण दानं तुल्यफलं भवेत् ॥
यथोक्तैः सकलैः षड्भिर्दानं स्याद्विपुलोदयम् " ।

**उदयः फलम् ।**

" अनुक्रोशवशाद्दत्तं दानमक्षयतां व्रजेत् " ।

**अनुक्रोशो दया । दीयत इति दानं गवादि । ध्रुवादिचतुष्प्रकारमाह**—

" ध्रुवमाजस्रिकं काम्यं नैमित्तिकमिति क्रमात् ।
वैदिको दानमार्गोऽयं चतुर्धा वर्ण्यते द्विजैः ॥
प्रपारामतडाकादि सर्वकामफलं ध्रुवम् ।
तदाजस्रिकमित्याहुर्दीयते यद्दिने दिने ॥
अपत्यविजयैश्वर्यस्त्रीबालार्थं यदिष्यते ।
इच्छासंस्थं तु तद्दानं काम्यमित्यभिधीयते ॥
कालापेक्षं क्रियापेक्षमर्थापेक्षमिति स्मृतम् ।
त्रिधा नैमित्तिकं प्रोक्तं सहोमं होमवर्जितम् " ॥

**त्रिविधत्वमाह**—" नवोत्तमानि चत्वारि मध्यमानि विधानतः ।
अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥
अन्नं दधि मधु त्राणं गोभूरुक्माश्वहस्तिनः ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥
*विद्या चाऽऽच्छादनावासपरिभोगौषधानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥
उपानत्प्रेङ्खयानानि च्छत्रपात्रासनानि च ।
दीपकाष्ठफलादीनि चरमं बहुवार्षिकम् ॥

* न विद्यतेऽयं श्लोकः क. ख. घ. पुस्तकेषु ।

१ ग. घ. °त्त्वमा° । २ ग. घ. °डागादि ।

" धर्ममर्थं च कामं च[1] व्रीडाहर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥
पात्रेभ्यो दीयते[2] दानमनपेक्ष्य प्रयोजनम् ।
केवलं त्यागबुध्द्या यद्धर्मदानं तदुच्यते ॥
प्रयोजनमपेक्ष्यैव प्रसङ्गाद्यत्प्रदीयते ।
तदर्थदानमित्याहुर्वैदिकं फलहेतुकम् ॥
स्त्रीपानमृगयाक्षाणां प्रसङ्गाद्यत्प्रदीयते ।
अनर्हेषु च रागेण कामदानं तदुच्यते ॥
संसदि व्रीडयाऽऽश्रुत्य योऽर्थोऽर्थिभ्यः प्रयाचितः ।
प्रदीयते चेत्तद्दानं[3] व्रीडादानमिति स्मृतम् ॥
दृष्ट्वा प्रियाणि श्रुत्वा च हर्षवद्यत्प्रदीयते ।
हर्षदानमिति प्राहुर्दानं तद्धर्मचिन्तकाः ॥
अक्रोशानर्थहिंसानां[4] प्रतीकाराय यद्भयात् ।
दीयते तापकर्तृभ्यो भयादानं तदुच्यते " ॥

षडङ्गत्वमाह—" दाता प्रतिग्रहीता च श्रद्धा दैवं च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥
अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्याजीवकर्मा च षड्भिर्दाता प्रशस्यते ॥
त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते " ॥

त्रिशुक्लो व्याख्यातः ।

" सौमुख्याद्यभिसंप्रीतिरर्थिनां दर्शने सदा ।
सत्कृतिश्चानसूया च तदा श्रद्धेति कीर्त्यते ॥
अपराबाधमक्लेशं स्वयं येनार्जितं धनम् ।
स्वल्पं वा विपुलं वाऽपि देयमित्यभिधीयते ॥
यद्यत्र दुर्लभं द्रव्यं यस्मिन्कालेऽपि वा पुनः ।
दानादौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥
अवस्थादेशकालानां पात्रदात्रोश्च संपदा ।
हीनं वाऽपि भवेच्छ्रेष्ठं श्रेष्ठं वाऽप्यन्यथा भवेत् " ॥

---

१ ख. च क्रीडा° । २ क, घ. °ते नित्यम° । ३ ख. °नं क्रीडा° । ४ ख. °नर्हाहिं° ।

तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः संध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥

व्यासः—" ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः ।
जातिमात्रोपजीवी च भवेदब्राह्मणः स तु ॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्मकृन्न चाधीते स भवेद्ब्राह्मणब्रुवः " ॥

यत्तु बृहस्पतिनोक्तम्—" शूद्रे समगुणं दानं वैश्ये तद्द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं दानं ब्राह्मणे षड्गुणं स्मृतम् "

इति, तदन्नदानविषयम् । " कृतान्नमितरे " इति गौतमवचनात् । कृतान्नं पक्वान्नम् । इतरे क्षत्रियादयः ।

मनुः—" अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद्धनाद्धर्माच्च हीयते " इति ॥

अत्र सामान्यतो गवादिना देयेन पात्रे[3] दानेन विशिष्टं दानं विहितं तत्र दानशब्दार्थं तस्य चावान्तरविशेषानाह देवलः—

" अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते " ॥

अर्था देयद्रव्याणि तेषां प्रतिपादनं नाम पात्रं प्रति स्वस्वाभिभावापादनपर्यन्तस्त्यागः ।

" द्विहेतु षडधिष्ठानं षडङ्गं षड्विपाकयुक् ।
चतुष्प्रकारं त्रिविधं त्रिनाशं दानमुच्यते " ॥

तत्र द्विहेतुकत्वमाह—" नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धा शक्तिश्च दानानां षडेतानि प्रचक्षते ॥
पात्रेभ्यो दीयते नित्यं वृद्धिक्षयकरौ हि तौ " ।

एको वाशब्द इवार्थे द्वितीयः समुच्चये । यथा नाल्पत्वं दानाभ्युदयस्य कारणं तथा न बहुत्वमपि किं तु श्रद्धाशक्ती । शक्तिरौदार्यमपश्चात्तापश्च । षडधिष्ठानत्वमाह—

---

१ ग. घ. °स्तुत्पतस्ते°। २ ग. घ. °तरेभ्य इ°। ३ क. ग. घ. °त्रेऽर्चनेन । ४ क. °मुचिते । ५ क. °नां वृद्धिक्षयकरे हिते । ए° । ६ ग. घ. °करा हिते । ए° ।

“ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
तेषां प्रतिग्रहाद्दोषो न शिला तारयेच्छिलाम् ॥
अपविद्धाग्निहोत्रस्य गुरोर्विप्रियकारिणः ।
द्रविणं नैव दातव्यं सततं पापकारिणः ॥
न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः ।
शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ” ॥

**वसिष्ठः**—“ उपक्रन्दति दातारं गौरश्वः कांचनं मही ।
अश्रोत्रियस्य विप्रस्य हस्तौ[1] दृष्ट्वा निराकृतेः ” ॥

**दक्षः**—“ धूर्ते छद्मनि मल्ले च कुविद्ये कितवे शठे ।
चाटचारणचौरेषु दत्तं भवति निष्फलम् ” ॥

**व्यासः**—“ ऊषरे[2] वापितं बीजं यच्च भस्मनि हूयते ।
क्रियाहीनेषु यद्दत्तं न च तत्प्रेत्य नो इह ” ॥

**वृद्धमनुः**—“ पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्मै देयं न किंचन ॥
संचयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते च न तं तस्करमर्चयेत् ” ॥

**यमः**—“ यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ” ॥

**वसिष्ठः**—“ उदक्याऽन्वासते येषां ये च केचिदनग्नयः ।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ” ॥

**मनुः**—“ सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये अनन्तं वेदपारगे ” ॥

**समं यावद्दत्तं तावत्[3]तस्य फलमित्यर्थः ।**

**शातातपः[4]**—“ नेष्टं देवलके दत्तमप्रतिष्ठं च वार्धुषौ ।
यच्च निर्णेजके दत्तं[5] निष्फलाशं विधीयते ॥
यश्च लिङ्ग्युचितां वृत्तिमलिङ्गिभ्यः प्रयच्छति ।
घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः[6] ॥
अब्राह्मणाश्च षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।
आद्यो राजाश्रयस्तेषां द्वितीयः क्रयविक्रयी ॥

---

१ ग. घ. हर्तु दृ° । क. हस्तं दृ° । २ ख. ग. घ. उपिरे । ३ ग. घ. °वदेव तस्य । ४ ग. घ. °पः– नष्टं । ५ क. दत्तमफलं संवि° । ६ क. ख. °यः । शातातपः–अ° ।

एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रितः ।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु" ॥

अन्वयादीनि त्रीणि शुक्लानि शुद्धानि येषां ते त्रिशुक्लाः। सवनं सोमयागः।

वसिष्ठः–"यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥
योगस्तपो दया दानं सत्यं शौचं श्रुतं घृणा ।
विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्" ॥

तथा—"किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् ।
पात्राणामधिकं पात्रं शूद्रान्नं यस्य नोदरे" ॥ २०० ॥

इदानीं देयद्रव्येण पात्रेण विशिष्टदानविधिमपात्रे दाननिषेधं चाऽऽह—

**गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ॥**
**नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥२०१॥**

प्रत्येकं गोप्रभृतिद्रव्यमात्मनः श्रेयः प्रियं स्वर्गादिकमिच्छताऽर्चयित्वा पात्राय प्रदेयम् । आदिशब्देन शास्त्रान्तरोक्तमन्नादिदेयं[1] संगृह्णाति । अपात्रदानात्प्रत्यवायोदयं[2] विदुषा जानता किंचिदप्यपात्राय न देयम् । पात्राय दातव्यमितिविधिसामर्थ्यादेवापात्रे न देयमिति निषेधे सिद्धे पृथङ्निषेधमारभमाणो मुख्यपात्रासंभवे प्रतिषिद्धवर्जस्य पात्रताऽस्तीति ज्ञापयति । अत्र चापात्रशब्दो न पात्रादन्यदपात्रमाह किं तु पात्रविरुद्धम् । यस्य च पात्रत्वं प्रतिषिद्धं तत्तद्विरुद्धम् । येभ्यो न देयं तानाह मनुः—

"न वार्यपि प्रयच्छेत्तु बैडालव्रतिके द्विजे ।
न बकव्रतिके पापे नावेदविदि धर्मवित् ॥
त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितं धनम् ।
दातुर्भवत्यनर्थाय परत्रादातुरेव च" ॥

अनर्थः प्रत्यवायः ।

"यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते ।
पापं व्रतेन संछाद्य बैडालं नाम तद्व्रतम्" ॥

कारणं धर्ममित्यर्थः । व्रतं प्रायश्चित्तम् ।

"प्रतिगृह्याऽऽश्रमं यस्तु स्थित्वा तत्र न तिष्ठति ।
आश्रमस्य विलोपेन बैडालं नाम तद्व्रतम्[3]" ॥

---

१ ख. ग. घ. °न्तरार्थम° । २ क. ख. °योदेयं । ३ क. ग. घ. °म् । मनुः—अ° ।

अर्थिनः केचिदिच्छन्ति तेषु दत्तं महाफलम् " ॥

दक्षः—" व्यसनापहरणार्थं च कुटुम्बार्थं च याचते ।
एवमन्विष्य दातव्यं सर्वदानेष्वयं विधिः[२] ॥
शीलं संवासतो ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा संकथया ज्ञेया त्रिभिः पात्रं परीक्ष्यते " ॥

संवर्तः—" श्रोत्रियाय दरिद्राय आर्थिने च विशेषतः ।
यद्दानं दीयते तस्मै तद्दानं शुभकारकम् " ॥

देवलः[३]–" मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ॥
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ॥
तेभ्यः परः परः श्रेष्ठो विद्यावृत्तो विशेषतः ।
ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ॥
अनपेतः क्रियाहीनो मात्र इत्यभिधीयते ।
एकोद्देशमतिक्रम्य वेदस्याऽऽदानवानृजुः ॥
स ब्राह्मण इति प्रोक्तो[४] निभृतं सत्रवान्घृणी[५] ।
एकां शाखां सकल्पां च षड्भिरङ्गैरधीत्य च ॥
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ।
वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ॥
शेषं श्रोत्रियवत्प्राप्तः सोऽनूचान इति स्मृतः " ॥

**शेषं लक्षणं[६] षट्कर्मनिरतत्वं[७] श्रोत्रियस्येव यः प्राप्तः सोऽनूचान इत्यर्थः ।**

" अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते प्राज्ञैः शेषभोजी जितेन्द्रियः " ॥

**शेषं भृत्यादिभुक्तशेषम् ।**

" लौकिकं वैदिकं चैव सर्वं ज्ञानमवाप्य यः ।
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ॥
ऊर्ध्वरेतास्तपस्युग्रो नियताशी त्वसंशयी ।
शापानुग्रहयोः शक्तः सत्यसंधो भवेदृषिः ॥
निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥

---

१ क. एषाम° । २ क. °धिः । यमः–शी° । ३ क. ख. °लः । पात्र° । ४ ख. प्रोक्तं नि° ।
५ ग. घ. नित्यतः सत्यवा° । ६ ग. घ °क्षणष° । ७ ख. °रतं श्रो° ।

( दानप्रकरणम् ८ )

वचनप्रामाण्यान्मातृप्रभृतिभ्यो विद्याहीनेभ्योऽपि वक्ष्यमाणं गोभूप्रभृति दातव्यमवश्यम् ।

तथा च मनुः-" शक्तः परजने दाता स्वजने दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥
भृत्यानामुपरोधेन यः करोत्यौर्ध्वदैहिकम् ।
तद्भवत्यसुखोदर्कं जीवतोऽस्य मृतस्य च " ॥

और्ध्वदैहिकमामुष्मिकफलं कर्म । उदर्कोऽन्तः ।

दक्षः—" दयामुद्दिश्य यद्दानमपात्रेभ्योऽपि दीयते ।
दीनान्धकृपणेभ्यश्च तदानन्त्याय कल्पते " ॥

शातातपः—"संनिकृष्टमधीयानं व्यतिक्रामति यो द्विजः[1] ।
भोजने चैव दाने च स हन्यात्सप्तमं कुलम् " ॥

भविष्यत्पुराणम्—" यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतिताहृते ।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥
तस्मान्नातिक्रमेत्प्राज्ञो ब्राह्मणान्प्रातिवेश्मिकान् ।
संबन्धिनस्तथा सर्वान्दौहित्रं विट्पतिं तथा ॥
भागिनेयं विशेषेण तथा बन्धून्गृहाधिपे[2][3] ।
नातिक्रामेन्नरस्त्वेतान्मूर्खानपि च गोपते ॥
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् " ॥

प्रातिवेश्मिकः समीपगृहवर्ती । विट्पतिर्जामाता ।

महाभारते—" तद्भक्तास्तद्धना राजंस्तद्गृहास्तद्व्यपाश्रयाः ।
अर्थिनश्च भवन्त्यर्थे[4] तेषु दत्तं महाफलम् " ॥

अर्थी धनविषय इत्यर्थः ।

" कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः ।
स्पृहयन्ति सुगुप्तानां तेषु दत्तं महाफलम् " ॥

प्रभविष्णुभिर्बलिभिः कृतसर्वस्वहरणा इत्यर्थः ।

" हृतस्वा हृतदाराश्च ये विप्रा देशविप्लवे ।
अर्थार्थमुपगच्छन्ति तेषु दत्तं महाफलम् ॥
*तपस्विनस्तपोनित्यास्तथा भैक्षचराश्च ये ।

---

* नास्त्ययं श्लोकः ख. पुस्तके ।

---

१ क. द्विजम् । भो° । २ क. °धिपः । ना° । ३ ख. °प । अतिक्रामन्नरस्त्वेनान्मू° । ४ ग. घ. अर्थे ध° ।

सर्वं स्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम् ।
श्रेष्ठेनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति " इति ॥

श्रुतं गुरुतः साङ्गोपाङ्गश्रुतिस्मृतिवाक्यार्थावधारणम् । अध्ययनं श्रुत्या-दिपाठः । श्रुताध्ययने शीलयन्ति सम्यगाचरन्तीत्येवंस्वभावाः श्रुताध्ययनशीलिनः । " शालिनः " इति पाठे ताभ्यां श्लाघमानाः ॥

**तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥१९९॥**

तेभ्यः श्रुताध्ययनमात्रोपक्षीणव्यापारेभ्यः क्रियापरा धर्मानुष्ठानप्रधानाः । क्रियाशब्दोऽत्राधर्मवर्जनार्थोऽपि । अर्थादेषां श्रुताध्ययनसिद्धिर्न हि तद्रहिताः क्रियापरा भवन्ति । तेभ्यः केवलधर्मिभ्यो ब्रह्मविदः प्रशस्ततमाः ॥ १९९ ॥

एवं ब्राह्मणान्प्रशस्य पात्रलक्षणमाह—

**न विद्यया केवलया तपसा वाऽपि पात्रता ॥**
**यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ २०० ॥**

विद्या स्वधर्मब्रह्मविषयं ज्ञानं तया केवलया तपोरहितया तपसा वा स्वधर्मानुष्ठानरूपेण विद्यारहितेन पात्रता न भवति । यतो यत्र ब्राह्मणे वृत्तमाचारलक्षणमस्ति विद्यातपसी च स्तः, तत्पात्रं महर्षिभिः प्रकीर्तितम् । दातारं पापात्तारयतीति पात्रम् । अत एव मनुः—

" दानं धर्मं निषेवेत नित्यमैष्टिकपौष्टिकम् ।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥
यत्किंचिदपि दातव्यं याचितेनानसूयता ।
उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः " ॥

वसिष्ठः—" स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम् ।
स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्लान्तं तादृशं पात्रमाहुः " ॥

योनिमान्कुलीनः ।

" ये क्षान्तदान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।
प्रतिग्रहे संकुचिता गृहस्थास्ते ब्राह्मणास्तारयितुं समर्थाः " ॥

दाने व्यासः—" मातापितृषु यद्दत्तं भ्रातृस्वसृसुतासु च ।
जायात्मजेषु यद्दत्तं सोऽनिन्द्यः स्वर्गसंक्रमः ॥
पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।
अनन्तं दुहितुर्दानं सोदरे दत्तमक्षयम् " इति ॥

---

१ क. ग. घ. सर्वस्वं । २ख. श्रुतादि° ।

व्यासः—" रथ्याकर्दमतोयानि नावः पथितृणानि च ।
मारुतेनैव शुध्यन्ति पक्केष्टकचितानि च " ॥

शङ्खः—" रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा त्वथ ।
नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति " ॥

यमः—" सकर्दमं तु वर्षासु प्रविश्य ग्रामसंकरम् ।
जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणाः स्मृताः " ॥

एतच्च वाक्यद्वयं यत्र कर्दमे व्यवस्थितममेध्यं रूपतो गन्धतश्च नोपलभ्यते तद्विषयमिति ॥ १९७ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धेऽपरार्के द्रव्यशुद्धिप्रकरणं समाप्तम् ॥ ७ ॥

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

## दानप्रकरणम् । ( ८ )

अतोऽनन्तरं दानप्रकरणविधिः । पात्राय गोप्रभृति दातव्यमिति विधास्यति । तदर्थं पात्रस्तुतये ब्राह्मणानामेव पात्रत्वात्तत्प्रशंसामाह—

**तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ॥**
**तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ १९८ ॥**

ब्रह्मा तपस्तप्त्वा वेदसंरक्षणाय देवानां पितॄणां च तृप्त्यर्थं धर्मपालनाय च ब्राह्मणान्ससर्ज । अतस्ते विशिष्टकारणोद्भवत्वादनन्यसाध्यवेदगुप्त्यादिप्रयोजनवत्त्वाच्च प्रशस्ताः । तपः सर्वेन्द्रियजयः ॥ १९८ ॥

किं च—

**सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः[1] ॥**

सर्वस्य पृथ्वीगतस्य वस्तुनः श्रुताध्ययनशीलिनो ब्राह्मणाः प्रभवः स्वामिनः । तथा च मनुः—

" ब्राह्मणो जायमानो वै पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां[2] धर्मकोशस्य गुप्तये ॥

---

१ ङ. °नशालि° । २ ग. घ. °भूतस्य ध° ।

वर्णत्रयस्य संस्पर्शादाचम्य प्रयतो भवेत् ।
संस्पर्शे प्रतिलोमानां क्रियात्यागो विधीयते ॥
कारुकाणां च संस्पर्शे द्विजस्याऽऽचमनक्रिया ।
स्पर्शे तु प्रतिलोमानां प्राणायामोऽधिको भवेत् " ॥

कर्मप्रयोगकाल एतत् ।

"विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कथं चन ।
आचम्यैव तु शुद्धः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥

स्मृत्यन्तरम्—" चरेदाचमनं स्पर्शे तत्प्राप्तिप्रापके द्विजः ।
वर्णानां न ब्राह्मणानां पवित्रं परमं हि ते " इति ॥

प्रजापतिः—" उपक्रमे विशिष्टस्य कर्मणः प्रयतोऽपि सन् ।
कृत्वा च पितृकर्माणि सकृ[1]दाचम्य शुध्यति " ॥

विशिष्टं विहितम् ।

शातातपः—"अशुचिं संस्पृशेदन्य एक एव स दुष्यति ।
उत्सृष्टोऽन्यो न दुष्येत्तु सर्वद्रव्येष्वयं विधिः " ॥

पराशरः—" क्षुते नि[2]ष्ठीवने चैव [3]दन्तोच्छिष्टे तथाऽनृते ।
पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् " ॥

वृद्धशातातपः—" वातकर्मणि निष्ठीव्य [4]दन्तोत्सर्गे तथा क्षुते ।
पतितस्य च संलापे दक्षिणं श्रवणं स्पृशेत् " ॥

विहितानुष्ठानकालादन्यत्रैतत् ।

चतुर्विंशतिमतात्—" इक्षूण्यम्बु फलं मू[5]लं ताम्बूलं पय औषधम् ।
भक्षयित्वाऽपि कर्तव्याः स्नानदानोदकक्रियाः " ॥

स्मृत्यन्तरम्—" द्राक्षादीनि फलानीक्षून्पयो मूलं घृतं दधि ॥
ताम्बूलमौषधं पत्रं हविर्भुक्त्वाऽपि नाऽऽचमेत् " ॥ १९६ ॥

**रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ॥**
**मारुतेनैव शुध्यन्ति पक्वेष्टकाचितानि च ॥ १९७ ॥**

इति द्रव्यशुद्धिप्रकरणम् ॥ ७ ॥

रथ्यागताः कर्दमाः । तथा तोयानि । पक्वेष्टकाभिश्चितानि गृहादीनि अन्त्यादिस्पृष्टानि मारुतेनैव शुध्यन्ति । रथ्या मार्गः । कर्दमः पङ्कः । अन्त्यश्चण्डालादिः । प्रसिद्धमन्यत् ।

---

१ ग. घ. सर्वदा° । २ क. ग. घ. °ष्ठीविते चै° । ३ क. ग. घ. दन्तश्लिष्टे । ४ ग. घ. दन्तश्लिष्टे तथाऽनृते । क्षुते पतितसं° । ५ ख. °लं च घृतं दधि । भ° ।

( द्रव्यशुद्धिप्रकरणम् ७ )

वसिष्ठः—" रुदित्वाऽऽचान्तः पुनराचमेत् " ।

ब्रह्माण्डपुराणात्—" निष्ठीवने तथाऽभ्यङ्गे भुक्त्वा विपरिधाय च ।
उच्छिष्टानां च संस्पर्शे तथा पादावसेचने ॥
उच्छिष्टस्य च संभाषादशुच्युपहतस्य च ।
संदेहेषु च सर्वेषु शिखामोक्षे तथैव च ॥
विना यज्ञोपवीतेन नित्यमेव त्युपस्पृशेत् " ।

विना यज्ञोपवीतेनावस्थानमाचमननिमित्तम् ।

" उष्ट्रस्यावशसंस्पर्शे दर्शने चान्त्यवासिनाम् ।
जिह्वया चैव संस्पृश्य दन्तसक्तमुपस्पृशेत् " ॥

अवशसंस्पर्शः प्रमादसंस्पर्शः । शक्यपरिहारं दन्तसक्तं जिह्वया स्पृष्ट्वोपस्पृशेदित्यर्थः ।

मार्कण्डेयपुराणे—" देवार्चनादिकार्याणि तथा गुर्वभिवादनम् ।
कुर्वीत सम्यगाचम्य तद्वदन्नभुजिक्रियाम् " ॥

हारीतः—" स्त्रीशूद्रोच्छिष्टाभिभाषणे मूत्रपुरीषोत्सर्गदर्शने ।
देवतामभिगन्तुकाम आच(चा)मेत् " ।

षट्त्रिंशन्मतात्—" मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी ।
मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत् ॥
स्नान्येतानि तु संस्पृश्य प्रक्षाल्याऽऽचम्य शुध्यति ।
उत्तीर्योदकमाचामेदवतीर्य तथैव च " ॥

हारीतः—" सुषुप्सुराचामेत् ।
रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ ॥
निर्णेजकः सौनिकश्च नटः शैलूषकस्तथा ।
चक्री ध्वजी वध्यघाती ग्राम्यकुक्कुटसूकरौ ॥
एभिर्यदङ्गं स्पृष्टं स्याच्छिरोवर्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा आचान्ताः प्रयता मताः " ॥

रजको वस्त्रादीनां रागकर्ता । निर्णेजकश्चैलधावकः । नटो जातिविशेषः । अनटोऽपि रङ्गावतरणजीवी शैलूषः ।

पद्मपुराणात्—" जपहोमप्रदानेषु पितृपिण्डोदकेषु च ।
समाप्तेष्वाचमेद्विप्रः सर्ववस्तुषु चर्वणे ॥

---

१ ख. 'वीताना° । २ क. °त् । राज° । ३ ख. ग्रामकु° । ४ ख. °वतार° ५ ग. घ. °मविधाने° ।

द्विराचमनं विधीयत इत्यविरोधः । वासोविपरिधानं पुनरधोवस्त्रनिबन्धनम्[1]।
तथा च बौधायनः—" नीवीं विस्रस्य[2] परिधायाप उपस्पृशेत् " इति ।

नीवी परिधानग्रन्थिः ।

आपस्तम्बः—" भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत् " ।

प्रचेताः—" मूत्रपुरीषोत्सर्गनिष्ठ्यूतशुक्तवाक्याभिधाने पुनरुपस्पृशेत् "।

शुक्तमनृतम् ।

पैठीनसिः—"कासश्वासागमे चत्वरश्मशानाक्रान्तावाचान्तः पुनराचामेत् " ।

चतु(त्व)रश्चतुष्पथः ।

षट्त्रिंशन्मतात्—" होमे भोजनकाले च संध्ययोरुभयोस्तथा ।
आचान्तः पुनराचामेदन्यत्र तु सकृत्सकृत् " ॥

आचान्तः पुनराचामेदित्यनुवृत्तौ वसिष्ठः—
" ओष्ठौ च संस्पृश्य यत्रालोमकौ " ।

विष्णुः—
" क्षुत्वा भुक्त्वा सुप्त्वा भोजनाध्ययनेप्सुः पीत्वा निष्ठीव्य वासो विपरिधाय रथ्यामाक्रम्य कृतमूत्रपुरीषः पञ्चनखास्थ्यस्नेहं स्पृष्ट्वा वाऽऽचामेच्चण्डालम्लेच्छसंभाषणे च नाभेरधस्तात्प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्यातन्द्रितः शुध्येत् " ।

आचम्येति शेषः । प्रबाहुः कराग्रम् । वाक्यान्तरप्रतिपन्नद्विराचमननिमित्तभावैः स्वापादिभिः साहचर्यादेतान्यपि द्विराचमननिमित्तानि ।

व्यासः—" आचान्तः पुनराचामेज्जपहोमार्जनेषु च " ।

जपादिषु कार्येष्वित्यर्थः ।

आपस्तम्बः—
" स्वप्ने क्षवथौ शिङ्घाणिकास्रवालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चाऽऽलम्भे महापथं च गत्वाऽमेध्यं चोपस्पृश्याप्रयतं मनुष्यं नीवीं च परिधायोपस्पृशेत् । आर्द्रं वा शकृदोषधीर्भूमिं वा " ।

क्षवथुः क्षुतम् । शिङ्घाणिका नासा तस्या अलोमकप्रदेशालम्भे । अस्रु नेत्रजलम् । शकृद्गोशकृत् ।

तथा च बौधायनः—" नीवीं विस्रस्य परिधायाप उपस्पृशेत् ।
आर्द्रं तृणं गोमयं भूमिं वा स्पृशेत् " इति ।

उपस्पर्शनमाचमनम् ।

---

१ ग. ङ. °निर्बन्ध° । २ ख. ग. घ. विप्रस्य ।

उच्छिष्टं करोतीति शेषः ।

तथा—" दन्तवद्दन्तसक्तेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः[1] " ॥

आचमननिवृत्त्यर्थ एवकारः ।

गौतमः—" दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात्प्राक्च्युते-
रित्येके । च्युतेष्वास्राववद्विद्यान्निगिरन्नेव तच्छुचिः " ।

ततश्च दन्तसक्तस्य त्यागनिगरणयोर्विकल्पः । आस्रावो मुखोदकम् ।

शङ्खः—" दन्तवद्दन्तलग्नेषु रसवर्जमन्यत्र जिह्वाभिमर्शनात् " ।

रसवर्जं रसोपलम्भवर्जमित्यर्थः ।

देवलः—" भोजने दन्तलग्नानि निर्हृत्याऽऽचमनं चरेत् ।
दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् ॥
न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते " ॥

भोजनानन्तरं दन्तलग्नं त्यक्त्वाऽऽचामेद्भोजनादन्यत्र नेति व्यवस्था । भोजनानन्तरमपि यद्दन्तलग्नमशक्योद्धरणं न तदुद्धरणे पुनः पुनर्यतितव्यम् । यतस्तृणेषीकया[2] दन्तमूले रक्तस्रावादशौचभूयस्त्वम् ।

अत्रिः—" मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्य भवेद्दोषस्त्वत्रेश्च वचनं यथा " ॥

मधुपर्कादिषूच्छिष्टस्य । मन्त्रोच्चारविषयमेतत् । आचमनं तु सोमादन्यत्र कार्यमेव । " न सोमेनोच्छिष्टा भवन्ति " इति श्रुतिस्तन्निवर्तिका ।

षट्त्रिंशन्मते—" ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः ॥
त्वग्भिः पत्रैर्मूलपुष्पैस्तृणकाष्ठमयैस्तथा ।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टस्तु भवेद्द्विजः " ॥ १९५ ॥

**स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वे[3] रथ्यापसर्पणे ।**
**आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ १९६ ॥**

स्नानादिषु कृतेषु द्विराचामेत् । पन्थानश्च विशुध्यन्तीति यदुक्तं तच्चण्डालादिस्पृष्टानां तेषां स्प्रष्टुः स्नानादिनिवृत्त्यर्थम् । अत्र तु रथ्याप्रसर्पणमात्रे

---

१ ख. °च्छुचि । आ° । २ क. ख. °स्तृणषी° । ३ ङ. भुक्त्वा ।

चतुर्विंशत्यङ्गुलो हस्तः । हस्तचतुष्टयं दण्डः ॥ १९३ ॥

अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः ॥

अजा अश्वाश्चेत्युभयं मुखतो मुखप्रदेशे मेध्यं शुद्धम् । गौर्मुखप्रदेशे मेध्या न भवति । नरशरीरजा वसाशुक्रादयो मलाः स्वरूपेणैवामेध्याः ।

बृहस्पतिः—" पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् " ॥

यमः—" पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा ।
गोः पुरीषं च मूत्रं च सर्वं मेध्यमिति स्थितिः " ॥

पृष्ठशब्दोऽत्र मुखव्यतिरिक्तविषयः । यदाह बौधायनः—
" मुखवर्जं तु गौर्मेध्या मार्जारश्चङ्क्रमे शुचिः " ॥

अजाश्वयोर्मुखं संयोगाद्द्रव्यान्तरशोधकत्वेन मेध्यमुच्यते । स्पर्शमेध्यता तु तयोः सर्वाङ्गविषयैव ॥

पन्थानस्तु विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥ १९४ ॥

चण्डालादिस्पृष्टा अपि पन्थानः सोमसूर्यरश्मिभिर्मारुतेन च स्पृष्टाः शुचयो भवन्ति ॥ १९४ ॥

मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः ।
श्मश्रु चाऽऽस्यगतं दन्तसक्तं[२] त्यक्त्वा ततः शुचिः॥१९५॥

मुखजा विप्रुषो लालायाः सूक्ष्माः कणास्ता अमेध्या न भवन्ति। तथाऽऽचमनबिन्दवः । आस्यगतं च श्मश्रु नामेध्यम् । दन्तसक्तं दन्तलग्नं यत्किंचित्तत्त्यक्त्वा पुमाञ्शुचिः ।

वसिष्ठः—" न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति । न चेदङ्गे निपतन्ति " ।

मनुः—" स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् " ॥

आपस्तम्बः—

" न श्मश्रुभिरुच्छिष्टो भवति । अन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति । य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् । ये भूमौ न तेष्वाच(चा)मेदित्येके " ।

वसिष्ठः—" न श्मश्रुगतो लेपः " इति ।

---

१ ग. °श्च क्रमे । २ घ. घ. दन्तास° ।

( द्रव्यशुद्धिप्रकरणम् ७ )

अयाज्ययाजी भृतको नित्यं शूद्रोपदेशकृत् ।
अन्यदोषैस्तु रहितः पूज्यः स्याद्वेदपारगः " ॥

अन्यदोषाः सुरापानादयः ।

तथा—" चण्डालपतितच्छाया स्पर्शे दुष्टा[1] तु नो भवेत् ।
भस्म क्षौद्रं सुवर्णं च सदर्भाः कुतपास्तिलाः " ॥

पतितचण्डालयोर्गोपुच्छपरिमितदेशाद्विप्रकृष्टदेशस्थयोश्छायानुग्रहोऽयम् ।

" अपामार्गशिरीषार्काः पद्मान्यामलका मणिः ।
माल्यानि सर्षपा दूर्वाः सदा भद्राः प्रियङ्गवः ॥
अक्षताः सिकता लाजा हरिद्रा चन्दनं यवाः ।
पलाशखदिराश्वत्थतुलसीधा[2]तकीवटाः ॥
एतान्याहुः पवित्राणि ब्रह्मज्ञा हव्यकव्ययोः ।
पौष्टिकानि मलघ्नानि शोधनानि च देहिनाम् ॥
तेष्वापो गोशकृन्मूत्रं पवित्राणि विशेषतः ।
अप्राप्तव्यवहारश्च दूतो दारोन्मु[3]खो व्रती ॥
मक्षिकाः सततं धाना भूमिस्तोयं हुताशनः ।
आत्मशय्याऽऽसनं यानं जायाऽपत्यं कमण्डलुः " ॥

तथा—" अजा[4]विगोमहिष्यश्च न दुष्यन्ति कदा चन ।
अकश्मलैः समिद्धोऽग्निर्दुर्मनुष्यैरदूषितः ॥
सर्वेषामप्यशौचानां समर्थः शोधनाय सः ।
द्रव्याणामग्निदग्धानां मेध्यत्वमुपजायते ॥
ज्वालाभिः स्पृष्टमात्राणां शुचित्वं नियतं भवेत् ।
अग्नेर्वृषलभुक्तस्य ग्रहणं नास्त्यनापदि ॥
श्वपाकवृषलौ भोक्तुं ब्राह्मणाग्निं तु नार्हतः ।
वृषलाग्नेरमेध्याग्नेः सूतकाग्नेश्च कर्हि चित् ॥
पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम् " ॥

अप्राप्तव्यवहारो बालः । वृषलश्चण्डालः ।

ब्रह्मपुराणे–" ग्रामाद्दण्डशतं मुक्त्वा[5] नगराच्च चतुर्गुणम् ।
भूमिः सर्वत्र शुद्धाऽन्या यत्र लेपो न दृश्यते " ॥

---

१ ख. °ष्टान्तरे भ° । २ ग. °धात्रकी° । ३ ख. °न्मुखीव्र° । ४ ग. °जा गावो म° । ५ क. त्यक्त्वा ।

**रश्मिरग्निरजश्छाया गौरश्ववसुधानिलाः॥[1]**
**विप्रुषो मक्षिका स्पर्शे वत्सः प्रस्रवणे शुचिः॥ १९३॥**

रश्मिः सूर्यादिप्रभा। अजश्छागः। रज इति वा पदच्छेदः। तथाऽग्नी रज इति पाठः कार्यः। प्रसिद्धमन्यत्। छाया निषिद्धव्यतिरिक्ता। वसुधा च श्मशानादिव्यतिरिक्ता। विप्रुषः सुसूक्ष्मा जलकणाः। तासां च शुचिजल-[2]प्रभवानामपि चण्डालाद्यङ्गसङ्गिना वायुना नीयमानानामशुचित्वाशङ्कायां शुचित्वविधिरयम्। रश्म्यादिस्पर्शे तु शुचिरिति वाक्यार्थः। मक्षिकाग्रहण-मवर्जनीयस्पर्शानां दंशमशकादीनामुपलक्षणार्थम्। तथा वत्सः प्रस्रवण ऊधः-स्थक्षीरस्य स्तनात्[3]प्रत्यानयने शुचिः।

यमः—"आसनं शयनं यानं स्त्रीमुखं कुतपं क्षुरम्[4]।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं[5] तथा॥
गौरश्वो विप्रुषश्छाया मक्षिकाः शलभाः शुकाः[6]।
अजो हस्तीरणच्छत्रं रश्मयश्चन्द्रसूर्ययोः॥
भूमिरग्नी रजो वायुरापो दधि घृतं पयः।
सर्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि नित्यशः"॥

शङ्खः—"धूमाग्निरजांसि वाय्वीरितानि शुद्धानि"।

ब्रह्मपुराणे-"स्वदाराणां रतौ वक्त्रं शिशोश्च प्रसवे शुचि"॥

देवलः—"अजाश्वा मुखतो मेध्या गावो मेध्यास्तु पृष्ठतः।
तरवः पुष्पिता मेध्या ब्राह्मणाश्चैव सर्वतः"॥

शिवधर्मोत्तरे—"विप्रो गौर्मक्षिका स्वेदश्छायाऽग्निः सूर्यरश्मयः।
रजो भूर्वायुरापश्च मेध्यानि स्पर्शने सदा"॥

तथा—"स्नातश्च विप्रश्चास्नातच्छागगोमक्षिकास्तथा।
दुष्टभूमेश्च संलग्नास्तेषां सूर्यांशुमारुताः॥
*चण्डालपतितच्छाया स्पर्शे[7] दुष्टा तु नो भवेत्[8]"।

तथा—"शुद्धौ विप्रस्य द्वौ पादौ मार्जारस्य तु सर्वदा"॥

तथा—"ग्रामयाजी पर्वकारो भृतकाध्यापकस्तथा।
विक्रीणाति च यो वेदं तीर्थयज्ञतपांसि च॥

---

* इदमर्धमधिकम्। अग्रे तस्योल्लेखात्।

---

१ ङ. 'रश्वो वसुधाऽनिलः। वि'। २ क. ग. घ. 'प्रभावा°। ३ ग. घ °त्प्रभृत्या°। ४ ग. घ. खरम्। ५ क. ग. चसमं त°। ६ ग. घ. शुभाः। अ°। ७ ख. स्पर्शो दुष्टात्तरो भ°। ८ ग. घ. 'र्शे दुष्टात्मनोभ'।

आपस्तम्बः—" उपानच्छ्लेष्मविण्मूत्रस्त्रीरजो मद्यमेव च ।
एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत् " ॥

विष्णुः—" जलाशयेष्वथाल्पेषु स्थावरेषु महीतले ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥
भूमिष्ठमुदकं पुण्यं वैतृष्ण्यं यत्र गोर्भवेत् ।
अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम् ॥
सोमसूर्यांशुपातेन मारुतस्पर्शनेन च ।
गवां मूत्रपुरीषेण शुध्यन्त्याप इति स्मृतम् " ॥

स्वल्पतरोपघातविषयमेतत् ।

यमः—" प्रपास्वरण्ये घटगं च कूपे द्रोण्यां जलं कोशगतास्तथाऽऽपः ।
ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतः काङ्क्षितवत्पिबेत्तु " ॥

अस्यार्थः—यद्यपि शूद्रव्यतिरिक्तवर्णसंबन्धि प्रपादि तथाऽपि तद्गतजलमनापद्यपेयम् । आपदि तु पेयमेव । प्रपा जलसत्रशालाः । ताश्चेदरण्यगा गृहादन्यत्रेत्यर्थः । घटगं घटस्थम् । द्रोणी अश्मादिमयी सर्वार्थजलपात्री । कोशो दृतिः ।

मनुः—" अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः ।
दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकम् " ॥

ब्रह्मपुराणे—" नवखातजलं गावो ब्राह्मण्यश्छागयोनयः ।
शुध्यन्ति दिवसैरेव दशभिर्नात्र संशयः " ॥

कात्यायनः—" अपो निशि न गृह्णीयाद्गृह्णन्नपि कदा चन ।
विवृत्याग्निमुपर्यासां धाम्नोधाम्न इतीरयन् " ॥

आपदि रात्रौ यदि गृह्णीयादग्निमुपरि धारयन्धाम्नोधाम्न इति मन्त्रं पठन्गृह्णीयात् ।

शातातपः—" अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते " ॥

यमः—" चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रेणैव शुध्यति " ॥

तथा[2]—

**मार्गे[1] मांसं श्वचण्डालक्रव्यादादिनिपातितम् ॥ १९२ ॥**

श्वादिभिर्निपातितस्य मृगादेर्मांसं तथा स्याच्छुचीत्यर्थः । क्रव्यादा व्याघ्रादयः ॥ १९२ ॥

---

१ ख. धृतिः । २ ङ. तथा मांसं श्व° ।

वाक्शस्तादि सदा शुचि। शुद्धमिदमिति ब्राह्मणैरभिहितं वाक्शस्तम्। अम्बुना प्रोक्षितं प्रक्षालितं वाऽम्बुभिर्निर्णिक्तं, यदुपहतमिति न विज्ञातं तदज्ञातं तत्र शुद्धिः। यत्र शुद्धिविशेषो न विहितस्तत्रैतत् ॥ १९१ ॥

**शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥**

गोतृप्तिकृद्गोस्तृष्णां शमयितुं समर्थम्। प्रकृतिस्थं स्वाभाविकरूपरसगन्धम्। महीगतं भुवि स्थितं च यत्तोयं तच्छुचि शुद्धम्।

मनुः—"आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत्।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः" ॥

देवलः—"अविगन्धा रसोपेता निर्मलाः पृथिवीगताः।
अक्षीणाश्चैव गोपानादापः शुद्धिकराः स्मृताः ॥
उद्धृता वा प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि।
एकरात्रोषितास्तास्तु त्यजेदापः समुद्धृताः" ॥

तथा—"अक्षोभ्याणि तडाकानि नदीवापीसरांसि च।
चण्डालाद्यशुचिस्पर्शे तीर्थतः परिवर्जयेत् ॥
अक्षोभ्याणामपां नास्ति प्रस्रुतानां च दूषणम्।
स्तोकानामुद्धृतानां च दोषैर्दुष्टत्वमुच्यते" ॥

तीर्थमवतरणमार्गः।

बृहस्पतिः—"मृतपञ्चनखात्कूपादत्यन्तोपहतात्तथा।
अपः समुद्धरेत्सर्वाः शेषं वस्त्रेण[३] शोधयेत् ॥
वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते।
पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे" ॥

हारीतः—"वापीकूपतडाकेषु मानुषं शीर्यते यदि।
अस्थिचर्मविनिर्मुक्तं दूषितं श्वखरादिभिः ॥
उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम्* "।

देवलः—"श्वसृगालखरोष्ट्रैश्च क्रव्याद्भिश्च जुगुप्सितम्।
उद्धरेदुदकं सर्वं पञ्च पिण्डान्मृदस्तथा" ॥

---

* एतदग्रे श्लोकद्वयमधिकं क. घ. पुस्तकयोः—
वापीकूपतडाकेषु दूषितेषु विशोधनम्। घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः ॥
श्वभिः श्वपाकचण्डालैर्दूषितेषु विशोधनम्। उद्धरेदुदकं सर्वं मार्जनं परिशोधनम् ॥

---

१ क. ख. °विकं रू° । २ क. °गन्धर° । ३ क. ग. घ. शस्त्रेण ।

( द्रव्यशुद्धिप्रकरणम् ७ )

मृतबन्धुरदुष्टश्च वर्ज्या ह्यष्टौ स्वकालतः ॥
स्वेदास्रुबिन्दवः फेनो निरस्तं नखरोम च ।
आर्द्रं चर्मासृगित्येतद्दुष्टमाहुर्मनीषिणः ॥
मानुषास्थि शवो विष्ठा रेतोमूत्रार्तवानि च ।
कुणपं पूयमित्येतत्कश्मलं चेत्युदाहृतम् ॥
दूषितैः प्रोक्षितेनापि शुद्धिस्तूक्ता विधानतः ।
दुष्टैर्मार्जनसंस्कारैः कश्मलैः[1] सर्वथा भवेत् " ॥

**देवलश्च**—" मानुषास्थि शवं विष्ठा रेतोमूत्रार्तवं वसा ।
स्वेदास्रु दूषिका श्लेष्मा मद्यं चामेध्यमुच्यते " ॥

**मनुः**—" वसा शुक्रमसृङ्मज्जा मूत्रं विट्कर्णविण्नखाः ।
श्लेष्मास्रु दूषिका स्वेदो द्वादशैते नृणां मलाः " ॥

कर्णविट्कर्णमलः । एषां च देहाच्युतानामेवामेध्यतेति स एवाऽऽह—" देहाच्चैव मलाश्च्युताः " इति ।

यस्तु भस्मादिभिः सह मृदो विकल्प उक्तः सोऽमेध्याक्तव्यतिरिक्तविषयः । अत्र कात्यायनोक्तो विशेषः—

" प्राणिनामपि शौचार्थे जलेन प्राङ्मृदा ततः ।
तच्च मूत्रपुरीषाक्ते कार्यमन्यत्र वारिणा " ॥

मूत्रपुरीषग्रहणं सकलशारीरमलोपलक्षणार्थम् । तथा च मनुः—

" विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत् ।
दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि " ॥

अर्थवदिति गन्धलेपक्षयकरमित्यर्थः । अत्र कर्णविट्प्रभृतिषूत्तरेषु षट्सु मलेषु मृद्ग्रहणं वैकल्पिकम् ।

" आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये ।
उत्तरेषु तु षट्स्वद्भिः केवलाभिर्विशुध्यति " ॥

इति स्मृत्यन्तरवचनात् । शुद्धिविकल्पस्य व्यवस्थामाह बौधायनः—

" देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा[2] शौचं समाचरेत् " ॥

**वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि ॥१९१॥**

---

१ क. °श्मलं स° । २ ख. कृत्वा ।

काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत् ।
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति " ॥

देवद्रोणी देवयात्रा । तन्मात्रमुपहतमात्रम् । देवद्रोणीग्रहणं बहन्नोपलक्षणार्थम् । प्रसङ्गादनुग्रहान्तराण्यप्युच्यन्ते—

" तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति " ॥

तीर्थादिसाध्यकर्ममात्रानुग्रहोऽयम् ।

शातातपः—" गोकुले[१] कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालान्तरेषु च " ॥

वृद्धशातातपः—" तापनं घृततैलानां प्लावनं गोरसस्य च ।
तन्मात्रमुद्धृतं शुध्येत्कठिनं तु पयो दधि ॥
अविलीनं तथा सर्पिर्विलीनं तापनेन तु " ॥ १९० ॥

## अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात् ॥

अमेध्येनाक्तस्य लिप्तस्य द्रव्यस्य मृत्तोयैरमेध्यगन्धापकर्षणे सति शुद्धिर्भवति । शुद्ध्यन्तरविधावप्येतत्कर्तव्यम् । गन्धग्रहणात्स्नेहलेपयोर्ग्रहणम् । अत एव देवलः—

" प्रलेप[२]स्नेहगन्धानामशुद्धौ व्यपकर्षणम् ।
शौचलक्षणमित्युक्तं मृदम्भोगोमयादिभिः " ॥

अमेध्यमाह स्मृत्यन्तरम्—

" दूषितं वर्जितं दुष्टं कश्मलं चेति लिङ्गि[३]नाम् ।
चतुर्विधममेध्यं च सर्वं व्याख्यास्यते पुनः ॥
शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
अभक्ष्यभोज्यपेयानि वर्जितानि प्रचक्षते ॥
त्यक्तः पतितचण्डालौ ग्रामसूकरकुक्कुटौ ।
श्वा च नित्यं विवर्ज्याः स्युः षडेते धर्मतः स[४]र्माः ॥
स्रवणः सूतकी सूती मत्तोन्मत्तरजस्वलाः ।

१ क. ले कर्मशा । घ. °ले कुन्दु । २ ग. घ. °लेपे स्ने° । ३ ग. °ङ्गिनः । च° । ४ क. माः । सव्रणः ।

( द्रव्यशुद्धिप्रकरणम् ७ )

द्रवस्य क्षीरादेर्गोघ्रातादुपहतस्य प्लावोऽद्भिस्तदाधारभाण्डस्य पूरणं बहिरवसेकपर्यन्तम् । तथा च ब्रह्माण्डपुराणम्—

" द्रवद्रव्याणि भूरीणि परिप्लाव्यानि चाम्भसा ।
सस्यानि व्रीहयश्चैव शाकमूलफलानि च ॥
त्यक्त्वा तु दूषितं भागं प्लाव्यान्यथ जलेन च " ।

एषा शुद्धिर्गोरसस्यैव ।

तथा च शङ्खः—" श्रपणं घृततैलानां प्लावनं गोरसस्य तु ।
भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च ॥
सिद्धमन्नं तथा सर्पिः क्षीरं च दधि चाम्बु च ।
एतेषामवलीढानां तेजसा शुद्धिरिष्यते ॥
काकमार्जारनकुलसर्पमूषकपक्षिभिः ।
संस्कृतं तु यदा ह्यन्नमवलिह्येत केनचित् ॥
सुवर्णवर्णताम्रोल्कैर्गोवालै रजतेन वा ।
स्पृष्टमेकतरेणापि भोज्यं घ्रातमजेन वा " ॥

तथा—" घृतदधिपयस्तक्राणामाकरभाण्डस्थितानामदोषः " ।

तथा—" आधारदोषे तु नयेत्पात्रात्पात्रान्तरं द्रवम् ।
घृतं तु पायसं क्षीरं तथैवेक्षुरसो गुडः ॥
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति " ।

तेजसा शुद्धिः पर्यग्निकरणम् । एषा च शुद्धिः सर्पिषि पाकेन समुच्चीयते । क्षीरादिषु प्लावनेन । सुवर्णवर्णत्वं ताम्रस्य विशेषणम् । इयं च शुद्धिः केशादिदोषमुद्धृत्य कार्या । दुष्टद्रव्याणामुत्पवनादिशुद्ध्यन्तरमाह लौगाक्षिः—

" पयोदधिविकारादि शुचि पात्रान्तरस्थितम् ।
प्लावनोत्पवनाभ्यां च पर्यग्निकरणेन च " ॥

उत्पवनं वस्त्रादिना गालनम् ।

यमः—" आममांसं घृतं क्षौद्रं स्नेहाश्च फलसंभवाः ।
म्लेच्छभाण्डस्थिता दूष्या निष्क्रान्ताः शुचयः स्मृताः " ॥

तथा—" देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।

---

१ ग. घ. °रादेः श्वकाकोप° ।

अन्नमैकाहिकं पक्वं श्वकाकाद्युपघातितम् ।
केशकीटावपन्नं च तदप्येवं विशुध्यति ॥
क्रीतस्यापि विनिर्दिष्टमेवमेव मनीषिभिः ।
न द्विः पक्वं पर्युषितं शुक्ताद्येवं कदा चन " ॥

द्रोणः पञ्चाशदधिकं पलशतद्वयम् । ऐकाहिकान्नशुद्धिरल्पधनपुरुषविषया ।

पराशरः—" काकश्वाद्युपलीढं तु द्रोणान्नं न विवर्जयेत् ।
ग्रासमुद्धृत्य तन्मात्रं यत्तु लालाकृतं भवेत् ॥
होमोदकेन वाऽभ्युक्षेद्राजतेनाम्बुनाऽथ वा ।
अग्निज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषाम् ॥
विप्राणां मन्त्रघोषेण पूतं भोज्यं च तद्भवेत् ।
श्ववायसगवाश्वाद्यैर्जग्धमन्नं तु यद्भवेत् ॥
स्नेहो वा गोरसो वाऽपि तत्र शुद्धिः कथं भवेत् ।
अन्नं परित्यजेत्तत्र स्नेहस्य पचनेन तु ॥
अश्वत्थलतया शुद्धिर्गोरसस्य विधीयते " ।

ऐकाहिकान्नापेक्षयाऽल्पान्नविषयमेतत् । स्नेहगोरसयोर्द्रोणादल्पयोः पाकादिशुद्धिः ।

बौधायनः—

" त्वक्केशनखाखुपुरीषाणि दृष्ट्वा तद्देशपिण्डान्नमुद्धृत्याद्भिरभ्युक्ष्य भस्मनाऽवकीर्याभिवार्य पुनरभिप्रोक्ष्य वाचा प्रशस्तं संवाद्य भुञ्जीत " ॥ १८९ ॥

**त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ॥**
**भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य च॥१९०॥**

गोघ्रातकेशादिदूषितानां त्रपुप्रभृतीनां क्षारोदकाम्लोदकाभ्यां केवलवारिणा च क्षालनं शुद्धिः । कांस्यलोहानां तु भस्माद्भिः । उपघातानुसारेण क्षाराम्लोदकयोर्विकल्पसमुच्चयौ । केवलं तु वारि समुच्चीयते । एवं सर्वत्र द्रव्यशुद्धौ । क्षारो भस्म । कांस्यस्य गवाघ्राताद्युपघातवतो भस्ममार्जने संख्याविशेषमाहाऽऽपस्तम्बः—

" गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यत्नतः ।
शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च " ॥

---

१ क. 'णः षट्प' । २ क. 'श्वाद्यवली' । ३ क. 'तेनोदकेन वा । ४ ग. 'पा । वि' ।

( द्रव्यशुद्धिप्रकरणम् ७ )

मूषकस्य पुरीषं वा क्षुतं यच्चावधूनितम् ॥
भस्मना स्पृष्टमश्नीयादभ्युक्ष्य सलिलेन वा ।
अवक्षुतं केशपतङ्गकीटैरुदक्यया वा पतितैश्च दृष्टम् ।
अलातभस्माम्बुहिरण्यभागैः संस्पृष्टमन्नं मनुराह भोज्यम् " ॥

अवधूतं यदुपरि वस्त्रावधूननं कृतम् । अवक्षुतं यदुपरि क्षवथुः क्रियते ।

शातातपः—" केशकीटयुताघ्रातं मक्षिकोपहतं च यत् ।
क्लीबाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः ॥
दृष्टं वा स्याद्यदन्नं तु तस्य निष्कृतिरुच्यते ।
अभ्युक्ष्य किंचिदुद्धृत्य तद्भुञ्जीता[1]विशेषतः ॥
भस्मना वाऽपि संस्पृश्य संस्पृशेदुदकेन वा ।
सुवर्णरजताभ्यां वा भोज्यं घ्रातमजेन वा " ॥

केशकीटयुतं वाऽऽघ्रातं वा गवादिनाऽपि वेति विग्रहः ।

हारीतः—

" अनिष्टगन्धोपघातश्रवणदर्शने केशकीटपिपीलिकादिभिरन्नाद्यस्योपघाते[3]न काञ्चनरजतभस्मताम्रवैडू(दू)र्यगोवालाजिनदर्भाणामन्यतमेनाद्भिः संस्पृष्ट-मन्त्रप्रोक्षणपर्यग्निकरणमादित्यदर्शनात्पूतं भवति " ।

बौधायनः—

" सिद्धहविषां महतां च वायसप्रभृत्युपहतानां तद्देशपिण्डमुद्धृत्य पवमानः स्व(सुव)र्जन इत्येतेनाभ्युक्षणम् । मधूदके पयोविकारे च पात्रात्पात्रान्तरनयनेन शौचम् । एवं तैलसर्पिषी । उच्छिष्टसमन्वारब्धे तूदकेऽवधायोपयोजयेत् "।

पराशरः—" शृतं द्रोणाधिकस्यान्नं श्वकाकैरुपघातितम् ।
अत्याज्यं तस्य शुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत् ॥
कर्तव्यं वचनं तेषामन्नसंस्कारकर्मणि ।
श्वकाकाद्यवलीढं तु[4] त्यक्त्वा लालासमन्वितम् ॥
गायत्र्यष्टसहस्रेण मन्त्रपूतेन वारिणा ।
भोज्यं तत्प्रोक्षितं विप्रैः पर्यग्नि[5]कृतमेव च " ॥

जमदग्निः—" शृतान्नं द्रोणमात्रस्य श्वकाकाद्युपघातितम् ।
ग्रासमुद्धृत्याग्नि[6]योगात्प्रोक्षणात्तत्र शोधनम् ॥

---

१ ख. क्षुतायाश्चाव° । २ ग. घ. °तावशे° । ३ ग. घ. °ते का° । ४ क. तु भुक्त्वा । ख. तु न्यङ्कुलास° । ५ क. °ग्निकरणेन वा । ज° । ६ ख. °ग्निसंयो° ।

मरीचिः—" गृहेष्वजातिसंवेशे शुद्धिः स्यादुपलेपनात् ।
संवासो यदि जायेत दाहतापौ विनिर्दिशेत् ॥
धान्यानि सर्वबीजानि गुडादिरस एव च ।
कुसुम्भकार्पासमथो शुध्येद्वार्यग्निशोधनात् " ॥

अजातिश्चण्डालादिः । संवासश्चिरसंवसनम् । [दाहो] दीपनं ज्वलनम् । वार्यग्निशोधनम् । वारिणाऽभ्युक्षणेनाग्निना पर्यग्निकरणेनेति द्रष्टव्यम् ।

बौधायनः—" अनेकपुरुषोद्धार्ये दारुशिले भूमिसमे इष्टकाश्च शङ्कुलीकृताः ।
सुधादिप्रतिबद्धाः । एतानि भूमिसमानि " ।

चण्डालादिस्पर्शे भूमिशुद्धिवदेषां शुद्धिः कार्येत्यर्थः ॥ १८८ ॥

**गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ॥**
**सलिलं भस्म मृद्वाऽपि प्रक्षेप्तव्यं विशुद्धये ॥ १८९ ॥**

गवा प्रयत्नत उपात्तगन्धे तथा केशादिसंयोगदूषिते समुद्धृतोपहतभागेऽन्ने सलिलादीनामेकं शुद्धये प्रक्षिपेत् । मक्षिकाशब्देनात्र नीलमक्षिकोच्यते । तथा च बौधायनः—" अथ हविर्दोषान्व्याख्यास्यामः । यथैतन्नीलमक्षिकाऽऽशातिकामत्कुणाश्चैलशिरसो यूतिकेति " ।

आशातिका मक्षिका या विष्ठाक्रिमिहेतुः । कीटोऽत्रामेध्यसर्पी । तथा चाऽऽपस्तम्बः—

" यस्मिंश्चानेकशः स्यादन्यद्वा मेध्यममेध्यैरवमृष्टं कीटो वाऽमेध्यसर्पी " इति ।

यत्तु शातातपवचनम्—" दन्तधावनमङ्गुल्या प्रत्यक्षलवणं तथा ।
मृत्तिकाभक्षणं चैव गोमांसाशनवत्स्मृतम् "

इति, तद्रोगमात्रकेवलमृद्भक्षणविषयम् । यत्तु गौतमेनोक्तम्—" नित्यमभोज्यं केशकीटावपन्नम् " इति, तदकृतसलिलादिप्रक्षेपविषयम् । केशग्रहणं नखादेरुपलक्षणम् । तथा च बौधायनः—

" केशकीटनखरोमाखुपुरीषाण्यन्ने दृष्ट्वा तन्मात्रमन्नं परित्यज्याद्भिः संप्रोक्ष्य भस्मना संस्पृश्य पुनः प्रशस्तवचसाऽनुगृह्णीयादों भूर्भुवः स्वरोमित्युपरिष्टाद्ध्यात्वा पुनरेव भुञ्जीत " ।

यमः—" मक्षिकाकेशमन्ने तु पतितं यदि दृश्यते ।

---

१ क. ग. घ. शष्कुली । २ ख. ग. घ. °द्वारि प्र° । ३ क. तद्राग° ।

( द्रव्यशुद्धिप्रकरणम् ७ )

एवममेध्यदुष्टमलिनसंज्ञा निर्दिश्य भूमेर्व्यवस्थया शुद्धिमाह—

" खननाद्दहनाच्चैव उपलेपनधावनात् ।
पर्जन्यवर्षणाच्चैव शौचं पञ्चविधं स्मृतम् ॥
पञ्चधा वा चतुर्धा वा भूरमेध्या विशोध्यते " ।

ऊनसंख्यापक्षेऽन्त्यावलोपः । श्मशानभुवः पञ्चभिः शुद्धिः । तदन्यस्या अमेध्याया वर्षणवर्जितैश्चतुर्भिः ।

" दुष्टा द्विधा त्रिधा वाऽपि शोध्यते मलिनैकधा " ।

चिरकालं दुष्टाया उपलेपनान्तैस्त्रिभिरल्पदुष्टाया उल्लेखनदाहाभ्याम् । चिरकालं मलिनाया उल्लेखनेनैव ।

यमः—" खननात्पूरणाद्दाहादर्भिवर्षणलेपनात् ।
गोभिराक्रमणात्कालाद्भूमिः शुध्यति सप्तभिः " ॥

पूरणं खाताया उपरि मृद उपवापः प्रक्षेप इति यावत् ।

तथा—" अरथ्यावसुधा मेध्या ग्राममध्ये क्वचित्क्वचित् ।
सर्वत्र वसुधा मेध्या यत्र लेपो न दृश्यते " ॥

बौधायनः—" घनाया उपघाते भूमेरुपलेपनम् । सुषिरायाः कर्षणम् । क्लिन्नाया मेध्यमाहृत्य प्रच्छादनम् " ।

मेध्यां मृदमाहृत्य प्रच्छादयेदित्यर्थः ।

तथा—" गोचर्ममात्रमब्बिन्दुर्गोः शोधयति पातितः ।
समूढमसमूढं वा यत्र लेपो न दृश्यते " ॥

अब्बिन्दुरुदकबिन्दुर्गोः पृथिव्या यावति भूभाग एकादश गाव उपविशन्ति तावद्गोचर्म तन्मात्रं शोधयति ।

संवर्तः—" गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषणे ।
प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नं तथैव च ॥
गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत् ।
गोमयेनोपलिप्याथ च्छागेनाऽऽघ्रापयेद्बुधः ॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिणा ।
सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयम् " ॥

बौधायनः—" उद्धृद्धशवोपघाते वेश्मनो भित्तिवक्षणं सूर्यरश्म्यनुप्रवेशोऽग्निज्वालाभिमर्शनं वा " ।

---

१ ग. घ. ऊहसंख्यापक्षेऽव° । २ ग. घ. °दद्भिर्वर्ष° । ३ ख. ग. °वासः प्र° । ४ ख. °काश्मशानभुवः पञ्चभिः शुद्धिः । उदन्यस्या अमेध्याया वर्षणवर्जितैश्चतुर्भिर्दश° । ५ ख. प्रोन्मृज्य ।

" चरन्नभ्यवहार्येषु उच्छिष्टं यदि संस्पृशेत् ।
भूमौ निधाय तद्द्रव्यमाचम्य प्रचरेत्पुनः " इति ॥

यस्योपहतस्याऽऽचमनाच्छुद्धिस्तदिहोच्छिष्टशब्देनोच्यते । अभ्यवहार्यश-ब्दाच्च न भैक्षमात्रविषयमेतत् । किं तु परिवेषणादिविषयमपि ।

यत्तु मनुनोक्तम्—" उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथं चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् "

इति, तद्वस्त्राद्यपरद्रव्यविषयम् । योषिन्मुखं तथा शुचीत्यर्थः । रतिविषयमेतत् ।

यच्छङ्खः—" नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् ।
रतौ प्रस्रवणे वृक्षे मृगयायां सदा शुचि " इति ॥

यथासंख्यमन्वयः । वृक्षे वृक्षस्थितफलपातने शकुनीनां शकुना(न्या)दीनां मुखं शुचि । तदुच्छिष्टमपि फलं भोक्तव्यमित्यर्थः ॥ १८७ ॥

**भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ॥**
**सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥ १८८ ॥**

भूशुद्धिहेतवो मार्जनादयो व्यस्ताः समस्ताश्च । यथोपघातं मार्जनं शला-काहस्तकेन पांस्वाद्यपनयः । दाहस्तृणकाष्ठादेस्तत्र दहनम् । कालो गन्धार्द्र-ताद्यपनयनपर्यन्तः । गोक्रमणं गोभिराक्रमणम् । गवां तत्र निवसनमिति यावत् । तदुक्तं मनुना—"गवां च परिवासेन भूमिः शुध्यति " इति । सेको जलस्य पञ्चगव्यस्य वा प्रक्षेपः । उल्लेखनं खननं, दुष्टभागापनयनं च । लेपनं गोमयेन सोदकेन । गृहं तु श्वादिस्पृष्टं मार्जनाल्लेपनाच्च । शुध्यतीति शेषः । गृहस्य भुवोऽनन्यत्वेन तच्छुद्धिविधानेनैव शुद्धत्वसिद्धौ पृथग्वचनमुपघाताभावेऽपि तस्य मार्जनं लेपनं च प्रत्यहं कार्यमेव, अन्यथा तदशुद्धं स्यादिति ज्ञाप-नार्थम् ।

देवलः—" यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा ।
चण्डालाध्युषितं यच्च यत्रारिष्टादिसंगतिः ॥
एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता ।
श्वसूकरखरोष्ट्राद्यैः संस्पृष्टा दुष्टतां व्रजेत् ॥
अङ्गारैर्धूमकेशास्थिभस्माद्यैर्मलिना भवेत् " ॥

---

१ ख. °हारेषु । २ ख. °ब्दाश्च न । ३ क. ख. °न्यान्द्रता° । ४ ख. यत्र विष्ठयादि° । ५ क. ग. घ. °रतुपके° ।

मनुः—" मद्यैर्मूत्रपुरीषैर्वा श्लेष्मपूयास्रुशोणितैः ।
संस्पृष्टं नैव शुध्येत्तु पुनःपाकेन मृन्मयम् " ॥

उशना—" मृन्मयानामुच्छिष्टलिप्तानां मार्जनमुच्छिष्टस्पृष्टानां प्रोक्षणम्"॥१८६॥

## कारुहस्तः शुचिः पण्यं भैक्षं[1] योषिन्मुखं तथा॥१८७॥

कारुः शिल्पी रजकतन्तुवायादिः । तद्धस्तकृतं द्रव्यं शुचीत्यर्थः । अयं चाशुचित्वापवादः । तेनावरजातीयानामपि कारूणां शिल्पक्रियया द्रव्यमुत्पादयतां संस्कुर्वतां वा प्रत्यवायहेतुभावः प्रसक्तोऽनेन निवार्यते । तेन रजकसेवकादिभिः संस्कृतानां वस्त्रादीनां कुविन्दसूपकारादिभिश्चोत्पाद्यमानानां[3] द्रव्याणां शुचित्वमेवेति वाक्यतात्पर्यम् । ततश्च येनान्नादिना द्रव्येण शिल्पिस्पृष्टेन[4] विना द्रव्योत्पत्तिसंस्कारौ न भवतः, तदपि शुध्यत्येव यथा वस्त्रोत्पत्तौ खलिः । अत एव शङ्खः—

" कारुहस्तः शुचिस्तथाऽऽकरात्तद्रव्याणि प्रोक्षितानि " इति ।

आकरो द्रव्योत्पत्तिस्थानम् । तद्द्रव्याणि चाऽऽकरद्रव्याणि तुरीवेमखलिप्रभृतीनि । पैठीनसिर्विशेषमाह—

" आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् " इति ।

पण्यं विक्रेयद्रव्यम् । तच्च प्रसारितमेव शुचि । तथा च मनुः—" पण्यं यच्च प्रसारितम् " इति । तस्य चानेकपण्यग्राहकपुरुषसंसर्गादिनिमित्तोऽशुचिभावोऽनेनापोद्यते । भैक्षं भिक्षासमूहः । तच्च यतिब्रह्मचारिगतमेव शुचि । तदाह मनुः—

" ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः " ।

ब्रह्मचारीति विहितभिक्षावृत्तिपुरुषोपलक्षणार्थम् ।

भिक्षावृत्त्यधिकारिण आह मनुः—

" सांतानिकं यक्ष्माणमध्वगं सार्ववेदसम् ।
गुर्वर्थपितृमात्रर्थस्वाध्यायार्थ्युपतापिनः ॥
नवैतान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभैक्षुकान् " ॥

सांतानिकः संतानप्रयोजनः । सार्ववेदसो दत्तसर्वस्वः । उपतापी रोगी । अन्ये प्रसिद्धाः । यावतैवोपघातेन रथ्याप्रसर्पणादिकेन विना भैक्षं न सिध्यति, तन्मात्रस्यापवादोऽयम् । अत एव तदतिरिक्तोपघाते शुद्धिमाह वसिष्ठः—

---

१ क. ग. ङ. भैक्ष्यं । २ ख. °तन्नवा° । ३ ग. घ. °श्चोत्पद्य° । ४ ख. शिल्पसृ° ।

हारीतः—" सर्ववाससां प्लावनेन[1] शुद्धिः "।

सर्वेषामाविककौशेयादीनाम् । मलेन लिप्तानामियं शुद्धिः ।

अङ्गिराः—" उदश्विद्वल्मीकमृत्सर्षपैश्चोर्णामयानाम् । स्नेह-
सक्तुकुल्माषोन्मर्दनैर्गुरूणामूर्णामयानाम् " ।

उदश्वित्तक्रम् । ऊर्णा मेषरोमाणि ।

विष्णुः—" पद्माक्षैर्मृगरोमिकाणां तथा पुस्तकानामभ्युक्षणम् " ।
षट्त्रिंशन्मतात्—" कुसुम्भकुङ्कुमै रक्तं तथा लाक्षारसेन च ।
प्रोक्षणेनैव शुध्येत्तु चण्डालस्पर्शने तथा " ॥

इदं च यदि प्रक्षालने सत्यत्यन्तरागनाशस्तदा वेदितव्यम् ।

हारीतः—"क्षारोषाभ्यां कार्पासशणमयानां पुत्रजीवकारिष्टैः[2] क्षौमवरोर्णानां पुत्र-
जीवकोदश्विद्भ्यामजिनानां चैलवच्चर्मणां शुद्धिः । दतीनां रञ्जनम् " ।

दतिश्चर्ममयमुदकादिभाण्डम् । उदकेन समुच्चयः सर्वेषां शोधनद्रव्याणाम् ।

शङ्खः—" चैलानां मृद्भस्मगोमूत्रक्षारोदकैः । चैलवद्धान्यानां
पक्षचामरचर्मतृणवालवल्कवेत्रजानां च " ।

गौतमः—" चैलवद्रज्जुविदलचर्मणामुत्सर्गो वा " इति ।

उत्सर्गस्त्याग उपहतभागस्य ।

आपस्तम्बः—" स्नानं दानं तपो होमः पितृयज्ञश्च तर्पणम् ।
पञ्च तस्य वृथा यज्ञा नीलवस्त्रस्य धारणात् ॥
मृते भर्तरि या तु स्त्री नीलवस्त्रं विधारयेत् ।
तावद्भर्ता वसेत्तस्या नरके नात्र संशयः ॥
स्त्रीणां क्रीडार्थसंयोगे[3] शयनीये न दुष्यति " ॥

ब्रह्मपुराणे—" वस्त्रं विण्मूत्रशुक्रैस्तु दूषितं च मृदम्बुभिः ।
शोध्याऽऽदौ शोधनीयं च गोमूत्रक्षारवारिभिः ॥
रज्जुवल्कलपात्राणां चमसालाबुचर्मणाम् ।
कृत्वा शौचं ततः शुद्धिर्गोवालैर्घर्षणं पुनः " ॥

काश्यपः—" तृणकाष्ठरज्जुभूर्जशणक्षौम[4]चीरचर्मवेणु-
विदलपत्रवल्कलादीनां चैलवच्छौचम् " ।

---

१ ख. °लैनालि° । २ ग. घ. °जीविका° । ३क. क्रीतार्थ° । ४ ख. °ममूर° ।

( द्रव्यशुद्धिप्रकरणम् ७)

अस्थिमयमश्वपार्श्वादि । फलसंभुवां बिल्वनारीकेलालाबुप्रभृतिफलमयानां गोवालैर्घर्षणं शुद्धिः । गोपुच्छाग्ररोमाणि गोवालाः ।

यमः—" अलाबुदारुपात्राणां वैदलानां तथैव च ।
अत्यन्तोपहतानां च परित्यागो विधीयते " ॥

**मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥ १८५ ॥**

यज्ञसाधनीभूतानां दार्वादिमयानां पात्राणां यथाविधि प्रोक्षणप्रधावनतक्षणरूपां शुद्धिं कृत्वा दक्षिणेन पाणिना संसर्गश्च कार्यः । अयं च विशेषो यज्ञकर्माणि क्रियमाण एव ॥ १८५ ॥

**सोषैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् ॥**
**सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥ १८६ ॥**
**सगौरसर्षपैः क्षौमं पुनःपाकेन मृन्मयम् ॥**

ऊषः क्षारमृत्तिका । ऊषमृत्तिकासहितैरुदकगोमूत्रैः प्रक्षाल्यमानमाविकमूर्णामयं कौशेयं च शुध्यति । कौशिकं[2] कोशोद्भवं[3] त्रसरीमयमित्यर्थः । उदकगोमूत्रैरिति बहुवचनं दोषानिर्घातेऽपि बहुकृत्वोऽपि क्षालनप्राप्त्यर्थम् । उक्तप्रकारेणापेतदोषस्य पुनः केवलोदकेन धावनार्थं च । सश्रीफलैः सबिल्वैरुदकगोमूत्रैरंशुपट्टं नेत्रपट्टम् । अरिष्टं निम्बं तत्सहितैरुदकगोमूत्रैः कुतपं पार्वतीयच्छागरोममयं कम्बलवसनम् । अरिष्टं फेनिलफलम् । गौरसर्षपसहितैरुदकगोमूत्रैः क्षौममतसीमयं वस्त्रम् । मृन्मयं तु भाण्डं पुनःपाकेन । शुध्यतीति प्रत्येकमभिसंबध्यते । प्रथमपाकतुल्यो द्वितीयः पाकः पुनःपाकः । श्वादिस्पृष्टमृन्मयपात्रविषयमेतत् । चण्डालादिस्पर्शे तु परित्यागः । तथा च स्मृत्यन्तरम्—

" चण्डालाद्यैरुपस्पृष्टं धान्यं वस्त्रमथापि वा ।
प्रक्षालनेन शुध्येत्तु परित्यागान्महीमयम्[1] " इति ॥

उदकगोमूत्रयोः कार्यभेदात्समुच्चयः । पुरीषाद्युपहतानां वस्त्राणामियं शुद्धिः । अन्येषां तु प्रोक्षणादिः ।

देवलः—" ऊर्णाकौशेयकुतपाः क्षौमपट्टदुकूलजाः ।
अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ॥
तानेवामेध्यसंयुक्तान्क्षालयेच्छोधनैः स्वकैः " ॥

---

१ ङ. °पाकान्महीमय° । २ क. ख. कौशेयं को° । ३ ग. घ. °वं भ्रमरी° । ४ ख. °सवीरम° ।

अयमर्थः—अनेकपुरुषोद्धार्याणां व्रीहियवगोधूमानां यथाक्रमं प्रोक्षणपर्यग्निकरणावगाहनैः शुद्धिः। अवगाहनं प्रक्षालनम्। व्रीह्यादितण्डुलानां फलीकृतानामल्पानां विमर्शनेन। अनेकपुरुषोद्धार्याणां तु प्रोक्षणेन। खण्डनेन शुक्लीकरणं फलीकरणम्। कराभ्यां घर्षणं विमर्शनम्। शमीधान्यानां कोशीधान्यानां मुद्गादीनामनेकपुरुषोद्धार्याणां निघर्षणेन। ततोऽल्पानां दलनेन। अनेकपुरुषोद्धार्याणां तु प्रोक्षणेन। विमर्शनमेव[1] विघर्षणम्। यत्तु " तण्डुलांस्तु परित्यजेत् " इति तदल्पपरिमाणविषयम्।

आदिपुराणात्—" गृहदाहे समुत्पन्ने विपन्ने पशुमानुषे।
अभोज्यस्तद्गतो व्रीहिर्धातुद्रव्यस्य संग्रहः॥
मृन्मयेनावरुद्धानामधोभुवि च तिष्ठताम्।
यवमाषतिलादीनां न दोषं मनुरब्रवीत्॥
ततः संक्रममाणाग्नौ स्थाने स्थाने च दह्यते।
न च प्राणिवधो यत्र केवलं गृहदीपनम्॥
तत्र द्रव्याणि सर्वाणि गृह्णीयादविचारयन् "।

षट्त्रिंशन्मतात्—" शयनासनयानानि द्रव्यं च बहु संहतम्।
चण्डालादिभिरप्येतत्स्पृष्टं संप्रोक्षणाच्छुचि॥
तूलिकामुपधानं च पुष्परक्ताम्बरं तथा।
शोषयित्वाऽऽतपे किंचित्करैः संमार्जयेत्पुनः॥
पश्चाच्च वारिणाऽभ्युक्ष्य विनियुञ्जीत कर्मणि।
तान्यप्यतिमलिष्ठानि अन्यैः[2] शोध्यानि शोधनैः "॥

उपधानमुच्छीर्षकम्। कुसुम्भपुष्पादिना रक्तं पुष्परक्तम्। तच्चाम्बरं[3] पुष्परक्ताम्बरम्।

शङ्खः—" शयनासनयानानां संहतवच्छौचम् "॥ १८४॥

तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसंभुवाम्॥

दारुप्रभृतीनां मूत्राद्युपहतानां मृदादिभिर्लेपगन्धापनयनाशक्तौ तक्षणमुपहतावयवापनयनं शुद्धिः। अस्थिग्रहणं शङ्खदन्तादेरुपलक्षणम्। तथा च मनुः—

" क्षौमवच्छङ्खशृङ्गाणामस्थिदन्तमयस्य च।
शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन च "॥

---

१ क. ग. घ. °व घ°। २ ग. घ. °नि शोध्यैः शोध्या°। ३ ख. तच पु°।

बौधायनः—" कृष्णाजिनानां बिल्वतण्डुलैः " ।

पैठीनसिः—" कृष्णाजिनानां गौरसर्षपै रौरवबस्ताजिनानां बिल्वतण्डुलैः ।

काश्यपः—" तृणकाष्ठरज्जुमुञ्जजतुचर्मवेणुविदलफलपत्रवल्कलादीनां चैलवच्छौचम् । मृद्दारुचर्मणामत्यन्तोपहतानां त्यागः । असंस्कृतायां भूमौ न्यस्तानां प्रक्षालनम् । परोक्षाहृतानामभ्युक्षणम् । एवं क्षुद्रसमिधामसंस्कृतामेध्याद्युपहतानामेकपुरुषोद्धार्याणाम् "॥ १८३ ॥

**स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम्॥**
**प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥ १८४॥**

स्फ्यादीनामनोन्तानां यज्ञाङ्गभूतानामशुचिस्पृष्टानां प्रोक्षणमेव शुद्धिः । तथा यज्ञाङ्गभावमन्तरेणापि बहूनां राशीकृतानां धान्यवाससामशुचिस्पृष्टानां प्रोक्षणमेव शुद्धिः । यच्चर्मणां प्रक्षालनमुक्तं तच्चण्डालादिस्पृष्टानामिदम् । शूद्रादिस्पृष्टानां बहुत्वेन चानेकपुरुषोद्धार्यत्वं लक्ष्यते । अत एव बौधायनोऽनेकपुरुषोद्धार्याणामल्पतरमशुचित्वं दर्शयति—

" संहतानां काष्ठादीनां प्रक्षाल्यावशोषणं चण्डालादिस्पर्शे पुरुषवाह्यादर्वाक् । ऊर्ध्वं त्वनेकपुरुषोद्धार्ये दारुशिले भूमिसमे " इति ।

लौगाक्षिः—" चण्डालादिपरामृष्टं प्रोक्षणाद्बहु शुध्यति ।
अल्पं प्रक्षालयेद्धान्यं तण्डुलं तु परित्यजेत् " ।

सातिशयबहुत्वविषयमेतत् । अत्र धान्यं सतुषं सस्यमात्रं तण्डुलप्रतियोगित्वात् । तण्डुलादीनां च त्यागोऽत्यल्पानाम् ।

बौधायनः—" व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ।
तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा "॥

चण्डालादिस्पर्शेऽनेकपुरुषहार्याणां व्रीहीणां प्रोक्षणम् । मूत्रादिसंसर्गे तन्मात्रापहारः । अशुचिपांस्वादिद्रव्यसंयोगे निस्तुषीकरणम् ।

विष्णुः—" असिद्धस्यान्नस्य यन्मात्रमुपहन्यते तन्मात्रमुत्सृज्य शेषस्य खण्डनप्रक्षालने कुर्यात् "।

अल्पद्रव्यविषयमेतत् ।

" प्रोक्षणपर्यग्निकरणावगाहनैर्व्रीहियवगोधूमानां विमर्शनप्रोक्षणैः फलीकृतानां निघर्षणदलनप्रोक्षणैः शमीधान्यानाम् " ।

---

१ ख. °ल्प° । २ क. °नां संहतानां रा° ।

न्यपरिहार्याणीति पूर्वपक्षमभिधाय तन्नेत्यादिना सिद्धान्तितम् । धर्मशास्त्रेषु वर्णानामुत्तराधरभावेन विशेषदर्शनात् । तथा पातकोपपातककारिभिर्मलिनैस्तद्रहितानां शुक्लानां तुल्यशय्यादियोगेन संसर्गस्य प्रायश्चित्तनिमित्ततयाऽभिधानादकृतैनसोऽपि मलिनसंसर्गे पापोत्पत्तिदर्शनात् । यथा व्याधितसंसर्गे नीरोगस्यापि रोगादयो दृश्यन्ते तद्वदत्रापि । तस्मात्पृथक्शय्यादिवशेन पृथक्शौचत्वमेव श्रेय इति ।

पुनर्हारीतः—" स्वानुपपत्तौ शुच्यन्तधाय समामनन्ति
संस्पर्शे सचैलं स्नानमेवं ह्याह ।
आसनं शयनं यानमन्तर्धाय समाचरेत् " ।

अस्यार्थः—स्वकीयशय्याद्यलाभे कम्बलादिना शुद्धेन तदन्तर्धायोपयोक्तव्यम् । यतः पतितादेः शय्यादिस्पर्शे सचैलं स्नानमिति ।

शौचाधिकारे शङ्खलिखितौ—

" सर्वेषामापो मृदरिष्टेङ्गुदबिल्वतण्डुलसर्षपकल्कक्षारगोमूत्रगोमयादीनि शौचद्रव्याणि । अहतानां प्रोक्षणमित्येके " ।

अहतं यत्रनिर्मुक्तम् ।

वायुपुराणात्—" अरिष्टैश्च तथा बिल्वैरिङ्गुदैश्चर्मणामपि ।
वैदलानां च सर्वेषां चर्मवच्छौचमिष्यते " ॥

तथा—" तथा चर्मास्थिदारूणां शृङ्गाणां चावलेखनम् ।
मणिवज्रप्रवालानां मुक्ताशङ्खोपलस्य च ॥
सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः ।
स्याच्छौचं सर्ववर्णानामाविकानां च सर्वशः " ॥

सिद्धार्थका गौरसर्षपाः । कल्को जलमिश्रं चूर्णम् ।

स्मृत्यन्तरम्—" न्यग्रोधोदुम्बराश्वत्थाः प्लक्षश्चैव चतुर्थकः ।
जम्ब्वाम्रामलकाश्चैव इत्येते चर्मशोधकाः " ॥

विष्णुः—" मणिमयमश्ममयमब्जं सप्तरात्रं [1]महीनिखननेन मूत्रपुरीषाद्युपहतानामेतत् । शृङ्गदन्तास्थिमयं तक्षणेन दारवं मृन्मयं च जह्यात् ।
तथा कार्पासिकानां च भस्मना समुद्दाहृतम् " ।

यमः—" कृष्णाजिनानां बिल्वैश्च बालानां मृद्भिरम्भसा ।
गोमूत्रेणास्थिदन्तानां क्षौमाणां गौरसर्षपैः [2] " ॥

१ ग. महीं निखनेत् । मू° । २ क. °पैः । रौरववस्ताजि° ।

( द्रव्यशुद्धिप्रकरणम् ७)

**बौधायनः**—" दारुमयानां पात्राणामुच्छिष्टसमन्वारब्धानामवलेखनम् ।
उच्छिष्टलेपोपहतानाम[1]वतक्षणं मूत्रपुरीषरेतःप्रभृतिभिरुत्सर्गः " ।

**शूद्राद्युच्छिष्टसमन्वारब्धानामित्यर्थः । अवलेखनं शस्त्रादिना घर्षणम् ।**

**यमः**—" यदि मूत्रपूरीषाभ्यां रेतसा रुधिरेण वा ।
चैलं समुपहन्येत अद्भिः प्रक्षालयेत्तु तत् ॥
यद्यम्भसा न शुध्येत्तु वस्त्रं चोपहतं दृढम् ।
छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते " ॥

**प्रचेताः**—
" चैलानामुपहतानामु[2]त्स्वेदनं गन्धलेपापनयनं तन्मात्रच्छेदनं वा " ।

**पुरीषादिलिप्तवस्त्रविषयमेतत् ।**

**व्यासः**—" वस्त्रं मृदम्भसा शुध्येद्रज्जुर्वैदलमेव च ।
रज्ज्वादिकं चातिदुष्टं त्याज्यं तन्मात्रमेव च " ॥

**वैदलं वेणुवेत्रनडादिमयं शूर्पादि ।**

**ब्रह्मपुराणम्**—" प्रत्यहं क्षालयेद्वस्त्रं दैवे पित्र्ये च कर्मणि ।
शवविण्मूत्रशुक्रैस्तु दूषितं च मृदम्बुभिः ॥
शोध्यादौ[3] शोधनीयं च गोमूत्र[4]क्षारवारिभिः ।
रज्जुवल्कलपात्राणां चमरालाबुचर्मणाम् ॥
कृत्वा शौचं ततः शुद्धिर्गोवालैर्घर्षणं ततः ।
कौशेयाविकयो[5]र्देयं रजताक्तं जलं लघु ॥
सुवर्णाक्तं तथा दद्यात्क्षौमाणां चाथ वाससाम् " ॥

**कृत्वा शौचं नि(चमि)त्यमनुवर्तते।**

**अङ्गिराः**—" शौचं महार्घरोमाणां वाय्वग्न्यर्केन्दुरश्मिभिः ।
रेतःस्पृष्टं शवस्पृष्टमाविकं न प्रदुष्यति " ॥

**आविकस्यापि महार्घत्वं विशेषणम् ।**

**बौधायनः**—" आत्मशय्या[6]सनं वस्त्रं जायाऽपत्यं कमण्डलुः ।
शुचीन्यात्मन एतानि परेषामशुचीनि च " ॥

**हारीतः**—" यानशयनान्यपरिहार्याण्येके मन्यन्ते । तत्र वर्णविशेषाच्छुक्लमलि-
नसंसर्गदर्शनात्पापसंसर्गयोगाच्च तस्मात्पृथक्शौचा[7]च्छ्रेयांसः " इति ।

**अस्यार्थः**—पतिताद्युपहतानि तथाऽधोवर्णोपहतान्युत्तमवर्णैर्यानशयनादी-

---

१ ख °तानां मू° । २ क. ग. घ. °मुत्स्वेद° । ३ ग. घ. °ध्यादाशो° । ४ ग. घ. °मूत्राक्षा° ।
५ ख. °योर्भयं । ६ क. °शय्यासना° । ७ ख. °शौचः श्रेयां° ।

ताम्रमम्लेन शुध्येत्तु न चेदामिषलेपितम् ।
आमिषेण तु यल्लिप्तं पुनर्दाहेन शुध्यति " ॥

आदिपुराणात्–" सुवर्णरूप्यशङ्खाश्मशुक्तिरत्नमयानि च ।
कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ॥
निर्लेपानि विशुध्यन्ति केवलेन जलेन तु ।
शूद्रोच्छिष्टानि शुध्यन्ति त्रिधा क्षाराम्लवारिभिः " ॥

क्षारादिद्रव्यत्रित्वात्त्रिधात्वम् । मार्जनं तु दशकृत्व एव । वचनान्तरवशात् ।

" सूतिकाशवविण्मूत्ररजस्वलहतानि च ।
प्रक्षेप्तव्यानि तान्यग्नौ यद्यद्यावत्सहेदपि " ॥

यद्द्रव्यं यावन्तमग्निप्रक्षेपं सहते यावताऽग्निप्रक्षेपेण न नश्यति तावन्तं कुर्यादित्यर्थः । अल्पोपघातविषयमेतत् ।

शातातपः–" सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं तथा ।
रीतिकांसीसलोहानि शुध्यन्त्यश्मप्रघर्षणात् " ॥

विष्णुः—विण्मूत्ररेतःशवरक्तलिप्तमावर्तनोल्लेखनतापनैर्वा ।
त्रिःसप्तकृत्वः परिमार्जनेन भस्मादिना शुध्यति तैजसं हि " ॥

तैजसानां रेतोविण्मूत्रासृक्कुणपादिभिश्चण्डालसूतिकोदक्यापतितादिभिश्च चिरमुपहतानामावर्तनम् । तदल्पकालोपहतानां परिलेखनं ततोऽप्यल्पकालोपहतानां प्रतापनम् । स्पर्शमात्रोपहतानामेकविंशतिकृत्वो भस्मादिभिर्मार्जनं प्रतिमार्जने(नं) च प्रक्षालनम् ।

अङ्गिराः—" गण्डूषं पादशौचं च यः कुर्यात्कांस्यभाजने ।
षण्मासं भुवि निक्षिप्य पुनश्चाऽऽकारमादिशेत् " ॥

शातातपः—" गवाऽऽघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः ।
दशभिर्भस्मभिः शुद्धिः श्वकाकोपहतेषु च " ॥

हारीतः—" संहतानां तु पात्राणां यद्येकमुपहन्यते ।
तस्यैव शोधनं प्रोक्तं न तु तैत्स्पृष्टिनामपि " ॥

शङ्खः—" मलं संयोगजं तज्जं यस्य येनोपहन्यते ।
तस्य तच्छोषणं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् " ॥

यस्य शोध्यस्य स्वभावजं संयोगजं वा मलं येन भस्मादिना द्रव्येणोपहन्यते तस्य तच्छोधकं भवतीत्यर्थः ।

---

१ क. ग. घ. °वदग्नि° । २ ग. घ. °पु कार्ष्णाय° । ३ ख. °दत्र का° । ४ ग. तत्स्पृष्टि° ।

तथा—" ब्रह्मक्षत्रविशां चैव सकृत्संमार्जनाच्छुचि " ॥

द्विजोच्छिष्टयुक्तं तैजसं सकृत्संमार्जनाच्छुध्यतीत्यर्थः ।

" चतुर्थेन तु यद्भुक्तं चतुर्भिस्तत्र मार्जनम् ।
अग्नौ प्रक्षिप्य गृह्णीयाद्धस्तौ प्रक्षाल्य यत्नतः ।
गोशृङ्गेण तु संस्पृष्टं तत्पात्रं शुचितामियात् " ॥

कांस्यव्यतिरिक्ततैजसपात्रविषयमिदम् ।

मनुः—" तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः " ॥

तैजसानि हैमादीनि । तदुक्तम्—

" हेम ताम्रं च रजतं कांस्यायस्त्रपुसीसकाः ।
एते च तैजसाः प्रोक्ता धातवस्तैजसोद्भवाः " इति ॥

शङ्खः—" उष्णोदकेन कांस्यस्य सीसस्य त्रपुणस्तथा ।
क्षारेण शुद्धिं कांस्यस्य लोहस्य च विनिर्दिशेत् ॥
लोहानां दाहनाच्छुद्धिर्भस्मना गोमयेन वा ।
दहनात्खननाद्वाऽपि शैलानामम्भसाऽपि वा ॥
काष्ठानां तक्षणाच्छुद्धिर्मृद्गोमयजलैरपि " ॥

महति दोषे दहनं खननं च द्वितीयमल्पदोषे ।

बौधायनः—" तैजसानां पात्राणां गोशकृद्भस्मभिः परिमार्जनमन्यतमेन वा " ।

उशना—" सुवर्णरजतताम्रत्रपुसीसकांस्यानामाद्भिरेव भस्मसंयुक्ताभिस्तैजसानां चोच्छिष्टानां भस्मना त्रिः प्रक्षालनम् । कनकमणिरजतशङ्खशुक्त्युपलानां वज्रविदलरज्जुचर्मणां चाद्भिः शौचम् । मृत्पात्रशस्त्राणामग्नावुत्तापनम् " ।

काश्यपः—" सिकताभिर्दन्तशृङ्गशङ्खशुक्तिमणीनाम् " ।

यमः—" रजतस्य सुवर्णस्य ताम्रस्य त्रपुणस्तथा ।
रीत्ययःकांस्यसीसानां भस्मना शौचमिष्यते " ॥

ऋष्यशृङ्गः—" मुक्ताफलप्रवालानां शुद्धिः प्रक्षालनेन तु ।
अब्जानां चैव भाण्डानां सर्वस्याश्ममयस्य च " ॥

विष्णुः—" ताम्ररीतित्रपुसीसमयानामम्लोदकेन " ।

स्मृत्यन्तरम्—" भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ।
सुरामूत्रपुरीषैस्तु शुध्यते तापलेखनैः ॥

" उच्छिष्टाशुचिसंस्पृष्टमद्रवं शुध्यतेऽम्भसा ।
सद्रवं चाभिशुध्येत स्नेहगन्धविवर्जितम् " इति ॥

अशुचिरत्रोत्सृष्टमूत्रादिर्न तु काकादिः । यतः काकमुखसंस्पृष्टपात्रस्य शुद्ध्यन्तरमाह शङ्खः—

" कृष्णशकुनिमुखावमृष्टं[1] निर्लिखेच्छ्वापदमुखावमृष्टं[2] पात्रं न तत्प्रयुञ्जीत " इति ।

सौवर्णादेरलेपस्यैषा शुद्धिः । तथा च मनुः—

" निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ।
अब्जमश्ममयं चैव राजतं चानुपस्कृतम् " ॥

अनुपस्कृतं ताम्रादिना यन्न संस्पृष्टम्[3] ।

तैजसानां मूत्राद्युपघाते बौधायन आह—

" तैजसानां मुत्रपुरीषशुक्रासृक्कुणपैर्वासितानामावर्तनमल्पसंसर्गे[4] तु परिलेखनम् । स्पर्शमात्रोपघाते त्रिःसप्तकृत्वो भस्मना परिमार्जनम् । अतैजसानामेवंभूतानामुत्सर्गः " ।

आवर्तनमग्निसंयोगेन द्रवीकरणम् । अत्र हारीतोक्तो विशेषः—

" अद्भिः काञ्चनरजतशङ्खशुक्तीनां तद्गुणवर्जस्नेहवैवर्ण्योपहतानां यवगोधूमकलायमाषमसूरमुद्गगोमयचूर्णैर्धावनम् । अम्ललवणाभ्यां ताम्राणाम्[5] । भस्मना कांस्यानाम्[6] । षाणतैलसिकताघर्षणैः कार्ष्णायसानाम् । शिलावघर्षणमार्जनैर्मणिमयानाम् " ।

यवादिचूर्णानि तुल्यार्थत्वाद्विकल्पन्ते । उदकं तु सर्वैः शोधनद्रव्यैः समुच्चीयते । लोहतैक्ष्ण्यसाधनं षाणम् ।

आपस्तम्बः—" गवाऽऽघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च ।
शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च " ॥

क्षारो भस्म । स्वल्पकालोपघातविषयमेतत् ।

शङ्खः—" सूतिकोच्छिष्टभाण्डस्य[7] सुरामद्यहतस्य[8] च ।
त्रिः सप्तमार्जनाच्छुद्धिर्न तु कांस्यस्य तापनम्[9] " ॥

कांस्यव्यतिरिक्तानां तैजसानां सूतिकोच्छिष्टादिके[10] स्वल्पकालोपघाते यवचूर्णादिभिरेकविंशतिकृत्वो मार्जनादेव शुद्धिर्न तु कांस्यस्य तापनम् । अर्थात्कांस्यव्यतिरिक्तानां तापनमपि कार्यमिति गम्यते ।

---

१ ग. घ. °वसृष्टं । २ ग घ. °वसृष्टं । ३ क. ग. घ. संसृष्ट° । ४ क. ग. घ. °पमद्यैरल्पन्तवा° । ५ ग. घ. °म्रादीनाम् । भ° । ६ क. °म् । शाण° । ७ क. ग. घ. सूतको° । ८ ग. घ. °मद्ये ह° । ९ ग. घ. °पनात् । कां° । १० क. ग. घ. सूतको° ।

( द्रव्यशुद्धिप्रकरणम् ७ )

अपेतदोषं हि द्रव्यं शुद्धमित्युच्यते । शास्त्रेण च काकादिसंपृक्तं द्रव्यं प्रक्षालनाच्छुध्यतीति कथ्यते । तेन तत्रापि काकादिसंपर्कजनितदोषापगम एव शुद्धिशब्देन वाच्यः । न च प्रत्यक्षगम्यो दोष इति शुद्धिविधानान्यथानुपपत्त्या काकादियोगात्कोऽपि द्रव्ये दोषो भवतीति परिकल्प्यते । तदपगमोपायो नानाविधः प्रोक्षणप्रक्षालनादिः शास्त्रेण विधीयत इति । अशुद्धेन द्रव्येण न संव्यवहारः पुरुषेण साध्यः किं तु शोधितेनैवेति शुद्धिविधिबलादेव कल्प्यते। तेच्च कर्पटकपालादिना द्रव्यखण्डेनापि यदि व्यवहारसिद्धिरस्ति तदा तदपि यथाविधि शोध्यम् । एवं च यच्छास्त्रकारैरुच्यते प्रोक्षणादिना द्रव्यं शुचितामियात्प्रयतं भवति शुध्यतीत्यादि, तत्र तत्र पुरुषव्यापार एव लाक्षणिको विधेयः, पुरुषस्तथा कुर्याद्यथा द्रव्यं शुचि स्यादित्यर्थः । अशुद्धेन द्रव्येण संव्यवहारतः पुरुषस्याशुचिता विहितकर्मकर्तृत्वयोग्यत्वप्रतिबन्धरूपा प्रत्यवायान्तरहेतुभूता च जायते । तस्याश्च प्रत्यवायकरतामाह मनुः—

" लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च " इति ॥

तत्र द्विविधा शुद्धिः—शरीरशुद्धिर्बाह्यद्रव्यशुद्धिश्च । तत्र बाह्यद्रव्यशुद्धिं तावदाह—

**सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ॥**
**शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥ १८२ ॥**
**पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ॥**
**चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥ १८३ ॥**

सुवर्णस्य विकारः सौवर्णं, रजतस्य विकारो राजतम् । अब्जं शङ्खशुक्त्यादि । ऊर्ध्वपात्रं महावीरादि । ग्रहा ऐन्द्रवायवादिपात्राणि । अश्मानः पाषाणाः । विदलं वेणुदलम् । पात्राणि बृस्यादीनि स्नेहरहितानि । चमसा ऊर्ध्वपात्रव्यतिरिक्तानि दारवाणि सोमपात्राणि । प्रसिद्धमन्यत् । एषां वारिणा शुद्धिः शौचमिष्यते । प्रक्षालनरूपा चेयं शुद्धिः, प्रोक्षणरूपा तु स्फ्यादिपात्रविषयत्वेन पृथगेव वक्ष्यति । चरुर्मृन्मयं भाण्डम् । स्रुग्जुह्वादिः । स्रुवः प्रसिद्धः । एतदादीनि सस्नेहान्याज्यलिप्तान्युष्णेन वारिणा प्रक्षालनाच्छुध्यन्ति । उच्छिष्टादिनरं स्पृष्टानां चैषां शुद्धिः । यदाह देवलः—

---

१ ख. ग. घ. °नादिना शुध्य° । २ ख. घ. ततश्च कर्परक° । ३ ख. °पि यथा° ।

यमः—" यस्तु खादति मांसानि प्राणिनां जीवितैषिणाम् ।
हतानां च मृतानां च यथा हन्ता तथैव सः " ॥

तथा—" धनेन चोपभोगेन वधबन्धेन चाप्यथ ।
त्रिविधस्तु वधो ज्ञेयो भोक्ता तत्रातिरिच्यते " ॥

अथ महाभारते—" चतुरो वार्षिकान्मासान्यो मांसं नात्ति मानवः ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् " ॥

तथा—" कौमुदं तु विशेषेण शुक्लं पक्षं नराधिप ।
वर्जयेन्मधु मांसानि धर्मो ह्यत्र विधीयते " ॥

यमः—" यजुषा संस्कृतं मांसं भक्षयेत्तु यथाविधि ।
न भक्षयेद्वृथामांसं पृष्ठमांसं विवर्जयेत् " ॥

पृष्ठमांसं पृष्ठसंधिमांसम् ।

ब्रह्मपुराणे—" पशोश्च मार्यमाणस्य मांसं न ग्राहयेद्द्विजः ।
पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा " ॥

नित्यमभोज्या इत्यनुवृत्तौ गौतमः—
" उभयतोदन्ता अलोमानः केशिन एकशफाः कलविङ्कप्लवचक्रवाकहंसाः " ।

केशी[1] चमरी ॥ १८० ॥

इदानीं विहितव्यतिरिक्तमांसभक्षणवर्जनस्य फलमाह—

**सर्वान्कामानवाप्नोति हयमेधफलं तथा ॥**
**गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात् ॥ १८१ ॥**

इति भोज्याभोज्यभक्ष्याभक्ष्यप्रकरणम् ॥ ६ ॥

गृहस्थोऽपि सन्मांसविवर्जनान्मुनितुल्यो भवति । तापसो भवतीत्यर्थः । सर्वान्कामानश्वमेधफलं च प्राप्नोति । अवाप्नोतीति वर्तमाना विभक्तिर्विधिविभक्तित्वेन परिणामयितव्या यथा रात्रिसत्रे ॥ १८१ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धे [ भोज्याभोज्य ]-भक्ष्याभक्ष्यप्रकरणम् ॥ ६ ॥

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

---

## द्रव्यशुद्धिप्रकरणम् । ( ७ )

---

अधुना द्रव्यशुद्ध्युपायविधिप्रकरणमारभते । द्रव्यस्य दोषापगमः शुद्धिः ।

---

१ ख. °नीं केशवि' ।

( भोज्याभोज्यभक्ष्याभक्ष्यप्रकरणम् ६ )

अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जिते ॥ १७८ ॥
प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ॥
देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक् ॥ १७९ ॥

उक्तं मांसानां भक्षणं[2] वर्जनं चातः परं विधिनिमित्तं वक्ष्यमाणं शृणुध्वम् । तत्र प्राणात्ययादि मांसभक्षणे निमित्तं शाब्दं वर्जने तु तदभाव आर्थम् । प्राणात्ययो व्याधिनिमित्तोऽन्नाभावनिमित्तश्च । श्राद्धं च मांसभक्षणे निमित्तम् । तदिह श्राद्धभोक्तारं प्रति निर्दिश्यते । तथा च मनुः—

" नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति संभवानेकविंशतिम् " ॥

नियुक्तो निमन्त्रितो दैवे श्राद्धे वा ।

तथा च यमः—" आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति " ॥

प्रोक्षितशब्देन निर्वर्तितपशुयागमांसमुपलक्ष्यते । ततश्च पशुयाग इडा[3]रूपमांस ऋत्विग्यजमानैः कार्य एव । द्विजकाम्यया द्विजेच्छया । यं प्रति द्विजास्त्वया मांसं भक्षणीयमितीच्छन्ति स भक्षयेदित्यर्थः । देवपितृभ्यो दत्तस्य मांसस्य शेषमशेषमश्नीयात् । एषु निमित्तेषु खादन्मांसं न दोषभाग्भवति ॥ १७८ ॥ १७९ ॥

वर्जनविधिमाह—

वसेत्स नरके घोरे दिनानि पशुरोमभिः[4] ॥
संमितानि दुराचारो यो हन्त्यविधिना पशून् ॥ १८० ॥

अविधिनोक्तनिमित्तव्यतिरेकेण यो दुराचारो मांसं खादितुं पशुं हन्ति स पशुरोमसंमितानि दिनानि नरके वसेत् । अनेन च पशुवधस्य प्रतिषिद्धस्य नरकवासं प्रति निमित्तता बोध्यते । यथा "योऽपगुरेत शतेन यातयात्" इत्यादिना ब्राह्मणं प्रत्यवगूरणस्य यातनायाश्च साध्यसाधनसंबन्धः । तेन नेदमर्थवादमात्रं किं तु विवक्षितस्वार्थं वचनम् । अत्र मनुः —

" अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः " ॥

---

१ ङ. न दुष्यति । २ ग. घ. °णं च । अतः । ३ ग. घ. इडां तूपमांसभक्षक° । ४ ग. घ. °भिः । शंसिता° ।

नानाविधाः शाखिनो ये छत्राकं च तदुद्भवम् ॥
शस्त्रच्छेदेषु वृक्षाणां यश्चोद्भवति कुत्र चित् ।
त्वक्पर्यन्तेषु च रसो[1] लोहितान्यङ्कुराणि च ॥
पलाण्डुप्रमुखैरेभिः प्रमादाद्भक्षितैरपि ।
चान्द्रायणं चरेद्विप्रः कृच्छ्रं सांतपनं तथा ॥
वनवासव्रतं मासं चरेद्वा सुसमाहितः "।

असमर्थादिविषयो विकल्पः ।

स्मृत्यन्तरम्—" हैरण्डुश्च[2] पलाण्डुश्च लवतर्कः[3] परारिका ।
गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः " ॥१७६॥

**भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः[4] ॥**
**शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥ १७७ ॥**
**तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ॥**

सेधादयः शशान्ताः पञ्चनखास्तथा मत्स्येषु मध्ये सिंहतुण्डकादयो मत्स्यविशेषा द्विजातिभिर्भक्ष्याः[5] । सामान्यतः प्रवृत्तोऽयं पञ्चनखभक्षणनिषेधो मत्स्यभक्षणनिषेधश्च न तेषु विद्यत इत्यर्थः । सेधादीनां प्रसिद्धमेव पञ्चनखत्वमनूद्यतेऽन्येषां पञ्चनखानां मांसमभक्ष्यमिति ज्ञापनार्थम् । सेधा श्वावित् । स च श्वभक्षको व्याघ्रविशेषः । सेधा वल्लीसदृशः प्राणिविशेषः । शशकच्छपौ प्रसिद्धौ । शल्लकः शललो । द्विजातिग्रहणमुपलक्षणार्थम् ॥

तथा च देवलः—" उक्तमेतत्तु सर्वेषां भक्ष्याभक्ष्यमशेषतः ।
वर्णानां सानुलोमानां सस्त्रीणां च विशेषतः " इति ॥

वसिष्ठः—" श्वाविच्छल्यकशशकच्छपगोधाः पञ्चनखानां भक्ष्याः । अनुष्ट्रः[6] पशूनामन्यतोदन्ताश्च मत्स्यानां चाचेटगवयशिशुमारनक्रकुलीरा विकृतरूपाः सर्पशीर्षाश्च गौरगवयशरभाजाश्चानुदिष्टास्तथा धेन्वनडुहावपन्नदन्ताः " इत्यादि ।

अवपन्नदन्ता इत्यन्तमभक्ष्य इति प्रतिपदं संबन्धनीयम् । भक्ष्यौ धेन्वनडुहौ मेध्यौ वाजसि(स)नेयकैर्विज्ञायेते[7] । खड्गे तु विवदन्तेऽग्राम्यसूकरे च *खड्गे तु विवदन्ते भक्ष्याभक्ष्यतयाऽतो विकल्पः । स च व्यवस्थितः । श्राद्धे भक्ष्यो नान्यत्र । अग्राम्यसूकरोऽरण्यसूकरः ॥ १७७ ॥

* खड्गे तु विवदन्त इति पुनरुक्तम् ।

१ ख. °न्ते न च । २ ख. हरिण्यश्च । ३ ग. घ. °तक्काः प° । ४ ख. शल्यकाः । ५ ख. °जा सा° । ६ ग. घ. °नुष्ट्राः पशून्याम° । ७ ख. छ. °सिनीयके वि° । ८ ग. °यकौ वि° ।

( भोज्याभोज्यभक्ष्याभक्ष्यप्रकरणम् ६ )

वर्जनीयतयोक्तानां [भक्षणे] प्रायश्चित्तमाह—

**कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥ १७५ ॥**

संधिनीक्षीरादीनां मत्स्यान्तानां मध्येऽन्यतमं कामतो जग्ध्वा भक्षयित्वा त्रिरात्रमुपवसेत्। अकामतस्त्वेकाहम्—“शेषेषूपवसेदहः”इति मनुस्मरणात्॥१७५॥

किं च—

**पलाण्डुं विड्वराहं च च्छत्राकं ग्रामकुक्कुटम् ॥**
**लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ॥ १७६ ॥**

पलाण्डुः कन्दविशेषः । विड्वराहो ग्रामसूकरः। छत्राकं छत्रसदृशम्। ग्रामकुक्कुटलशुने प्रसिद्धे । गृञ्जनं कन्दविशेषः[1] । गर्तेनक इत्युदीच्यां प्रसिद्धः । एतानि कामतः सकृद्भक्षयित्वा चान्द्रायणं चरेत् । मनुस्त्वेषां कामतो भक्षणाभ्यासे पातित्यमाह—

“ छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ” इति ॥

ततश्च सुरापानप्रायश्चित्तप्राप्तिः । अमतिपूर्वे त्वभ्यासे स एवाऽऽह—

“ अमत्यैतानि षड्जग्ध्वा कृच्छ्रं सांतपनं चरेत् ।
यतिचान्द्रायणं चापि शेषेषूपवसेदहः ” इति ॥

अमतिपूर्वे सकृद्भक्षणे शङ्ख आह—

“ लशुनपलाण्डुगृञ्जनविड्वराहग्रामकुक्कुटकुम्भीकभक्षणे[2]
द्वादशरात्रं पयः पिबेत् ” इति ।

सकृद्भक्षणे ब्रह्मपुराणम्—

“ लशुनं गृञ्जनं चैव पलाण्डुश्च परारिका ।
कन्या परारिका चान्या दीर्घपत्रं[3] तदुच्यते ॥
अलम्बुसा च तुष्टैश्चे(?) कृतनामा महौषधम् ।
गृञ्जनं यवनेष्टं च शशांसुर्यवनाश्च[4] तत् ॥
सॅसकं[5] च सनाशाकं तुम्बुरं[6] च गरेटकम् ।
अथ पूयनकं नाम लवतर्का च दारुणा ॥
त्रयोदशैतास्तस्यापि जातय[7]श्चातिगर्हिताः ।
पिण्डोपमं तु खुक्खण्डं[8] कवकं चैत्यसंनिभम् ॥
छत्राकं छत्रसदृशं त्रयं भूमिसमुद्भवम् ।

---

१ ग. घ. °षः । सन्नेनक इति तद्देशे प्र° । २ ख. °णे जग्ध्वा त्रिरा° । ३ °ग. घ. °र्घपात्रं । ४ ख. °श्च गृ° । ५ ख. स्रमकं । ६ ग. घ. तुम्बरं । ७ ख. जायतास्तस्य ग° । ८ ख. खुक्खुण्डं ।

तथा च पैठीनसिः—

" गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः " ।

तत्राप्यविर्भक्षणीयः । तथा च हारीतः—

" ग्राम्यारण्यानां पशूनामश्नन्ति । अव्यजमेषमहिषहरिणखङ्गरुरुवृषभऋश्यन्यङ्कुमहारण्यवासिनश्च वराहांस्तथा शशकशल्यकमेधागोधाकूर्मतित्तिरिमयूरवाध्रीणसं[1]लावककुकरकपिञ्जलान्सशल्कांश्च मत्स्यां[2]न्ययो(थो)पपन्नान्भक्षयेत् " ।

बहुशाखशृङ्गो मृग ऋश्यः, मृदुशृङ्ग एण इति प्रसिद्धः । न्यङ्कुः संबरसदृशः शृङ्गरहितः ॥ १७२ ॥

अपि च—

**वृथाकृसरसंयावपायसापूपशष्कुलीः ॥ १७३ ॥**

पितृदेवप्रयोजनरहितं कृसरादिकं वर्जयेत् । तिलमुद्गमिश्रित ओदनः कृसरम् । संयावो गोधूमकणा घृतक्षीरपक्वाः । गोधूमविकाराः स्नेहपक्वाः शष्कुल्यः । प्रसिद्धमन्यत् । केवलात्मार्थपाकप्रतिषेधेनैव वृथाकृसरादिवर्जने सिद्धे तेषां पृथगुपादानं तद्भक्षणे प्रायश्चित्तविशेषप्राप्त्यर्थम् ॥ १७३ ॥

किं च—

**कलविङ्कं सकाकोलं कु[3]ररं रज्जुदालकम् ॥**
**जालपादान्खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥१७४॥**
**चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ॥**
**मत्स्यांश्च**

कलविङ्को गृहचटको निगदेपूक्तः । त[4]स्य ग्रामवासिनिषेधे सत्युभयचरत्वात्पुनर्ग्रहणम् । काकोलो द्रोणकाकः । " द्रोणकोकिलः " इति निगमात् । रज्ज्वादीन्दलयतीति रज्जुदालको वृक्षकुट्टकः । जालपादा[5] हंसादिव्यतिरेकेणाज्ञाता मृगद्वि[6]जजाताः । अत्रापि कलविङ्कादयो ज्ञात[7]मृगव्यतिरिक्ताः पक्षिविशेषाः । सौनं सूनागतं मांसं, वल्लूरं शुष्कमांसम् । सौनवल्लूरे भक्ष्याणामपि मृगादीनां व[8]र्जनीये । मत्स्याः प्रसिद्धास्तान्वर्जयेत् ॥१७४॥

---

१ ग. 'सकुक्कनकपि' । २ ख. °त्स्यानृयो' ३ ङ. कुक्कुटं रज्जुदारक° । ४ ख. तस्याग्रामनिवासनि° । ५ ग. घ. 'दान्हंसा' । ६ ग. घ. °द्विजाः । जातितोऽपि । ७ ग. घ. °तव्य° । ८ ग. घ. °र्जयेत् । म° ।

भविष्यत्पुराणात्—" कापिलं यः पिबेच्छूद्रो नरके स विपच्यते ।
हुतशेषं पिबेद्विप्र[1] विप्रः स्यादन्यथा पशुः " ॥

ब्रह्मपुराणात्—" अपि प्रस्थानसमये रात्रौ न प्राशयेद्दधि ।
मधुपर्कप्रदानं च वर्जयित्वा तु कामतः" ॥ १७० ॥

अपि च—

देवतार्थं हविः शिग्रुलोहितान्व्रश्चनांस्तथा ॥
अनुपाकृतमांसानि विड्जानि कवकानि च ॥ १७१ ॥

देवतार्थं नैवेद्यं हविश्चरुपुरोडाशादि प्राग्घोमाद्देवतार्थं हविस्तद्भवनार्थ[3]-मात्तं वा । शिग्रुः सौभाञ्जनकः । लोहिता लोहितवर्णा वृक्षनिर्यासाः । व्रश्चना वृक्षच्छेदप्रभवा निर्यासा अलोहिता अपि । तथा च मनुः—

" लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथा " इति ।

अनुपाकृतमांसानि[4] देवाद्यर्थत्वेनानुपाकृतानामसंकल्पितानां पश्वादीनां मांसानि । विड्जानि विष्ठायां जातानि तण्डुलीयकादीनि । कवकानि चैत्यसंनिभानि । एतानि प्रत्येकं वर्जयेत् ।

बौधायनः—" अमेध्यभूस्था ये वृक्षा उप्ताः पुष्पफलोपगाः ।
तेषां नैव प्रदुष्यन्ति पुष्पाणि च फलानि च " ॥

अनेन चार्थाद्वृक्षव्यतिरिक्तान्यमेध्यभूप्ररूढानि वर्जयेदिति प्रतिपादितं भवति ॥ १७१ ॥

किं च—

क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ॥
सारसैकशफान्हंसान्सर्वांश्च ग्रामवासिनः ॥ १७२ ॥
कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ॥

क्रव्यमदन्ति ये पक्षिणस्ते गृध्राद्याः क्रव्यादपक्षिणः । क्रव्यमाममांसम् । दात्यूहश्चातकः । प्रतुद्य भक्षयन्तीति प्रतुदाः श्येनाद्याः । एकशफा अश्वाद्याः । ग्रामवासिनः पारावतादयः । कोयष्टिः कोक्कः(?) । प्लवेनैव वर्तनमस्येति प्लवः पारिप्लवादिः । विकीर्य[6] विकीर्य भक्षयन्तीति विष्किराः । दात्यूहादय एकशफवर्जाः सर्वे पक्षिविशेषाः । एकशफाश्चाश्वादयस्तद्भक्षणं वर्जयेत् । अत्र ग्राम्याश्वादयः सप्त ।

१ ख. ग. घ. °द्विप्रो वि° । २ ख. °दथ वा प° । ३ ख. °र्थमवत्तं वा । ४ ग घ. °नि नैवेद्यार्थं । ५ ग. घ. °नि । ए° । ६ ख. °र्य भ° । ७ ख. °म्याद° । घ. °म्याः शफाद° ।

संधिन्यनिर्दशावत्सागोपयः परिवर्जयेत् ॥
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाऽऽविकम् ॥ १७० ॥

संधिनी वृषभोपगता । अनिर्दशा प्रसवप्रभृत्यनिर्गतदशरात्रा । अवत्सा मृतवत्सा । आसां गवां प्रत्येकं पयो वर्जयेत् । औष्ट्रमुष्ट्रिकायाः । ऐकशफमेकशफाया वडवादेः । स्त्रैणं स्त्रियाः । आरण्यकमारण्यानामेण्यादीनाम् । आविकमव्याः । पयो वर्जयेदिति प्रत्येकमभिसंबध्यते ॥

वासिष्ठः—" गोमहिष्यजानामनिर्दशानां पयः " । वर्ज्यमिति शेषः ।

मनुः—" आरण्यानां च सर्वेषां मृगाणां महिषीं विना " ।

पयो वर्ज्यमिति शेषः । स्त्रैणमिति स्त्रीग्रहणमजेतरद्विस्तनीनामुपलक्षणार्थम् । + तथा च शङ्खः—" सर्वासां द्विस्तनीनां क्षीरमभोज्यमजावर्ज्यम् " इति । क्षीरवर्जने तद्विकारस्यापि वर्जनं वेदितव्यम् । यत आह शङ्खः—

" क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ।
सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समाहितः " ॥

व्रतं गोमूत्रयावकम् ।

हारीतः—" स्यन्दिनी वृषस्यन्ती तस्याः पयो न[१] पिबेदृतुमद्भवति " ।

गौतमः—" स्यन्दिनीयमसूसंधिनीनां च " ।

क्षीरं न पिबेदिति[२] शेषः । स्यदिनी स्रवतःस्रवत्क्षीरा । यमसूर्यमलवत्सा ।

बौधायनः—" क्षीरमपेयं विवत्साया अन्यवत्सायाश्च " ।

ब्रह्मपुराणात्—" घृतात्फेनं घृतान्मण्डं पेयूषमथ चाऽऽर्द्रगोः[३] ।
सगुडं मरिचाक्तं तु तथा पर्युषितं दधि ॥
शीर्णं[४] तक्रमपेयं च नष्टास्वादं च फेनवत् ।
प्रमादाद्भक्षितैरेभिर्वने पक्षव्रतं चरेत् " ॥

पेयूषं नवप्रसूताक्षीरम् । तच्च यावदार्द्रताऽनुवर्तते । आर्द्रता सरजस्कता । शीर्णं स्फुटितम् ।

आपस्तम्बः—" क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽथ वा पुनः ।
यः पिबेत्कापिलं क्षीरं न ततोऽन्योऽस्त्यपुण्यकृत् " ॥

---

+ इत आरभ्य वेदितव्यमित्यन्तग्रन्थो न विद्यते ग. घ. पुस्तकयोः ।

---

१ ग. घ. न चेदृ° । २ ख. 'दित्यर्थः शे° । ३ ख. चान्द्रगोः । ४ ग. घ. दीर्णं ।

अन्नं घृतादिस्नेहाक्तं सुचिरकालसंस्थितं पर्युषितं च भोज्यम् । गोधूमादिविकारा अस्नेहा अपि पर्युषिता भोज्याः ।

यमः—" शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदा चन ।
प्रक्षालितानि निर्दोषान्यापद्धर्मो यदा भवेत् ॥
मसूरमाषसंयुक्तं तथा पर्युषितं च यत् ।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम् " ॥

तथा—" अपूपाश्च करम्भाश्च धानावटकसक्तवः ।
शाकं मांसं च यूषं च सूपं कृसरमेव च ॥
यवागूर्यावकं चैव यच्चान्यत्स्नेहसंयुतम् ।
सर्वं पर्युषितं भोज्यं शुक्तं चेत्परिवर्जयेत् ॥
गुडादिद्रव्यसंयुक्तं वर्ज्यं पर्युषितं दधि ।
तथैव पानकादीनि मध्वाज्यरचितानि च ॥
राजमाषाः स्थूलमुद्गास्तथा वृषयवा[1]शकौ ।
मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनम् ॥
[2]सस्यान्येता[3]न्यभक्ष्याणि न च देयानि कस्य चित् " इति ।

ब्रह्मपुराणे मसूरस्याप्यभक्ष्यत्वेन निर्देशः । ततश्च श्राद्धे कलायवन्मसूरभक्षणे न विकल्पः ।

देवलः—" नाश्नीयात्पायसं नक्तं भुक्तं चेन्न स्वपेन्निशि ।
न क्षीरमुत्सृजेत्प्राप्तं पवित्रं हि पयः स्मृतम् " ॥

तथा—" दधि भक्ष्यं शुक्तमपि यच्चैवं दधिसंभवम् ।
कन्दमूलफलैः पुष्पैः शस्तैः शुक्तासवं तु यत् ॥
अविकारि भवेन्मेध्यमभक्ष्यं तद्विकारकृत् ।
कन्दमूलफलैः पुष्पैः " इत्यादिः ।

अयमर्थः—यच्छुक्तं कन्दादिभिः कृतं सत्पानं तद्यदि मोहादिविकारकरं न भवति तदा भक्षणीयम् ।

स्मृत्यन्तरम्—" सफला कुम्भिका यस्य गृहे भवति नित्यशः ।
तस्मात्तु काञ्चिका ग्राह्या नेतरस्मात्कदाचन " ॥

तथा—" न भक्षयेदारनालं फलमूलविवर्जितम् ॥ १६९ ॥

किं च—

---

१ ग. °वाषकौ । घ. °वाषिकौ । २ ख. समान्ये° । ३ ख. घ. °तानि भ° ।

" नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताऽऽममेवास्मादवृत्तावेकरात्रिकम् " ॥

अश्राद्धी श्राद्धानर्होऽसच्छूद्र इति यावत् । कानिचित्पक्वान्नान्यन्येषां भोज्यानि । यथा सुमन्तुराह—

" गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च ।
अपूपान्भक्षयेच्छूद्राद्यश्चा(च्चा)न्यत्पयसा कृतम् " ॥

तथा—" कटु पक्वं स्नेहपक्वं पायसं दधिसक्तवः ।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् " ॥

अशूद्रान्नभुजो द्विजस्य ।

अङ्गिराः—" स्वपात्रे यच्च विन्यस्तं दुग्धं तच्छुचि नित्यशः ।
पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृहमागतम् ॥
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम् " ॥

निवृत्तेन शूद्रान्नभोजनान्निवृत्तेनेत्यर्थः ।

विष्णुपुराणे—" संप्रोक्ष्य विद्वान्गृह्णीयाच्छूद्रान्नं गृहमागतम् " ।

शङ्खः[1]—" गृहाश्वरथभूम्यर्थे गवार्थे च विशेषतः ।
श्रोत्रियेणापि भोक्तव्यं शूद्रान्नं तु यमोऽब्रवीत् " ॥

दक्षः—" शूद्रान्नरसपुष्टाङ्गस्त्वधीयानोऽपि नित्यशः ।
जुह्वन्वाऽपि जपन्वाऽपि गतिमिष्टां न विन्दति " ॥

वसिष्ठः—" शूद्रान्नेनोदरस्थेन मैथुनं योऽधिगच्छति ।
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते " ॥

हारीतः—" शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वमुपगच्छति " ॥

अङ्गिराः—" षण्मासान्यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
स च जीवन्भवेच्छूद्रो मृतः श्वा चाभिजायते " ॥

एवं च सति यः शूद्रान्नभोजनानुग्रहः स आपद्विषय एव ज्ञेयः ॥ १६८ ॥

पर्युषितं न भोक्तव्यमित्यस्यापवादमाह—

**अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंभृतम्[2] ॥**
**अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ १६९ ॥**

---

१ घ. °ङ्खः—मृगाश्व° ; २ ङ. °संचित° ।

घृतं तैलं च लवणं पानीयं पायसं तथा ॥
भिक्षा च हस्तदत्ताऽपि न ग्राह्या यत्र कुत्र चित् " ॥

**शङ्खलिखितौ**—" नाऽऽपणीयमन्नमश्नीयात् । न द्विः पक्कं न पर्युषित-मन्यत्र रागचरुषाडवदधिगुडदधिगोधूमयवपिष्टविकारेभ्यः " ।

**शङ्खः**—" अपूपाः सक्तवो धानास्तक्रं दधि घृतं मधु ।
एतत्पण्येषु भोक्तव्यं भाण्डलेपो न चेद्भवेत् " ॥

**आपस्तम्बः**—" द्वावेवाऽऽश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ।
मुनेरन्नमभोज्यं स्यात्सर्वेषां लिङ्गिनां तथा ॥
सूतके मृतके भुङ्क्ते गृहीते शशिभास्करे ।
छायायां हस्तिनो भुङ्क्ते न भूयः पुरुषो भवेत् " ॥ १६५ ॥
॥ १६६ ॥ १६७ ॥

शूद्रविशेषान्नभोजननिषेधार्थमाह—

## शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ॥
## भोज्यान्ना नापितश्चैव यश्चाऽऽत्मानं निवेदयेत् ॥१६८॥

शूद्रेष्विति निर्धारणे सप्तमी । तेन शूद्राणां मध्ये दासादयो भोज्यान्नाः । नान्ये शूद्राः । दासः क्रीतादिः । गोपालो गवां पाता । कुलं स्वक्षेत्रकर्षकः । तथा च देवलः—

" स्वदासो नापितो गोपः कुम्भकारः कृषीवलः ।
ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः " ॥

यद्वा कुलस्य मित्रं[3] कुलमित्रम् । कुलं वंशः । मित्रं प्रसिद्धम् । अवसूरी संभूय समुत्थायितया सहकर्षकः । नापितः प्रसिद्धः । यश्च शूद्रोऽक्रीत एव द्विजायाऽऽत्मानं वा वाङ्मनःकायकर्मभिर्निवेदयति ददाति । दासादयो यदीयास्तस्यैव ते भोज्यान्नाः ।

**हारीतः**—" कुलमित्रं कुलपुत्रो भैक्ष्यदः शिष्यकः सुहृत् ।
भवेद्यस्य सुखं लाभे भवे त्राता च यो भवेत्[5] ॥
एते शूद्रेषु भोज्यान्ना मनो यत्र विभाव्यते " ।

कुलं कर्षकस्तत्पुत्रः कुलपुत्रः । सुहृन्मित्रम् । विभाव्यते प्रसीदति । उक्तव्यतिरिक्तशूद्रविषये मनुराह—

---

१ ग. घ. °डगो° । २ ङ. °त्रार्धसीरि° । ३ क. घ. 'मित्रम् । ४ घ. °त्थाय त° । ५ ख. °ते प्र° ।

वसिष्ठः—" उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं च " ।

आपस्तम्बः—

" अप्रयतोपहतमन्नमप्रयतं न त्वभोज्यम् । यस्मिंश्चान्ने केशः स्यादन्यद्वाऽमेध्यममेध्यैरवमृष्टं कीटो वाऽमेध्यसेवी । मूषकलाङ्गं वा पदा वोपहतं सिचा वा शुना वाऽपात्रेण वा दृष्टं सिचा वोपहतं दास्या वा नक्तमाहृतं भुञ्जानं वा यत्र शूद्र उपस्पृशेदनर्हद्भिर्वा समानपङ्क्तौ भुञ्जानेषु वा यत्रानुत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा कुत्सयित्वा वा यत्रान्नं दद्युर्मनुष्यैरवघ्रातमन्यैर्वाऽमेध्यैः " ।

अस्यार्थः—अप्रयतेनाशुचिना पुरुषेण स्पृष्टमन्नमशुचि भवति, न पुनस्तदभोज्यम् । अप्रयतस्यान्नस्याग्न्यधिश्रयणमद्भिर्वा प्रोक्षणं, हिरण्येन वा छागमुखेन वा स्पर्शनं प्रयतत्वं करोति । अशुचिशूद्रस्पृष्टं त्वभोज्यमेव । मूषकला मूषपुरीषम् । मूषो मूषकस्तदङ्गं वा पुच्छादि यस्मिन्नन्ने तदभोज्यमिति वाक्यपरिसमाप्तिः । सिचा वस्त्रान्तेनोपहतं दास्या दासेन वा नक्तमाहृतम् ।

देवलः—" अवलीढं श्वमार्जारध्वाङ्क्षकुक्कुटमूषकैः ।
भोजने नोपयुञ्जीत तदमेध्यं हि सर्वतः ॥
विशुद्धमपि चाऽऽहारं मक्षिकाक्रिमिजन्तुभिः ।
केशरोमनखैर्वाऽपि दूषितं परिवर्जयेत् " ॥

ब्रह्मपुराणात्—" उच्छिष्टेन तु शूद्रेण संस्पृष्टः परिवेषकः ।
द्रव्यहस्तश्च यत्किंचिद्दद्यात्तच्च न भक्षयेत् " ॥

तथा—" शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं त्वपि " ।

वसिष्ठः—" घृतं वा यदि वा तैलं विप्रो नाद्यान्नखस्रुतम् ।
यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः " ॥

तथा—" हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते तु किल्बिषम् ॥
तस्मादन्तरितं देयं पर्णेनैव तृणेन वा ।
प्रदद्यान्न तु हस्तेन नाऽऽयसेन कदा चन " ॥

ब्रह्मपुराणे—" एकेन पाणिना दत्तं शूद्रादन्नं न भक्षयेत् ।

---

१ ग. ब. °वमृष्टं । २ ख. °चा शुना वाऽपपा° । ३ ग. घ. °षकपु° । ४ ग. घ. °म् । सर्वं तद° ।

**भविष्यत्पुराणम्—**

" जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम् ।
संसर्गाश्रयदुष्टं च सहृल्लेखं स्वभावतः " ॥

**जातिदुष्टादीनामुदाहरणान्याह—**

" लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
वार्ताकनालिकालाबु उपेयाज्जातिदूषितम् ॥
न भक्षयेत्क्रियादुष्टं यद्दृष्टं पतितैः पृथक्[1] ।
कालदुष्टं च विज्ञेयं ह्यस्तनं चिरसंस्थितम् ॥
दधि भक्ष्यं विकारेषु मधुवर्जं तदिष्यते ।
सुरालशुनसंस्पृष्टं[2] पीयूषादिसमन्वितम् ॥
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत् ।
शूद्रोच्छिष्टं तु विज्ञेयं पूर्वं शूद्रेषु दर्शितम् ॥
विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते ।
सहृल्लेखं तु विज्ञेयं पुरीषं तु स्वभावतः ॥
रसदुष्टं विकाराद्धि रसस्येति निदर्शनात् ।
पायसक्षीरपूपादि तस्मिन्नेव दिने यथा " ॥

**अलाबुरत्र दीर्घालाबो(बो)रितरः । दीर्घस्य श्राद्धार्हत्वात् । अदीर्घस्य जातिदुष्टस्य पलाण्डुवन्निन्दितस्य श्राद्धेयत्वानुपपत्तेः । अत एव—**

" अलाबुं ग्रीवकं चाणुं कर्करीं त्रपुसीं तथा "

**इति दीर्घालाबोः श्राद्धार्हत्वात् । इतरस्य च—**

" पिप्पलीसमुकं[3]मृषभूस्तृणासुरीसर्षपसुरसकूष्माण्डालाबुवार्ताकं[4]पालक्यातण्डुलीयक[5]कुसुम्भपिण्डमूलकमहिषीक्षीराणि वर्जयेत् "

**इत्यश्राद्धेयत्वम् ।**

**हारीतः—**" पलाण्डुं लशुनं शुक्तं निर्यासांश्चेति सर्वशः ।
कुंध्वन्दुं[6] श्वेतवार्ताकं कुम्भाण्डं च न भक्षयेत् " ॥

**कुम्भाण्डो दाडिमसदृशः फलविशेषः ।**

**देवलः—**" न बीजान्युपयुञ्जीत रोगापत्तिमृते[7] बुधः ।
फलान्येषामनन्तानि बीजानां[8] हि विनाशयेत् " ॥

---

१ ग. घ. °संज्ञित° । २ ख. °ष्टं पेयू° । ३ ख. °कभू° । ४ ख. °ककपा° । ५ ग. °यक्यातण्डुलीयकु° । ६ ग. कुचन्दं श्वे° । घ. कुचुन्दं श्वे° । ७ ग. घ. रोगोत्पत्ति° । ८ ग. घ. °जाशी हि ।

ब्र(ब्रा)ह्मदेयां न वै कन्यां दत्त्वाऽश्नीयात्कदा चन ॥
अथ भुञ्जीत मोहाद्यः[1] पूयाशी नरके वसेत् [2] " ॥

ब्राह्मादिविवाहचतुष्टयपरिणीता[3] ब्राह्मदेया ।

वसिष्ठः--" श्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
न त्वेवं बहुयाज्यस्य यश्चोपनयते बहून् " ॥

अभोज्यमित्यनुवृत्तावापस्तम्बः--" यश्च सर्वान्वर्जयेत[4] सर्वान्नाशी च " ।

शङ्खलिखितौ--" भीतावगीतरुदिताक्रन्दितावाक्रुष्टक्षुत[5]परिभुक्तविस्मितोन्मत्ताव-धूतराजपुरोहितान्नानि वर्जयेत् " ।

कदर्याद्यन्नभोजने मनुः प्रायश्चित्तमाह--
" भुक्त्वाऽतोऽन्यतमस्यान्नममत्या[6] क्षपणं त्र्यहम् ।
मत्या भुक्त्वाऽऽचरेत्कृच्छ्रं रेतो विण्मूत्रमेव च " ॥

अतिकृच्छ्रे कृच्छ्रशब्दः । " एषामन्नभोजनेष्वतिकृच्छ्रः " इति शङ्खवचनात् ॥ १६१ ॥ १६२ ॥ १६३ ॥ १६४ ॥

**गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः ॥ १६५ ॥**
**पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम् ॥**
**अनर्चितं वृथामांसं केशकीटसमन्वितम् ॥ १६६ ॥**
**शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥**
**उदक्यास्पृष्टसंघुष्टं[7] पर्यायान्नं च वर्जयेत् ॥ १६७ ॥**

गोघ्रातादिकमन्नं वृथामांसं च वर्जयेत् । शकुनः पक्षी । पिशुनो दोषसूचकः । अनृती मिथ्यावादी । चाक्रिकस्तैलिकः । अभिशस्तपतितचाक्रिकतैलिक इति भेदस्मरणाच्छाकटिको वा । बन्दी स्तावकः । अनर्चितमवज्ञादत्तम् । वृथामांसं श्राद्धादिप्रयोजनशून्यं मांसम् । शुक्तं कालवशादम्लम् । पर्युषितमन्येद्युः सिद्धम् । उच्छिष्टं भुक्त्वा(क्ता)वशिष्टम् । संघुष्टं को भोक्ष्यत[8] इत्यभिक्रुष्टम् । पर्यायान्नं क्रमान्नं रविदिनेऽस्य सोमदिनेऽस्य गृहे भोक्तव्यमिति । पर्याचान्तमिति पाठे पर्याचान्तं बाहुलङ्घितम्[9] । श्वग्रहणं काकादीनां प्रदर्शनार्थम् । पतितग्रहणं चण्डालादीनाम् ।

---

१ ख. °द्यात्मा पू° । २ ग. °त् । ब्रह्मा° । ३ ग. °ता ब्रह्म° । ४ ख. °र्जयते सर्वान्नी च । ५ ग. घ. °क्रुष्टक्षु° । ६ ग. °मत्वाऽभक्षणं । ७ ग. °संघृष्टं । ८ ख. ग. को भक्ष्य° । ९ ग. घ. °न्तं बहु° ।

कारनाशकः । वधजीवी प्राणिवधेन यो जीवति । चैलधावो वस्त्रप्रक्षालकः । सुराजीवः सुराजीविकः । सहोपपतिर्वेश्मा निजभार्याजारसहितगृहः । सोमविक्रयी सोमलताविक्रयी ।

प्रसङ्गादन्यदप्युच्यते—

भविष्यत्पुराणम्—" अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् " ॥

पैठीनसिः-" सांवत्सरघाण्टिकग्रामकूटान्नं विषम् । तथा परिवित्तिपरिविद्धान[1]विद्धप्रजननवृषलीपतिदिधिषूपतिपुनर्भूपुत्राणां रुधिरम् " ।

सांवत्सरो नक्षत्रजीवी । घाण्टिको घण्टाशिल्पः ।

तदुक्तम्—" राज्ञां संबोधसमये घण्टाशिल्पास्तु घाण्टिकाः " ।

ग्रामकूटकः प्रसिद्धः । परिवित्त्यादीनां लक्षणं श्राद्धप्रकरणे वक्ष्यते । विद्धप्रजननो विद्धलिङ्गः ।

यमः—" चक्रोपजीवी गान्धर्वः कितवस्तस्करस्तथा ।
ध्वजी दारोपजीवी च शूद्राध्यापकयाजकौ ॥
कुलालश्चित्रकर्मा च वार्धुषी चर्मविक्रयी " ।

चक्रोपजीवी शाकटिकः । गान्धर्वो गायनः । ध्वजी मद्यविक्रयी । तथा—

" यथा जलं निर्गमनेष्वपेयं नदीगतं तत्पुनरेव पेयम् ।
तथाऽन्नपानं विधिपूर्वमागतं द्विजातिपात्रान्तारितं न दुष्यति " ॥

निर्गमनानि रथ्योदकप्रवाहाः ।

" ब्राह्मणस्य सदाऽश्नीयात्क्षत्रियस्य तु पर्वसु ।
प्रकृतेषु च वैश्यस्य न शूद्रस्य कदा चन " ॥

प्रकृतेषूत्सवेषु च ।

" तथा [2]राजभृतस्यान्नं चौरस्यान्नं तथैव च ।
सूतके मृतके चान्नं स्वर्गस्थमपि पातयेत् ॥
अवलिप्तस्य मूर्खस्य दुष्टवृत्तस्य दुर्मतेः ।
अन्नमश्रद्दधानस्य यो भुङ्क्ते भ्रूणहा तु सः " ॥

आदित्यपुराणे–" विष्णुं जामातरं मन्येत्तस्य मन्युं न कारयेत् ।
अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥
गान्धर्वे चैव राजन्यः कुर्याद्वै गमनागमम् ।

---

१ ग. घ. °विधोन । २ ग राज्ञां च भृतकस्या° ।

कदर्यादीनां सोमविक्रयिणश्चान्नं न भोक्तव्यम् । कदर्यो यो लोभाद्विद्यमानमपि धनं न भुङ्क्ते न च ददाति । तदुक्तम्—

" आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन् ।
लोभाद्यः पितरौ भृत्यान्स कदर्य इति स्मृतः " ॥

बद्धो निगडितः । चौरः स्तेनः । क्लीबः पण्डः । रङ्गावतारी नटादिः । वैणो वीणावादनजीवी, वेणुच्छेदनजीवी वा । अभिशस्तः पापकारित्वेनाधिक्षिप्तः । वार्धुष्यं निषिद्धवृद्ध्युपजीवनम् । तेन च तद्वाँल्लक्ष्यते । आत्मस्तुतिपरनिन्दाकर्ता वा वार्धुषिकः । तथा च विष्णुः—

" यस्तु निन्देत्परं जीवं प्रशंसत्यात्मनो गुणान् ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः " इति ॥

गणिका वेश्या । गणः संघः । तदन्नमन्यस्याभोज्यम् । दीक्षी दीक्षितः, तस्य च प्रागग्नीषोमीयवपाहोमादभोज्यान्नता । तथा च श्रुतिः—" अशितव्यं वपायां हुतायाम् " इति । आपस्तम्बस्तु—पूर्वमपि वपाहोमाद्यज्ञार्थे द्रव्ये पृथक्कृते यदवशिष्टं तद्दीक्षितस्यापि भोक्तव्यमित्याह । दीक्षितः क्रीतराजकः । अग्नीषोमीयसंस्थायामेव वपायां हुतायां दीक्षितस्य भोक्तव्यम् । "यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन् " इति हि ब्राह्मणमिति । चिकित्सकश्चिकित्सावृत्तिः । असम्यक्चिकित्सक इतरोऽपि । आतुरो रोगार्तः । क्रुद्धः कुपितः । पुंश्चली व्यभिचारिणी । मत्तो धनादिना । विप्रादन्यो मद्येन वा । विद्विट् शत्रुः । क्रूरः स्थिरक्रोधः । उग्रः परदुःखोत्पादनपटुः । क्षत्रियाच्छूद्रायामुत्पन्नो वा । पतितो ब्रह्महत्यादिकर्ता स्तेनादन्यः । तस्य चौरशब्देन संगृहीतत्वात् । अथ वा पतितादन्यश्चौरशब्देनोच्यते । व्रात्यः पतितसावित्रीकः । दाम्भिकः ख्यातिलाभादिप्रयोजनधर्मानुष्ठानः । उच्छिष्टभोजी परोच्छिष्टभोजनशीलः । अवीरा पतिपुत्ररहिता । स्वर्णकारः प्रसिद्धः । स्त्रीजितः स्त्रीपरतन्त्रः । ग्रामयाजकोऽनेकयाजकः । शस्त्रविक्रयी खड्गादिविक्रयजीवी । कर्मारो लोहकारः । तन्तुवायो वस्त्रस्यूतस्य कर्ता, पाटितवस्त्रसंधायको वा । श्ववृत्तवान्सेवकः । यद्वा शुनां वृत्तं वर्तनमस्ति यस्मिन्स श्ववृत्ती श्ववल्लुब्धक इत्यर्थः । स चानिपुचार्येवाभोज्यान्न इत्याह गौतमः—" मृगयुरनिपुचारी " इति । इपुचारिणस्तु भोज्यमित्याह विष्णुः—" न मृगयोरिपुचारिणः परिवर्ज्यमन्नम् " इति । नृशंसो घातकः । राजा भूपो न तु क्षत्रियः । रजको वस्त्रादिरागकर्ता । कृतघ्न उप-

१ ग. ध. °नाऽऽक्षिप्तः । २ ग. घातुकः ।

अदत्तानि परशय्यादीनि परेणादत्तानि वर्जयेत् । तदुपजीवनं वर्जयेदित्यर्थः । उद्यानमुपवनम् । प्रसिद्धमन्यत् । अत्र मनुः—

" यानशय्यासनान्यस्य कूपोद्यानगृहाणि च ।
अदत्तान्युपयुञ्जान एनसः स्यात्तुरीयभाक् " ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धे स्नातकव्रतप्रकरणम् ॥ ५ ॥

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

---

## भोज्याभोज्यभक्ष्याभक्ष्यप्रकरणम् । ( ६ )

+अधुना भोज्याभोज्यभक्ष्याभक्ष्यप्रकरणमारभते । तत्राभोज्यान्याह—

अग्निहीनस्य नान्नमद्यादनापदि ॥ १६० ॥

सत्यप्यधिकारे श्रौतस्मार्ताग्निपरिग्रहमकुर्वत उत्सृष्टाग्नेश्चान्नमनापदि न भुञ्जीत ॥ १६० ॥

कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ॥
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥ १६१ ॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ॥
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥१६२॥
अवीरस्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ॥
शस्त्रविक्रयकर्मारतन्तुवायश्ववृत्तिनाम् ॥ १६३ ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ॥
चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥ १६४ ॥
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥

---

+ एतत्प्रकरणं क. पुस्तके न विद्यते ।

---

१ क. °पभुञ्जा° ।

मार्कण्डेयः—" आदित्यदुहिता गङ्गा प्लक्षजाता सरस्वती ।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः " ॥

कुरुक्षेत्रे या सरस्वती सा प्लक्षजाता ।

स्मृत्यन्तरात्–" कालिन्दी गोमती गङ्गा पवित्रा देवनिर्मिता ।
सामान्याद्गुणयोगाच्च रजो नाभिभवत्यतः " ॥

निगमः—" गङ्गा धर्मद्रवः पुण्या यमुना च सरस्वती ।
अन्तर्गतरजोयोगाः सर्वाहेषु च चामलाः " ॥

गार्ग्यः—" प्रत्यावृत्तेऽम्भसि स्नानं वर्ज्यं नद्यां द्विजातिभिः ।
तस्यां रजकतीर्थं च दशहस्तेन चोपरि " ॥

निगमः—" प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनम् ।
गङ्गायां न प्रदुष्यन्ति स हि धर्मद्रवः स्वयम् ॥
याः शोषमुपगच्छन्ति ग्रीष्मे कुसरितो भुवि ।
तासु स्नानं न कुर्वीत प्रावृष्यम्बुददर्शनात् " ॥

योगयाज्ञवल्क्यः–" अग्राह्यास्त्वग्रिमा आपो नद्याः प्रथमवेगिताः ।
प्रक्षोभिताश्च केनापि पार्श्वतीर्थविनिःसृताः " ॥

अग्रिमा नवाः । तथा च स्मृत्यन्तरम्—
" अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः ।
दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकम् " ।

तीर्थं जलावतरणमार्गः ।

व्यासः–" नद्या यच्च परिभ्रष्टं नद्या यच्च विवर्जितम् ।
गतप्रत्यागतं यच्च तत्तोयं परिवर्जयेत् ॥
नद्यामस्तमिते स्नानं वर्जयेत्सर्वदा नरः ।
नद्यां स्नातो नदीमन्यां न प्रशंसेत धर्मवित् ॥
अन्तर्धाय च न स्नायान्न[2] च तीर्थे जलान्तरे ।
न मेहेत जलद्रोण्यां स्नातुं च न नदीं तरेत् " ॥

अस्यार्थः—नदीतो भ्रष्टं नद्या विनिर्गत्य ततो विच्छिन्नं नद्या सह संगमार्थमभिप्रवृत्तं तदसंगतं यत्तत्तया वर्जितमावर्ते[3] गतप्रत्यागतम् । अन्तर्धाय वस्त्रादिना । तीर्थान्तरे च तीर्थान्तरजलेन न स्नायादिति ॥ १५९ ॥

किं च—

**परशय्यासनोद्यानगृहयानानि वर्जयेत् ॥**

---

१ क. ख. तासां । २ ग. घ. °न्नवती° । ३ ग. °वर्ते गतप्र° ।

न ता आपो नदीशब्दवहा इत्यर्थः । पर्वतादेः स्तोको जलप्रवाहः प्रस्रवणम् । अत्र च प्राशस्त्यक्रममाह मार्कण्डेयः—

" भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् ।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ॥
तीर्थतोयं ततः पुण्यं गाङ्गं पुण्यं तु सर्वतः " ॥

योगयाज्ञवल्क्यः—" प्रभूते विद्यमाने तु उदके सुमनोहरे ।
नाल्पोदके द्विजः स्नायान्नदीं चोत्सृज्य कृत्रिमे ॥
त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः " ॥

त्रिरात्रफलदास्त्रिरात्रोपवासफलदा इत्यर्थः । एवं पक्षमासयोरपि । प्रसङ्गात्समुद्रस्नानादिविषयं किंचिदुच्यते । तत्र स्मृत्यन्तरम्—

" अश्वत्थसागरौ चैव न स्प्रष्टव्यौ कदाचन ।
अश्वत्थं मन्दवारेषु सागरं पर्वणि स्पृशेत् " ॥

मन्दः शनैश्चरः । पर्वामावास्या पूर्णमासी च ॥

तथा—" सिन्धोः सेतोः सरस्वत्या गङ्गायाः पुरुषोत्तमात्[1] ।
नापर्वणि सरिन्नाथं स्पृशेदन्यत्र कुत्रचित् " ॥

तथा—" कर्तुं प्रवृत्तो विधिवत्स्नानश्राद्धादिकां क्रियाम् ।
कृत्तिं प्रत्यभिमन्त्र्येह क्षिपेत्पाषाणसप्तकम् ॥
पिप्पलादसमुत्पन्ने[2] कृत्ते लोकभयंकारि ।
पाषाणं ते मया दत्तमाहारार्थं प्रकल्पितम् " ॥

व्यासः—" अग्निश्च ते योनिरिला च देहो रेतोधा विष्णुरमृतं च नाभिः ।
एतद्ब्रुवन्[3]पाण्डव सत्यवाक्यं[4] ततोऽवगाहेत पतिं नदीनाम् ॥
आजन्मशतसाहस्रं यत्पापं कुरुते क्वचित् ।
मुच्यते सर्वपापेभ्यः स्नात्वैवं लवणाम्भसि ॥
अन्यथा तु कुरुश्रेष्ठ देवयोनिरपां पतिः ।
कुशाग्रेणापि कौन्तेय न स्प्रष्टव्यो महोदधिः " ॥

स्मृत्यन्तरम्—" वपनं चोपवासं च सर्वतीर्थेषु कारयेत् " ॥

मरीचिः—"नभोनभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणम् " ॥

---

१ ग. °त्तम । ना° । घ. °त्तमम् । ना° । २ ग. घ. °लादास° । ३ ग. घ. °वन्मण्डलस° । ४ घ. सप्तवा° ।

" आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ।
अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः ॥
जामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः ।
संबन्धिनोऽपां लोकस्य पृथिव्या मातृमातुलौ ॥
आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः ।
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्विका तनुः ॥
छाया स्वो दासवर्गस्तु दुहिता कृपणं परम् ।
तस्मादेतैरधिक्षिप्तः सहेतासंज्वरः सदा " ॥

कृपाविषयः(?) । असंज्वरोऽसंतप्तः ॥ १५८ ॥

अपि च—

**पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु ॥**

परकीयवारिभ्यः पञ्च पिण्डाननुद्धृत्य बहिरनुत्क्षिप्य तेषु स्नानं न कुर्यात् । अनेन चार्थाद्वक्ष्यमाणमुख्यस्नानाङ्गजलालाभे परवारिष्वपि पिण्डोद्धरणपूर्वकं स्नानं विधीयते । यानि तु जलानि स्वामिना यथाशास्त्रं परोपकारायोत्सृष्टानि तेभ्यः पिण्डा नोद्धर्तव्याः । परकीयत्वाभावात् । अत्र मनुः—

" परकीयनिपानेषु न स्नायाद्धि कदा चन ।
निपानकर्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते " ॥

बौधायनः—" न कदाचिद्बुधः स्नायात्परखाते जलाशये ।
अननुद्धृत्य कूपे वा मृत्पिण्डान्पञ्च सप्त वा " ॥

इदानीं मुख्यानि स्नानाङ्गजलान्याह—

**स्नायान्नदीदेवखातह्रदेषु च सरःसु च ॥ १५९ ॥**

नद्यादिषु स्नायात् । नदी स्रवन्ती । देवैः खातमिति यत्स्मर्यते तद्देवखातम् । नदीजलमविच्छिन्नप्रवाहं ह्रदः । सरः स्थावरमकृत्रिमं जलम् । चकाराद्गर्तप्रस्रवणादिष्वपि ।

तथा च मनुः—" नदीषु देवखातेषु ह्रदेषु च सरःसु च ।
स्नानं समाचरेन्नित्यं गर्तप्रस्रवणादिषु " ॥

गर्तस्वरूपमाह कात्यायनः—

" धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः " इति ॥

---

१ क. °ता विभुः । ग. °तामहः । अ° । २ घ. छ. ञ. अन्ना(न्रा)नु° । ३ ङ. °ह्रदप्रस्रवणेषु च ।

( स्नातकव्रतप्रकरणम् ५)

तस्मादभिचारो मधुपर्कादौ गोवधो विधवानियोगः शूद्राविवाह इत्यादयोऽस्वर्ग्यत्वाल्लोकविद्विष्टत्वाद्विहिता अपि न कार्या विशेषेण कलियुगे । अत एव स्मरन्ति--

" गोपशुं देवरात्पुत्रं सत्रयागं कमण्डलुम् ।
सुराप्रयोगं भिक्षुं च न कुर्वीत कलौ युगे " ॥

भिक्षुः परमहंसः ।

तथा—" अक्षता नरमेधश्च गोयज्ञश्च कमण्डलुः ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् " ॥

अत एव मधुपर्केऽनुकल्पस्मरणम् । यन्मार्कण्डेयः—

" माधुपर्किकपश्वर्थे ततो मात्रां निवेदयेत् ।
सहिरण्यं बीजपात्रं द्रविणेन सदैव तु ॥
पशुः कलौ न कर्तव्य इत्याह भगवान्भृगुः " ॥

माधुपर्किकपशुरत्र गौरेव । मधुपर्के " तस्मा असिपाणिर्गां प्राह " इत्यादौ गोहननक्रियानियोगादेः स्मरणात्कलौ गोहननस्य निषेधोपपत्तेश्च ॥ १५६ ॥

**मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः ॥**
**बालवृद्धातुराचार्यवैद्यसंश्रितबान्धवैः ॥ १५७॥**
**ऋत्विक्पुरोहितामात्य[2]भार्यादाससनाभिभिः ॥**
**विवादं वर्जयित्वा तु सर्वाँल्लोकाञ्जयेद्गृही ॥ १५८ ॥**

मात्रादिभिर्विवादं कलहं वर्जयित्वा सर्वान्भूरादींल्लोकाञ्जयति भुङ्क्ते । जामयो भगिनीप्रभृतयः स्ववासिन्यः । संबन्धिनो वैवाह्याः । वैद्यो भिषग्वेदविद्यावान्वा । संश्रित आश्रितः शिष्य इति यावत् । सनाभयः सपिण्डाः । अन्ये प्रसिद्धाः । मनुस्तूक्तविवादान्वर्जयतः सर्वपापक्षयमाचार्यादिभिर्जितस्य च ब्रह्मलोकादिजयफलमाह—

" बालवृद्धातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ।
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया ॥
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥
एतांस्त्यजन्विवादांश्च सर्वपापैः प्रमुच्यते ।
एतैर्जितैश्च जयति सर्वाँल्लोकानिमान्गृही " ॥

अत्र चैतैरिति वक्ष्यमाणाचार्याभिप्रायम् ।

---

१ क. °जमात्रे द्र° । घ. °जमात्रं । २ ङ. °तापत्य° ।

शरीरस्याधोभागे नाभेरधस्तात्ताडयेत् । उत्तमाङ्गे शिरसि वक्षसि न ताडयेत् । अधोभागनियमेनैव शिरोवक्षसोऽन्यवृत्तिसिद्धौ तयोः पृथङ्निषेधस्ततोऽन्यत्रोत्तरकायेऽपि ताडनानुग्रहार्थः । अत एव विष्णुः—

" शास्यं ताडयेत्तं तु वेणुदलेन रज्ज्वा वा पृष्ठत एव " इति । अन्यथा प्रहरन्गुरुरपि पापवान्स्यात् ॥ १५५ ॥

## कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ॥

अत्र यत्नादिति विधीयते । अन्यदनूद्यते । तथा च सति कर्मणेतिपदमनुवाचकत्वाद्वाङ्मनःशब्दसाहचर्याच्च लक्षणया शरीरे वर्तते । ततश्चायमर्थो भवति–शरीरेण यं धर्मं तपश्चर्यादिकमाचरेत्, यं च मनसा यागदानादिकं, यं च वाचा वेदाध्ययनादिकं, तं यत्नादादरात्समाचरेत्, न प्रमाद्येदित्यर्थः । धर्मस्य सर्वपुरुषार्थहेतुत्वात् । अत एव मनुः—

" धर्मं शनैः संचिनुयाद्वल्मीकमिव वम्रिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् " ॥

वम्रिकाः पिपीलिकाविशेषाः ।

" नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥
एकः प्रजायते जन्तुरेक एव विलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥
मृतं शरीरं संत्यज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः " ॥

अत्रापवादमाह—

## अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ॥ १५६ ॥

अस्वर्ग्यमनामुष्मिकमैहिकफलं लौकिकैर्विद्विष्टं निन्दितं धर्म(र्म्य)मपि शास्त्रविहितमपि नाऽऽचरेदभिचारादिकम् । विहितो हि बौधायनेनाभिचारः क्वचिद्विषये । यथा—"षट्स्वनभिचरन्पतति " इति ।

मनुरपि—" क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥
स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम् ॥
तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन्द्विजः " इति ॥

---

१ घ. °था स्वान° ।

विस्मयः श्लाघा । एवमादिश्रुतिस्मृतिभ्य आचारो वेदितव्यः । सर्वश्च स्नातकेनावश्यं कार्यः । तदाह मनुः—

"आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥
दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥
सर्वलक्षणहीनोऽपि सर्वदाऽऽचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति" ॥ १५४ ॥

किं च—

**गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ॥**

उच्छिष्टो गवादि न स्पृशेत् । अनुच्छिष्टोऽपि पदा । उच्छिष्टोऽत्राशुचिः । मनुः—"स्पृष्ट्वैतानि शुचिर्नित्यमद्भिः प्राणानुपस्पृशेत्[1] ।
गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु" ॥

प्राणशब्देनात्र तत्स्थानानि मूर्धन्यच्छिद्राणि श्रोत्रादीनि लक्ष्यन्ते । गात्रशब्देनाप्युरोमूर्धस्कन्धा उच्यन्ते । तत्स्पर्शस्याऽऽचमनप्रकरणे शुद्धिहेतुत्वदर्शनात् । शुद्ध्यर्थं चेदं प्राणादिस्पर्शनं विधीयते ॥

किं च—

**न निन्दाताडने कुर्यात्**

परस्य निन्दां ताडनं च न कुर्यात् ।

अत्रापवादमाह[2]—

**पुत्रं शिष्यं च ताडयेत् ॥ १५५ ॥**

शिक्षार्थमनयोस्ताडनानुग्रहो नान्यथा । तदाह मनुः—

"परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् ।
अन्यत्र पुत्राच्छिष्याद्वा शिक्षार्थं ताडयेत्तु तौ" ॥

शिष्यः शासनीयः । पुत्रस्य पृथग्ग्रहणं गोबलीवर्दन्यायेन । अत एव विष्णुः—"शास्यं शासेत्ताडयेत्" इति शास्यशब्दमेव प्रयुक्तवान् । अत्र नियममेवाऽऽह—

"अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि ।
अतोऽन्यथा तु प्रहरन्पापयुक्तो भवेन्नरः" ॥

---

१ ख. °नुपास्पृ° । २ ख. छ. ञ. सुतं ।

नास्ति दैवमिति मतिर्यस्य स नास्तिकः । तस्य भावो नास्तिक्यम् । वेदेष्वप्रामाण्याध्यवसायो निन्दा । देवतानां ब्रह्मादीनां कुत्सनं निन्दनम् । यथा—ब्रह्मा दुहितरमगात् । ईशो ब्रह्मणः शिरश्चिच्छेदेति । स्तम्भोऽहंकाराद्प्रणामः । मानोऽहंकारः । क्रोधोऽक्षमा । तैक्ष्ण्यं वाक्पारुष्यम् ।

" अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम् ।
हिंसारतिश्च यो नित्यं नेहासौ सुखमेधते ॥
न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥
नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥
यदि नाऽऽत्मनि पुत्रेषु[१] नो चेत्पौत्रेषु नप्तृषु ।
न त्वेवं हि कृतो धर्मः कर्तुर्भवति निष्फलः ॥
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्वन्स्त्रीशूद्रदम्भनम् " ॥

धर्मच्छलेन[२] प्रायश्चित्तं न कुर्यादित्यर्थः ।

" अलिङ्गी लिङ्गवेशेन यो वृत्तिमुपजीवति ।
स लिङ्गिनां हरत्येनस्तिर्यग्योनौ च जायते " ॥

आश्रमिणो लिङ्गिनः । तेषां लिङ्गैर्दण्डादिभिः स्वयमलिङ्गी तद्वृत्तिं भिक्षाप्रतिग्रहादिकां य उपजीवति स आश्रमिणां पापं तिर्यग्योनिं चाश्नुते ।

" यमान्सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥
शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहौ ।
व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥
आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम् ।
ध्यानं प्रसादो माधुर्यं मार्दवं च यमा दश ॥
न विस्मयेत तपसा वदेदृष्ट्वा च नानृतम् ।
नाऽऽर्तोऽप्यपवदेद्विप्रान्न दत्तं[३] परिकीर्तयेत् ॥
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रावमानेन दानं तु परिकीर्तनात् " ॥

---

१ क. ख. °षु न चेत्पुत्रे° । २ ग. धर्मायतनेन प्रायश्चित्तं कु° । ३ क. ग. °दत्त्वा प° ।

दीक्षितोऽनुन्मुक्तदीक्षः ।

पुराणात्—" क्रियां यः कुरुते मोहादनाचम्येह नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः " ॥

शातातपः—" अजाविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते ।
श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम् " ॥

बैजवापः—" रथाश्वगजधान्यानां गवां चैव रजः शुभम् ।
अप्रशस्तं समूह्निन्यजाविरासभवाससाम् " ॥

समूह्निनी मार्जनी ।

षट्त्रिंशन्मतात्—" प्रक्षाल्य हस्तौ गृह्णीयादोषध्यामलके नरः ।
शिरसो मुण्डनं कृत्वा पुनः प्रक्षालयेत्तु तत् " ॥

मनुः—" *मङ्गलाचारयुक्तः स्यात्प्रयतात्मा जितेन्द्रियः ।
जपेच्च जुहुयाच्चैव विनिपातो न विद्यते ॥
वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः ।
तं ह्यस्याऽऽहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥
वेदाभ्यासेन सततं शौचेन तपसैव च ।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥
पौर्विकीं संस्मरञ्जातिं ब्रह्मैवाभ्यसते पुनः ।
ब्रह्माभ्यासेन चानन्तमजस्रं फलमश्नुते ॥
सावित्राञ्शान्तिहोमांश्च कुर्यात्पर्वसु नित्यशः " ।

जातिर्जन्म । सवितृदै(दे)वत्यान्दुरितशान्तिप्रयोजनानाज्यहोमान्कृष्णशुक्लपक्षदर्शीषु सदा कुर्यादित्यर्थः ।

" अष्टकासु पितॄनर्चेन्नित्यमन्वष्टकासु च " ।

स्वगृह्योक्तविधानेनेति शेषः । नित्यं सर्वदेत्यर्थः ।

" अभिवाद्य च वृद्धांश्च दद्याच्चैवाऽऽसनं स्वकम् ।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषं स्तम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् " ॥

---

* अयमेव श्लोको भङ्ग्यन्तरेण क. पुस्तके पठितः स यथा—" मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न विद्यते " ।

---

१ ग. ग्रामप° । २ क. ग. °तृदेवतान्दु° । ३ ख. °नेत्यर्थः । नि° ।

वेगरोधो न कर्तव्यस्त्वन्यत्र क्रोधवेगतः ॥
नोपेक्षितव्यो व्याधिः स्यान्मृत्युरल्पोऽपि भार्गव ।
न हुं कुर्याच्छवं पूर्वं बिभृयान्नाग्निवारिणी " ॥

शङ्खलिखितौ—" नापोऽग्निं चैकतो धारयेत् " । एकत एकस्मिन्हस्तादौ ।

मार्कण्डेयः—" न भुक्तमात्रस्याऽऽयस्येन्नीचसेवां च वर्जयेत् ।
पादं पदा च नाऽऽक्रामेन्न कण्डूयेन्न शोधयेत् ॥
वेदशास्त्रनरेन्द्राग्निदेवनिन्दां विवर्जयेत् ।
निरासनस्य सुप्तस्य तिष्ठतश्च तथैव च ॥
तथा भुक्तवतो नित्यं स्नातस्य रुषितस्य च ।
यात्रायुद्धोत्सुकस्यापि श्मश्रुकर्म विवर्जयेत् " ॥
पुष्पाण्यकालरूढानि फलान्यपि तथैव च ।
विकारवच्च यत्किंचित्तत्प्रयत्नेन वर्जयेत् ॥

विकारवदद्भुतम् ।

" दिवा कपित्थच्छायां च रात्रौ दधि शमीं तथा ।
कार्पासं दन्तकाष्ठं च शक्रादपि हरेच्छ्रियम् ॥
अष्टमीं च तथा षष्ठीं नवमीं च चतुर्दशीम् ।
वर्जयेच्छिरसोऽभ्यङ्गं पर्वसंधि तथैव च ॥
तथैवाऽऽमलकैः स्नानं सप्तमीषु विवर्जयेत् ।
विना तु सततं स्नानं न स्नायाद्दशमीषु च ॥
अमावस्यासु सर्वासु नववस्त्रं न धारयेत् ।
गोगजाश्वाजपुच्छेषु खरस्य च विशेषतः ॥
यल्लग्नमुदकं तस्माद्विप्रुषं दूरतस्त्यजेत् ।
शूर्पवातनखाग्राम्बु[1] स्नानवस्त्रघटोदकम् ॥
मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुरा कृतम् ।
माल्यानुलेपनादग्रं न प्रदद्यात्तु कस्यचित् ॥
अन्यत्र देवताविप्रगुरुभ्यो भृगुनन्दन ।
न गच्छेद्गर्भिणीं नारीं मलिनां सितमूर्धजाम् ॥
रजस्वलां भुक्तवतीं नायोनौ न बुभुक्षितः ।
न स्वपेद्येषु देशेषु तेषु देशेषु चाप्यथ ॥
दीक्षितो वर्जयेद्यत्नात्कृत्वा श्राद्धं च मानवः " ।

---

१ ग. घ. °म्बुनववस्त्र° ।

**तथा**—" सुतस्त्रियाश्च[1] शयनं सह भोज्यं च वर्जयेत् ।
आहारं मैथुनं निद्रां संध्याकाले विवर्जयेत् ॥
कर्म चाध्ययनं चैव तथा दानप्रतिग्रहौ ।
गोखरोष्ट्रं च नाऽऽरोहेन्न च गच्छेद्दिवा स्त्रियम् ॥
स्नानं चङ्क्रमणं स्वप्नं दिग्वासा न समाचरेत् " ।

**विष्णुः**—" न सर्पशस्त्रैः क्रीडेत देवब्राह्मण[2]शास्त्रमहात्मनां परिवादं वर्जयेत् । पर्वसु न तृणमपि च्छि[3]न्द्यात् " ॥

**विष्णुपुराणम्**—" विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः ।
विवादश्च विवाहश्च तुल्यरूपैर्नृपेष्यते " ॥

**स्मृत्यन्तरम्**—" मद्यविक्रयसंधानदानादानानि नाऽऽचरेत् " ।

**उशना**—" तिथिं पक्षस्य न ब्रूयान्न नक्षत्राणि निर्दिशेत् " ।

**आपस्तम्बः**—" संपादयति यो विप्रः स्नानं ती[4]र्थफलं जपम् ।
संपादी बध्यते दोषैस्तस्य संपद्यते फलम् " ॥

**पैठीनसिः**—" अपेयं हि सदा तोयं रात्रौ मध्यमयामयोः ।
स्नानं चैव न कर्तव्यं तथैवाऽऽचमनक्रिया ॥
मत्तप्रमत्तोन्मत्तपतितैः सह संभाषं न कुर्वीत " ।

**प्रमत्तः प्रमादशीलः** ।

" नापुष्पितं वृक्षमारो[5]हेत् । तथा नान्यस्मै दीयमानं प्र[6]ति वदेत् " ॥

**मार्कण्डेयः**—" बलिं स्नानभुवं चैव श्मशा[7]नबलिमेव च ।
न गच्छेद्बन्धनागारं वध्यभूमिं च गर्हिताम् ॥
अन्तःपुरं वित्तगृहं परद्यूतगृहं तथा ।
नोर्ध्वजानुश्चिरं तिष्ठेद्वत्सतन्त्रीं न लङ्घयेत् ॥
समालयो नाऽऽचरेत्स्नानं न द्विवासा विकारणम् " ।

**विकारणं निर्निमित्तम्** ।

" म्लेच्छवेशो न कर्तव्यो म्लेच्छभाषा तथैव च ।
नासंवृतमुखः कुर्याद्धास्यं जृम्भां तथैव च ॥
गो[8]पयेज्जन्मनक्षत्रं धनसारं गृहे मलम् ।

---

१ ग. °या च श° । २ ख. °णशास्त्र° । ३ ख. ग. भिन्द्यात् । ४ ख. °तीर्थं जपं फलम् । सं° । घ. तीर्थं फ । ५ ख. °रोहयेत् । ६ क. घ. °तिनुदे° । ७ क ख. °शानं ब° । ८ घ. गोपाये° ।

कालिकापुराणे–" सोपानत्को देवगृहमारुहेद्यस्तु मानवः ।
स याति नरकं घोरं तामिस्रं नाम नामतः " ॥

बृहस्पतिः—" एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् ।
भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥
अग्निना भस्मना चैव सलिलेन विशेषतः ।
द्वारेण स्तम्भमार्गेण षड्भिः पङ्क्तिर्विभिद्यते " इति ॥

हारीतः—" शुचिं देवाश्च रक्षन्ति रक्षन्ति पितरः शुचिम् ।
शुचेर्बिभ्यति रक्षांसि ये चान्ये दुष्टचारिणः ॥
भ्रष्टशौचं नरं दृष्ट्वा प्रहिंसन्तीह राक्षसाः ।
यक्षाः पिशाचा भूतानि ये चान्येऽप्येवमादयः ॥
ज्ञानं दानं तपस्त्यागो मन्त्रकर्मविधिक्रियाः ।
मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः ॥
द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् ।
चतुर्थे त्रिस्तनं शेषं यथान्यायं यथाबलम् ॥
नस्तनं दमनं बाले वाहनं च न शस्यते[1] ।
वृद्धानां दुर्बलानां च प्रजापतिवचो यथा " ॥

नस्तनं नासिकाभेदः ।

तथा—" वृद्धान्नातिवदेज्जातु न च संप्रेषयेदपि ।
नाऽऽसीनः स्यात्स्थितेष्वेवमायुरस्य निरस्यति " ॥

तथा—" गृहे पारावता धन्याः शुका वै शारिकास्तथा ।
गृह एते प्रशस्ताः स्युस्तथा वै तैलपायिकाः ॥
उपदीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा ।
निवसेरन्यदा तत्र शान्तिमेव तदाऽऽचरेत् ॥
अमङ्गल्यानि चैतानि दिवोऽऽक्रोशो[2] महात्मनाम् ।
महात्मनां च गुह्यानि वक्तव्यानि न कर्हि चित् ॥
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ।
भुक्त्वा प्रसाधनं[3] वर्ज्यं वर्ज्याश्च निशि सक्तवः ॥
प्राङ्मुखः श्मश्रुकर्माणि कारयेत्तु सदा नरः ।
उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥

---

१ क. ग. घ. °स्यते । त° । २ ख. °वाक्रोशो । ३ ख. ग. प्रसादनं ।

( स्नातकव्रतप्रकरणम् ५)

" न मद्यं दद्यात् । न प्रतिगृह्णीयात् । न धर्मं ख्यापयेत् । नाधर्मं संवृतं कुर्यात् । नापसव्यं परिदद्यात् । न भूमिं विलिखेत् । न पादेनाभिहन्यात् । नाङ्गमुखवादित्राणि कुर्यात् । न कूपश्वभ्राणि विलोकयेत् । न लोकविद्विष्टानि समाचरेत् । सर्वं विरुद्धं परिहरेत् " ।

हारीतः—" न गोमूत्रपुरीषाभ्यामुद्विजेत् । न पथि शिखा विसृजेत् " । शिखाः केशाः ।

" व्रीहिनिकषणतृणकुट्टनलोष्टचन्दनलेखनकरजदशनवीणावादनानि वर्जयेत् । आत्मस्तवावमानांश्च मद्यशुक्तविकारांश्च वर्जयेत् । न रक्तामगन्धां स्रजमाबध्नीयात् । अन्यत्र काञ्चनकमलकुवलयेभ्यः । नाशुचिक्लिन्नपूतिभिर्दारुभिरग्निमिन्धीत । नाग्निवेलयोः प्रवसेत् । पर्वसु चाऽऽपत्सु प्रोषितोऽग्निवेलायां वाग्यतस्तां प्रतिदिशं मनसा ध्यायेत् । अनुपस्थाय मन्त्रतो हुतं ज्ञात्वा प्रति व एना इत्युपस्थायाभिभाषेत ।

" प्रति व एना नमसाऽहमेमि सूक्तेन भिक्षे सुमतिं तुराणाम् ।
रराण ता मरुतो वेद्याभिर्निहेलो धत्त वि मुचध्वमश्वान् ।

नादर्भमग्निं परिचरेत् । नायज्ञियैर्जुहुयात् । हुतशेषं ब्राह्मणाय दद्यात् । माषमसूरमधुमांसपरान्नमैथुनानि व्रत्येऽहनि वर्जयेत् " ।

व्रत्यमग्न्यन्वाधानदिनम् ।

" नोच्चैर्निशायामभिभाषेत । नोत्तरीयान्तरीयविनिमयं कुर्यात् । न देवगुरुब्राह्मणपरीवादं कुर्यात् । न चैषां दीयमानं प्रति वारयेत् । स्तेयिनो हि प्रमीताः पूर्वधनिनामुपकाराय जायन्ते । तस्मान्न स्तेयं कुर्यान्न कारयेत् । नावमन्येत ।

निन्दां मृत्युपदं प्राहुर्निकृतिं तमसः पदम् ।
सर्वभूतात्मभूतत्वादार्जवं ब्रह्मणः पदम् ॥

पापाद्रोपसर्गाद्व्याधिसंक्रमणयोगात्सिध्द्यदर्शनाच्च तस्मात्पृथक्शौचाः श्रेयांसः ।

आसनं शयनं यानमन्तर्धाय समाचरेत् ।
न चैकभोजनं प्राहुर्ब्राह्मणानां स्वकैरपि " ॥

व्यासः–" यूकामत्कुणदंशादीन्खादतः स्वात्मनस्तनुम् ।
पुत्रवत्परिरक्षन्ति ते नराः स्वर्गगामिनः(णः) " ॥

---

१ क. नावृतं सं° । २ क. विसृजे° । ३ क. °ष्टमर्दनभूमिले° । घ. °ष्टमर्दनले° ४ ख. ग. °भिर्मारुतिर° । ५ ख. °शौचाच्छ्रेयां° ।

मनुः—" यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशं तु स्यात्तत्तद्यत्नेन सेवयेत् ॥[1]
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥
यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् " ॥

यत्कर्म धर्ममित्यर्थः ।

शङ्खलिखितौ–" आपत्स्वपि हि कष्टासु परस्वं कामयेत न ।
नाभक्ष्यं भक्षयेत्किंचिन्न पूर्वचरितं चरेत् ॥
नर्षिपितृदेवताः कीर्तयेत् " ।

स्वकीयानृषीनिष्टदेवताः पितॄंश्च न कीर्तयेदित्यर्थः ।

तथा—" नागाधोदकमवगाहेत । न स्त्रियं विवसनामीक्षेत ।
न पुरुषमन्यत्र स्वाभाव्यात् " ।

स्वाभाव्यादकामत इत्यर्थः ।

" न पादेन पादं प्रक्षालयेत् । न दर्भैः परिमृज्यात् । न महाजनविरोधं कुर्यात् । न गोष्ठीभिः संबध्येत । न गणबन्धुसमवायं प्रविशेत् । नायाज्यं याजयेत् । नानुयोगं प्रब्रूयात् " ।

अनुयोगो धनदानार्थमनुवाकमधीष्वेत्यध्ययनादेशः ।[2]

" न ब्रह्मविक्रयमिच्छेत् । न वाह्यमाने वाहय गामिति ब्रूयान्न परिषन्मध्ये स्वैरवाक्स्यात् " ।[3]

परिषत्कार्यानुवादित्वं स्वैरवाक्त्वम् ।

" नानियुक्तोऽग्रासनं गच्छेन्नाभ्यधिकं दद्यान्न प्रतिगृह्णीयात् ।

भोज्यमिति शेषः ।

" नोन्मत्तमूकान्संस्कुर्यात् " । नोपनयीतेत्यर्थः ।

"न वधबन्धसमवायं गच्छेत्" । वधबन्धप्रयोजनं समवायं मेलकं न गच्छेत् ।[4][5]

" न दावम् " । दावो वनवह्निः ।

" न दंपत्योरन्तरम् । नर्षीणां प्रभवं न नदीनां न महात्मनाम् " ।

प्रभव उत्पत्तिस्थानम् ।

---

१ क. घ. °त्तत्सेवेत यत्नतः । स° । २ ख. धर्मधानार्थमनुवाक्यम° । ३ ख. वाहाय । ४ क. °बन्धुस° । ५ क. °बन्धुप्र° ।

( स्नातकव्रतप्रकरणम् ५)

भवत्यधर्मादज्ञानमविद्या तच्च संशयः ।
उभाभ्यामन्यथाज्ञानं पापिष्ठमुपजायते ॥
अज्ञानाद्दुःखसंप्राप्तिः संशयाद्बध्यते पुनः ।
मिथ्याज्ञानात्पतत्येवं मूढस्तामिस्रयोनिषु " ॥

मनुः—" आचार्यं च प्रवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद्ब्राह्मणं गाश्च सर्वांश्चैव तपस्विनः ॥
ब्राह्मणायावगूर्यैव द्विजातिर्वधकाम्यया ।
शतं वर्षाणि तामिस्रे नरके परिवर्तते ॥
ताडयित्वा तृणेनापि संरम्भान्मतिपूर्वकम् ।
एकविंशतिमाजातीः पापयोनिषु जायते ॥
अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः ।
दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः ॥
शोणितं यावतः पांसून्संगृह्णाति महीतलात् ।
तावन्त्यब्दसहस्राणि तत्कर्ता नरके वसेत् ॥
न कदाचिद्द्विजे तस्माद्विद्वानवगुरेदपि ।
न ताडयेत्तृणेनापि न गात्रात्स्रावयेदसृक् ॥
अवगूर्य त्वब्दशतं सहस्रमभिहन्य तु ।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते " ॥

देवलः—" नावगाहेदपो नग्नो वह्निं नाभिव्रजेत्पदा[1] ।
शिरोभ्यक्तावशिष्टेन तैलेनाङ्गं न लेपयेत् " ॥

वसिष्ठः—" नेष्टकाभिः फलानि शातयेत् ।
न फलेन फलम् । न कल्ककुहको भवेत् " ।

कल्को दम्भः । कुहको वशीकारादिस्तद्वान्न भवेदित्यर्थः ।

" न म्लेच्छभाषां शिक्षेत " ।

देवलः—" नोवेक्षेताशुचिः[2] कूपं वर्षयेन्न पदा पदम् "

तथा—" सुहृन्मरणमार्तिं वा न स्वयं श्रावयेत्परान् ।
अतिभोगेन मित्राणि बालिश्यान्नैव पीडयेत् ॥
दाक्षिण्याद्धि दरिद्रोऽपि सहते मित्रपीडनम् " ।

---

१ ख. °जेदपि । शि° । २ ख. घ. नावीक्षे° ।

सर्वजनविद्विष्टतामुपैति । क्रोधो हि तमोरूपः । तस्य क्षमा नियमनम् । स व्याख्यातः । लोभाग्निनाऽभिभूतः पुण्येंष्वर्थेष्वनुपयुज्यमानमतिक्रामन्तमात्मानं मन्यते । नष्टं पुत्रदारबन्धूनामुपयुङ्क्ते । सुहृत्साधुसंबन्धिनामप्यनुपजीवनीयतमो भवति । असद्वित्तानामप्युपादानमिच्छति । तत्रार्थानुषङ्गात्सोऽपि तिर्यग्योनिषु जायते । लोभो हि तमोरूपः । तस्य संतोषो नियमनम् । सोऽपि व्याख्यातः । एवं ह्याह—

औदरो रैतसश्चाग्निः कामजः क्रोधजोऽर्थजः ।
एते वै निर्जिता येन स वै पञ्चतपाः स्मृतः[1] ॥
वचोवेगं मनसः क्रोधवेगं जिह्वावेगं चोदरोपस्थवेगम् ।
एतान्वेगान्धारयेद्यस्तु[2] विप्रस्तं वै ब्रूयुर्ब्रह्मिष्ठं[3] वा मुनिं वा " ॥

पौंस्नात्पुरुषव्यापारात् । साहसाद्बलोद्भवात् । तस्य पुंसः । तदनृताविति । तत्तस्मादेवं तद्ब्रह्मचर्येणेति । तदेवेति । पर्वापर्वसाधारणं स्वदारगमनरूपमाद्यं तदेव पर्ववर्जनरूपं द्वितीयम् । एवमृतुगमननियमात्मकं तृतीयमूर्ध्वरेतस्कत्वं चतुर्थम् । संकल्पो विषयसौन्दर्यज्ञानम् । कामो विषयेच्छा । आशयः पौनःपुन्येन भावनम् । नष्टं नाशम् । उपयुङ्क्ते आकाङ्क्षते ।

विष्णुः—" त्रिविधं नरकस्येह द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् " ॥

आपस्तम्बः—" मनसा वाचा घ्राणेन चक्षुषा श्रोत्रेण त्वक्शिश्नोदरारम्भणानास्रावान्परिवृञ्जानोऽमृतत्वाय कल्पते " ।

मनःप्रभृतीनामारम्भाणां व्यापारानास्रावान्पुरुषः सङ्गहेतून्[4]परिवृञ्जानः परित्यजन्नमृतत्वाय मुक्तये कल्पते समर्थो भवति ।

देवलः—" अथातः पापदोषान्मनोवाक्शरीरजान्व्याख्यास्यामः । तत्र मोहरागद्वेषमानलोभमदशोकममत्वाहंकारभयहर्षमोघचिन्ताश्चेति द्वादश मानसाः ।

तेषां च त्रिविधो मोहः संभवः सर्वपाप्मनाम् ।
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् ॥
विज्ञानं सर्वविद्यानामर्थानां स्वयमूहनम् ।
दोषैरदर्शनं चेति ज्ञानमज्ञानमन्यथा ॥
अश्रेयःश्रेयसोर्मध्ये भ्रमणं संशयो भवेत् ।
मिथ्याज्ञानमिति प्राहुरहिते हितदर्शनम् ॥

---

१ ख, ग, स्मृताः । २ ग. °स्तु तं वै । ३ ग. °ष्ठं ज्ञानिनं वामु° । ४ क. °रुपान्सङ्ग° ।

( स्नातकव्रतप्रकरणम् ५)

दन्तांस्थप्त्वा[1] दन्तैरवलिख्य तद्दन्तलग्नमन्नमुच्छिष्टे[3] विधाय प्रयच्छेदित्यर्थः। तथा क्रोधादीन्भूतदाहीयान्दोषान्वर्जयेत् । तानाह एवाऽऽह—

" भूतदाहीयान्दोषानुदाहरिष्यामः क्रोधो हर्षो[रोषो] लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरिवादावसूयाकाममन्युरानात्म्यमयोगः " इति ।

तत्र पित्रादिष्वननुशासनीयेषु कोपः क्रोधः । हर्षो गर्वः । अनुशासनीयेषु कोपो रोषः । विहितधनव्ययपराङ्मुखत्वं लोभः । अन्यायार्जनं च । अविवेको मोहः । अत्याशोऽत्यशनम् । मन्युः शोकः । आनात्म्यं नैरात्म्यबुद्धिः । विहितेष्वसमाधिरयोगः ।

हारीतः—" औदररैतसकामजक्रोधजार्थजानग्नीन्यथावन्नियच्छेत् । औदेरात्सर्वकामकर्मेन्द्रियभावदोषाः संभवन्ति । यैरुपसृष्टो विविधामापदमुपैति । तस्माच्छुचिर्यथार्थपरिमिताहारः स्यात् । आहारशुद्धौ सत्त्वशुद्धिरित्याचार्याः । अथ पौंस्नात्साहसाद्रेतस्तस्थं[6] बीजं तदनृतावुत्सर्गे दोषः स्यादृतावुत्सर्गे तद्ब्रह्मचर्येण व्याख्यातम् । तदेवाऽऽदिप्रकृतत्वाज्जगतः प्रथमं यज्ञनियमार्थं द्वितीयं तपःसिध्यर्थं तृतीयं मोक्षसिध्यर्थं चतुर्थं संकल्पात्कामः संभवत्याशयात्प्रवर्तते । स्नेहाग्निर्बध्नाति स इच्छालक्षणो नैकविधः कामो येनाभिभूतोऽतृप्त एव कामानां लोके ह्यनेकजन्मसंसारे कामावर्ते निमज्जति । स एकोऽनलः कामः । कामो हि भगवान्वैश्वानर इति श्रुतिः । तस्य संकल्पो नियमनम् । स व्याख्यातः । कामगीतौ चात्र श्लोकौ भवतः—

प्रवृत्तौ वा निवृत्तौ वा सर्वतः प्रतिभूरहम् ।
सर्वार्थेषु यथार्थोऽहं मद्दते नास्ति किंचन ॥
यो मां यथार्थं सर्वार्थे सर्वभूतेषु पश्यति ।
सोऽध्वनः[10] पारमाप्नोति नेतरे कामवादिनः ॥ इति ॥

क्रोधाग्निना परिभूतः स्वेषामप्य[11]बहुमतोऽनभिगमनीयोऽविश्वसनीयश्च भवति । कार्याकार्यवाच्यावाच्यानि न वितर्कयति । हितवादिनो गुरूनतिक्रामत्याविष्टः प्रेतलोकायाऽऽत्मानं गमयति । तत्र घोरां निरयप्रायां यातनामनुभूय क्रूरक्रव्यादासु तिर्यग्योनिषु जायते । तत्र सर्वासां प्रजानां वाच्यो भवति । क्रमशो मनुष्यतां प्राप्य

---

१ क. ख. °प्त्वा नखैर° । २ ख. °न्नमु° । ३ ग. °च्छिष्टं वि° । ४ ख. घ. °मभ्याश° । ५ क. °दराः सर्व° । ६ क. °स्य पुंसो बी° । ७ क. घ. °दतौ तदत्स° । ८ ग. °ज्ञसिद्ध्यर्थं द्वि° । ९ घ. °त्कामात्संभ° । १० क. घ. °नः पर° । ११ क. °प्यनभिम° ।

" अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति " इति वचनम्, तत्रामावास्याशब्द औपवसथ्यदिनोपलक्षणार्थोऽन्यथा पूर्वोक्तवचनविरोधः स्यादिति । तदसत् । न ह्यमावास्यायामपराह्ण इत्यत्रामावास्याशब्द औपवसथ्यमहरुपलक्षयतीति । किं च न प्रमाणमस्ति । अत्र ह्यमावास्याशब्दार्थोऽङ्गत्वेन विधीयते । न च विधौ लक्षणोचिता । तस्मात् " पूर्वेद्युः पितृभ्यः क्रियते " इत्यत्र पूर्वेद्युःशब्दोऽनुवादकोऽर्थवादत्वात्[1] । अनुवादकस्य यथाप्राप्तिलक्षणाश्रयणमदोषः । तेन पूर्वेद्युःशब्दोऽमावास्यामुपलक्षयति । तस्यामेव पितृयज्ञस्य विहितत्वात् । भवति चामावास्या संपूर्णा सती यजनीयदिनापेक्षया पूर्वेद्युःशब्दबोध्या । यच्च " अथापराह्णे पिण्डपितृयज्ञेन चरन्ति " इति, तदौपवसथ्येऽहन्यपराह्णव्याप्यमावास्याविषयं ग्राह्यम् । " भूते कव्यादिकी क्रिया " इत्येतदपि तद्विषयमेव । न पुनः शुद्धचतुर्दश्युपवासदिनविषयम् । अमावास्याविधायकदिनश्रुतिविरोधात् । तस्माच्छुद्धचतुर्दश्युपवासपक्षे यजनीय एवाहन्यपराह्णेऽमावास्यायां दक्षिणाग्निमुद्धृत्य पिण्डपितृयज्ञः कार्यः । क्रमस्त्व[2]ग्न्यन्वाधानेन सह तस्य न क्लृप्तः । अङ्गत्वेऽपि न क्लृप्त एव यतः[3] कालादिविशिष्टतया प्राप्तेषु पदार्थेषु क्रमः कल्प्यते । अत एव " अमावास्यायां[4] पूर्वेद्युर्वेदिं करोति " इति वेदिप्रकर्षे ततः प्राचां पदार्थानामप्रतिकर्ष इति ।

मनुः—" न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥
यो ह्यस्य धर्ममाचष्टे यश्चैवाऽऽदिशति व्रतम् ।
सोऽसंवृतं नाम तमः सह तेनैव गच्छति " ॥

व्रतं प्रायश्चित्तम् ।

यमः—" वृषलाध्यापकश्चैव वृषला[5]ध्यापितश्च यः ।
तावुभौ नरके घोरे वसेतां शरदां शतम् " ॥

शङ्खलिखितौ—" कृसरपायसापूपमांसदधिमधुघृतकृष्णाजिनानि शूद्रेभ्यो न दद्यान्नोपस्कृतं किंचिदन्यत्र प्रकृतात् " ।

आपस्तम्बः—" नाब्राह्मणायोच्छिष्टं प्रयच्छेत् ।
द[6]न्तांस्थप्त्वा तदेतस्मिन्नवधाय प्रयच्छेत् " ॥

---

१ ग. °वाचकोऽर्थबाधकत्वादिति वा । अ° । २ ग. घ. °मशस्त्व° । ३ ग. घ. °तः कला° । ४ ख. °यां वेदिं । ५ ग. °षलोऽध्यापितस्तथा । ता° । ६ ग. दन्तस्थ° ।

( स्नातकव्रतप्रकरणम् ५)

संधिमभिव्याप्य संधेः पूर्वेद्युरग्नीनन्वाधायोत्तरेद्युर्यजेत । तथैतं दिवासंधिमभिलक्ष्य तदहः प्रातर्यजत इति । एवं श्रुतिमुदाहृत्य तद्गतौ मध्यरात्रमध्यंदिनशब्दौ व्याख्यातुमाह—

" रात्रिर्हि पूर्णमास्यां संधेया भवत्यहरमावास्यायाम् " इति ।

तेन श्रुतिगतौ मध्यरात्रमध्यंदिनशब्दौ रात्रिसंधिदिवासंध्योरुपलक्षकौ न विवक्षिताविति प्रतिपादितं भवति । अनयोश्च पूर्णमास्यमावास्याविषयभुक्त्योः प्रदर्शनार्थत्वं वक्तुमुत्तरं सूत्रम्—

" द्वे पौर्णमास्यौ द्वे अमावास्ये पूर्वां पूर्वां
पौर्णमासीमुत्तरामुत्तराममावास्याम् " इति ।

अयमर्थः—रात्रिसंधिदिवासंधिमत्यौ द्वे पूर्णमास्यौ । तत्र दिवासंधिः पूर्वाऽमावास्या पूर्णमासी वा, रात्रिसंधिस्तूत्तरा । तत्र पूर्वाऽमावास्योक्ता न तु पूर्णमासी तामुपमाव्याजेनाऽऽह—पूर्वां पूर्वां पूर्णमासीमिति । अयमर्थः—पूर्वाममावास्यामिव पूर्वां पौर्णमासीं जानीयादिति । ततश्च दिवासंधिमत्यां पूर्णमास्यां यागः पूर्वेद्युरुपवास इति सिद्धम् । तथोत्तरा पूर्णमास्युक्ता न त्वमावास्या तां पूर्णमासीं निरूपयन्नाह–उत्तरामुत्तराममावास्यामिति । उत्तरां पूर्णमासीमिवोक्तामुत्तराममावास्यां जानीयादिति । ततश्च रात्रिगतममावास्याप्रतिपत्संधिमुपवासयागयोर्मध्ये कुर्यादित्यर्थः । एवं तावत्संधिसंनिधिरेवानुग्राह्यो न तूपवसथस्य चन्द्रादर्शनसंपूर्णोदयकालत्वमिति बौधायनमतम् ।

केचित्तु कल्पसूत्रकारा दिवासंधिमत्यहन्युपवासः कार्यः । उत्तरेद्युश्च यागः । यदि तस्मिन्नहनि चन्द्रस्यादर्शनं संपूर्णोदयो वा स्यादित्याहुः । तत्रोभावपि शास्त्रार्थाविशेषात् । किं तु यत्सूत्रप्रत्ययेन येऽनुतिष्ठन्ति तेषां तदुक्त एव शास्त्रार्थ उदितानुदितशास्त्रार्थवदिति । पिण्डपितृयज्ञे तु यदौपवसथ्य एवाहनि नापराह्णेऽमावास्याऽस्ति तदा संदेहः । किमौपवसथ्य एवाहनि स कार्य उत यजनीय इति । तत्र केचिदाहुः—

" तस्मात्पूर्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान्यजन्ते ।
पितृभ्य एतद्यज्ञं निष्क्रीय यजमानः प्रतनुते "

इत्यादिश्रुतिवाक्यबलात्, तथाऽग्न्याधानं प्रकृत्य " अथापराह्णे पिण्डपितृयज्ञेन चरन्ति" इति कल्पसूत्रकारवचनादौपवसथ्य एवाहनि कार्य इति । यत्पुनः

१ ग. घ. चन्द्रद° । २ ख. ग. °त्याह । तत्रो° । ३ ख. °न योऽनुतिष्ठति । ते° । ४ ख. ग. घ. °र्यां यदु° । ५ क. ख. ग. °राह्णे चामा° ।

भिर्वचनैश्चन्द्रादर्शनसंपूर्णोदयवत्यहनि विहितः। तथाऽपि यागस्य प्राधान्यात्तत्काले दर्शनादिभिर्यथा न बाध्यते तथोपवसथस्य कालो ग्राह्यः, "अङ्गगुणविरोधे च तादर्थ्यात्" इति न्यायात्। तस्मादतिक्षये तिथीनां यस्मिन्नेवाहोरात्रे चन्द्रस्यादर्शनं पूर्णोदयो वा भवति तदाऽदृश्यमाने चन्द्रमस्यमावास्योपवासः। चतुर्दशकलोदिते च पूर्णमासोपवासः। यदा तु दिनद्वयव्यापि चन्द्रादर्शनं पूर्णोदयो वा भवति तत्रैव वा विषये प्रतिपत्पञ्चदश्योर्दिवा संधिश्चेत्स्यात्तदा पूर्वेद्युरुपोष्य दिवासंधिमत्यहनि यष्टव्यं नोत्तरेद्युश्चन्द्रदर्शनादियुक्तेऽपि संधिमत्यहनी[1]ज्यया हि संधिसंनिधिरनुगृहीतो भवति। चन्द्रादर्शनादियुक्तोत्तरेद्युरिष्टौ च विप्रकृष्टः। विप्रकृष्टश्च( ष्टाच) यागकालात्संनिकृष्टो यागकालो ज्यायान्।

"दिवासंधियुक्तायां हविषा पौर्णमास्यां यजेतामावस्यममावास्यायां यजेत"

इति श्रुतिः। पूर्णमास्यमावास्याशब्दौ हि पञ्चदश्योः प्रसिद्धौ न तु प्रतिपदि। अत एव "संधिमभितो यजेत" इति श्रुत्यन्तरम्। अभित उभयत इत्यर्थः। तत्र दिवासंधौ संधेः पूर्वत्र यागो रात्रिसंधौ तूत्तरत्र पूर्वाह्णे। सर्वेष्वपि च पक्षेषु यागः प्रातःकाल एव, 'अथ प्रातः प्रातर्हुतेऽग्निहोत्रे' इत्यादिवाक्यात्[2]।

अत एव बौधायनः—

"अत्रोदाहरन्त्यूर्ध्वं मध्यरात्रात्पूर्णमास्यां चन्द्रमाः पूर्यते। स एतं चापररात्रं पूर्णो भवति। सर्वं चाहरुत्तरस्या रात्रेरा मध्यरात्रादथामावास्यायामौपवसथ्येऽहन्यूर्ध्वं मध्यंदिनाच्चन्द्रमसाऽऽदित्यो रभते स एतं चापराह्णं न भवति। सर्वां च रात्रिमुत्तरस्य चाह्न आमध्यंदिनादेतं संधिमभितो यजेत" इति।

अस्यार्थः—अत्रोदाहरन्ति श्रुतिमिति शेषः। पूर्णमास्यामिति विषयनिर्देशः। ऊर्ध्वं मध्यरात्राच्चन्द्रमाः पूर्यते पूर्णमासी प्रवर्तत इत्युक्तं भवति। [6]सैतमपररात्रमनन्तरं च सर्वमहरुत्तरस्या रात्रेरा मध्यरात्रादनुवर्तते ततो विच्छिद्यते सोऽयं रात्रिसंधिरुक्तः। अथामावास्याविषये। औपवसथीयेऽ(थ्येऽ)हनि यागदिनात्पूर्वेद्युरूर्ध्वं मध्यंदिनाच्चन्द्रमसाऽऽदित्यो रभतेऽमावास्या प्रवर्तते। [8]सैतमपराह्णमनन्तरां सर्वां रात्रिमुत्तरस्याह्न आमध्यंदिनादनुवर्तते। ततः प्रतिपद्भवति। स एष दिवासंधिरेतं रात्रि-

---

१ ख. °धिर°। २ ख. ग. °क्यार्थः। अ°। ३ क. घ. °मसमादि°। ४ क. °षः। पौर्ण°। ५ क. °ते पौर्ण°। ६ ग. सैवम°। ७ क. °मसमादि°। ८ ग. सैवम°।

न्यामेव विहितायां तिथावारम्भणीयम् । संकल्पस्यैव व्रतत्वात् । स चौचित्यात्प्रातरेव कार्यः ।

मनुः—" वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् " ॥

नित्यमकाम्यमित्यर्थः । परमा गतिर्मुक्तिः । कर्म च परमात्मज्ञानसहितं क्रियमाणं मुक्तये कल्पत इति व्याख्येयम् । वचनान्तरवशात् ।

तथा—" इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः ।
अतिप्रसक्तिं चैतेषां मनसा संनिवर्तयेत् " ॥

तथा—" अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा ।
दर्शने(र्शेन) चार्धमासान्ते पूर्णमासेन चैव हि ॥
सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजो[1]ऽध्वरैः ।
चतुर्षु चतुर्षु मासेषु चातुर्मास्यादियागैः ॥
पशुना ह्ययनस्यान्[2]ते समान्ते सौमिकैर्मखैः । "

अह्नोर्निशायाश्चाऽऽद्यन्तावग्निहोत्रप्रयोगं प्रति कालत्वेन विधानायोग्याविति ताभ्यां स्वसंबन्धी पूर्व उत्तरश्च काल उपलक्षितोऽत्र विधीयते । अत एवापराह्णे सायंहोमस्योपक्रमः । प्रदोषे तु समाप्तिः । उदितहोमिनां पुनरुदित आदित्ये । एवमर्धमासान्तस्याप्यत्यन्तसूक्ष्मत्वाद्दर्शपूर्णमासप्रयोगसमर्थकाललक्षकत्वम् । अत एव कल्पसूत्रकाराः—

" पक्षा[3]न्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः " इति ।

पक्षा[4]न्तः पञ्चदशी, पक्षादिः प्रतिपत् । तत्रोपवासस्तीर्थस्नाना[5]ग्न्यन्वाधानादिकर्मकलापः पाणिसंस्पर्शनादिप्रयोगोऽभीज्या । एतच्च प्रतिपत्पञ्चदश्योः सूर्योदयास्तमयव्यापित्वे सति तथा[6] कृष्णशुक्लप्रतिपदोश्चन्द्रस्यादर्शनपूर्णोदयवत्त्वे सति द्रष्टव्यम् । यदा पुनरेकस्मिन्नेवाहनि पूर्णश्चन्द्र उदेति न दृश्यते वा तदा तदहरेव यागः । यदाहाऽऽपस्तम्बः—

" यदहः पुरस्ताच्चन्द्र[7]माः पूर्ण उत्सर्पेत्तां पौर्णमासीमुपवसेच्छ्वः पूरितेति वा " ।

तथा—"यदहर्न दृश्यते तदहरमावास्या वा श्वो न द्रष्टा[8]र इति वा" इति ।

यद(द्य)प्युपवासश्चन्द्रमसं वाऽविज्ञाय संपूर्णं वा विज्ञायाग्नीनन्वादधातीत्यादि-

१ ग. घ. द्विजेश्वरैः । २ क. °न्ते मासान्ते । ३ ग. घ. °क्षान्त उपवस्तव्यः प° । ४ ख. °क्षान्ताः प° । ५ क. °नाग्न्याधा° । ६ क. ग. घ. °था शुक्लकृष्णप्र° । ७ ख. ग. °न्द्रमा उ° । ८ ग. °ष्टा इ° ।

" एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः " ॥

पारिशेष्यादन्याः पूर्वविद्धा एवोपवासे ग्राह्या इति गम्यते । यत्तु निगमवाक्यम्—" युग्माग्नियुगभूतानि " इत्यादौ पौर्णमासीतृतीययोः पूर्वविद्धयोरुपादेयत्वमुक्तं, तदेकादश्यष्टमीत्यादिगार्ग्यवचनाविरोधेनोपवासव्यतिरिक्तकर्मविषयं ग्राह्यम् । चतुर्दश्याश्च शुक्लाया एव परविद्धायाः पूज्यता । यदाह बौधायनः—

" एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूज्याः परेण संयुक्ताः पराः पूर्वेण संयुताः " इति ॥

कृष्णचतुर्दशी तु परविद्धा हेयैव ।

" एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम् "

इति वचनसामर्थ्यात् । द्वितीयादितिथीनां पूर्वतिथिवेधे सति द्वितीयेऽहन्यवश्यं षष्ठ्यादितिथिर्निःसरतीति तादृशे विषये नागादिवेधो हेय इत्येवंपरम् । यदा तु स्वल्पया पञ्चम्यादिकया तिथ्या षष्ठ्यादिर्विद्धा सती न निःसरतीति तदानीमावश्यके कर्मणि पञ्चम्यादिविद्धाऽपि षष्ठ्यादिरुपादेया । काम्यान्यपि कर्माणि प्रक्रान्तानि सन्त्यावश्यकान्येव । एवं च सति द्वादशाष्टादशादिशब्दाः षष्ठ्यादीनां परविद्धत्वसंभवज्ञापनार्था न विवक्षितस्वार्था इत्येवं विधेयम् । " दिक्पञ्चदशाभिस्तथा " इत्यत्र दिगिति दशमीत्यर्थः । नक्षत्रे तूपवसनीये किमस्तमयव्यापि तद्ग्राह्यमन्यथा वेति संशये शंकरगीताः—

" उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः ।
यत्र वा युज्यते ना(रा)म निशीथं[3] शशिना सह " इति ॥

एतच्च तिथिविशेषयोगानपेक्षे[4] नक्षत्र[5] एवोपोषितव्ये[6] द्रष्टव्यम् । यत्र तु नक्षत्रयुक्ता तिथिस्तिथियुक्तं वा नक्षत्रं कर्माङ्गतया विहितं तत्रोदयप्रभृति[7] सातत्येन तद्योगोऽपेक्षणीयो रोहिण्यष्टमीं श्रवणद्वादशीं च विहाय । ततश्चायमर्थः सिद्धो भवति—आवश्यकव्रतादिकर्मकाले लभ्यमाना तिथिर्निषिद्धवेधा हेया । उपादेयवेधा तु कर्मकालाव्यापिन्यपि[8] स्वीकार्येति । नित्यं नैमित्तिकं च कर्माऽऽवश्यकं[9] प्रक्रान्तं च सदाऽऽवश्यकमेव । प्रक्रम्यमाणं तु तत्संकल्पकालव्यापि-

१ ग. घ. °ग्मानि यु° । २ ख. °सकान्तिक° । ३ क. ग. °शीथे श° । ४ घ. °शेषायो° । ५ ख. घ. °पेक्षो न° । ६ घ. °तव्यो द्र° । ७ क. °यकालात्प्रभृ° । ८ ग. घ. °कालव्या° । ९ क. °कं काम्यं प्रक्रा° ।

प्रतिपत्स्वप्यमावस्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम् " ॥

अत्र तिथ्योर्युग्ममित्यभिधानाद्युग्माग्न्यादिशब्दा द्वितीयातृतीयादितिथिविशेषोपलक्षणार्था विज्ञायन्ते । ततश्च युग्माग्न्योर्द्वितीयातृतीययोर्युग्मभूतानां चतुर्थीपञ्चम्योर्युग्ममित्येवं तिथियुग्मनिर्देशो द्रष्टव्यः। एवं च सति दशमीशुक्लत्रयोदशीशुक्लप्रतिपदां पूर्वोत्तरतिथियुग्मानि त्याज्यानि भवन्ति । यच्च देवलवचनम्—" यां तिथिं समनुप्राप्य " इत्यादि तद्यासां तिथीनां द्वितीयादीनामुत्तरतिथिविद्धानामुपादेयत्वमुक्तं तद्विषयं ग्राह्यम् । यच्च तेनैवोक्तम्—

" यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः "

इति, तदपि यास्तिथयः पूर्वतिथिविद्धाः सत्यो ग्राह्यास्तद्विषयम् । यच्च बौधायनेनोक्तम्—

" सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः ।
वर्धमानस्य पक्षस्य ह्रासेऽप्यस्तमयं प्रति " ॥

तत्परविद्धत्वेन पूज्यानां द्वितीयादितिथीनामुदयव्यापिनीनामुपादेयत्वमनूद्य तासामेव क्षयगामित्वेनोदयव्यापित्वेऽसति पूर्वविद्धत्वेऽप्युपादेयतां विधत्ते । यदा पुनर्द्वितीयादिविहितं कर्म समग्रमुदयव्यापिद्वितीयादौ कर्तुमशक्यं तद्विपरीतायां च शक्यं तदा किं कार्यमित्यपेक्षिते भविष्यत्पुराणम्—

" व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।
उदये सा तिथिर्ग्राह्या विपरीताऽपि पैतृके " इति ॥

यत्तु मार्कण्डेयेनोक्तम्—" शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः "

इति, तत्र शुक्लपक्षशब्देन देवकार्यमुपलक्ष्यते । तस्य प्रायः शुक्लपक्षे विहितत्वात् । कृष्णपक्षशब्देन च पितृकार्यम् । देवकार्यं च यदुदयव्यापिन्यां विधीयते तत्प्रतिषिद्धतिथिवेधानतिक्रमेण ग्राह्यम्। पितृकार्ये पुनरपराह्णव्यापिनी वेधविधिमनादृत्यैव ग्राह्या । यत्स्मृत्यन्तरे—

" मध्याह्नव्यापिनी या स्यात्तिथिः पूर्वा पराऽपि वा ।
तत्र कर्माणि कुर्वीत वृद्धिह्रासावकारणम् " इति ॥

इदं चैकोद्दिष्टविषयम् । तस्य मध्याह्ने विहितत्वात् । " श्राद्धादावापराह्णिकी " इति वचनात्पैतृके कर्मणि तिथिवेधो न दुष्यतीति गम्यते । अत एवोपवासयोग्यतां वेधविशेषे तिथिविशेषाणामाह गार्ग्यः—

---

१ क. °काऽपि या भ° ।

तथा—" बृहस्पतिर्द्वितीयायां शुक्लायां विधिपूजनम्—
कृत्वा नक्तं समश्नीयाल्लभेद्भूमिमभीप्सिताम् " ॥

विधिर्ब्रह्मा, तत्पूजनं च गायत्र्या कार्यम् ।

अथ प्रसङ्गात्खण्डतिथिविषयाणि कानिचिद्वाक्यानि लिख्यन्ते ।

तत्र प्रतिपदादितिथिषु यान्यवश्यकार्याणि[1] कर्माणि तानि तासां द्वैविध्ये सति किं सूर्योदयव्यापिनीषु कार्याणि किं वा तदस्तमयव्यापिनीष्विति सं[2]शये पक्षद्वयेऽप्यनुग्राहकाणि कानिचिद्वाक्यानि दृश्यन्ते ।

यदाह देवलः–" यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिः सकला[3] ज्ञेया स्नानदानजपादिषु ॥
यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥
* आगतां तिथिमुत्सृज्य तिथिशेषं न योजयेत् ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते " ॥

एतद्विरोधपरिहाराय विष्णुधर्मोत्तरे शिवगीताः[4]—
" एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः " ॥

अत्र कृष्णपक्षस्यैव त्रयोदशीचतुर्दश्यौ ग्राह्ये । तथा च निगमः—
" षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा " ॥

परा उत्तराः । ततश्च षष्ठ्यादीनां यथासंख्यं पराः सप्तमीनवमीचतुर्दशीप्रतिपदो भवन्ति ।

तथा—" एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूज्याः परेण संयुक्ताः " ॥

परेण तिथिनेत्यर्थः ।

तथा—" युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥

---

* नास्त्ययं श्लोकः क. ख. पुस्तकयोः ।

---

१ ग. °णि ता° । २ क. ग. घ. °शयप° । ३ ग. °ला पूज्या स्ना° । ४ ग. °गीतासु । ए° ।

( स्नातकव्रतप्रकरणम् ५)

तथा—" माघमासस्य सप्तम्यामुदयत्येव भास्करे ।
विधिवत्तत्र च स्नानं महापातकनाशनम् " ॥

तथा—" पुनर्वसौ बुधोपेता चैत्रमाससिताष्टमी ।
स्रोतःसु विधिवत्स्नात्वा वाजपेयफलं लभेत् ॥
अशोकैरर्चयेदुग्रमशोककलिकां पिबेत् " ।

उग्रः शिवः ।

" चैत्रे मासि सिताष्टम्यां ये पिबन्ति पुनर्वसौ ।
अशोकस्याष्टकलिकां न ते शोकमवाप्नुयुः ॥
त्वामशोक शिवाभीष्टं मधुमां(मा)ससमुद्भवम् ।
पिबामि शोकसंत्यक्तं मामशोकं सदा कुरु " ॥

इति पानमन्त्रः ।

तथा—" चैत्रकृष्णचतुर्दश्यामङ्गारकदिनं यदा ।
पिशाचत्वं पुनर्न स्याद्गङ्गायां स्नानभोजनात् " ॥

मार्कण्डेयः—" एकादश्यां सिते पक्षे ऋक्षं चैव पुनर्वसुः[1] ।
नाम्ना सा विजया ख्याता तिथीनामुत्तमा तिथिः ॥
एकादश्यां सिते पक्षे पुष्यर्क्षं यदि सत्तम ।
द्वादश्यां वा तदाऽशेषपापक्षयकरं[2] द्वयम् " ॥

व्यासः—" शुक्लपक्षे[3] तृतीयायां चतुर्थ्यां चैव भारत ।
पञ्चम्यां कृष्णपक्षस्य स्नातः[4] किमनुशोचते ॥
शुक्ले वा यदि वा कृष्णे चतुर्थी वा चतुर्दशी ।
भौमवारेण पुण्याऽसौ सोमवारे कुहूर्यथा " ॥

तथा—" अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥
सिनीवाली कुहूर्वाऽपि यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात्स्नानं वै मौनिना कृतम् ॥
द्विजेन्द्रसुतसंयुक्ता परिपूर्णा सिताष्टमी ।
तस्यां नियमकर्तारो न स्युः खण्डितसंपदः " ॥

द्विजेन्द्रसुतः सोमसुतः । बुध इति यावत् ।

---

१ ख. घ. °र्वसुम् । ना° । २ ख. घ. °रं त्वय° । ३ क. ग. घ. °क्षे द्विती° । ४ ग. स्नात्वा ।

तथा—" जयन्त्यामुपवासश्च महापातकनाशनः ।
स कार्यः सुमहाभक्त्या पूजनीयश्च केशवः " ॥

श्रावणकृष्णाष्टमी[1] रोहिणीयुक्ता जयन्ती ।

इति श्रीजन्माष्टमीनिर्णयः ॥

मार्कण्डेयः—" सिंहादित्ये कृष्ण(शुक्ल?)पक्षे चतुर्थ्यां चन्द्रदर्शनम् ।
मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा " ॥

पुराणात्—" शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव मुञ्चति ॥
वैयाघ्रपद्यगोत्राय[2] सांकृत्यप्रवराय च ।
अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे ॥
कृत्वा नीराजनं राजा बलवृध्द्यै यथाबलम् ।
शोभनं खञ्जनं पश्येज्जलगोष्ठादिसंनिधौ ॥
न[3] रक्तं खञ्जनं पश्येन्न पीतं कृष्णमेव वा ।
पूर्णस्वस्तिकभद्राणां पश्येदन्यतमं नृपः[4] " ॥

पद्मपुराणात्—" तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् ।
ब्रह्मचर्यं हविष्यान्नं महापातकनाशनम् " ॥

तथा—" तुलायां तिलतैलेन सायंसंध्यासमागमे ।
अष्टाङ्गदीपं यो दद्यान्मासमेकं निरन्तरम् ॥
सम्यक्श्रीपतये भक्त्या स श्रिया न वियुज्यते ।
दामोदराय नमसि तुलायां[5] लोहया सह ॥
प्रदीपं तु प्रयच्छामि नमोऽनन्ताय वेधसे " ॥

इति दीपदानमन्त्रः । नभस्याकाश इत्यर्थः ।

तथा—" कार्तिके[7] नवमी शुक्ला पितॄणामुत्सवाय सा ।
तस्यां स्नानं हुतं दत्तमनन्तफलदं भवेत् " ॥

लिङ्गपुराणात्—" अष्टम्यां च चतुर्दश्यां यः शिवं संशितव्रतः ।
मुमुक्षुः पूजयेन्नित्यं स लभेतेप्सितं फलम् " ॥

विष्णुः—" सूर्यग्रहणतुल्या च शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् " ॥

---

१ ख. °मी संपूर्णा रो° । २ क. ग. घ. °पदगो° । ३ ख. नरिक्तं । ४ क. ग. घ. नृप । ५ ग. तुलस्या लीलया । ६ क. °यां लीलया । घ. °यां लोलया । ७ क. ग. °तिकी न° ।

त्रयोगोऽत्रापेक्षणीयः। मुहूर्तमपीति वचनात्। न च सप्तमीविद्धाऽप्येषा त्याज्या। तदुक्तं भविष्यत्पुराणे—

" कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताऽष्टमी ।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम् " इति ॥

अस्यार्थः—यदि सप्तमी मुहूर्तमात्रं परतो रोहिण्याऽल्पकालव्याप्ताऽष्टमी द्वितीयदिने तु नैवाष्टमी रोहिणी च कंचित्कालं विद्यत एव, तदा सप्तमीविद्धाऽष्टमी कार्या। पारणं तु नवमीदिने नक्षत्रे व्यतीत इति+। यदा पुनर्द्वितीयदिनेऽल्पमपि कालमष्टमी विद्यते तदा सप्तमीविद्धाऽष्टमी त्याज्या। तदुक्तं पद्मपुराणे—

" वर्जनीया प्रयत्नेन सप्तमीसंयुताऽष्टमी ।
अविद्धायां स कृष्णायां जातो देवकिनन्दनः ॥
पूर्वविद्धा यथा नन्दा वर्जिता श्रवणान्विता ।
तथाऽष्टमी पूर्वविद्धा सऋक्षाऽपि हि वर्जिता ॥
पूर्वविद्धाऽष्टमी या तु उदये प्रथमेऽहनि ।
मुहूर्तेनापि संयुक्ता संपूर्णा साऽष्टमी भवेत्[1] ॥
सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम ।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्तं वै भवेद्यदि ॥
तदा व्रतं द्वितीयेऽह्नि प्रोक्तं व्यासादिभिः पुरा " इति ॥

पूर्वविद्धाऽष्टमीति। अष्टमीदिने त्रुटिमात्रेणापि सप्तम्या विद्धा सूर्योदयस्पृष्टाऽष्टमी चेत्स्यान्नाष्टमीत्वेन ग्राह्या। नवमीदिने घटिकाद्वयमपि चेत्स्यात्सैव परिपूर्णाऽष्टमी भवेदित्यर्थः।

भविष्यत्पुराणम्—" अष्टम्यां चाथ रोहिण्यां न कुर्यात्पारणं क्वचित् ।
हन्यात्पुरा कृतं कृत्स्नमुपवासार्जितं फलम् ॥
तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ।
तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् " ॥

भान्तो नक्षत्रान्तः।

---

+ इत उत्तरमधिकमेतत्–"अत्रोदाहरणम्—त्रि० ष दि ४ स दि २ त्र्यहः नशे ५ न दि कृ दि ६ रो दि ४ " इति ग. पुस्तके ।

---

१ ग. मता ।

अयमनुपक्रान्तैकादशीव्रतविधिः । तदुपक्रमे त्वेकादश्यामेवोपवासः। द्वादश्यां तु पूजामात्रविधिः। तदुक्तम्—

" असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम् " इति।

यस्तूपवासद्वयासमर्थस्तं प्रति भविष्योत्तरे विहितम्—

" +उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम्।
एकादश्यो(श्यु)द्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ॥
एवमेकादशीं मुक्त्वा द्वादशीं समुपोषयेत्।
पूर्वोपवासजं पुण्यं नरः प्राप्नोत्यसंशयम् " ॥

न हि श्रवणद्वादश्यां पारणासंभवाच्चोपवासजो दोषः।

" एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्।
न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिः "

इति विष्णुशृङ्खलपक्षे पुनरेकस्मादेवोपवासाच्छ्रवणद्वादशीव्रतकार्यं च प्रसङ्गात्सिध्यति।

विष्णुरहस्यम्—" द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम्।
निषिद्धमपि कर्तव्यमाज्ञेयं पारमेश्वरी " ॥

तथा—" श्रवणेन समायुक्ता मासि भाद्रपदे हि या।
द्वादशी सा महापुण्या नाम्ना तु विजया स्मृता ॥
तस्यां स्नातो विधानेन सर्वतीर्थफलं लभेत्।
अर्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं दशाब्दिकम् " इति ॥

तथा श्रीजन्माष्टमीविचारः—

" प्राजापत्यर्क्षसंयुक्ता या स्यान्नभसि चाष्टमी।
मुहूर्तमपि लभ्येत उपोष्या सा महाफला " ॥

प्राजापत्यर्क्षं रोहिणी। नभसि श्रावणे।

तथा—" मुहूर्तमप्यहोरात्रे यस्मिन्युक्तैव लभ्यते।
अष्टमीं रोहिणीमृक्षं सुपुण्यां तामुपावसेत् " ॥

अत्राष्टम्याः प्राधान्यम्। रोहिणी तु तद्विशेषणम्। न च सार्तत्येन नक्ष-

+ इत आरभ्य दोष इत्यन्तग्रन्थः क. ग. घ. पुस्तकेषु न विद्यते।

१ ख. °श्यामुप°। २ क. ग. घ. °द्वयस°। ३ क. °रात्रं यस्मिन्युक्तं हि ल°। ४ ख. °तत्वयोगेन नक्ष°।

यदाऽन्यस्यामपि तिथौ शुभायां श्रवणं भवेत्।
होमस्तत्रोपवासश्च सहस्राश्वफलप्रदः॥
श्रवणे संगमाः पुण्याः कुरुक्षेत्रस[1]मा मताः।
विशेषाद्बुधसंयु[2]क्ते तृतीयायां विशेषतः॥
बुधश्रवणसंयुक्ता तृतीया यदि लभ्यते।
तत्र दानोपवासाद्यमक्षयं परिकीर्तितम्॥
श्रवणेन सिता यत्र द्वादशी लभ्यते क्वचित्।
उपोष्यैकादशीं तत्र द्वादश्यामर्चयेद्धरिम्॥
याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीं विना"॥

श्रवणद्वादश्यां विहितमेकादश्यां कुर्यादित्यर्थः। तथा च मत्स्यपुराणम्—

"द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि।
उपोष्यैकादशीं तत्र द्वादश्यामर्चयेद्धरिम्"॥

एतच्चैकादश्यविद्धायां श्रवणद्वादश्यां वेदितव्यम्। तद्विद्धा तु द्वादश्येवोपोष्या। तदुक्तं तत्रैव—

"द्वादशी श्रव[3]णास्पृष्टा स्पृशेदेकादशीं य[4]दि।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः॥
तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम्"॥

श्रवणास्पृष्टा श्रवणसंयुक्ता। श्रवणाशब्दः स्त्रीलिङ्गोऽप्यस्ति। श्रवण(णा)स्पृष्टेति वदन्स्वल्पेऽपि श्रवणयोगे द्वादश्युपवासादियोग्या भवतीति गमयति। तथा च मत्स्यपुराणम्—

"द्वादशी श्रवणास्पृष्टा कृत्स्ना पुण्यतमा स्मृता।
न तु सा तेन संयुक्ता ताव[5]त्येव प्रशस्यते"॥

एकादशीरहिताऽपि श्रवणद्वादश्युपोष्या। यदाह मार्कण्डेयः—

"श्रवणर्क्षसमायुक्ता द्वादशी यदि लभ्यते।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम्" इति॥

---

१ क. ग. घ. °समाः स्मृताः। २ ग. घ. °युक्तं तृ°। ३ क. ग. घ. °वणस्पृ°। ४ क. ग. घ. यदा। ५ ग. घ. °वतेव।

**विष्णुः**—" मार्गशीर्षशुक्लैकादश्यामुपोषितो द्वादश्यां भगवन्तं वासुदेवमभ्यर्चयेत् । पुष्पधूपानुलेपनदीपनैवेद्यैर्बहिब्राह्मणतर्पणैश्च व्रतमेतत्संवत्सरं पूर्णं कृत्वा पापेभ्यः पूतो भवति । यावज्जीवं कृत्वा श्वेतद्वीपमाप्नोति । उभयपक्षे द्वादशीत्येवं संवत्सरेण स्वर्गलोकं प्राप्नोति । यावज्जीवं विष्णुलोकम् " ।

**तथा**—" पञ्चदशी पौर्णमासी पञ्चमीद्वादशीद्वयम् ।
संवत्सरमभुञ्जानः सततं विजितेन्द्रियः ॥
मुच्यते सर्वपापेभ्यः स्वर्गलोकं च गच्छति " ॥

**पुराणात्**—" चैत्राषाढाश्वयुक्पौषद्वादश्यः सितपक्षगाः ।
एता विशिष्टा उभयद्वादश्यो नामतः स्मृताः " ॥

**तथा**—" माघमासस्य शुक्ला या द्वादशी परमा तिथिः ।
भीमसेनद्वादशी सा द्वादशीभ्यो विशिष्यते " ॥

**यमः**—" अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
कृतोपवासः स्नातस्तु[1] सर्वपापैः प्रमुच्यते ॥
कृतोपवासाः सलिलं ये युगादिदिनेषु च ।
दास्यन्त्यन्नादिसहितं तेषां लोका महोदयाः ॥
दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती प्रोक्ता[2] सांवत्सरेण सा ॥
तस्यां दानोपवासाद्यमक्षयं परिकीर्तितम् ।
तथैव द्वादशी शुक्ला या स्याच्छ्रवणसंयुता[3] ॥

**सांवत्सरो ज्योतिर्वित्[4]** ।

**स्मृत्यन्तरे**—" मासाख्यर्क्षे चन्द्रगुरू तस्मात्पञ्चदशे रविः[5] ।
पूर्णिमा जीववारे तु महाशब्दा तु सा तिथिः ॥
हरिक्षेत्रे च गङ्गायां समुद्रे नैमिषे तथा ।
महाशब्दतिथौ स्नानं दानं श्राद्धमनन्तकम् " ॥

**अथ श्रीश्रवणद्वादशीनिर्णयः ।**

" यदा च शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
तदा सा तु महापुण्या द्वादशी विजया स्मृता ॥

---

१ क. ग. घ. स्नात्वा तु स° । २ ख. ग. घ. °क्ता संव° । ३ ख. ग. घ. °ता संव° । ४ क. ख. °त् । " मा° । ५ ग. घ. रवेः ।

यथाऽब्राह्मणमानय ।

" अप्राधान्यं विधौ यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् " ॥

यथाऽश्राद्धभोजी । पर्युदासवृत्तिश्चैवं व्याख्येया । पुत्रवद्गृहिव्यतिरिक्त[1] आदित्यवारादियुक्तायामेकादश्यामुपवसेत् । अथ वा पुत्रवान्गृहस्थ उपवासादन्यत्तदा व्रतं कुर्यादिति । एवं च तस्यामादित्यदिनादियुक्तायामेकादश्यामुपवासविधिरेव नास्तीति " न कुर्यात्पुत्रवान्गृही " इत्यनेन प्रतिपाद्यते । यथा " दीक्षितो न ददाति न जुहोति " इति न पुनर्विहितः सन्प्रतिषिध्यते । तस्मात्पूर्वैव व्याख्या ज्यायसी । यत्तु हारीतेनोक्तम्—

" त्रयोदश्यां यदा न स्याद्द्वादशी घटिकाद्वयम् ।
दशम्यैकादशी मिश्रा सैवोपोष्या सदा तिथिः " इति,

यदपि ऋष्यशृङ्गेणोक्तम्—

" पारणाहे न लभ्येत द्वादशी कलयाऽपि चेत् ।
तदानीं दशमीविद्धाऽप्युपोष्यैकादशी तिथिः " इति,

यदपि मत्स्यपुराणम्—

" एकादशी दशाविद्धा परतोऽपि न वर्धते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः "

इति, तत्सर्वमपुत्राणां गृहिणामुपवासविधायकं वचनजातं द्रष्टव्यम् । सपुत्राणां पुनरस्मिन्विषये नक्तविधिः प्रदर्शित एव ।

कूर्मपुराणम्—" कांस्यं मांसं मसूरं च चणकं[2] कोरदूषकान् ।
शाकं मधु परान्नं च उपावर्तस्यन्विवर्जयेत्[3] " ॥

उपावर्तस्यन्नुपवसन्नित्यर्थः । कांस्यं कांस्यपात्रे भोजनम् । ततश्च दशम्यामेतद्व्रतम् । मत्स्यपुराणम्—

" कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् ।
व्यायामं च प्रवासं च दिवा स्वप्नमथाञ्जनम् ॥
तिलपिष्टं मसूरं च द्वादशैतानि वैष्णवः " ।

त्यजेदिति शेषः ।

" *कांस्यमांसपरकीयभोजनक्षारतैलमधुमद्यमैथुनम् ।
द्वादशीषु परिवर्जयन्नरः कंससूदनतनौ निलीयते " ॥

* न विद्यतेऽयं श्लोकः ख. पुस्तके ।

१ ख. ग. °रिक्ता आ° । २ ख. °कं कुरुदू° । ३ ख. उपवास्यन्वि° । ४ ग. घ. °वस्यन्वि° ।

मार्कण्डेयः–" एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् " ॥

अत्रैकभक्तादिविधानमुपवासासमर्थं प्रतिषिद्धोपवासं वा प्रति द्रष्टव्यम् । पुत्रवतो गृहिणो यस्यामेकादश्यां कृष्णपक्षार्कसंक्रान्तिदिनक्षयवशादुपवासो निषिद्धस्तस्यामपि कृच्छ्राद्यनुषङ्गप्राप्तौ न निषिध्यते । यदाह स्मृतिमीमांसायां जैमिनिः—

" आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
उपवासो न कर्तव्यो गृहिणा पुत्रिणा तथा ॥
तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृतो ग्राह्यो यतेर्नित्यमुपोषणम् " इति ॥

तन्निमित्तोपवासस्येत्ययंशब्दः प्रकृतत्वादेकादशीविषयः, न शुद्धादित्या(त्य)दिनादिविषयः । आदित्यदिनसंक्रान्त्योरेकादश्युपवासनिषेधं प्रति निमित्तत्वेनात्रोपादानाद्धयप्रकृतत्वम् । राहुदर्शनस्य त्वेकादश्यामसंभवात्पृथगेवोपवासनिषेधहेतुत्वम् । तन्न कृच्छ्राद्यनुषङ्गप्राप्तोपवासकृतो निषेधोऽत्र ग्राह्यः । यतः परिव्राजकस्य नित्यमनिषिद्धमुपोषणम् ।

अन्ये पुनरन्यथा पठन्ति वर्णयन्ति च—

" आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही " ॥

तन्निमित्तोपवासस्याऽऽदित्यवाराभि(दि)निमित्तस्योपवासस्य निषेधो नैकादशीनिमित्तस्यावर्जनीयादित्यवाराद्यनुषङ्गगतस्य । यस्मान्नित्यमेकादश्यामुपोषणमिति । अत्र व्याख्यायते—आदित्येऽहनीत्यादिवाक्यमेकादश्युपवासप्रकरणपठितमसति विरोधे प्रकरणं बाधित्वा व्याख्येयम् । हेतुश्चोपवासनित्यत्वरूपो न समञ्जसः । यतो नित्यस्यापि षोडशिग्रहणादेर्दृश्यते प्रतिषेधः । न चास्य नञः प्रसज्यप्रतिषेधत्वम् । किं तु पर्युदासवृत्तित्वम् । तथा सत्युपवासविधिनैकवाक्यता । प्रतिषेधे तु नानावाक्यत्वम् । यस्मात्सदृशवस्तुपरिग्रहकारी पर्युदासः । अपि च—

" प्रधानत्वं विधौ यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् " ॥

---

१ ग. घ. °क्षार्कसं° । २ क. ग. घ. °क्षयादिव° । ३ ग. घ. °प्तौ नि° । ४ ग. घ. °राद्य° । ५ ख. °रानु° । ६ ख. ग. °ञः प्रति° ।

यत्तु नारदेनोक्तम्—" दशमीशेषसंयुक्तामुपोष्य द्वादशीं किल ।
संवत्सरकृतेनेह नरो धर्मेण मुच्यते " इति,

तथा—" दशम्यनुगता यत्र तिथिरेकादशी भवेत् ।
तत्रापत्यविनाशः स्यात्परेत्य नरकं व्रजेत् "

इति, तद्द्वितीयेऽहन्येकादश्यां सत्यां वेदितव्यम् । तदभावे तु पुत्रवतां गृहिणां दशमीविद्धैकादश्यां नक्तमन्येषामुपवास इत्युक्तं[1] भवेत् । अत एव महाभारतम्—

" दशमीशेषसंयुक्ता[2] गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् " ॥

शल्यपरिहारे तु फलमविकलम्* ।

" विशल्या द्वादशी यत्र तत्र संनिहितो हरिः ।
उपोष्यैकामपि हि तां गर्भवासं न पश्यति "

इति तत्र स्मरणात् । यस्तु त्रयोदश्यां पारणनिषेधो यथा कूर्मपुराणे तावत्-

" एकादश्यामुपोष्यैव द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत्कुर्याद्द्वादशद्वादशीक्षयात् " ॥

स्कन्दपुराणे-" उपोष्यैकादशीं यस्तु त्रयोदश्यां तु पारणम् ।
करोति तस्य नश्यन्ति द्वादश्यो द्वादशैव तु "

इत्यादिः, स गृहिविषयः । त्रयोदशीपारणं यत्रैकादश्यामाश्रीयमाणायां प्रसज्यते तां गृही नोपवसेदिति तस्यार्थः । अत एवोक्तम्—

" उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही " इति ।

यस्तु त्रयोदशीपारणविधिः, यथा तावद्बौधायनीये—

" कलाऽप्येकादशी यत्र परतो द्वादशी भवेत् "

इत्यादिः, स ब्रह्मचारिवनस्थविषयः । एकादशीद्वैधे सति द्वितीयैकादशी व्रात्यादिना[3] कार्येति तस्य तात्पर्यम् । त्रयोदशीपारणनिषेधश्चोदयव्यापिन्यां द्वादश्यामसत्यां वेदितव्यः, न पुनस्तस्यां सत्यामपि त्रयोदशीसमये पारणनिवारणपरः । तथा सत्यदृष्टार्थः स्यात् । अन्यथा पुनरेकादशीद्वैधे सत्येकस्यां[4] गृहिणोपवासः कार्य इत्यपेक्षितार्थविधायकः सन्दृष्टार्थः ।

* इत आरभ्य स्मरणादित्यन्तं न विद्यते ग. घ. पुस्तकयोः ।

१ क. ग. घ. °त्युक्तम् । अ° । २ ग. घ. °शम्यैकादशीयु° । ३ ग. घ. °शीव्रतादि° । ४ ख. सति क° ।

" कला काष्ठाऽपि द्वादश्या यदि स्यादपरेऽहनि ।
द्वादश द्वादशीह(र्ह)न्ति पूर्वस्यां पारणे कृते " इति* ॥

अस्मिन्नेव विषये यदि तृतीयेऽहनि द्वादशी न दृश्यते तदा गृहिणः पूर्वस्यामेकादश्यामुपवासः । यतेरुत्तरस्याम् । यदुक्तं पुराणे—

" संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही " ॥

अस्मिन्नेव विषये[2] यतेः पारणानुग्रहं[3] स्मरति—

" संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् " इति ॥

तथा च स्कन्दपुराणे—" कलाऽप्येकादशी यत्र[4] द्वादश्यनुगता भवेत् ।
दिनक्षयेऽपि सा पूज्या यतीनामुत्तमा तिथिः " ॥

यदपि बौधायनेनोक्तम्—" कलाऽप्येकादशी यत्र परतो द्वादशी भवेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् " इति,

" एकादशीं कलायुक्तामुपोष्य द्वादशीं नरः ।
त्रयोदश्यां तु यो भुङ्क्ते विष्णुसायुज्यमृच्छति " ॥

इति, तदपि यतिविषयमेव । विष्णुसायुज्यफलश्रवणात् । क्रतुशतपुण्यविधानं तु स्तुतिपरं न स्वार्थविधिपरम् । यदपि स्कन्दपुराणे—

" दिनक्षयेऽर्कसंक्रान्त्यां ग्रहणे चन्द्रसूर्ययोः ।
उपवासस्तु कर्तव्यो विष्णुसायुज्यमि(मृ)च्छति "

इति, तदपि पुत्रवद्गृहिव्यतिरिक्तमुमुक्षुपुरुषविषयम्[5] । एकस्मिन्नेव श्लोके चैते श्लोकास्त्रयोदशीपारणनिषेधसूचकाः पुत्रवतो गृहस्थस्येति ज्ञेयम्+ ।

इति अत्र गृहस्थयतिव्यवस्था । यदपि कूर्मपुराणे—

" द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः ।
तामेवोपवसेत्काममकामो विष्णुतत्परः "

इति, तदपि पूर्वेण समानविषयम् । ये तु पुत्रिणो गृहिणस्तेषामस्यां नक्तविधिरित्यनुसंधेयम् । दशमीं द्वादशीं च या स्पृशति सा द्विस्पृक् । *

* एतदग्रेऽधिकमेतत्–" अत्रोदाहरणम्–द शे ४ ए शे २ ए दि ३ द्वा दि ४ इत्यर्थः " इति ग. पुस्तके । + " एतच्छ्लोकोदाहरणम्–द शे २ ए शे १ त्रिस्पृक् ए दि १ त्र्यहः त्रो शे २ " इत्यधिकं ग.पुस्तके । * एतदग्रेऽधिकमेतत्–"अत्रोदाहरणम्–द दि २ त्र्यहः द्वा शे" इति ग.पुस्तके ।

१ ग. घ. °दशी द्वादशीं हन्ति पूर्वस्मिन्पार° । २ ग. घ. छ. ञ. °ये पा° । ३ ख. °रणमिति । ४ क. ग. घ. °त्र परतो द्वादशी भ° । ५ क. °म् । यदपि ।

( स्नातकव्रतप्रकरणम् ५)

" उपवासनिषेधे तु भक्ष्यं किंचित्प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं लभेत् " ॥

भक्ष्यप्रकल्पनामिति(मपि) तत्रैवोक्तम्—

" नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु वाऽऽज्यम् ।
यत्पञ्चगव्यं यदि वाऽपि वायुः प्रशस्तमत्रोत्तरमुत्तरं च " ॥

नक्तं चा(च) नियत एव काले कार्यम् ।

" यदा तु प्राङ्मुखी छाया पुरुषाद्विगुणा भवेत् ।
तदा नक्तं विजानीयादनक्तं त्वन्यथा भवेत् " ॥

इति स्मृत्यन्तरदर्शनात् । यदपि स्मृत्यन्तरमुक्तम्—

" एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही "

इति , तत्रापि गृहिशब्दः पुत्रवद्गृहिविषयः । पूर्वोक्तवचनानुरोधात् । वनस्थादिशब्दः प्रदर्शनार्थः । तेनापुत्रं गृहिणमपि संगृह्णाति । दिनक्षयविशेषे नक्तविधिमाह—

" एकादशी कला मात्रा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते " ॥

पुत्रवद्गृहिविषयश्चायं नियमः । अपुत्रस्तूपवसेदेव । तदुक्तं पुराणे—

" एकादशी द्वादशी च रात्र्यन्ते च त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् " इति ॥

" दशम्यैकादशी विद्धा द्वादशी च क्षयं गता ।
नक्तं तत्र प्रकुर्वीत नोपवासो विधीयते " ॥*

अयमर्थः—एकादशीदिने दशमी विद्यते द्वादशीदिने तु नैकादशी त्रयोदशीदिने च[2] न द्वादशी तत्र नक्तं कुर्यान्नोपवासमिति । + इति श्लोकद्वय एक एव विषयोऽपुत्रवत्पुत्रवद्गृहिभेदेनोक्त इति विचार्यम् । यदा पुनः संपूर्णैकादशी भूत्वा द्वितीयदिने पुनर्भवेत् । तृतीयदिने च द्वादशी तदा पूर्वामेकादशीं हित्वा द्वितीयामुपवसेत् । यदुक्तं स्मृत्यन्तरे—

---

* एतदग्रेऽधिकमेतत्—" अत्रोदाहरणम्–द दि ए दि २ त्र्यहः त्रो शे १" इति ग. पुस्तके ।
+ इत आरभ्य विचार्यमित्यन्तं न विद्यते क. ग. घ पुस्तकेषु ।

---

१ ग. घ. लयं । २ ग. घ. च द्वा° ।

"द्वौ तिथ्यन्तावेकवारे यस्मिन्स्यात्स दिनक्षयः ।
तस्मिन्स्नानं जपो होमो नोपवासो गृहाश्रमे" ॥

प्रक्रान्तैकादशीव्रतस्यासामर्थ्ये वराहपुराणम्—

"असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा नियमान्वितम्" ॥

एकादशीव्रतं सूतके मृतकेऽपि न त्याज्यम् । यत उक्तं तत्रैव—

"परमापदमापन्नो हर्षे वा समुपस्थिते ।
सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम्" ॥

तथा—"सूतकेऽपि नरः स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते ॥
द्वादश्यां तु तथा भुक्त्वा सूतकान्ते जनार्दनम् ।
पूजयित्वा विधानेन भोजयेच्च द्विजोत्तमम् ॥
मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः ।
द्वादश्यां तु समश्नीयात्स्नात्वा विष्णुं प्रणम्य च" ॥

एकादशीव्रतस्य कथंचिदतिक्रमे यत्कार्यं तद्वराहपुराण एवोक्तम्—

"एकादशी विप्लुता चेत्परतो द्वादशी स्थिता[1] ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम्" ॥

विप्लुता केनापि हेतुनाऽतिक्रान्तोपवासा ।

नित्यं चैकादशीव्रतमिति तत्रैवोक्तम्—

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
एकादश्यां तु भुञ्जानो विष्णुलोकं न पश्यति" इति ॥

काम्यस्याप्यसमापने दोषमाह—

"परिगृह्य व्रतं सम्यगेकादश्यामुपोषणम् ।
न समापयते यस्तु स याति नरकं नरः" ॥

व्रतान्तरेऽप्याह—"यो गृहीत्वा व्रतं मोहादेकादश्यादिकं नरः ।
न समापयते तस्य गतिः पापीयसी भवेत्" ॥

अनुत्पन्नपुत्रेणा[2]विशेषेणैकादशीव्रते प्रक्रान्ते सति पुत्रे जाते प्रतिषिद्धोपवासरेषु यत्कर्तव्यं तदुक्तं वायुपुराणे—

---

१ ख. स्थिते । उ° । २ ग. घ. °त्रेण वि° ।

प्रसादाभिमुखो भूत्वा ज्ञानचक्षुःप्रदो भव ।
यज्जन्मनः प्रभृति देहलयान्तमज्ञः पापं करोमि वपुषा मनसा च वाचा ।
क्लेशोपतापितमतिस्त्रि[1]पदैस्त्रिरूपं तन्नाशयाच्युत मम व्रतसुप्रसन्न ॥
अज्ञानान्धेन यत्किंचिन्मया खण्डं व्रतं कृतम् ।
भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे ॥
यथाऽखण्डं जगत्सर्वं त्वमेव पुरुषोत्तम ।
तथा खण्डमखण्डं मे व्रतं भवतु केशव " इति ॥

**तथा**—" न शङ्खेन पिबेत्तोयं नाश्नीयात्कूर्मसूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि " ॥

**एतत्पुत्रवद्गृहिव्यतिरिक्तविषयम् । यत उक्तं स्मृत्यन्तरे**—

" कृष्णपक्षे[2] तु संक्रान्त्यां ग्रहणे वाऽपि पुत्रवान् ॥
उपवासं न कुर्वीत सुतबन्धुधनक्षयात् " ॥

**भारते**—" आदित्येऽहनि संक्रान्तावर्कपुत्रेऽपि वा भवेत् ।
उपवासो न कर्तव्यः पुत्रदारक्षयावहः " ॥

**मत्स्यपुराणात्**—" दिनक्षयेऽर्कसंक्रान्त्यां ग्रहणे चन्द्रसूर्ययोः ।
उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः " ॥

**कूर्मपुराणात्**—" संक्रान्त्यां कृष्णपक्षे च रविशुक्रदिने तथा ।
एकादश्यां न कुर्वीत उपवासं सपारणम् " इत्यादि ॥

**यत्तु**—" ब्रह्महा स सुरापः स्यात्स्वस्तेयी गुरुतल्पगः ।
विवेचयति यो मोहादेकादश्यौ सितासिते "

**इति पुराणवचनम्, यत्तु(च) विष्णुधर्मोत्तरे**—

" अतिक्रामति यो मोहादेकादश्यौ सितासिते ।
उपवासे स मूढात्मा विष्णुलोकं न पश्यति "

**इति, यच्च मत्स्यपुराणम्**—

" एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत् "

**इति, तत्पुत्रवद्गृहस्थव्यतिरिक्तविषयम् । यथा कृष्णैकादश्यादौ पुत्रवतो गृहस्थस्यानधिकारः, तथा दिनक्षयेऽपि । तदुक्तं कूर्मपुराणे**—

---

१ ख. °पदे त्रिरू° । ग. घ. °पदेतिरू° । २ ख. °क्षेऽर्कसं° ।

“ दशम्यामेकभक्तस्तु मांसमैथुनवर्जितः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥
गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः ॥
देवतास्तस्य तुष्यन्ति कामितं तस्य सिध्यति ।
अन्यथा तु वृथा मर्त्याः क्लिश्यन्ति स्वल्पबुद्धयः ” ॥

औदुम्बरं ताम्रम् । यद्वोपवासादन्यद्व्रतं संकल्पयेदित्यर्थः ।

“ एकादश्यां निराहारो भूत्वाऽहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष गतिर्मम भवाच्युत ” ॥

पुराणात्—“ केशवो मार्गशीर्षे स्यात्पौषे नारायणः स्मृतः ।
माधवो माघमासे तु गोविन्दः फाल्गुने तथा ॥
चैत्रे मासे भवेद्विष्णुर्वैशाखे मधुसूदनः ।
त्रिविक्रमो ज्येष्ठमास आषाढे वामनो भवेत् ॥
श्रावणे श्रीधरो ज्ञेयो हृषीकेशस्ततः परम् ।
पद्मनाभश्चाऽऽश्वयुजे ततो दामोदरो मतः ॥
सर्वेष्वेव तु मासेषु नरकारिर्मलिम्लुचे ।
श्रीर्वै वागीश्वरीकान्ताक्रियाशक्तिविभूतयः ॥
इच्छा प्रीती रतिश्चैव माया धीर्महिमेति च ।
एताभिः शक्तिभिः शुक्लद्वादशीषु सह क्रमात् ॥
वासुदेवो द्वादशसु पूजनीय उपोषितैः ।
तथैव कृष्णपक्षे तु शक्तियुक्तोऽर्च्यते द्विजैः ॥
कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥
योगीश्वरो[1] द्वादशमः(कः) पुण्डरीकाक्ष एव च ।
रुक्मिणी च प्रिया प्रीतिः शक्तिः सिद्धिश्च पञ्चमी ॥
तथा श्रीर्महिमा[2] लक्ष्मीः कान्तिश्च नवमी मता ।
प्राप्तिः प्राकाम्यसंज्ञा च लघिमा द्वादशी स्मृता ॥

तथा—“ उच्चारयेद्व्रतस्यान्ते देवस्य पुरतः स्थितः ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥

---

१ ख. योगेश्व° । २ ख. °हिला ल° ।

( स्नातकव्रतप्रकरणम् ५)

असतोऽपि समादाय साधुभ्यो यः प्रयच्छति ।
धनस्वामिनमात्मानं स तारयति दुस्तरात् " ॥

तथा—" द्वाविवाप्सु प्रवेष्टव्यौ गले बद्ध्वा महाशिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् " ॥

तथा—" उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥
पुष्पालंकारवस्त्राणि गन्धमाल्यानुलेपनम् ।
उपवासे न दुष्येत्तु दन्तधावनवर्जितम् ॥
उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।
दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि वै " ॥

ततश्च पत्रादिनोपवासे दन्तधावनं कार्यम् । श्राद्धे भोक्ता च न तु काष्ठेन ।

देवलः—" ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् ।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥
स्त्रीणां तु प्रे(वी)क्षणात्स्पर्शात्ताभिः संकथनादपि ।
निष्यन्दते ब्रह्मचर्यं न दारेष्वृतुसंक्रमात् " ॥

अत्रायमर्थः—स्त्रीणां परस्त्रीणां वीक्षणात्स्वभावेन चित्तेनेत्यर्थः । ताभिरन्यस्त्रीभिरेव संकथनात्संयोगप्रलापाच्च ब्रह्मचर्यं दशम्याद्युपवासनिमित्तं निष्यन्दते नश्यतीत्यर्थः । न दारेष्वृतुसंक्रमादिति । दारेषु वीक्षणात्स्पर्शात्संकथनात्स्वगृहव्यवहारकथाप्रपञ्चाच्च तद्ब्रह्मचर्यं न नश्यति । तथर्तुसंक्रमात् । संक्रमणं संतानोत्पादनार्थं संभोग ऋतोः संक्रमस्तस्मादपि व्रतादौ सेव्यमानाद्ब्रह्मचर्यं न निष्यन्दते न नश्यतीति । स्वदारेषु वीक्षणादेर्ब्रह्मचर्यनिष्यन्दाभाव उपवासेष्वसिधाराव्रतनिमित्तत्वादिति ।

" असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् ।
उपवासः प्रदुष्येत्तु दिवा स्वापाच्च मैथुनात् " ॥

मैथुनं चात्रर्तुकालव्यतिरिक्तविषयम् ।

" सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे ।
धर्मोपवासी कुर्वीत नैव भक्तचतुष्टयम् " ॥

धर्मग्रहणं प्रायश्चित्तस्य व्युदासार्थम् ।

१ क. घ. °न्धधूपानु° । २ क. ख. घ. छ. ञ. संगमा° । ३ क. घ छ. °त् । "अस° । ४ ग. न निष्य° । ५ क. ग. घ. °त् । सा° ।

**वृद्धमनुः**—" आहारं मैथुनं निद्रां संध्याकाले विवर्जयेत् ।
कर्म वाऽध्ययनं वाऽपि तथा दानप्रतिग्रहौ ॥
आहाराद्व्याधिमाप्नोति गर्भो रौद्रश्च मैथुनात् ।
स्वपनः स्यादलक्ष्मीकः कर्म चैवात्र निष्फलम् ॥
अध्येता नरकं याति दा[१]नान्नाऽऽप्नोति तत्फलम् ।
प्रतिग्रही भवेत्पापी तस्मात्[२]संध्यासु वर्जयेत् ।

**शातातपः**—" अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥
अमा[३]वास्या भवेद्वारो यदा भूमिसुतस्य वै ।
जाह्नवीस्नानमात्रेण गोसहस्रफलं भवेत् " ॥

**वृद्धवसिष्ठः**—" सर्वेषामेव वर्णानां सूतकं राहु[४]दर्शने ।
सचैलं च भवेत्स्नानं सूतकान्नं च वर्जयेत् " ॥

**सूतकान्नं राहुसूतकान्नम् ।**

**तथा**—" त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले च मोक्षकाले च राक्षसाः " ॥

**स्पर्शकाल एव देवपितृदै(दे)वत्यं[५] कर्म कुर्यादित्यर्थः ।**

**तथा**—" प्रच्छन्नानि च दानानि ज्ञानं च निरहङ्कृतम् ।
तपांसि[६] च सुगुप्तानि तेषां फलमनन्तकम् " ॥

**तथा**—" एका गौः स्वस्थचित्तस्य आतुरस्य च यच्छतम् ।
सहस्रं म्रियमाणस्य[७] तच्च तानि च तत्समम् " ॥

**तथा**—" कनकाश्वतिला नागा दासीगृहमहीरथाः ।
कन्यका कपिला चेति महादानानि वै दश ॥
दत्त्वा योऽनुस्मरेद्दानं प्रतिगृह्य च याचते ।
उभौ तौ नरकं यातः *प्रतिग्राहकयाचकौ " ॥

**अनुस्मरणं पश्चात्तापः ।**

**तथा**—" सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्थितम् ।
देशे काले विधानेन पात्रे दत्तं विशेषतः ॥

---

* णिजन्ताण्वुल् । दातेत्यर्थः ।

---

१ ग. दाता नाऽऽप्नो° । २ ख. ग. °त्संध्यां वि° । ३ क. ग. घ. °मावस्या । ४ ख. ग. घ. °हुसूतके । स° । ५ ख. ग. ध. °त्यं कु° । ६ ग. °सि चातिगु° । ७ क. °स्य यच्च । ग. °स्य दत्त्वा ता° ।

इतरेषां तु वर्णानां दानात्परिसमाप्यते ॥
नित्यं न हापयेत्स्नानं काम्यं नैमित्तिकं च यत् ।
दशम्यादिषु कर्तव्यं न तु याद्दच्छिकं क्वचित् " ॥

**पैठीनसिः**–" पुत्रजन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
नित्यस्नाने[1] च कर्तव्ये तिथियोगो न विद्यते " ॥

**वसिष्ठः**–" पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि " ॥

**व्यासः**—" रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिकं[2] तु कुर्वीत स्नानं[3] दानं च रात्रिषु ॥
ग्रहणोद्वाहसंक्रान्तियात्रार्थे प्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥
पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् ।
उपरागविवाहेषु प्राणा[4]र्तिषु विशेषतः " ॥

**दानवत्स्नानमपीष्यत एव**—
" उच्छिष्टाद्युपघातादौ स्नानं नैमित्तिकं स्मृतम् ।
चन्द्रसूर्योपरागे च तथैव ग्रहसूतके " ॥

**ग्रहसूतकं राहुदर्शनम् ।**
" अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ।
पराम्भसि तथैवाल्पे नाशिरस्कं कथं चन " ॥

**मार्कण्डेयः**–" महानिशा द्वे घटिके रात्रौ मध्यमयामयोः ।
नैमित्तिकं तदा कुर्यात्काम्यं न तु मनागपि ॥
महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम् ।
स्नानं तत्र प्रकुर्वीत शौचमाचमनक्रियाम् ॥
मूत्रोच्चारे महारात्रौ कुर्यान्नाऽऽचमनं तु यः ।
प्रायश्चित्तीयते विप्रः प्राजापत्यार्धमर्हति ॥
चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायं च तुरीयकम् ॥
आहाराज्जायते व्याधी रौद्रो गर्भश्च मैथुनात् ।
निद्रातो जायतेऽलक्ष्मीः स्वाध्यायादायुषः क्षयः " ॥

---

१ क. °स्नानं च कर्तव्यं ति° । २ ख. ग. °कं न कु° । ३ ग. स्नाने दा° । ४ क. ख. घ. °णान्तिषु ।

उपोषितस्य व्रतिनः कृप्त(कृत्त)केशस्य नापितैः ।
तावच्छ्रीस्तिष्ठते(ति) प्रीता यावत्तैलं न संस्पृशेत् ॥
नखकृत्यकृते श्मश्रुशिरोरुहनिकर्तने ।
न स्नायीत नरः शेषे तैलस्नानं विधीयते ॥
कषायेण शिरः कृत्वा अभ्यक्तो येन केनचित् ।
तावत्स्यादशुचिर्विप्रो यावन्निर्णिज्यते न तत् ॥
न चाभीक्ष्णं शिरःस्नानं[१] कार्यं निष्कारणं नरैः ।
दिवा कपित्थच्छायायां रात्रौ दधिशमीषु च ॥
धात्रीफलेषु सप्तम्यामलक्ष्मीर्वसते सदा ।
चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा ॥
पर्वाण्येतानि वर्ज्यानि रविसंक्रान्तिरेव च ।
तैलस्त्रीमांससंभोगी पर्वस्वेतेषु यो भवेत् ॥
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः[२] ।
सायंसंध्यां परान्नं च तिलपिष्टं तथैव च ॥
अमावस्यां न सेवेत रात्रौ भोजनमैथुने ।
अमावस्यां न हिंस्यात्तु कुशांश्च समिधस्तथा ।
सर्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत् ॥
द्वादश्यां कृष्णपक्षे तु न स्नातव्यं कदा चन ।
शुभसंतानमिच्छद्भिरपवर्गिनरैरपि " ॥

**स्मृत्यन्तरात्**—" भोगार्थं क्रियते यत्तु स्नानं यादृच्छिकैर्नरैः ।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिकं न तु " ॥

**गर्गः**—" क्रियते वा न वा यत्तु शास्त्रयन्त्रणया विना ।
मलव्यपोहनं मलस्नानं यादृच्छिकं तु तत् ॥
तन्न कुर्यात्त्रयोदश्यां तृतीयायां तथा तिथौ ।
शाश्वतीं भूतिमन्विच्छन्दशम्यामपि पण्डितः ॥
दशमी पुत्रनाशाय स्वनाशाय त्रयोदशी ।
तृतीयोभयनाशाय स्नानतो[३] वर्जयेन्नरः " इति ॥
" त्रयोदश्यां तृतीयायां दशम्यां चैव सर्वशः ।
शूद्रविट्क्षत्रियाः स्नानं नाऽऽचरेयुः कदा चन ॥
जपहोमतपोदानैर्विप्रे स्नानं समाप्यते ।

---

१ क. ख. घ. °स्नातं का° । २ क. घ. द्विजः । ३ क. स्नाने ता व° ।

प्रतिषेधो वा । तत्र श्रुतिविहिता आचारा गोलक्षणप्रभृतयः । यथा कर्तरी कर्णकर्तव्य इत्यादयः । आचारविषयाणि तु स्मृतिवाक्यानि प्रदर्श्यन्ते ।
तत्र व्यासः—" श्रीकामः सर्वदा स्नानं कुर्वीताऽऽमलकैर्नरः ।
सप्तमीं पञ्चमीं चैव पर्वकालं विवर्जयेत् " ॥

पर्वात्रामावास्या । यदाह स एव—
" अमावास्यानवम्योश्च सप्तम्यां च विशेषतः ।
धात्रीफलानि यत्नेन दूरतः परिवर्जयेत् " ॥

धात्री—आमलकी ।

तथा—" सप्तम्यां न स्पृशेत्तैलं नीलवस्त्रं न धारयेत् ।
न धान्यामलकैः स्नायान्न कुर्यात्कलहं नरः ॥
वीर्यहानिः प्रजाहानिर्यशोहानिस्तथैव च ।
हन्त्येतत्त्रितयं यस्मात्तस्माद्धात्रीं विवर्जयेत् " ॥

तथा—" षष्ठ्यष्टमी पञ्चदशी पक्षद्वयचतुर्दशी ।
अत्र संनिहितं पापं तैले मांसे क्षुरे भगे ॥
षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा ।
चतुर्दश्यां कामभोगममावास्याक्षुरक्रिया ॥
मांसाशने पञ्चदशी तैलाभ्यङ्गे चतुर्दशी ।
अष्टमी ग्राम्यधर्मे च ज्वलन्तमपि पातयेत् " ॥

ग्राम्यधर्मो मैथुनम् ।

" तैलं न संस्पृशेदामं वृक्षादींश्छेदयेन्न च ।
पक्षादौ च रवौ षष्ठ्यां विरिक्तायां तथा तिथौ ॥
दशम्यां तैलमस्पृष्ट्वा न स्नायादविचक्षणः ।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो धनम् ॥
मोहात्प्रतिपदं षष्ठीं कुहूं रिक्तां तथा तिथिम् ।
तैलेनाभ्यज्यमानस्तु चतुर्भिरपहीयते ॥
पञ्चमीं दशमीं चैव पौर्णमासीं त्रयोदशीम् ।
तृतीयां चैव यस्तैलं नरः समुपसेवते ॥
अभ्यङ्गात्स्पर्शनाद्वाऽपि भक्षणाच्च तथैव च ।
चतुर्णां तस्य वृद्धिः स्याद्धनापत्यबलायुषाम् ॥

१ घ. °र्तक° । २ ख. °र्तव्या इ° । ३ ग. °काले वि° । ४ क. ख. घ. °शीम् । अ° । ५ ग. घ. °याच्च वि° । ६ ख. °पदीं ष° ।

तथा—" वैरिणं नोपसेवेत सहायांश्चैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च योषितम् " ॥

शङ्खलिखितौ—" नोद्धतकुहकैः सहैकतास्तिष्ठेत् ॥ १५२ ॥

किं च—

**विप्राहिक्षत्रियात्मानो नावज्ञेयाः कथं[1] चन ॥**

विप्रसर्पक्षत्रिया आत्मा च नावमन्तव्याः । अत्र मनुः—

" क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत वै भूष्णुः कृशानपि कदा चन ॥
एतत्त्रयं हि पुरुषान्निर्दहत्यवमानितम् ।
तस्मादेतत्त्रयं नित्यं नावमन्येत बुद्धिमान् ॥
नाऽऽत्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ।
आत्मानं न शपेद्रोषान्नीरुक्को न स्वपेद्दिवा ॥
न नक्तं विलिखेद्भूमिं गाश्च रात्रौ न संस्पृशेत् " ।

तथा—" ब्राह्मणान्नृपतीन्वृद्धान्स्वांश्च शान्ताञ्शिशूनपि ।
नाऽऽक्रोशेन्नावमन्येत पूजयेद्दैवतं तथा " ॥

किं च—

**आ मृत्योः श्रियमाकाङ्क्षेन्न कंचिन्मर्मणि स्पृशेत् ॥ १५३ ॥**

यावज्जीवं श्रियमन्विच्छेत् । ततश्च तां दुर्लभां मत्वा तदुपायानुष्ठाने मन्दादरेण न भवितव्यमिति तात्पर्यार्थः । तथा च कमपि शत्रुमुदासीनं वा मर्मणि न स्पृशेत् । परदोषप्रकाशनं वर्जयेदित्यर्थः । तथा च मनुः—

" हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोतिगान् ।
रूपद्रविणहीनांश्च जातिहीनांश्च नाऽऽक्षिपेत् " ॥ १५३ ॥

अपि च—

**दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ॥**

दूरतो गृहादुच्छिष्टादीनि प्रक्षिपेत् ॥

किं च—

**श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत् ॥ १५४ ॥**

तथाऽऽचारो नाम लौकिककर्माश्रयः पुरुषनिःश्रेयसोपकारस्य विधिः

---

[1] क. ग. घ. कदा च° ।

( स्नातकव्रतप्रकरणम् ५)

" छिद्राण्याहुर्द्विजातीनामनध्यायान्मनीषिणः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदर्जितम् ॥
आयुः प्रजां पशून्मेधां कृन्तामि सुकृतं च यत् ।
अनध्यायेष्वभ्यसतो ब्रह्म व्याहरतस्तथा " ॥

यत्तु मनुवचनम्—" द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः "

इति, तद्ब्रह्मयज्ञाध्ययनविषयम् । तत्प्रकरणाधीतवचनमूलत्वात् । ब्रह्मयज्ञं प्रकृत्य हि तैत्तिरीयकाः समामनन्ति—

" तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः " इति ॥ १४८॥१४९॥१५०॥१५१॥

एवमनध्यायानुक्त्वा प्रकृतमाह—

देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ॥
नाऽऽक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि च ॥ १५२ ॥

देवादीनां छायां रक्तादीनि च नाऽऽक्रामेन्नाधितिष्ठेत् । ऋत्विगाचार्ययोः स्नातकोपादानेनैव ग्रहणसिद्धौ पृथगुपादानात्स्नातकशब्दोऽचिरसमावृत्ते वर्तते । यद्वा ऋत्विगाचार्याभ्यामन्यस्नातकस्य च्छायायामनाक्रमण मन्तव्यम् । देवा देवप्रतिमाः । ष्ठीवनं मुखप्रच्युतं लालादि । उद्वर्तनमङ्गोत्सादनद्रव्यम् ।

अत्र मनुः–" देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा ।
नाऽऽक्रामेत्कामतच्छा(श्छा)यां बभ्रुणो दीक्षितस्य च " ॥

बभ्रु कपिलं गवादि ।

यमः—" देवद्विजगुरुप्राज्ञस्नातकाचार्यमन्त्रिणाम् ।
नाऽऽक्रामेत्कामतछा(श्छा)यां कपिलस्य च गोरपि ॥
स्वां तु नाऽऽक्रामयेच्छायां क्लीबेन पतितेन च ।
चण्डालेन द्विषद्भिश्च नित्यं रोगान्वितेन च " ॥

विष्णुः–" ब्राह्मणदेवगुरुबन्धुदीक्षितानां छायां नातिक्रामेत् " ।

प्रसङ्गादन्यदप्युच्यते, तत्र मनुः—

" मध्यंदिने च रात्रौ च श्राद्धं भुक्त्वा च सामिषम् ।
संध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् " ।

" सामध्वनावृग्यजुषी नाधीयीत कदा चन " ।

अनध्यायानुवृत्तौ बौधायनः—

" [1]नृत्यगीतवादित्ररुदितशब्देषु तावन्तं कालमार्तौ च " ।

आपस्तम्बः—"श्मशाने सर्वतः शम्याप्रासात् । श्मशानवच्छूद्रपतितौ समानागार इत्येके । शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरनध्यायः । ब्रह्माध्येष्यमाणो[2] मलवद्वांसेसे[3]च्छेन्[4]संभाषितुं ब्राह्मणेन[5] संभाष्य तयां संभाषेत संभाष्य तु ब्राह्मणेनैव संभाष्याधीयीत " ।

यमः—" श्लेष्मातकस्य च्छायायां शल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः " ।

तथा—" न सङ्ग्रामे न सेनायां विवादे कलहे तथा " ।

हारीतः—" ब्राह्मणागमनेऽर्घ्यादीनि दत्त्वाऽनुज्ञाप्याधीयीरन् " ।

तथा—"न वृक्षस्थो न तीर्थस्थो न चाप्सु न सभासु च ।
बहुसंकीर्णमध्ये च नाधीयीत कदा चन ॥
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम्[7] ।
नाधीयीताऽऽमिषं जग्ध्वा सूतकान्नाद्यमेव च " ॥

तथा—" श्वखरोष्ट्रे च रुदति[8] पङ्क्तौ न च पठेद्द्विजः ।
नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा " ॥

तथा—" रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते " ।

गौतमः—" ऊर्ध्वं भोजनादुत्सवे प्राधीतस्य निशायां चतुर्मुहूर्तं नित्यमेके नग[9]रोत्सवे । उपनयनादूर्ध्वं भोजनादहोरात्रमनध्यायः प्राधीतस्याध्ययने प्रथमं प्रवृत्तस्य भोजनादूर्ध्वमनुत्सवेऽपि पूर्ववदनध्यायः " ।

निशायां चतुर्मुहूर्तम् । एतच्च त्रयोदश्याम् ।

तथा चोशना—" त्रयोदश्यां प्रथमांश्चतुरो मुहूर्तान्नाधीयीत " ।

तस्यानध्याय इत्यनुवृत्तौ वसिष्ठः—

" मिथुनव्यपेतायां च शय्यायां वाससा च मिथुनव्यपेतेनानिर्णिक्तेन " इति ।

सर्वे चैतेऽनध्याया धर्मनैपुणकामेन[10] विद्यानैपुणकामेन च वर्जनीयाः । प्रत्य[11]वायाविशेषात् । तथा च यमः—

---

१ क. ग. नृत्तगी° । २ क. घ. °णो मूल° । ३ घ. °द्वासेछन्दं च भा° । ४ ख. °च्छन्दं भा° । ५ घ. °णेनै° । ६ ख. तथा सं° । ७ क ख °सक्तिका° । ८ क. ग. रुवति । ९ क. °गरे । उत्सव उप° । ख. गरे उत्सवेऽपि । १० क. ख. °न च व° । ११ क. घ. °वायवि° ।

( स्नातकव्रतप्रकरणम् ५)

" अन्तरागमने पुनरुपसदनम् । श्वनकुलमण्डूकमार्जाराणां त्र्यहमुपवासो विप्रवासश्च । प्राणायामो घृतप्राशनं चेतरेषाम् । श्मशानाध्ययने चैवम् " ।

येन केनचिदन्तरा गमने कृत उपसदनं कार्यम् । उपसदनं च पाणिना पाणिमुपसंगृह्येत्यादिना यत्प्रत्यहं विहितं तदेव पुनः कर्तव्यम् । श्वाद्यन्तरागमने त्रिरात्रमुपवासः । त्र्यहं च विवसेदिति ।

यत्तु वसिष्ठः—" अधीयानानामन्तरागमनेऽहोरात्रमभोजनम् । त्रिरात्रमनभिषेको विवासा(स)श्चान्योन्येन श्वमार्जारनकुलशीघ्रगाणां त्वहोरात्रम् "

इत्याह, तत्त्रिरात्रोपवासासमर्थविषयम् । प्राणायामो घृतप्राशनं चेतरेषामिति । श्वादिव्यतिरिक्तानामन्तरागमन इत्यर्थः ॥ १४७ ॥

किं च—

श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिःस्वने ॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥ १४८ ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ॥
भुक्त्वाऽऽर्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥ १४९ ॥
पांसुवर्षे[1] दिशां दाहे संध्यानीहारभीतिषु ॥
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥ १५० ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे[2] ॥
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥ १५१ ॥

श्वादीनां निःस्वने शब्दे श्रूयमाणे तत्कालमनध्यायः । क्रोष्टा गोमायुः । उलूकोऽमङ्गल्यपक्षी । बाणो वीणाविशेषः । आर्तो दुःखितः । श्वादयः प्रसिद्धाः । तथाऽमेध्यादीनामन्तिके संनिधाने । अन्त्यः शूद्रान्निष्कृष्टः । तथा देशस्याऽऽत्मनश्चाऽऽशौचे, तथा विद्युत्संप्लवे । संप्लवः पुनः पुनर्भवनम् । तथा भुक्त्वा यावदार्द्रपाणिः । तथाऽम्भसो मध्ये, अर्धरात्रे रात्रेर्मध्यमे यामद्वये च, तथाऽतिमारुतेऽतिशयेन वाति वायौ । तथा पांसुवर्षेऽद्भुतविशेषे दिशां दाहे च तथा संध्ययोः, तथा नीहारे धूमिकायां, भीतौ च चौरादिकृतायाम् । तथा धावतोऽनध्यायः । तथा पूतिगन्धे, तथोक्तलक्षणे शिष्टे गृहमागते, खरादीनामारोहणे च । यानं रथादि । इरिणमूषरम् । एताञ्श्वक्रोष्टुप्रभृतिनिःस्वनादिनिमित्तान्सप्तत्रिंशदनध्यायांस्तात्कालिकान्निमित्तकाले कर्तव्यान्विदुर्मुनयः । अत्र विशेषः । तथा मनुः—

---

१ ङ. °सुप्रवर्षेदिग्दाहे । २ क. ख. ग. घ. छ. °वृक्षारोहणेरिणे ।

मेधाकामस्त्रयोदश्यां चतुर्दश्यां च सर्वदा ।
सप्तम्यां च प्रदोषेषु न स्मरेन्नापि कीर्तयेत् ” ॥

मनुः—“ प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् ।
त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके ॥
यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति ।
विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत् ” ॥

केतनं निमन्त्रणम् । एकानुदिष्टमेकोद्दिष्टम् । एवं च राहुसूतक एकाहत्रिरात्रयोर्विकल्पः । राहुसूतकं राहुदर्शनम् ।

अत एव हारीतः—

“ उपाध्याये राजनि च मृते श्रोत्रिये च मृते सब्रह्मचारिणि च चन्द्रार्कयो राहुदर्शने शक्रध्वजपतन आचार्ये च मृते त्रिरात्रम् ” इति ॥ १४६ ॥

किं च—

**पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ॥**
**कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥ १४७ ॥**

अन्तरं शिष्योपाध्याययोर्मध्यतो गमनम् । तस्मिन्पशुमण्डूकादिभिः कृतेऽहोरात्रमनध्यायः । मध्यगमनात्प्रभृति सूर्योदयं यावदित्यर्थः । तथा शक्रपाते शक्रोच्छ्रायोपलक्षिते काले । प्रोष्ठपद्यनन्तरं भरण्यां शक्रपातः । प्रोष्ठपदस्यैव शुक्लद्वादश्यां शक्रोच्छ्रायः । तदाह गर्गः—

“ सिंहं गते दिनकरे सितचारुपक्षे हर्याद्यपादमुपगच्छति वै शशाङ्के ।
उत्तिष्ठते विविधमन्दिरवृन्दवन्द्यो याम्यां ततो दिशि निषीदति वज्रपाणिः” इति॥

अत्र च हरिशब्देन हरिदैवतं श्रवणमुपलक्ष्यते । तदपि च प्रदर्शनार्थम् । यतः स एवाऽऽह—

“ द्वादश्यां तु सिते पक्षे मासि प्रोष्ठपदे तथा ।
शक्रमुत्थापयेद्राजा विश्वश्रवणवासवे ” इति ॥

विश्वशब्देन वैश्वदेवमुत्तराषाढानक्षत्रमुपलक्ष्यते । वासवशब्देन वसुदैवतं धनिष्ठानक्षत्रम् । तेन द्वादश्यामेव शक्रोच्छ्रायः ।

गौतमः—

---

१ क. °तुर्थ्यां चैव स° । २ ग. °षे तु न । ३ ख. ग. °ते त्रि° । ४ ग. °क्रचापे त° । ५ ख. °चारप° । ६ ग. °सरे । इ° । ७ ग. °सरश° ।

वसिष्ठः-" उल्काविद्युत्समासे त्रिरात्रमुल्काविद्युत्सज्योतिषमपर्तावाकालिकम् " ।

उल्कायां वसन्ते वर्षासु विद्युति दृष्टायां सज्योतिषमनध्यायः । दिवेत्यर्थः । अपर्तावुक्तादृतोरन्यत्र विद्युत्युल्कायां वा द्योतमानायामकालिके द्वितीयेऽहनि दर्शनकालं यावदनध्यायः कर्तव्य इत्यर्थः ॥ १४५ ॥

अपि च—

**पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ॥**
**ऋतुसंधिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य वा ॥१४६॥**

शुक्लेकृष्णयोः पक्षयोः पञ्चदश्यां चतुर्दश्यामष्टम्यां च तथा राहुसूतके चन्द्रसूर्योपराग ऋतुसंधिषु ऋतूनां वसन्तादीनां परस्परसंधिषु श्राद्धिकं भुक्त्वा प्रतिगृह्य चाहोरात्रमनध्यायः कार्यः । राहुसूतकं राहुदर्शनम् । श्राद्धसंबद्धं श्राद्धिकम् । तत्पक्कं भुक्त्वाऽऽमं च प्रतिगृह्याहोरात्रं नाधीयीत ।

नृसिंहपुराणात्—" महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।
तथाऽक्षततृतीयायां शिष्यान्नाध्यापयेद्द्विजः ॥
माघमासे तु सप्तम्यां रथाख्यायां तु वर्जयेत् ।
नीयमानं शवं दृष्ट्वा महीस्थं वा द्विजोत्तमः " ॥

महानवमी, अश्वयुक्शुक्लपक्षस्य । महाद्वादशी कार्तिकशुक्लपक्षस्य । भरणी प्रोष्ठपद्यनन्तरा । अक्षततृतीया वैशाखशुक्लपक्षस्य । रथाख्या सप्तमी माघशुक्लपक्षस्य ।

नाधीयीतेत्यनुवृत्तौ गौतमः—

" कार्तिकीफाल्गुन्याषाढीपौर्णमासीस्तिस्रोऽष्टकास्त्रिरात्रमन्त्यामेके " ।
उक्तपौर्णमासीप्रभृतित्रिरात्रमित्यर्थः । अष्टकाशब्देनाष्टकाकर्माङ्गभूतं सप्तम्यादित्रिरात्रमुपलक्ष्यते । अन्त्याऽष्टका माघी । तामेवानध्ययननिमित्तामेक आहुः ।

पैठीनसिः—"पौषप्रभृतयः कृष्णे मवास्तिस्रोऽष्टका मार्गशीर्षप्रभृतय इत्येके " ।
शौनकस्तु—" हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः " इत्याह ।
शातातपः—" पञ्चदश्यां चतुर्दश्यामष्टकासु महोत्सवे ।
प्रदोषे च त्रयोदश्यामष्टम्यां प्रतिपद्यपि ॥

१ क. घ. 'लिकं द्वि° । २ ख. ग. 'क्लपक्षकृष्णपक्षचतुर्दश्यामष्टम्यां पञ्चदश्यां च । ३ ख. शौनकः– । प° । ४ क. °पि । पुराणात्–मे° ।

किं च—

संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ॥
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ १४५ ॥

सायं प्रातः संध्ययोर्मेघध्वनावसंध्ययोरपि निर्घाते भूमिचलन उल्कापाते वेदाध्ययनं समाप्याऽऽरण्यकवेदभागं चाधीत्य द्युनिशमहोरात्रमनध्यायः कार्यः।

हारीतः—"सायंसंध्यास्तनिते रात्रिं नाधीयिरन्। प्रातःसंध्यास्तनिते चाहोरात्रम्"।

आपस्तम्बः—

"संधावनु[1] स्तनिते रात्रिं स्वप्नपर्यन्तं विद्युत्युपव्युषं यावेता[2] गां कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायो दहेऽपररात्रे स्तनयित्नुनोर्ध्वमर्धरात्रादित्येके"।

अस्यार्थः—संधावनु अहोरात्रसंधिलक्षिते काले स्तनिते मेघध्वनौ रात्रिमनन्तरां नाधीयीत। स्वप्नपर्यन्तं स्वप्नवर्जनान्तं यावत्। आन्याय्यादुत्थानादित्यर्थः। उपव्युषमपव्युषासि विद्युति द्योतमानायाम्। अथ वा शम्याप्रासपरिमिते देशे स्थिता गौः कृष्णा लोहितेति वा विज्ञायते। यदाऽपररात्रे द्योतमानायां विद्युति प्रदोषसहितमहरनध्यायः। दहेऽल्पेऽपररात्रे स्तनयित्नुना गर्जितेन निमित्तेन सप्रदोषमहरनध्यायः। अथ वोर्ध्वमर्धरात्रात्स्तनयित्नौ जाते सप्रदोषमहरनध्याय इति।

मनुस्तु निर्घातादिष्वाकालिकमनध्यायमाह—

"निर्घाते भूमिचलने ज्योतिषां चापसर्जने।
एतानाकालिकान्विद्यादनध्यायानृतावपि"॥

ऋतावपि वर्षास्वपीत्यर्थः। आकालिको निमित्तसमयपर्यन्तः। तथा—

"चौरैरुपप्लुते ग्रामे संभ्रमे चाग्निकारिते।
आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च" इति॥

ततश्चाऽऽकालिकाहोरात्रयोर्विकल्पः। एवं कल्पान्तरेष्वपि।

यमः—"शक्रध्वजनिमित्तेषु उल्कापाते तथैव च।
अनध्यायस्त्रिरात्रं तु भूमिकम्पे तथैव च"॥

---

१ ख. ग. संध्याव°। २ ख. घ. °वतां गां।

उपाकर्मण्युत्सर्गे च कृतेऽध्ययनकालविधिशेषत्वेन दिनविशेषपर्युदासमाह—

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ॥
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥ १४४॥

त्र्यहमहोरात्रत्रयमनध्यायोऽध्ययनवर्जनं कार्यम्। अत्र निमित्तं शिष्यर्त्विग्गुरुबन्धुषु प्रेतेष्विति। गुरुराचार्यो ग्राह्यः। तथा च मनुः—

" त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति " इति।

बन्धवोऽत्रासपिण्डाः। सपिण्डेषु दशाहादिविधानात्। उपाकर्मोत्सर्गयोः कृतयोस्त्रिरात्रमनध्याय इत्यनुषङ्गः। मनुस्तूत्सर्गे पक्षिणीमेकाहं त्रिरात्रं च विकल्पेनानध्यायमाह—

" यथाशास्त्रं तु कृत्वैवमुत्सर्गं विधिवद्बहिः।
विरमेत्पक्षिणीं रात्रिं यद्वाऽप्येकमहर्निशम् " इति॥

स्वशाखायाः श्रोत्रियेऽध्येतरि मृते तथा त्र्यहमनध्याय इत्यर्थः।

आपस्तम्बः—

" श्रावण्यां पौर्णमास्यामनध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत। तथा प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत्। तथोपाकरणादि। आ उत्सर्जनादध्यापयितुर्नियमो लोमसंहरणं मांसं श्राद्धं[2] मैथुनं वर्जयेत्। ऋतावेव जायां यायात् "।

ऋतुकालाद्यद्धीत्यर्थः।

" यथागमं शिष्येभ्यो विद्यासंप्रदाने नियमेषु च युक्तः स्यात्। एवं वर्तमानः पूर्वापरान्संबन्धानात्मानं च क्षेमे युनक्ति "।

गौतमः—

" श्रावणादिवार्षिकं प्रोष्ठपदीं चोपाकृत्याधीयीत। छन्दांस्यर्धपञ्चमान्मासान्पञ्च दक्षिणायनं वा मास्युत्सृष्टलोमा न मांसं भुञ्जीत द्वैमास्यो वा नियमैर्मैथुनवर्जी "।

समावृत्तविषयमेतत्। अत एव शौनकः—

" अधीयीत समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयेत्येके, प्राजापत्यं तत् " इति।

तज्जायोपगमनं प्राजापत्यमित्यर्थः॥ १४४॥

---

१ ख. ग. °शाखाश्रो°। २ ख. ग. घ. घ. श्राद्धे। ३ ग. घ. °मानं मां°। ४ क. °त। द्वौ मासौ वा। ५ क. घ. °यमः। ब्रह्मचारी मैथु°।

" श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
युक्तच्छ(श्छ)न्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् " ॥

छन्दांस्युपाकृत्य तानेव पञ्चमानेव मासानधीयीत । अर्धः पञ्चमो मासो येषां ते तथोक्ताः । उपाकर्मप्रभृति सार्धांश्चतुरो मासाञ्शुक्लकृष्णपक्षेषु निरन्तरं स्वाध्यायमधीयीतेत्यर्थः ।

पुराणात्—" उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च ।
ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः " ॥

तथा—" गौतमादीनृषीन्सप्त कृत्वा दर्भमयान्द्विजः ।
पूजयित्वा यथाशक्ति तर्पयेद्दचमुद्धरेत् " ॥

गृहस्थस्यापि ग्रहणाध्ययनाधिकारं ज्ञापयितुं तत्प्रकरणेऽध्ययनविधिः ।

अत एव शौनकः[1]—

" समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे । जायोपेयेत्येके " इति ॥१४२॥

उत्सर्जनविधिमाह—

**पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥**
**जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ १४३ ॥**

पुष्येण युक्ता पौर्णमासी पौषी सा यस्मिन्मासि स पौषः । तस्य रोहिण्यां चन्द्रयुक्तायां तस्यैव चाष्टकायां कृष्णाष्टम्यामित्यर्थः । जलान्ते जलसंनिधौ ग्रामाद्बहिश्छन्दसां वेदानामुत्सर्गं परित्यागं कुर्यात् । अत्र च्छन्दोभिस्तदध्ययनं लक्ष्यते । येन प्रकारेणोपाकर्मप्रभृति शुक्लकृष्णपक्षेषु वेदाध्ययनं कृतं तत्प्रकारमिदानीं परित्यजेत्, न तु सर्वात्मना । अत एव मनुः—

" अतः परं तु च्छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु संपठेत् "

इत्युत्सर्गानन्तरं[2] कर्माध्ययने प्रकारान्तरमुक्तवान् । उत्सर्गश्च यथाविधि यथागृह्यशास्त्रात्कर्तव्यः ।

अत्र च मनुः—" पुष्ये तु च्छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि " ॥

श्रावण्यां यद्युपाकरणं तदोत्सर्जनं[3] पौषस्य शुक्लप्रतिपदि पूर्वाह्णे । अथ प्रोष्ठपद्यां तदा माघस्य ।

१ ग. गौतमः । २ क. घ. °रं छन्दोध्य° । ३ ख. ग. घ. °नं पुष्यस्य ।

( स्नातकव्रतप्रकरणम् ५)

अतस्तत्प्रतिग्रहो[1] दशगुणदोषो भवति । अतस्तत्प्रतिग्रहं वर्जयेत् । सूना प्राणिवधस्थानं, तद्वान्सूनी प्राणिघातकः । चक्री तैलिकः । ध्वजी सुराविक्रयी । परहृदयं विवशयतीति[2] वेश्या । यद्वा वेशेन जीवतीति वेश्या । वेशः शृङ्गारः । नराधिपो राजा । स च पूर्वोक्तविशेषण एव दुष्टः । तदीयस्य प्रतिग्रहस्य निषिद्धत्वात् ।

तथा च मनुः—" दश सूनासहस्राणि यो वाहयति सौनिकः ।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः ॥
यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः ।
स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
नरकं कालसूत्रं च महानरकमेव च ॥
संजीवनं महावीचितापनं संप्रतापनम् ।
संघातं च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥
लोहशङ्कुमृबीसं[3][4] च पन्थानं शाल्मलीं[5] नदीम् ।
असिपत्रवनं चैव लोहचारकमेव च ॥
एतद्विदन्तो विद्वांसो ब्राह्मणा ब्रह्मवादिनः ।
न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोभिकाङ्क्षिणः " ॥ १४१ ॥

अध्ययनविध्यङ्गान्याह—

**अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ॥**
**हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥१४२॥**

अधीयन्त इति अध्यायाः स्वाध्यायाः । तेषां संस्कारकमुपाकर्माख्यं कर्म श्रावण्यां पौर्णमास्यां कार्यम् । चन्द्रमसा युक्तः श्रवणो नक्षत्रं यस्यां सा श्रावणी । अथवा श्रवणे नक्षत्रे सप्तम्यर्थे श्रवणशब्दादेन्[6]प्रत्ययः । अथवा श्रावणस्य पञ्चम्यां हस्ते नक्षत्रे चोपाकर्म कार्यमोषधिभावे सति । ओषधीनां व्रीहिप्रभृतीनां भावः प्रादुर्भावोऽङ्कुरोदय इति यावत् । एतच्च विशेषणं श्रावणीश्रवणयोरपि ग्राह्यम् । यदा श्रावण्यां न प्रादुर्भावस्तदा भाद्रपदश्रवणेन कार्यम् । अत्र मनुः—

---

१ क. °ग्रहे द° । २ ग. विवेश° । घ. विशती° । ३ घ. °शङ्खं सभीमं च । ४ ग. °ङ्कुसनीसं । ५ क. ग. शल्मलीं । ६ क. ख. °नशब्दः । अ° ।

आपस्तम्बः–"पाणिसमूहं ब्राह्मणस्य नाप्रोक्षितमधितिष्ठेत्" ।

ब्राह्मणेन पाणिनोपलिप्तमप्रोक्षितं नाधितिष्ठेदित्यर्थः ॥ १३९ ॥

किंच--

नाऽऽचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित् ॥
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥१४०॥

धयन्तीं वत्सं पाययन्तीं गां परस्मै नाऽऽचक्षीत न कथयेत् । द्वारं विहाय ग्रामं न प्रविशेत् । लुब्धस्य सति धने व्ययमकुर्वाणस्योच्छास्त्रवर्तिनोऽतिक्रान्तशास्त्रस्य च राज्ञो धनं न प्रतिगृह्णीयात् ।

बौधायनः—" गां पाययन्तीं न परस्मै ब्रूयात् " ।

मनुः—" अद्वारेण च नातीयाद्ग्रामं वा वेश्म[1] नाऽऽवृतम् " ॥

गौतमः—" न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत । संभाष्य पुण्यकृतो मनसा ध्यायेत् । ब्राह्मणेन सह वा संभाषेत । अधेनुं[2] धेनुंभव्येति ब्रूयात् । अभद्रं भद्रमिति ब्रूयात् । कपालं भगालमिति । मणिधनुरितीन्द्रधनुः । गां धयन्तीं परस्मै नाऽऽचक्षीत । न चैनां वारयेत् " ।

विष्णुः—" न परक्षेत्रे चरन्तीं गामाचक्षीत नोत्पातं प्रदर्शयेत् " ।

मनुः—" कुलाकुलं रहस्यार्थं संचरेन्नानिमित्ततः " ।

कुलं गृहम् ।

वसिष्ठः—" नावृतो यज्ञं गच्छेद्यदि[3] व्रजेत्प्रदक्षिणं पुनराव्रजेत् " ।

गौतमः—" न यज्ञमवृतो[4] गच्छेद्दर्शनाय तु कामम् " ।

मनुः—" नमस्कर्तुं व्रजेत्कामं दिदृक्षुर्यज्ञकर्म वा " ॥ १४० ॥

उच्छास्त्रवर्तिनो राज्ञः प्रतिग्रहे दोषभूयस्त्वमाह--

प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ॥
दुष्टा दशगुणं पूर्वात्पूर्वादेते यथोत्तरम् ॥ १४१ ॥

प्रतिग्रहविषये सूनिप्रभृतीनां यो य उत्तरः स पूर्वस्माद्दशगुणदोषो भवति ।

---

१ क. घ. °श्म वाऽऽवृ° । २ क. धेनुर्भवेति । ३ क. ग. °दि गच्छेत्प्र° । ४ ग. घ. °ज्ञमावृ° ।

आयुरारोग्यादिविरुद्धं कर्म प्रेतधूमं नदीतरणं च केशादिष्ववस्थानं च वर्जयेत् । मनुः—

" बालातपं प्रेतधूमं वर्ज्यं भिन्नं तथाऽऽसनम् ।
न च्छिन्द्यान्नखरोमाणि दन्तैर्नोत्पाटयेन्नखान् ॥
न मृल्लोष्टं न मृद्नीयान्न च्छिन्द्यात्करजैस्तृणम् ।
न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम् ॥
लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च " ॥

आयतिः परिणामः । कर्मशब्देनात्र संकल्प उच्यते । तस्य निष्फलतां मिथ्यात्वं संकल्पितानुष्ठानरूपं न कुर्यात् । लोष्टमर्दनादिषु ताच्छील्यं वर्ज्यम् ।

तथा—" न संहताभ्यां पाणिभ्यां कण्डूयेताऽऽत्मनः शिरः ।
न स्पृशेच्चैनदुच्छिष्टो न च स्नायाद्विना ततः " ॥

ततः शिरसा विनेत्यर्थः ।

" केशग्रहान्प्रहारांश्च शिरस्येतानि वर्जयेत् ।
शिरःस्नातश्च तैलेन नाङ्गं किंचिदुपस्पृशेत् " ॥

तैलेन शिरःस्नातस्तेनैव तैलेन नाङ्गं किंचिदुपस्पृशेदित्यन्वयः । अथ वाऽन्येनापि तैलेन तदहरङ्गं नोपस्पृशेत् ।

विष्णुः—" न संहताभ्यां पाणिभ्यां शिर उदरं च कण्डूयेत " ।

नदीतरणं चात्र बाहुभ्यां सांशयिकप्लवेन[च] वर्जयेत् ।

तथा च मनुः—" न बाहुभ्यां नदीं तरेत् " ।

वसिष्ठः—" नावं च सांशयिकीं नाधिरोहेत् " ।

मनुः—" अधितिष्ठेन्न केशांश्च न भस्मास्थिकपालिकाः ।
न कार्पासास्थि[1] न तुषान्दीर्घमायुर्जिजीविषुः " ॥

तथा—" उद्वर्तनमपस्थानं भक्तं[2] विण्मूत्रमेव च ।
श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः " ॥

विष्णुः—" न चतुष्पथमधितिष्ठेन्न रात्रौ वृक्षमूलं न शून्यालयं न सूनाबन्धनागारम् " ।

गौतमः—" अमेध्यं नाधितिष्ठेत्" । शङ्खलिखितौ—"नाहेः पदमधितिष्ठेत् । न तृणशर्कराकूटेषु तिष्ठेत् । " पदं स्थानम् ।

---

१ क. घ. न कर्पा° । २ क. ग. घ. रक्तं ।

मुखेनैव धमेदग्निं मुखादेष व्यजायत ।
नाग्निं मुखेनेति च यल्लौकिकं योजयन्ति तत् " ॥

विष्णुः—" नासृङ्न विषमग्नौ प्रक्षिपेत् " ।

देवलः—" अग्नौ न प्रक्षिपेदग्निमद्भिर्न शमयेत्तथा " ।

आपस्तम्बः–" अग्निं नाप्रयत आसीदेदिषुमात्रादित्येके खट्वायां च नोपदध्यात् " ।

गौतमः—" नाग्निमपश्च युगपद्धारयेत् " ॥ १३७ ॥

अपि च—

**जलं पिबेन्नाञ्जलिना शयानं न प्रबोधयेत् ॥**
**नाक्षैः क्रीडेत धर्मघ्नैर्व्याधितैश्च न संविशेत् ॥ १३८ ॥**

सव्यदक्षिणौ हस्तौ युक्तावञ्जलिः । तेन जलं न पिबेत् । शयानं निद्रितं न प्रबोधयेत् । अक्षैर्न क्रीडेत् । धर्मघ्नैः पतितादिभिर्व्याधितैश्च पुरुषैः सह न संविशेत् । अत्र च संवेशनं संकरोपलक्षणार्थम् । अत एव मनुः—

" न संविशेत पतितैर्न चण्डालैर्न पुक्कसैः ।
न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥
सहाऽऽसनं भोजनं च पतितैः सह वर्जयेत् ।
उपपातकिभिश्चान्यैः कुर्वद्भिः कर्म निन्दितम् " ॥

क्रीडाग्रहणं व्यसनमात्रोपलक्षणार्थम् । तथा च मनुः—

" न नृत्येन्नैव गायेच्च न वादित्राणि वादयेत् ।
नाऽऽस्फोटयेन्न क्ष्वेडेच्च न च रक्तं विरागयेत् " ॥

रक्तमनुरक्तम् । अनिषिद्धेऽर्थे न विरागयेत् । विरागयुक्तं न कुर्यादित्यर्थः ।

तथा—" न कुर्वीत वृथा चेष्टां न वार्यञ्जलिना पिबेत् ।
नोत्सङ्गे भक्षयेद्भक्ष्यं न जातु स्यात्कुतूहली " ॥

नित्ययोगेऽतिशये वा *प्रत्ययः ॥ १३८ ॥

किं च—

**विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ॥**
**केशभस्माङ्गारजलकपालेषु च संस्थितिम् ॥ १३९ ॥**

---

* कुतूहलीत्यत्रेनिप्रत्ययो भूमनिन्देत्यत्रोक्ते नित्ययोगेऽतिशये वाऽर्थ इत्यर्थः ।

---

१ ख. °षुमात्रा° । २ क. घ. °दध्यात् । ३ ख. घ. नृत्येन्नैव । ४ क. °न्नचाऽऽक्ष्वेडेन्न च । ५ क. घ. ङ. °भस्मतुषाङ्गा° ।

( स्नातकव्रतप्रकरणम् ५)

नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् ।
न पश्येत्प्रसुवन्तीं वा तेजस्कामो द्विजोत्तमः " ॥

**विष्णुः**—" न क्रुद्धस्य गुरोर्मुखमीक्षेत । न तैलोदकयोः स्वां छायां न मलवत्यादर्शे न पत्नीं भोजनसमये न स्त्रियं नग्नां कं चन मेहमानं न चाऽऽलानभ्रष्टं कुञ्जरं न च विषमस्थं[1] वृषादियुद्धं नोन्मत्तं न मत्तम् " ।

**देवलः**—" पतितव्यङ्गचण्डालोच्छिष्टान्वा नावलोकयेत् ।
अनुदृष्टिगतैरेतैरसंभाषो नृणां वरम् " ॥ १३५ ॥

**अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयन्[2] ॥**
**वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥१३६॥**

देवे वर्षत्यप्रावृतशिराः—" अयं मे वज्रः पाप्मानमपहनत्" इति मन्त्रमुच्चारयन्गच्छेत् । प्रत्यक्शिराः स्वापं च वर्जयेत् ॥ १३६ ॥

अपि च—

**ष्ठीवनासृक्शकृन्मूत्र[3]विषाण्यप्सु न निक्षिपेत् ॥**
**पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥ १३७ ॥**

ष्ठीवनं मुखेन त्यज्यमानं लालादि, असृग्रुधिरं, शकृत्पुरीषं, मूत्रविषे प्रसिद्धे । रेतांसीति पाठे रेतोऽपि प्रसिद्धम् । एतान्युदके न संक्षिपेत् । पादप्रतापनाभिलङ्घने अग्निं प्रति न कुर्यात् ।

**यमः**—" चैत्यवृक्षं न वा छिन्द्यान्नाप्सु श्लेष्माणमुत्सृजेत् ।
न शुक्रं न विषं मूत्रं न पुरीषं न लोहितम् ॥
नास्थिभस्मकपालानि न केशान्न च कण्टकान् " ।

**चितौ भवो वृक्षश्चैत्यः । [चितिः] श्मशानम् ।**

**मनुः**—" नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥
अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् ।
न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेत् " ॥

**कात्यायनः**—" जुहूषंश्च हुते चैव पाणिसूर्पस्फ्यदारुभिः[4] ।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना ॥

---

१ ख. ग. 'मस्थो वृ° । २ क. °रयेत् । व° । ३ ङ. °त्ररेतांस्यप्सु । ४ क. °भिः । काष्ठच्छुरिकास्फ्यो यज्ञाङ्गम् । न कुर्याद° ।

विष्णुः—“ नोषरे न पराशुचौ । नोद्यानोदकसमीपयोः ।
नाऽऽकाशे मूत्रपुरीषे कुर्यात् ” ।

शङ्खलिखितौ—“ नासंवृते मूत्रपुरीषे उत्सृजेत् । न सान्तर्वासा न निर्वासाः ” ॥

किंच—

**न प्रत्यग्न्यर्कगोसोमसंध्याम्बुस्त्रीद्विजन्मनः ॥ १३४ ॥**

अग्न्यादीन्प्रति अग्न्याद्यभिमुखस्तान्पश्यन्वा न मेहेत् । तथा च गौतमः—
“ न वाय्वग्निविप्रादित्यापो देवता गाश्च प्रति पश्यन्वा मूत्रपुरीषामेध्यान्युदस्येत् । नैता देवताः प्रति पादौ प्रसारयेत् ” ।

यमः—“ प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा ॥
प्रत्यादित्यं प्रत्यनिलं प्रति गां च प्रति द्विजम् ।
प्रति सोमं प्रति जलं प्रति संध्ये च नित्यशः ॥
हन्ति मेहयतः प्रज्ञां प्रति पन्थानमेव च ।
मेहयान्ति य एतांश्च ते भवन्ति गतायुषः ” ॥

आपस्तम्बः—“ न सोपानत्को मूत्रपुरीषे कुर्यात् ”

किंच—

**नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम्[1] ॥**
**न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ १३५ ॥**

सूर्यं विवस्त्रां स्त्रीं स्त्रियं, तथा संबद्धमैथुनां, मूत्रं पुरीषं च न पश्येत् । अशुचिश्चेद्राहुतारकाश्च ।

मनुः—“ नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदा चन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ” ॥

विष्णुः—“ नाऽऽदित्यमीक्षेत वाससाऽतिरोहितं न चाऽऽदर्शजलाद्युपगतम् ” ।

हारीतः—“ न नग्नां स्त्रियं पुरुषं वा वीक्षेत नोदयास्त[2]मय[3]यौ चन्द्रार्कौ ” ।

गौतमः—“ न नग्नां परयोषितमीक्षेत ” ।

आश्वलायनः—“ न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनात् ” ।

स्वभार्याविषयमेतत् ।

मनुः—“ नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवन्तीं(तीं) जृम्भमाणां वा न चाऽऽसीनां यथासुखम् ॥

---

१ क. घ. ङ. संस्पृष्ट° । २ क. °स्तसमये च° । ३ ख. °मययोश्चन्द्रा° ।

( स्नातकव्रतप्रकरणम् ५)

शस्तान्येतानि धर्मज्ञ यच्च स्यान्मनसः शुभम् ।
मनसस्तुष्टिरेवात्र परं व्रजनकारणम् ॥
एकतः सर्वलिङ्गानि मनसस्तुष्टिरेकतः । छा।।दः ।
यानोत्सुकत्वं मनसः प्रहर्षः सुस्वप्नलाभो विजयप्र[1]कं ग्रहानि " ॥
मङ्गल्यसिद्धिप्रवणं मनश्च ज्ञेयानि नित्यं विजया[3] ठम् । नन्द्यावर्तादयः

आरूढनरं यानं नृवर्धमानम् । देवस्नानार्थं पीठं भद्र प्रसिद्धाः ।
सुवर्णदार्वादिकृताः संनिवेशा ज्योतिःशास्त्रवास्तुविद्या

विष्णुः—

" व्यङ्गं दृष्ट्वा निवर्तेत विरक्तमुण्डजटिलवामन[4] व्राजितांश्च[5] लवणरज्जुनिग-
डांश्च । वीणाचन्दनार्द्रशाकोष्णीषालकार कुमारीस्तु[6] प्रस्थानकालेऽभिन-
न्देत " इति ॥ १३३ ॥

न मेहेत नदीछायावर्त्म ष्ठाम्बुभस्मसु ॥

कुर्यात् । नद्यामनुदकायाम् । सोद-
नद्यादिषु मेहनं मूत्रपुरीषोत्सर्गं न । छायायां लोकोपजीव्यायाम् ।
कायां पुनरम्बुग्रहणादेव निषेधः सिद्धः त्र पथि न च भस्मनि
तथा च वसिष्ठः–" न नद्यां मेहनं कुर्यान्नोप्ते न शाद्वलोपजीव्यच्छायासु "।
न गोमये न कृष्टे

गोष्ठो गोव्रजः । तथा मनुः— स्मनि न गोव्रजे ।

" न मूत्रं पथि कुर्वीत न भस्मनि न च पर्वते ॥
न फालकृष्टे न जले न चित्यां कदा चन ।
न जीर्णदेवायतने न वल्मीके न पथि स्थितः ॥
न ससत्त्वेषु गर्तेषु न गच्छन्नपि संस्थितः ।
न नदीतीरमासाद्य न च पर्वतमस्तके " ।

ग्रहणं तदत्यन्तापदि मस्तकादन्यत्रानुग्रहा-
पर्वतग्रहणे सत्यपि यत्पर्वतमस्तक
र्थम् । वतायतनानि च ।

यमस्तु— " तुषाङ्गारकपालानि क्षेत्राणि च खलानि च " ॥
राजमार्गश्मशानापुरीषे कुर्यात् । न कृष्टक्षेत्रे न सस्य-

देवलः—" न चत्वरोपद्वारयोर्यज्ञियानां वृक्षाणामधस्तात् " ।
पूर्णे न यज्ञभूमौ

१ ग. सुखप्रलाभो विजयप्रणा २ क. प्रदश्च । म° । ३ ग. °सिद्धिः प्र° । ४ ग. °नप्राव्राजिकांश्च । ५ ख. °जिकांश्च ६ ग. °रीरत्नप्र° । ७ घ. हारीतः ।

अप्रशस्ते तथा ज्ञेये परिवेश(ष)प्रवर्षणे ।
दृष्टे निमित्ते प्रथममभङ्गल्यविनाशनम् ॥
शंकरं संस्तुयाद्विद्वांस्तथैव मधुसूदनम् ।
द्वितीयं तु ततो दृष्टे प्रतीपं प्रविशेद्गृहम् ” ॥

सहजं नपुंसकम् । पुमानेव कारणान्तरादपेतपुंस्त्वः षण्ढः ।

“ अथेष्टानि प्रवक्ष्यामि मङ्गलानि तथाऽनघ ।
श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भस्तथैव च ॥
जलजानि च पुष्पाणि मांसं मत्स्याश्च भार्गव ।
गावस्तुरङ्गमातङ्गौ बद्ध एकपशुस्त्वजः ॥
त्रिदशाः सुहृदो विप्रा ज्वलितश्च हुताशनः ।
गणिकाश्च महाभाग दूर्वा चाऽऽर्द्रं च गोमयम् ॥
* रुक्मं रूप्यं तथा ताम्रं सर्वरत्नानि चाप्यथ ।
ओषध्योऽपि च धर्मज्ञ वचा सिद्धार्थकास्तथा ॥
नृवर्धमानयानं च भद्रपीठं तथैव च ।
खङ्गं चक्रं पताकां च मृद्मायुधमेव च ॥
राजलिङ्गानि सर्वाणि शवं रुदितवर्जितम् ।
घृतं दधि पयश्चैव फलानि विविधानि च ॥
स्वस्तिकं वर्धमानं च नन्द्यावर्तं सकौस्तुभम् ।
नद्यश्च चित्रविन्यस्ता मङ्गलानि पराणि च ॥
अक्षताश्च तथा मुख्यास्तथा दर्पणमेव च ।
अञ्जनं रोचना चैव भृङ्गारं माक्षिकं तथा ॥
शङ्खमिक्षुस्तथा भक्ष्या वाचश्चैव तथा शुभाः ।
वादित्राणां शुभः शब्दो गम्भीरश्च मनोहरः ॥
गान्धारषड्जऋषभा ये च शब्दास्तथा स्वराः ।
मेघाः शस्ताः शुभाः स्निग्धा गजबृंहितशब्दिताः ॥
अनुलोमा तडिच्छस्ता शक्रचापं तथैव च ।
अनुलोमा ग्रहाः शस्ता दिक्पतिस्तु विशेषतः ।
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम् ॥

---

+ इत आरभ्य सार्धश्लोको न विद्यते ग. पुस्तके ।

---

१ ग. °वर्हणे । २ क. °तीये तु तथा दृ° । ३ ग. दृष्टं । ४ क. °म् । नपुंसकं सहजम् । पु° । ५ ख. ग. °कुम्भं तथै° । ६ ख. च रुद्र° । ७ क. ग. घ. °त संनिभाः । अ° ।

मङ्ग[1]ल्यानि च सर्वाणि पथि कुर्यात्प्रदक्षिणम् ॥
अमङ्गल्यानि वामानि कर्तव्यानि विजानता " इति ॥
" औषधानि नियुक्तानि धान्यं कृष्णं च यद्भवेत् ।
कार्पासं च तृणं शुष्कं शुष्कगोमयमेव च ॥
इन्धनं च तथाऽङ्गारं यत्र सर्पौ तथाऽशुभौ ।
अभ्यक्तो मलिनः पाण्डुस्तथा नग्नश्च मानवः ॥
मुक्तकेशो ग[2]दार्तश्च कषायाम्बरधारकः ।
उन्मत्तकस्तथा षण्ढो दीनश्चाथ नपुंसकम् ॥
अयः पङ्कं तथा चर्म[3] केशाबन्धनमेव च ।
तथैवोद्धृतसाराणि पिण्याकादीनि यानि च ॥
चण्डालश्वपचाद्याश्च नरा बन्धनपालकाः ।
वर्ध[4]काः पापकर्माणो गर्भिणी स्त्री तथाऽऽतुरः ॥
तुषभस्मकपालास्थिभिन्नभाण्डानि यानि च ।
रिक्तानि चैव भाण्डानि मृतं साक्रन्दमेव च ॥
एवमादीनि चान्यानि अशस्तान्यभिदर्शने ।
अश[5]स्तो वाद्यशब्दश्च भिन्नभेर[6]वझर्झरः ॥
एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः ।
गच्छेति पश्चाद्धर्मज्ञ पुरस्तात्तु विगर्हितः ॥
क्व यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य च ।
अन्ये शब्दाश्च येऽनिष्टास्ते विपत्तिकराः स्मृता[7]ः ॥
ध्वजादिषु तथा स्थानं क्रव्यादीनां विगर्हितम् ।
स्खलनं वाहनानां च वस्त्रसंघस्तथैव च ॥
निर्गच्छतश्च द्वारादौ शिरस्याहननं भवेत् ।
छत्रध्वजादिवस्त्राणां पतनं चाशुभं भवेत् ॥
वायुश्च कर्कशो रूक्षः सर्वदिग्भ्यः समुत्थितः ।
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विजः ॥
अनुकूलो मृदुः स्निग्धः सुखस्पर्शः शुभावहः ।
क्रूरा रूक्षस्वराश्चण्डाः क्रव्यादाश्च विगर्हिताः ॥

---

१ ग. °ङ्गलानि । २ ग. गर्दभश्च । ३ ग. 'र्मकक्षव' । ४ ख. °धकर्माप° । ५ ख. °स्तोद्याद्य° । ६ क. घ. °वजर्जरः । ७ ग. °ताः ६ वज्रादि°।

मैत्रं मैत्री । बहिष्करणं त्यागः ।

देवलः—" गृहे पररहस्यानि नैवोपशृणुयात्क्वचित् ।
न ब्रूयात्पररन्ध्राणि प्रकाशे जनसंसदि " ॥

यमः—" नैव ब्रूयान्न शृणुयाद्दुष्टवाक्यं कथंचन ।
ब्राह्मणानां विशेषेण कदाचिदपि केनचित् ॥
दुष्टवाक्यं न वक्तव्यं ब्राह्मणानां कथंचन ।
तूष्णीमासीत निन्दायां न ब्रूयात्किंचिदुत्तरम् ॥
ब्राह्मणानां परीवादं नैव कुर्यान्न कारयेत् ।
यद्ब्राह्मणेषु कुशलं तदेवाऽऽशु समाचरेत् ॥
ब्राह्मणानां परीवादो निन्दा यत्र प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः " ॥ १३२ ॥

किंच—

**दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः ॥**

दाक्षायणं सुवर्णं, ब्रह्मसूत्रं यज्ञोपवीतं, वेणुर्वंशः । एतद्वान्कमण्डलुसहितश्च भवेत् ।

मनुः—" वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले " ॥

वेदो दर्भमुष्टिः । रौक्मे सौवर्णे ।

लौगाक्षिः—" अनुपसृष्टं सुवर्णं धारयेत् " । अनुपसृष्टं कालिकारहितम् ।

बौधायनः—

" स्नातकोऽन्तर्वासाः सोत्तरीयं वैणवं दण्डं धारयेत्सोदकं च कमण्डलुम् ।
द्वे यज्ञोपवीते उष्णीषमजिनमुपर्युपानहौ छत्रं च " ।

अपि च—

**कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ १३३ ॥**

देवादीन्प्रदक्षिणं कुर्यात् । दक्षिणहस्तभागे कुर्वन्गच्छेदित्यर्थः ॥

मनुः—" मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणं प्रकुर्वीत प्रज्ञातांश्च वनस्पतीन् " ॥

मृदमुद्धृताम् ।

मार्कण्डेयः—" चतुष्पथं नमस्कुर्यात्प्रख्यातांश्च वनस्पतीन् ।

---

१ क. घ. °काशं ज° । २ क. ख. घ. °त् । बौ° ।

काशेऽर्थोपघातार्थं दोषोपाख्यापनं पैशुन्यम् । अनृतं द्विविधम्— असत्यं विसंवादश्चेति । तत्र दृष्टश्रुतानुमितानामन्यथा वचनमसत्यम् । प्रागभ्युपगतानामसंप्रवर्तनं विसंवादः " इति ।

" रागाद्द्वेषाद्भयाल्लोभाद्दाक्षिण्याच्छङ्कया ह्रिया ।
दम्भात्प्रमादतश्चापि नरस्योत्पद्यतेऽनृतम् ॥
परप्राणोपघाताच्च परद्रव्यापहारतः ।
विशिष्टोऽनृतवादस्तु न वृथा कथनादिषु ॥
तस्मादनृतहेतूंस्तान्नाऽऽत्मन्युत्पादयेत्क्वचित् ।
उत्पन्नान्वा प्रशमयेत्कारणैस्तद्विघातिभिः ॥
देशराजप्रवादाच्च परार्थपरिकल्पनात् ।
नर्महासप्रसङ्गाच्च विज्ञेयं व्यर्थभाषणम् ॥
गुह्याङ्गनाङ्गसंज्ञानां वचनं निष्ठुरं विदुः ।
यदन्यद्वा वचो नीचं स्त्रीपुंसोर्मैथुनाश्रयम् ।
इत्येवं षड्विकल्पस्य दुष्टवाक्यस्य भाषणम् ॥
इह चामुत्र तत्त्यक्त्वा नाना(न)र्थमधिगच्छति ॥
हिताहितं मनुष्याणां केवलं वचसि स्थितम् ।
तस्मात्संयोजयेद्वाचमप्रमत्तः परीक्ष्य च ॥
दुश्चिकित्स्यतमं पश्चाद्दुरुक्तं हि वचो भवेत् ।
क्षिप्रं विनिपतेच्चापि वचनं दोषसंहितम् " ॥

**अत्र यमः**—" प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति ।
प्रत्यादेशो न कर्तव्यो रक्षेदात्मानमात्मन[1] " ॥

**केनापि प्रमाणेन विदितं पतितं न प्रत्यादिशेत्, न कथयेदित्यर्थः । तत्संयोगादात्मानं रक्षेत् ।**

" यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् ।
तानि पुत्रान्पशून्घ्नन्ति तूर्णं मिथ्याभिशंसिनाम् " ॥

**दक्षः**—" अनृतं पारदार्यं च तथाऽभक्ष्यस्य भक्षणम् ।
अगम्यागमनं चैव हिंसा स्तेयं तथैव च ॥
अश्रौतधर्माचरणं मैत्रधर्मबहिष्कृतम् ।
एतानि नव कर्माणि निषिद्धानि विवर्जयेत् " ॥

---

१ क. 'णि विरुद्धा' ।

विष्णुः—

" न रात्रौ वृक्षमूलमधितिष्ठेत् । न सूनाबन्धनागारौ न वृथा च नदीं तरेत् । न देवताभ्यः पितृभ्यश्चोदकमप्रदाय कूलमधितिष्ठेत् । न कूपमवलोकयेत् । न लङ्घयेत् । नैकोऽध्वानं प्रपद्येत । नाधार्मिकैः सार्धं न द्विषद्भिः । न संध्ययोर्नासंनिहितपानीयं नातितूर्णं न संततम् " ।

बौधायनः—" न पतितेन स्त्रिया चाध्वानं व्रजेत् " ॥

विष्णुपुराणे—" वर्षातपादिषु च्छत्री दण्डी राञ्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥
नोर्ध्वं न तिर्यग्दूरं वा निरीक्षन्पर्यटेद्बुधः ।
युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् " ॥

तथा—" न दुष्टं यानमारोहेत्कूलच्छायां न संश्रयेत् ।
नैकः शून्याटवीं गच्छेन्न च शून्ये गृहे वसेत् " ॥

देवीपुराणे—" नासहायो व्रजेद्रात्रौ नोत्पथे न चतुष्पथे " ।

आपस्तम्बः—" न श्रोत्रियमनभिभाष्य व्यतिव्रजेदरण्यं न स्त्रियम् " ॥

पैठीनसिः—" न गोब्राह्मणाग्न्यन्तरेण व्यपेयात् । अनुज्ञाप्य वा व्रजेत् " ।

यमः—" संनिकृष्टावधीयानौ योऽन्तरा व्रजति द्विजः ।
स भासरासभानां च योनिं व्रजति पापकृत् " इति ॥

" नाकस्मादप्रियं वदेत् " इत्युक्तं तत्प्रसङ्गादन्यदप्युच्यते—

तत्र " दोषाः " इत्यनुवृत्तौ देवलः—

" तत्र परुषवचनमपवादः पैशुन्यमनृतं वृथालापो निष्ठुरमिति वाङ्मयाश्च षट् । परेषां देशकुलजातिविद्याशिल्प[1]रूप[2]वृत्ताचारपरिच्छदशरीरकर्मजीवनानां तत्प्रत्यक्षं दोषवचनम् ।

यच्चान्यत्क्रोधसंत्रासजननं निन्दितं वचः ।
परुषं तच्च विज्ञेयं तथाऽन्यच्च तथाविधम् ॥
चक्षुष्मानिति लुप्ताक्षं चण्डालं ब्राह्मणेति च ।
प्रशंसानिन्दनं द्वेषात्परुषात्तद्विशिष्यते ॥
वृषलं वृषलेत्युक्त्वा पतितं पतितेति वा ।
सत्येनापि च दोषः स्यान्मिथ्या द्विगुणभाग्भवेत् ॥

तेषामेव परुषवचनानां परोक्षमुदाहरणमपवादः । गुरुनृपतिब[3]न्धुभर्तृमित्रस-

१ घ. °ल्पवृ° । २ ख. ग. °रूपावृ° । ३ क. °न्धुभृत्यमि° ।

**शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ॥**

शुक्लवस्त्रधरो भवेत्। तथा नीचकेशादिश्च भवेत् । नीचानि कृत्तानि केशश्मश्रुनखानि यस्य स तथोक्तः । तथा शुचिः प्रयतः सर्वदा स्यात् ।

गौतमः—" न रक्तमुल्बणमन्यधृतं वा वासो
बिभृयात् । निर्णिज्य तु कामम् " ।

अन्यधृतं तु प्रक्षाल्य कामं बिभृयादित्यर्थः । मानवेऽपरो विशेषः—

" न जीर्णमलवद्वासा भवेच्च विभवे सति " ।

तथा—" उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलंकारं छत्रं कनकमेव च " ॥

विष्णुपुराणे—" सदाऽनुपहृतं वस्त्रं प्रशस्ताश्च तथौषधीः ।
गारुडानि च रत्नानि बिभृयात्प्रयतो नरः " ॥

मार्कण्डेयपुराणे—" न चापि रक्तवासाः स्याच्चित्रासितधरोऽपि वा ।
न च कुर्याद्विपर्यासं वाससोर्न च भाषणे ॥
वर्ज्यं च विदशं वस्त्रमत्यन्तोपहतं च यत् " ।

महाभारते—" अन्यदेव भवेद्वासः शयनीयेऽन्यदेव तु ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि " ॥

**न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ १३१ ॥**

भार्यां पश्यंस्तया च दृश्यमानस्तथैकवासाश्च तिष्ठन्नाश्नीयात् ॥ १३१ ॥

**न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ॥**
**नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी ॥१३२॥**

संशयं जीवनसंशयं न प्रपद्येत । अथ वा निश्चितेऽर्थे संशयमतिशङ्कां न कुर्यात् । अप्रियमहितम् । अनृतं च शास्त्रीयकारणं विना न वदेत् । स्तेनो वा वार्धुषी वा न स्यात् ।

मनुः—" नाविनीतैर्व्रजेद्धुर्यैर्न चक्षुर्व्याधिपीडितैः ।
न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥
नातिकाल्यं नातिसायं नातिमध्यंदिने स्थिते ।
नाज्ञातेन च संगच्छेन्नैको न वृषलैः सह ॥
गवां च यानं पृष्ठेन सर्वदैव विगर्हितम् " ।

---

१ क. 'हृते वस्त्रे प्र° ।

प्राकृतोऽपि जनः किं तु यः सदाचारपालकः ।
यतस्ते वैदिकं कर्म निन्दन्त्यकृतबुद्धयः ॥
पाषण्डिनामशेषाणामप्रीतिर्वेदकर्मणि ।
ते ह्यधोगामिनः प्रोक्ता आसुरं भावमाश्रिताः " ॥

तथा—" तन्मोहितानामचिराद्विवेको याति संक्षयम् ।
क्षीणज्ञाना विकर्माणि कुर्वन्त्यहरहर्नराः ॥
निजवर्णात्मकं धर्मं परित्यज्य विमोहिताः ।
धर्मबुद्ध्या ततः पापं कुर्वन्त्यज्ञानमोहिताः ॥
ज्ञानावलेपस्तत्रैव ततस्तेषां प्रजायते ।
सुहृद्भिर्वार्यमाणास्ते पण्डितैश्च दयालुभिः ॥
प्रयच्छन्त्युत्तरं मूढाः कूटयुक्तिसमन्वितम् ।
ततस्ते स्वयमात्मानमन्यं चाल्पमतिं नरम् ॥
विकर्मणां[1] योजयन्तश्च्यावयन्ति स्वधर्मतः " ।

**विष्णुपुराणम्—**

" क्रियाहानिर्गृहे यस्य मासमेकं प्रजायते ।
तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः ॥
किं पुनर्यस्तु संत्यक्तत्रयीः(यिः) सर्वात्मना द्विजः ।
पाषण्डियोगिभिः[2] पापैर्वेदवादविरोधिभिः ॥
पाषण्डिनो विकर्मस्थान्बैडालव्रतिकाञ्शठान् ।
हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥
बुधैरालापसंसर्गसहास्या[3]श्चातिपापिभिः ।
पाषण्डिभिर्दुराचारैस्तस्मात्तान्[4]परिवर्जयेत् ॥
एते नैग्नास्तथा[5] ख्याता दृष्ट्वा[6] श्राद्धोपघातकाः ।
एषां संभाषणात्पुण्यं दिनमेकं प्रणश्यति ॥
एतान्पापाण्डिनः पापान्नित्यमेव तु नाऽऽलपेत् ।
पुण्यं नश्यति संभाषादेतेषां तद्दिनोद्भवम् " ॥

स्कन्दपुराणे—" कृतघ्नं मानवं दृष्ट्वा नारकेष्वपि कुत्सितम् ।
शुद्ध्यर्थं देवि द्रष्टव्याः सोमानलदिवाकराः ॥

सोमादीनां यथासंभवं विकल्पः ॥ १३० ॥

---

१ क. °र्मणा यो° । ग. °र्माणि यो° । २ क. घ. पाषाण्डयो° । ३ ख. ग. °सहस्या° । ४ ख. °स्मात्ताः परि° । ५ घ. नग्नाः समाख्या° । ६ क. घ. दृष्ट्या ।

( स्नातकव्रतप्रकरणम् ५)

अत्र विष्णुधर्मेषु पृष्टपाषण्डिलक्षणं कथंचित्पाषण्डिदर्शनसंलापस्पर्शनप्रायश्चित्तसंजातजिज्ञासं दाल्भ्यं प्रति पुलस्त्यं[1] उवाच—

" श्रुतिस्मृत्युदितं धर्मं वर्णाश्रमविभागजम् ।
उल्लङ्घ्य ये प्रवर्तन्ते स्वेच्छया कूटयुक्तिभिः ॥
विकर्माभिरता मूढा युक्तिप्रागल्भ्यदुर्मदाः ।
पाषण्डिनस्ते दुःशीला नरकार्हा नराधमाः ॥
तांस्तु पाषण्डिनः पापान्विकर्मस्थांश्च मानवान् ।
बैडालव्रतिनश्चैव नित्यमेव च नाऽऽलपेत् ॥
संभाष्यैताञ्शुचिषदं चिन्तयेदच्युतं बुधः ।
इदं चोच्चारयेद्भक्त्या कृत्वा तत्प्रवणं मनः ॥
शरीरमन्तःकरणोपघातैर्वाचश्च विष्णुर्भगवानशेषम् ।
शमं नयत्वस्तु ममेह शर्म पापादनन्ते हृदि संनिविष्टे ॥
अन्तः शुद्धिं बहिः शुद्धिं शुद्धोऽन्तर्मम योऽच्युतः ।
स करोत्वमले तस्मिञ्शुचिरेवास्मि सर्वदा ॥
बाह्योपघातादनघो विद्वांश्च भगवानजः ।
शुद्धिं नयत्वनन्तात्मा[2] विष्णुश्चेतसि संस्थितः ॥
एतत्संभाष्य जप्तव्यं पाषण्डिभिरिहाधमैः ।
नमः शुचिषदे चोक्त्वा सूर्यं पश्येच्च वीक्षितैः " ॥

तथा—" पाषण्डिनो दुराचारा दुष्टान्नगुणवादिनः ।
असंस्कृतान्नभोक्तारो व्रात्याः संस्कारवर्जिताः ॥
पाषण्डाः पापकर्माणो दाम्भिकाः शठबुद्धयः ।
वर्णसंकरकर्तारो धर्मव्याजोपजीविनः ॥
निःशौचा वक्रमतयो नान्यदस्तीति वादिनः ।
एवंविधास्ते सन्मार्गाद्वेदप्रोक्ताद्बहिष्कृताः ॥
क्रियाकलापं निन्दन्त ऋग्यजुःसामलक्षणम् ।
आत्मानं च परांश्चैव कुर्वन्ति नरकस्थितौ ॥
तेषां दर्शनसंभाषस्पर्शनानि नरैः सदा ।
परित्याज्यानि दृष्टे च प्रोक्तं संभाषणे तथा ॥
संस्पर्शे च बुधः स्नात्वा शुद्धे(ध्ये)च्छुचिषदं स्मरन्[3] ।
अधमानां सदैवैषामालापस्पर्शनं त्यजेत् ॥

१ ग. °स्त्यवाक्यम् । श्रु° । २ क. घ. °त्वन्तरात्मा । ३ ग. स्मरेत् । अ° ।

वृत्तेः, यद्यस्मै नैतद्ददामीदं मेऽनिष्टमेष करिष्यतीत्येवं भयजननरूपः। यथोत्पन्नेन च संतोषी संतुष्टो भवेत्। अत्र च मनुः—

" संतोषं परमास्थाय सुखार्थं संयतो भवेत्।
संतोषमूलं हि सुखं दुःखमूलं विपर्ययः " ॥

अत्र च प्रकरणे प्रतिवाक्यमिदं कार्यमिदं वर्जनीयमिति प्रतिपादनद्वारेण तद्विषयः संकल्प इदं करिष्ये नेदं करिष्य इति मनोव्यापाररूपो व्रतशब्दवाच्यो विधीयते। " तस्य व्रतम् " इत्युपक्रम्य श्रुतावेषां विधानात्। अत एव वसिष्ठः—" अथातः स्नातकस्य व्रतानि " इत्यारभ्यैतानि विहितवान्। एते च संकल्पाः समावर्तनानन्तरमेव कार्याः स्नातकं प्रति विहितत्वात् ॥ १२९ ॥

यतोऽर्थ ईहितव्यस्तमाह—

राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ॥

क्षुधाऽवसीदन्राजादीनामन्यतमाद्धनमिच्छेत्। प्रतिग्रहादिना लिप्सेत। राजग्रहणं विशुद्धस्य दातुरुपलक्षणार्थम् ॥

दम्भिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत् ॥ १३० ॥

लोकवशीकरणार्थं धर्मकारी दम्भी, हेत्वाश्रयणेन श्रुतिस्मृत्युक्तधर्मदूषयिता युक्तिबलेन सर्वत्रसंशयकारी च हैतुकः, वेदबाह्यागमविहितकारी पाषण्डी। उक्ताश्रमव्यतिरिक्तश्च बकस्य वृत्तिरिव वृत्तिर्यस्य स बकवृत्तिः। एतान्वर्जयेत्। एभिर्न संव्यवहरेयुरित्यर्थः।

मनुः—" पाषाण्डिनो विकर्मस्थान्वैडालव्रतिकाञ्शठान्।
हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि वर्जयेत् " ॥

निषिद्धकारिणो विकर्मस्थान्। वैडालव्रतिकादीन्स एवाऽऽह—

" धर्मध्वजी सदालुब्धश्छाद्मिको लोकदाम्भिकः।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधिकः ॥
यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः।
शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः " ॥

शठः स्तब्धः।

---

१ क. घ. °पत्तिः। य°। २ घ. °ष्टमथ क°। ३ ग. °त्येवमुभ°। ४ ग. ङ. °पाखण्डि°। ५ क. ख. घ. °कपदृक्लर्थ। ६ ग. घ. °लवृत्तिका° ७ ग. °लवृत्तिको। ८ क. ग. °नैष्कृति°।

हपर्याप्तमेव धान्यं यस्य स त्र्याहिकः, स वा स्यात् । अश्वस्तननिर्वाहधान्यं विद्यते यस्य सोऽश्वस्तनः, स वा स्यात् । परित्यक्तव्रीह्यादिकणश उ(णिशो)-पादानं शिलम् । पतितै[कै]ककण[स्योपादान]मुञ्छम् । शिलं चोञ्छं च शिलो-ञ्छं, तेन वा जीवेत् । एषामुक्तवृत्तिमतां परः परः पूर्वस्मात्पूर्वस्माच्छ्रेयान्, अतिशयेन प्रशस्तः । स्वर्गादिलोकजयकारणम् । धर्मातिशयवत्त्वात् ।

अत्र च मनुः—"कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा ।
त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वा ॥
चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम् ।
ज्यायान्परः परो ज्ञेयो धर्मतो लोकजित्तमः ॥
षट्कर्मको भवेत्तेषां त्रिभिरन्यः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति " ॥

षट्कर्मशब्देन यजनयाजनादीनि ब्राह्मणकर्माणि निर्दिशति तदन्तर्गतस्य प्रतिग्रहादिवृत्तित्रयस्य विधानार्थम् । त्रिभिरन्यः प्रवर्तत इति कुम्भीधा-न्यस्यापि वृत्तित्रयविधिः । द्वाभ्यामेक इति त्र्यहैहिकस्य याजनाध्यापना-नुज्ञा । प्रतिग्रहोऽपि कुत्सितादपि स्यादिति तद्वर्जनम् । चतुर्थोऽश्वस्तनः स ब्रह्मसत्रेणाध्यापनेन जीवेदिति । एवं च ब्राह्मणस्यैव कुसूलधान्यत्वादयो धर्माः । न ह्यन्यस्य प्रतिग्रहादिवृत्तिसंभवः ॥ १२८ ॥

[ इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादि-त्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धे गृहस्थधर्म-प्रकरणम् ॥ ४ ॥ ]

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

## [ स्नातकव्रतप्रकरणम् ] ( ५ )

---

**न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ॥**
**न विरुद्धप्रसङ्गेन संतोषी च भवेत्सदा ॥ १२९ ॥**

स्वाध्यायाधिगमविरोधिनमर्थं नेच्छेत् । तदविरोधिनमपि यतस्ततो नेहेत, यतस्ततो निषिद्धाद्दातुरित्यर्थः । न च विरुद्धेन कर्मणा द्यूतादिना प्रसङ्गेन च गीतादिना । प्रसङ्ग आसक्तिः । तद्धेतुत्वाद्गीतादिः प्रसङ्गः । अथवा प्रसङ्गोऽनिष्टा-

---

१ ख. ग. घ. धनं । २ ख. ग घ. °हधनं वि° ३ ख. °कावित्त° ।

शब्दः सकृदुच्चारितः काकाक्षिन्यायेन हेतुहेतुमद्भ्यां सह संबध्यते। फलप्रदं कर्म हीनकल्पं न कार्यम्। सति द्रव्ये तत्फलप्रदं भवति। [*तथा च मनुः—

" प्रभुः प्रथमकल्पस्य योऽनुकल्पेनु(न) वर्तते।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम्॥ ]

अत्र च सति द्रव्य इति प्रथमकल्पसामर्थ्योपलक्षणार्थम्॥१२६॥

चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात्[1]॥
यज्ञार्थं[2] लब्धमददद्भासः काकोऽपि वा भवेत्॥ १२७॥

यो यज्ञार्थं शूद्राद्भिक्षेत स प्रेत्य चण्डालो भवति*।

तथा च मनुः—" न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मवित्।
यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते॥
ये शूद्रादभिगम्यार्थं ह्यग्निहोत्रमुपासते।
ऋत्विजस्ते हि शूद्रस्य ब्रह्मवादिषु गर्हिताः॥
तेषां सततयज्ञानां वृषलानुपसेविनाम्[3]।
पदा मस्तकमाक्रम्य दाता दुर्गाणि संतरेत्"॥

शूद्राद्धनमुपादायाग्नीन्य उपाधत्ते तद्विषयमेतद्वाक्यद्वयम्। तथा च यज्ञार्थं लब्धं धनं समग्रं यज्ञोपयोगि यो न करोति स भासः काको वा भवेत्। भासः पक्षिविशेषः।

अत्र मनुः—" यज्ञार्थमर्थं भिक्षित्वा यो न सर्वं प्रयच्छति।
स याति भासतां विप्रः काकतां वा शतं समाः "॥ १२७॥

कुसूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा॥
जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः॥१२८॥

इति गृहस्थधर्मप्रकरणम्।

कुसूलं कोष्ठिका तत्परिमितमेव धान्यं यस्य स कुसूलधान्यः, कुसूलादून-परिमाणं धान्यावपनं कुम्भी तत्परिमाणधान्यो वा गृहस्थो भवेत्। त्र्यहनिर्वा-

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके न विद्यते। * इत उत्तरमेतदर्धं ग. पुस्तके—"यज्ञार्थं लब्ध्वाप्रदाता भासः काकोऽपि वा भवेत्" इति।

---

१ क. ख. ग. °भिक्षुकः। २ ग. घ. °र्थं याचकोऽदाता भासः। क. °र्थं लब्ध्वाप्रदाता भासः। ३ क. घ. °लाग्न्युप°।

नूद्याल्पधनत्वेनैषामसंभवे तत्कार्ये वैश्वानरीं वैश्वानरदे(दे)वत्यामिष्टिं कुर्यादिति विदधाति । इष्टिशब्दः[1] सोमकार्ये क्रियमाणायामपि वैश्वानर्यां श्रौतवैश्वानरेष्ट्यङ्गवर्गप्राप्त्यर्थः । अन्यथा " तत्कार्यापत्त्या तद्धर्मलाभः " इति न्यायात्सौमिकधर्मप्राप्तिः स्यात् । स्मार्तत्वेन वा स्मार्तीतिकर्तव्यता स्यात् । यत्तु मनुवाक्यम्—

" इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे "

इति, तदपि सोमादिकार्य एवेष्टिं विदधाति । न तु पश्चात्करणप्रायश्चित्ततया निष्कृतिशब्दस्तु(श्रु?)तेर्निष्कृतिसं[2]भवेनावश्यकर्तव्यतां[3]मिष्टेराचष्टे । अत एवानन्तरमाह—

" आप[4]त्कल्पेन यो धर्मं कुरुतेऽनापदि द्विजः ।
स[5] नाऽऽप्नोति फलं तस्य परत्रेति विचारितम् ॥
विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।
आपत्सु मरणाद्भीतैर्वि[6]धेः प्रतिनिधिः कृतः " इति ॥

अतश्च[7] वैश्वानरीयेष्टिः प्रतिनिधिर्न तु प्रायश्चित्तमिति गम्यते । अत्र चैषामिति सोमादीनां चातुर्मास्यान्तानां परामर्शो न तु पशुसोमयोरेव । प्रकरणाविशेषात् । यत्तु मनुनोक्तं—" क्लृप्तानां पशुसोमानाम् " इति, तत्प्रदर्शनार्थम् । अन्यथा बहुवचनानुपपत्तेः । सोमादीनां प्रत्येकसंभवभेदेनेष्टिः प्रयोज्या द्रव्याभावात्पाश्चात्यसंभवे वैश्वानरी न तु हे[8]त्वन्तरात् ।
तथा च शङ्खः—" त्रैवार्षिकाधिकान्नस्तु पिबेत्सोममतन्द्रितः ।
इष्टिं वैश्वानरीं कुर्यात्तथैवाल्पधनो द्विजः" इति ॥१२५॥

## हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥ १२६ ॥

अधिकारिणं प्रति सर्वाङ्गोपसंहारी प्रयोगविधिः शक्याङ्गोपसंहारी च । तत्र शक्याङ्गोपसंहारिणः प्रयोगविधेर्यद्विषयीभूतं कर्म तद्धीनकल्पम् । यत्र तत्फलप्रदं काम्यं कर्म तद्धीनकल्पं न कार्यम् । अत्र हेतुः सति द्रव्ये फलप्रदमिति । द्रव्ये सति फलप्रदं यस्माद्भवति । द्रव्यशब्दः सर्वाङ्गोपलक्षणार्थः । सति द्रव्ये सति सर्वाङ्गानुष्ठाने कर्म फलप्रदं भवति यस्मा[9]त् । अत्र च फलप्रद-

१ ग. घ. इतिश° । २ क. ख. घ. छ. ञ. °संस्तवे° । ३ ख. ग. °तामाच° । ४ ग. घ. °पत्कालेन ।५ ग. स प्राप्नो° । ६ ग. °विधिः प्र° । ७ ख. ग. °श्च या वैश्वानरीष्टिः। ८ क. हेतुत्वात् । त° । ९ ग. °ति । तस्मा° ।

नित्यसोमयागविषयमेतत् । यत आह विष्णुः—

" त्रैवार्षिकान्नः प्रत्यब्दं सोमेन यजेत । अभावे वैश्वानर्या " इति ।

ननु "द्वादश रात्रीर्दीक्षितो भृतिं चिन्वीत " इति विधिसामर्थ्याद्याचितेनैव ऋत्विजां भृतिः कार्येति व्यर्थस्त्रैवार्षिकाधिकान्नो य इति वचनारम्भः । मैवम् । एतद्वाक्यारम्भसामर्थ्यादेवैतद्गम्यते—भिक्षमाणस्यालाभेऽल्पलाभे वा पूर्वार्जितेनापि धनेन यथोक्तं दक्षिणादानं कार्यं न पुनरदानं, दक्षिणाल्पदानं वेति । यत्तु कल्पसूत्रादौ श्रुतौ च " दातव्यैव यज्ञे दक्षिणा भवत्यल्पिकाऽपि " इत्यादिवचनं, तत्त्रैवार्षिकाधिकान्नेनाधिकारिणा प्रारब्धे क्रतौ विनष्टे पूर्वार्जिते धने भिक्षितस्य चापर्याप्तौ द्रष्टव्यम् । अथ वा सदस्यप्रसर्पकात्रेयादिभ्यो दानं ब्राह्मणभोजनं च प्रागर्जितेनैव धनेन कार्यं न तु याचितेन । तस्य दक्षिणादान एव नियोगादित्यर्थवान्नियमाय वाक्यारम्भः ॥

**प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् ॥ १२४ ॥**

सोमयागानुष्ठानात्प्राग्याः क्रिया अग्निहोत्राद्यास्ताः सति वार्षिके भृत्यभरणसमर्थेऽन्ने कार्याः । एतच्च काम्यविषयं न नित्यविषयं तच्छ्रुतिविरोधप्रसङ्गात् ॥ १२४ ॥

**प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ॥**
**कर्तव्याऽऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि॥१२५॥**
**एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः ॥**

संवत्सरे संवत्सरे सोमयागः कर्तव्यः । पशुयागश्चायनेऽयने । तथाऽऽग्रयणेष्टिर्नवैर्व्रीहिभिः श्यामाकैर्यवैश्च कुर्यात् । " सस्यान्ते नवसस्येष्ट्या " इत्यत्र च सस्यशब्देन शरद्वसन्तौ लक्ष्येते । प्रायेण हि तत्र(स्य) शरद्वसन्तयोः पुराणयोरन्तो भवतीति । अत एवाऽऽश्वलायनः—" यदा वर्षस्य तृप्तः स्यादथाऽऽग्रयणेन यजेत" इति । एतच्च व्रीह्याग्रयणविषयम् । यवाग्रयणं तु वसन्त एव । तत्रैव हि तेषां नवत्वम् । श्यामाकाग्रयणं शरदि वर्षासु वा । उभयत्र तेषां नवत्वात् । तथा चातुर्मास्यानि स्वकाले कर्तव्यानि । " अथ चातुर्मास्यानि चैत्र्यां पौर्णमास्यां फाल्गुन्याम् " इति लौगाक्षिः । एतावता सोमयागादीनि कर्माण्य-

---

१ ख. ग. 'कात्र्या' । २ क. ग. घ. 'व्याऽऽग्राय°' । ३ क. ° श्च कार्या । तथा च मनुः । स° । ४ ख. ° र्षस्याद्र° ।

( गृहस्थधर्मप्रकरणम् ४)

शरीरं पीड्यते येन सुशुभेना[1]पि कर्मणा ।
अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥
प्रशस्ताचरणं नित्यं[2] नाप्रशस्तप्रवर्तनम् ।
एतद्धि मङ्गलं [3]प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किंचिदकार्पण्यं तदुच्यते[4] ॥
यथोत्पन्नेन संतोषः कर्तव्यो ह्यन्नवत्तु[5] वा ।
परस्याचिन्तयित्वाऽर्थं साऽस्पृहा परिकीर्तिता " ॥

शरीरमत्यन्तं पीडयते येन तन्न कर्तव्यमित्यर्थः ॥ १२२ ॥

**वयोबुद्ध्यर्थवाग्वेश[6]श्रुताभिजनकर्मणाम् ॥**
**आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ १२३ ॥**

वयः शरीरावस्था बाल्ययौवनादिः । बुद्धिः प्रज्ञा । अर्थो वित्तम् । वाग्भाषणम् । वेशो वस्त्रकचादिविन्यासः । श्रुतं गुरुतः पुराणादिविद्याधिगमः । अभिजनः कुलम् । कर्म योगादि । एषां वृत्तिं स्थितिं सदृशीं परस्परानुरूपाममत्सरामजिह्मामकुटिलामशठां वाऽऽचरेत् । एतदुक्तं भवति—वयःकर्मार्थश्रुताभिजनानां प्रत्येकमनुरूपवेशभाषणबुद्धिवृत्तिः कार्येति ।

तथा च बृहस्पतिः—" यथा विद्या यथा कर्म यथा वित्तं यथा वयः ।
जनै[7]स्तथैव वर्तेत वेशादिभिरनुद्धतः " ॥ १२३ ॥

एवं प्रसङ्गेनाभिधाय प्रकृतं द्विजं प्रत्याह—

**त्रैवार्षिकाधिकान्नो यः स सोमं हि पिबेद्द्विजः ॥**

वर्षत्रयं यावद्भृत्यभरणपर्याप्तादन्नादधिकं यस्य विद्यते स द्विजः सोमं पिबेत् । सोमेन यजेतेत्यर्थः । मनौ तु विशेषः—

" यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वाऽपि विद्येत स सोमं पातुमर्हति ॥
अतस्त्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ।
स पीतसोमपूर्वोऽपि न तस्याऽऽप्नोति तत्फलम् " ॥

---

१ घ. °नातिक° । २ क. घ. नित्यमप्रशस्तविवर्जन° । ३ ग. प्रोक्तं विद्वद्भिस्त° । ४ क. घ. °ते । अथो° । ५ क. ह्यर्थवर्तु वा । ग. °ह्यर्थवत्तु वा । घ. ह्यर्थवर्तया । प° । ६ ग. घ. °ग्वेषश्रु° । ७ क. जने तथै° ।

प्रत्युपकारानपेक्षया पात्रे स्वधनप्रतिपादनम् । दमो निषिद्धात्मनोऽव्यापारोपरमः । दया भूतहितैषित्वम् । क्षान्तिः क्षमा कोपवर्जनम् । "क्षमा द्वंद्वसहिष्णुत्वम्" इति स्मृत्यन्तरम् । दमः क्षमाऽऽर्जवं दानमिति तु पाठे—आर्जवमकौटिल्यं, समचित्तता वा । "आर्जवं समचित्तता" इति वचनान्तरात् । सर्वेषामेव वर्णानामहिंसादि प्रत्येकं धर्मसाधनं भवति । तेषामेवात्र प्रकृतत्वात् । धर्मोऽत्रापूर्वात्मको[1]ऽभिमतः । अत्र व्यासः—

" आनृशंस्यमहिंसा च प्रसादः संविभागिता ।
श्राद्धकर्माऽऽतिथेयं च सत्यमक्रोध एव च ॥
स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप " ॥

तथा—" सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमाऽऽर्जवम् ।
ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः ॥
सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवर्तित्वं शौचं संक[2]रे[3]वर्जनम् ॥
संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् ।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥
ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्र[4]शान्तता ।
दया भूतहितैषित्वमेष धर्मः सनातनः " ॥

बृहस्पतिः–" दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्यमस्पृहत्वं सर्वसाधारणानि तु ॥
परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता ॥
बाह्ये चाऽऽध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥
न गुणान्गुणिनो हन्ति स्तौ[5]ति म[6]न्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥

---

१ ख. ग. °कोऽधिगतः । २ ग. °कल्पव° । ३ घ. °रमार्ज° । ४ क. °प्रसन्नता । ५ घ. °ति परगु° । ६ ख. मर्मगु° ।

भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः ॥
नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत् ॥ १२१ ॥

भार्यायामेव रतिर्यस्य स तथोक्तः । अनेन च भार्याव्यभिचारपरिहारो धर्मत्वेनास्य विधीयते । शुचिः शास्त्रीयशौचकर्ता स्यात् । भृत्यभर्ता भृत्यानां पुत्रकलत्रादीनां पोषकः । श्राद्धक्रियापरः श्राद्धानुष्ठाननिष्ठः । उक्तान्पञ्च यज्ञान्नमस्कारात्मकेन मन्त्रेण कुर्यात्, न पुनरनधीतमन्त्रत्वेन तान्हापयेत्त्यजेत् । मन्त्रशब्दोऽत्र सकलमन्त्रकार्यनमस्कारविनियोगार्थः । अन्यथा समानार्थतया स्वाहाकारस्वधाकारयोरेव कार्ये स्यात् । ननु च शूद्रोऽनग्निः कथमग्निसाध्यकर्माधिकारी स्यात् । न चास्य विवाहाग्निरस्तीति वाच्यम् । शूद्रस्य विवाहहोमाभावात् । न ह्यमन्त्रकोऽस्ति होमः । न च शूद्रो मन्त्रवान् । नमस्कारश्च पञ्चयज्ञेष्वेव मन्त्रकार्ये विधीयते । न विवाहेऽपि । तस्मादग्निसाध्येषु कार्येषु वक्तव्योऽस्याधिकारहेतुः । उच्यते—अनग्नेरपि शूद्रस्य वैश्वदेवादिकर्माणि लौकिकेऽग्नौ कार्याणि तं प्रत्येवेह विहितत्वात् । यथा[2] निषादस्थपतीष्टिः[3] । किंचिद्द्विजातीनामपि वैश्वदेवकर्म न विवाहाग्निनियतं किं पुनः शूद्रस्य । यत्तु गौतमेन शूद्रमधिकृत्योक्तम् "पाकयज्ञैः स्वयं यजेतेत्येके" इति, तल्लौकिकाग्निविषयम् ॥ १२१ ॥

अधुना सर्ववर्णसाधारणं धर्ममाह—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ॥
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥१२२॥

अहिंसाऽविहितवधवर्जनम् । सत्यं यथार्थवचनम् । तच्च भूतहितमेव योज्यम् । "सत्यं भूतहितं प्रोक्तम्" इति व्यासवचनात् । सत्यमपि प्रियमेव वाच्यम् ।

"सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः" इति मनुवचनात् ।

अस्तेयमदत्तास्वीकारः । शौचमभक्ष्यपरिहारादि ।

तथा—"शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्" ॥

इन्द्रियनिग्रहो निषिद्धेभ्यो विषयेभ्य इन्द्रियाणां निवारणम् । दानं

---

१ ङ. °यारतः । न° । २ ख. ग. घ. तथा । ३ ग. °ष्टिः । केषां चि° ।

स्वर्गार्थमुभयार्थं वा ब्राह्मणं न विरोधयेत्।
या तु ब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता " ॥

द्विजैश्च तस्य यथाशक्ति वृत्तिर्विधेयेत्याह स एव—

" प्रकल्प्यतेऽस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः ।
शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् ॥
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः " ॥

अपुष्टतण्डुलानि धान्यानि पुलाकाः । परिच्छद उपकरणम् । तथा द्विजशुश्रूषया न जीवंस्तदा वणिग्भवेत् । वणिज्यया जीवेदित्यर्थः । शिल्पैर्वा विविधैश्चित्रकर्मादिभिर्जीवेत् ।

" अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् ।
पुत्रदारात्यये प्राप्ते जीवेत्कारुककर्मभिः " ॥

इति च स्मरणान्तरात् । तथा—

" यादृशेन कर्मणा क्रियमाणेन द्विजातिशुश्रूषानर्हो न भवति तानि कर्माणि प्रचरणीयानि। यैः प्रचरितैः शुश्रूष्यन्ते द्विजातयस्तानि शिल्पानि कारुकर्माणि च "

इति, तत्रापि द्विजातिहितमाचरणीयम् । तथा च देवलः—

" शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्तगीतवेणुवीणामुरजमृदङ्गवादनानि " इति ।]

शूद्राधिकारे नरसिंहपुराणम्—

" अयाचितः प्रदाता स्यात्कृषिं वृत्त्यर्थमाश्रयेत् ।
पुराणं शृणुयाच्चैव नरसिंहस्य पूजनम् " ॥

महाभारते—" दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पृश्य परिचर्यस्तु वैश्येन क्षत्रियेण च " ॥

पुराणश्रवणविधौ भविष्यत्पुराणे—

" शूद्राणां पुरतो वैश्या वैश्यानां क्षत्रियास्तथा ।
क्षत्रियाणां तथा विप्राः शृण्वन्त्येकाग्रतः स्थिताः " ॥ १२० ॥

शूद्रवृत्तीरभिधाय धर्ममाह—

---

१ क. जीवेत्तदा ।

अनुवज्यैव शुश्रूषेत्यर्थः । अब्राह्मणो ब्राह्मणस्य यावदध्ययनं तावदेव गुरुः । पश्चाद्ब्राह्मण एवाध्यापितो गुरुः ।

यदाह गौतमः—" आपत्कल्पो[1] ब्राह्मणस्याब्राह्मणाद्विद्योपयोगस्तदनुगमनं
शुश्रूषा । समाप्ते ब्राह्मणो गुरुः " इति ।

एवं च—" अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं
वृत्तिमातिष्ठेरन्न तु कदा चिज्ज्यायसीम् "

इति वसिष्ठवचनम(नं ना)समञ्जसं भवति । इज्याध्ययनमित्यत्रेज्याग्रहणेन दानाध्ययनव्यतिरिक्ता द्विजातिधर्मा लक्ष्यन्ते ॥ ११८ ॥

**प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ॥**

प्रधानं मुख्यं क्षत्रिये प्रजानां परिपालनम् । प्रधानं प्रजापरिपालनाख्यं कर्म धर्महेतुत्वाच्च । वक्ष्यति हि—पुण्यषड्भागमादत्त इत्यादिना प्रसङ्गतः पुण्यषड्भागस्यार्थषड्भागस्य चोपादानमिति ॥

**कुसीदं कृषिवाणिज्ये[2] पाशुपाल्यं विशः स्मृतम्॥ ११९ ॥**

कुसीदं स्वर्णादेर्वृद्ध्युपजीवनम् । कृषिः प्रसिद्धा । वाणिज्यं वणिक्कर्म । ततश्च धान्यादि समर्घं गृहीत्वा महार्घं दीयत इति वाणिज्यम् । पाशुपाल्यं पशुरक्षणम् । तत्सर्वं वैश्यस्य मुख्यं वृत्तिकर्म ॥ ११९ ॥

**शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् ॥**
**शिल्पैर्वा[3] विविधैर्जीवेद्द्विजातिहितमाचरेत्[4] ॥१२०॥**

शूद्रस्य द्विजशुश्रूषा मुख्या वृत्तिः । ब्राह्मणशुश्रूषा तु धर्मोऽपि ।

[ * यदाह मनुः—" विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ।
यदतोऽन्यद्धि कुरुते तद्भवेत्तस्य निष्फलम् " ॥

विशिष्टमुत्कृष्टम् । धर्मवृत्तिहेतुत्वात्[5] । निष्फलं[6] धर्मरहितमित्यर्थः ।
ततश्च क्षत्रियवैश्यसेवा शूद्रस्य वृत्त्यर्थैव । तदाह स एव—
" शूद्रस्तु वृत्तिमाकाङ्क्षन्क्षत्रमाराधयेद्यदि ।
धनिनं चाप्युपाराध्य वैश्यं शूद्रो[7] जिजीविषुः ॥

---

* एतच्चिह्नान्तर्गतग्रन्थः शृण्वन्त्येकाग्रतस्थिता एतदग्रे वर्तते घ. पुस्तके ।

---

१ क. घ. °पत्काले ब्रा° । २ ग. °ज्ये पशु° । ३ ङ. °ल्पैर्नानाविधै° । ४ क. ङ. °चरन् । ५ क. धर्म्यैवृ° । ६ ख. °लं कर्म° । ७ क. ख. °द्रोऽपि जी° ।

वन्ति। तेन जातिमनादृत्य बहुविद्योऽल्पविद्येन मान्यः। प्रकृष्टविद्यश्चाप्रकृष्टविद्येन। एवं कर्मादिष्वपि ॥ ११६ ॥

**वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ॥**
**पन्था देयो नृपस्तेषां मान्यः स्नातस्तु भूपतेः ॥ ११७ ॥**

वृद्धो दशमीस्थः, "चक्रिणो दशमीस्थस्य" इति[स्मृतिः]। वयसोऽन्तिमावस्था दशमी। भारी भारवान्। नृपो राजन्यः। स्नातः स्नातकः। स्त्रीरोगिणौ प्रसिद्धौ। वरः कन्यामुद्वोढुं प्रवृत्तः। चक्री शकटवाहकः। एषां पन्था देयः। पथि मिलितेष्वेतेषु मार्गादपसर्तव्यमिति। पथि तेषां समवेतानां नृपो मान्यः। नृपस्य च स्नातको मान्यः स चेद्ब्राह्मणः।

यदाहाऽऽपस्तम्बः—

"राज्ञः पन्था ब्राह्मणेन समेत्य तु ब्राह्मणस्यैव पन्था यानस्य भाराभिनिहितस्याऽऽतुरस्य स्त्रिया इति सर्वैर्दातव्यो वर्णज्यायसां चेतरैर्वर्णै[२]रशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः" इति।

स्त्री चात्र गर्भिणी ज्ञेया। यदाह बौधायनः—

"पन्था देयो ब्राह्मणाय गवे राज्ञे ह्यचक्षुषे।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च" ॥

शङ्खलिखितौ—"पन्था देयो बालप्रव्रजितविद्याशिल्पगुणप्रकृष्टेभ्यः" इति॥११७॥

धर्मार्थानां वृत्त्यर्थानां च कर्मणां व्यवस्थामाह—

**इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ॥**
**प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥ ११८ ॥**

इज्यादिकर्माणि वैश्यक्षत्रिययोः, चकाराद्विप्रस्यापि धर्मसाधनानि। प्रतिग्रहादीनि तु विप्रस्यैव वृत्तिसाधनानि। अधिकत्वं प्रतिग्रहादेरप्यसाधारण्यम्। ब्राह्मणस्यैव प्रतिग्रहा[४]दिरित्यर्थः। अत एव विप्र इति विषयसप्तमी। अनन्यत्रभा(न्यभा)वेश्च विषयः। अतो ब्राह्मणस्यैव प्रतिग्रहादिवृत्तित्रयम्। यत्पुनः—"अब्राह्मणादध्ययनमापत्काले विधीयते" इति, तदध्यापनमात्रकर्तृ[६]त्वमब्राह्मणस्याभ्यनुजानाति, न तु वृत्तित्वमपि। अत एवानन्तरमाह मनुः—

"अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः" इति ॥

---

१ ङ. °तश्च भ्° । २ ग. °र्णैरेव । शिल्पप° । ३ घ. °हादेरि° । ४ क. °दित्यर्थः । ५ ग °वश्चात्र वि° ६ ग. °र्तृकत्व° ।

र्थमेव। तथा तदुभयानवरुद्धे काले कामम् । इत्थं यथाशक्ति धर्मार्थकामेभ्यो न हापिता भवन्ति । तथा च गौतमः—

" न पूर्वाह्णमध्याह्नापराह्णानफलान्कुर्याद्यथाशक्ति धर्मार्थकामे-
भ्यस्तेषु तु धर्मोत्तरः स्यात् " ।

मनुः—" परित्यजेदर्थकामौ[2] स्यातां धर्मविवर्जितौ ।
धर्मं चाप्यसुखोदर्कं लोकसंक्रुष्टमेव च " ॥ ११५ ॥

मान्यत्वनिमित्तानि सक्रमकान्या(ण्या)ह—

**विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ॥**
**एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति ॥११६ ॥**

विद्यादिभिस्तद्वन्तो वयोबन्धुवित्तैर्यथानिर्देशक्रमं मान्या भवन्ति । कर्मवयोबन्धुवित्तवद्भिर्विद्यावान्मान्यो[3] वयोबन्धुवित्तवद्भिः कर्मवान्बन्धुवित्तवद्भ्यां[4] वयस्वान् । एवं वित्तवता बन्धुमान्न पुनरन्यथा । विद्या पुराणन्यायेत्यत्रोक्ता[5] । कर्म विहितक्रिया । वयो मानयितृवयोपेक्षयाऽधिकम् । बन्धवो ज्ञातयः। वित्तमर्थः । एतैर्युक्ता द्विजा मान्या भवन्ति । विद्यादिमतां समवाये यथाक्रमं क्रमानतिक्रमेण मानः कार्यः, पूर्वं पूर्वमुत्तराद्गरीय इत्यर्थः । एतैः कर्मादिभिर्गुणैः प्रत्येकं प्रभूतैर्युक्तो वार्धके सति शूद्रो नमस्कारव्यतिरिक्तं मानमर्हति । वार्धकमत्राशीतेरुत्तरम् । यदाह गौतमः-" शूद्रोऽप्यशीतिको वरः " इति ।

तथा जातिरपि मान्यत्वहेतुरित्याह स एव—

" वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि परबलीयांसि ।
श्रुतं तु सर्वेभ्यो गरीयस्तन्मूलत्वाद्धर्मस्य " ।

जातिर्मान्यत्वकारणम् । उत्कृष्टगुणविद्यायुक्तस्तु हीनजातिरप्युत्कृष्टजातेर्मान्यो भवति ।

यदाह मनुः—" वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥
पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽपि मानार्हः शूद्रोऽपि दशमीं गतः " ॥

वर्षशतस्योत्तमो दशमो भागो दशमी । संख्यातो भूयांसि, प्रकर्षतो गुण-

---

१ क. °क्ति न । २ क. 'मौ यौ स्यातां धर्मव' । ३ क. °वभ्यो विद्या° ४ । क °वभ्यः क° । ५ ग. °येभ्योऽन्यत्रोक्तक° ।

धान्यगोगुरुहुताशनसुराणामुपरि नोच्छिष्टो न दिवा स्वप्यात् । न संध्यायां न सभस्मनि देशे नाऽऽर्द्रे न पर्वतमस्तके ” ।

उशना—“ न तैलाभ्यक्तशिराः स्वपेत् । नादीक्षितः कृष्णचर्मणि ” ।

कृष्णोऽत्र हरिणः ॥ ११४ ॥

**ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ॥**

**रात्रेरुपान्त्यो मुहूर्तो ब्राह्मः, तस्मिन्नुत्थाय निद्रां हित्वाऽऽत्मनो हितं चिन्तयेद्विमृशेत् । श्रेयश्च त्रिवर्गात्मकम् । यदाह मनुः—**

“ धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयांस्त्रिवर्ग इति तु स्थितिः ” ॥

**धर्मार्थकामास्त्रिवर्गः । तथैतच्च श्रेयोऽद्येत्थं मया साधनीयमिति चिन्तयेत्परिभावयेत् ।**

“ ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ” ॥

व्यासः—“ किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति संचिन्त्य कार्याणि धीरः कुर्वीत वा न वा ॥
उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् ।
दत्तं वा दापितं वाऽपि वाक्सत्या वाऽपि भाषिता * ॥
उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ॥
यस्यां रात्र्यां व्यतीतायां न किंचिच्छुभमाचरेत् ।
तमेव वन्ध्यं दिवसमिति विद्याद्विचक्षणः ” ॥

**धर्मार्थकामान्स्वे[1] काले यथाशक्ति न हापयेत् ॥११५॥**

**धर्माङ्गभूते काले धर्मं कुर्यात् । न तद्बाध(धे)नार्थकामौ । एवं धर्माविरुद्धेऽर्थकालेऽ-**

* एतदग्रेऽधिकोऽयं ग्रन्थो घ.छ.ञ. पुस्तकेषु । स यथा—“कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च । मत्स्यपुराणम्——कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रयुक् । योगं संकीर्तयेन्नागं कालमुत्थाय मानवः ॥ न तस्य वित्तनाशः स्यान्नष्टं च लभते पुनः । इति नन्दीश्वरं प्रतीश्वरवाक्यम् । स्कन्दपुराणे— अनामयश्चेतनवान्नाम कीर्तयिता तव । सोऽप्यश्वमेधस्य फलं लप्स्यते नात्र संशयः ॥ व्यासः——”इति ।

१ क. ख °मान्द्वेका’ ।

" सहाऽऽसीत प्रदोषेऽनुज्ञाप्य शयीत पूर्वं प्रतिबुध्येत प्रस्थितमनुव्रजेत् । समम्यनुज्ञातो निवर्तेत " ॥

**अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ ११३ ॥**

अहःशेषमवशिष्टदिनभागं शिष्टैरुक्तलक्षणैरिष्टैः प्रियैश्च बन्धुभिश्च संबन्धिभिरासीत ।

अत्र दक्षः—" भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत् ॥
अष्टमे लोकयात्रा तु बहिः संध्या ततः परम् " इति ॥

लोकयात्रा लोकस्थितिः ॥ ११३ ॥

**उपास्य पश्चिमां संध्यां हुत्वाऽग्नींस्तानुपास्य च ॥
भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याऽथ संविशेत् ॥११४॥**

पश्चिमां सायं संध्यां यथाविधि उपास्य वन्दित्वाऽग्नीन्वैतानानौपासनं वा विधिवध्दुत्वा तानुपास्याऽऽराध्य तद्दे(द्दे)वत्यमन्त्रजपादिना भृत्यैः पुत्रादिभिः परिवृतः समावृतोऽनतितृप्त्या भुक्त्वाऽऽवश्यककार्यान्तरं कृत्वा संविशेत्, स्वापार्थं शय्यायामङ्गयष्टिं विन्यसेत् ।

दक्षः—" होमो भोजनकालश्च यश्चान्यद्गृहकृत्यकम् ।
कृत्वा चैव ततः पश्चात्स्वाध्यायं किंचिदाचरेत् ॥
प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते " ॥

आपस्तम्बः—" सदा निशायां दारान्प्रत्यलंकुर्वीत " ।

दारशब्देनात्र ज्येष्ठा सद्भार्योच्यते । तां प्रत्येवाऽऽत्मानमलंकुर्वीत । नान्यां प्रतीत्यर्थः ।

विष्णुः—

" नाऽऽर्द्रपादः स्वप्यान्नोत्तरापरशिरा न नग्नो नानुवंशं नाऽऽकाशे न पालाशे शयने न पञ्चदारुकृते न गजभग्नकृते न विद्युद्दग्धकृते न च्छिन्ने नाग्निप्लुष्टे न घटसिक्तद्रुमजे न श्मशानशून्यालयदेवतायतनेषु न चपलमध्ये नारिमध्ये न

---

१ ग. सहाऽऽसी° । २ क. घ. पुनः । ३ ग. ङ. °तृप्तोऽथ । ४ ग. °ष्ठा स्वभार्यो° । ५ ग. पाताले न प° । ६ क. °रिष्टम° ।

एतावतिथिश्रोत्रियौ ब्रह्मलोककामेन गृहस्थेन मान्यौ पूज्यौ। नित्यस्याप्यस्याऽऽनुषङ्गिकं फलमेतदिति वचनसामर्थ्याद्गम्यते । श्रोत्रियस्य स्नातकपार्थिवत्वादिविशिष्टस्य मधुपर्करूपमर्हणमुक्तं श्रोत्रियत्वमात्रेणातिथित्वमात्रेण वा विशिष्टस्य माननमनेन फलाय विधीयत इत्यनुसंधेयम् ॥ १११ ॥

किंच—

परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ॥

अनिन्द्यमामन्त्रयितारं[1] वर्जयित्वा परस्यान्नं नाभिलषेत् । कात्यायनः—
" अनिन्द्येनाऽऽमन्त्रितो नापक्रमेत् । आमन्त्रितो वाऽन्यदन्नं न प्रतिगृह्णीयात् " ॥

वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥११२॥

वागादीनां चापल्यमसंयतत्वं वर्जयेत् ।
अत्र गौतमः—" न शिश्नोदरपाणिपादचक्षुर्वाक्चापलानि कुर्यात् ।
अतिभोजनं च वर्जयेत् " ।

अनारोग्यादिहेतुत्वात् ।
तथा च मनुः—" अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् " ॥

ब्रह्मपुराणे—कुर्यात्क्षीरान्तमाहारं न तु पश्चात्पिबेद्दधि ।
जठरं पूरयेदर्धमन्नैर्भागं जलेन च ॥
वायोः संचरणार्थाय चतुर्थमवशेषयेत् " ॥ ११२ ॥

अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत्[2] ॥

अतिथिं श्रोत्रियं च तृप्तं सन्तमासीमान्तं[3] सीमान्तं यावदनुव्रजेत् । त्रिविधा सीमा—वास्तुसीमा, ग्रामसीमा, क्षेत्रसीमेति । सा चानुव्रजनीयगुणापेक्षया व्यवस्थापनीया ।
यदाह मनुः—" आसनावसथौ शय्यामनुव्रज्यामुपासनम् ।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् " * इति ॥

गच्छतोऽनुव्रज्योक्ता । यदि कुतोऽपि हेतोर्निवसति तदा यत्कार्यं तदाह शङ्खः—

* इत आरभ्य निवसतीत्यन्तग्रन्थो घ. पुस्तके न ।

१ क. ग. °निन्दितमा° । २ क. ध. °मान्तादनु° । ३ क. ग. °न्तं या° ।

अत्र महोक्षमहाजोपकल्पनमुखेन मधुपर्को विधीयते । तथा सत्क्रिया पूजा, अन्वासनं तस्मिन्नुपविष्ट[1] उपवेशनम् । स्वादुभोजनं सर्पिष्मदन्नम् ।

तथा च वसिष्ठः—

" अथाप्युदाहरन्ति—क्षत्रियायाभ्यागताय सर्पिष्मदन्नं पचतीति " ॥

सूनृतं वचः कल्याणी वागित्येतानि कर्तव्यानि ॥ १०९ ॥

**प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः ॥**

**प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः[2] पुनः ॥११०॥**

प्रत्यब्दं स्नातकादयोऽर्घ्या मधुपर्केण पूज्याः । स्नातकः समावृत्तः । आचार्य उक्तलक्षणः । पार्थिवो राजन्यः । प्रियो मनोज्ञः । विवाह्यः स्नुषाया जामातुश्च पिता । ऋत्विज उक्तलक्षणाः । ते सांवत्सरिकमधुपर्कपूजिताः प्रतियज्ञं पुनरर्घ्याः । चकारः श्वशुरादिपरिग्रहार्थः ।

तथा च शौनकः-" ऋत्विजो वृत्वा मधुपर्कमाहरेत् । स्नातकायोपस्थिताय राज्ञे चाऽऽचार्यश्वशुरपितृव्यमातुलानां च " इति ।

अत्र चोपस्थितग्रहणात्स्नातकादयो गृहमागता एवार्हणीया इति गम्यते । स्नातकपार्थिवादीनां श्रोत्रियत्वे सत्यर्हणम्, अन्यथा—

" महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् "

इति विरोधः स्यात् ॥ ११० ॥

अतिथौ श्रोत्रिये च यथा वर्तितव्यं तथोक्तम् । अधुना तयोर्लक्षणमाह—

**अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ॥**

तथा च मनुः—" एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते " ॥

यश्च यथाविधि वेदाध्ययनस्य पारं गतवान्स श्रोत्रियः । वेदशब्देनात्र स्वशाखोच्यते ।

तथाचाऽऽपस्तम्बः-" धर्मेण वेदानां चैकैकमधीत्य श्रोत्रियो भवति " ।

अध्येतृभेदेनैकमिति वीप्सोपपत्तिः ।

अत एव बौधायनः-" एकां शाखामधीत्य श्रोत्रियो भवति " इति ॥

**मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ १११ ॥**

---

१ क. घ. °विश्य उ° । २ क. ख. ग. घ. °त्विजस्तथा । प्र° ।

स्त्रीभ्यश्च देयं मातृभ्यो यद्यत्किंचिन्निवेद्यते ॥
भूतप्रेतपिशाचेभ्यो यत्तद्भूमौ निधापयेत्[1] " ॥

**भोजयेच्चाऽऽगतान्काले सखिसंबन्धिबान्धवान् ॥ १०८॥**

सखा मित्रम् । संबन्धिनः श्वशुरविवाह्यादयः । बान्धवा मातृपक्ष्याः । एतान्भोजनकाले प्राप्तान्भोजयेत् । भुक्तवति गृहस्थे प्राप्तान्प्रति मनुराह—

" इतरानपि सख्यादीन्संप्रीत्या गृहमागतान् ।
प्रकृत्याऽन्नं यथाशक्ति भोजयेत्सह भार्यया " ॥

अतश्च वाक्याद्गम्यते भुक्तवति भर्तरि भार्या भुञ्जीतेति ॥ १०८ ॥

**महोक्षं वा महाजं वा श्रोत्रियायो[3]पकल्पयेत्[4] ॥**
**सत्क्रियाऽन्वासनं स्वादुभोजनं सूनृतं वचः ॥ १०९ ॥**

महान्तमुक्षाणं बलीवर्दं तदलाभेऽजं श्रोत्रियाय मधुपर्कार्हाय गृहमागतायोपकल्पयेत्पचेत्संस्कुर्यादिति यावत् । तथा च श्रुतिः—

" अतिथिर्वा एष एतस्याऽऽगच्छति यः सोमः क्रीतस्तस्मादेतद्यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्तद्ध ह मानुषम् " इति ।

तथा च बह्वृचब्राह्मणम्—

" यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियतेऽग्निं मन्थन्ति सोमे राजन्यागते तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत्क्षदन्ते यदग्निं मन्थन्त्यग्निर्हि देवानां पशुः "।

ततश्च यः कश्चिदाह श्रोत्रियायोपकल्पयेद्वाचा प्रतिपादयेन्न तु हिंस्यादिति, तच्छ्रुतिविरुद्धम् । न "न हिंस्यात्सर्वभूतानि" इति निषेधो मधुपर्काङ्गभूतां हिंसामुपसंक्रामत्यग्नीषोमीयाहिंसामिव । अत एव मनुः—

" मधुपर्के च सोमे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः " ॥

तथा च गृह्यकृच्छौनकः—

" आचान्तोदकाय गां वेदयन्ते हतो मे पाप्मा पाप्मा मे हत इति जपित्वों कुरुतेति कारयिष्यन्माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन्नामांसो मधुपर्को भवति " ।

---

१ ख. निदाप° । २ ख. °हधर्मया । ३ ङ. °याय प्रक° । ४ क. °पपादये° । ५ क. ख. °तस्य ग° । ६ ख. ग. °सो मे म° ।

भिक्षवे यतये सव्रताय ब्रह्मचारिणे च सत्कृत्य पूजयित्वा भिक्षा देया । ग्रासपरिमितमन्नं भिक्षा ।

नृसिंहपुराणे—" भिक्षां च भिक्षवे दद्यात्परिव्राड्ब्रह्मचारिणे ।
अकल्पितान्नादुद्धृत्य सर्वव्यञ्जनसंयुतम् ॥
अकृते वैश्वदेवे तु भिक्षार्थं गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् " ॥

गौतमः—" स्वस्तिवाच्य भिक्षादानमप्पूर्वम् " अप्पूर्वमुदकपूर्वम् । यतिविषयमेतत् ।

मार्कण्डेयपुराणे—" ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणं तत्तु हन्तकारं विदुर्बुधाः ॥
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ।
अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः " ॥

नित्यश्राद्धातिथ्याभ्यां कर्मान्तरमेतत् ।

विष्णुः—" भिक्षुकाभावे चाग्रं गोभ्यो दद्यादग्नौ वा प्रक्षिपेत् । भुक्तेऽप्यन्ने विद्यमाने न भिक्षुकं प्रत्याचक्षति " ।

गृहस्थेन भुक्तेऽप्यन्ने तस्मिन्विद्यमान इत्यर्थः । चकाराद्गोग्रासादिसंग्रहः । यदाह ऋष्यशृङ्गः—" गवां ग्रासं च कुर्वीत नित्यमेव दिने दिने " ।

महाभारते—" घासमुष्टिं परगवे सान्नं दद्यात्तु यः सदा ।
अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति " ॥

ब्रह्मपुराणे—" सौरभेय्यः स्वर्गहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि ।
गवां कण्डूयनं घासं ग्रासमाह्निकमेव वा ॥
दत्त्वा भवेन्नृणां पुण्यं गोप्रदानसमं नृणाम् " ।

भिक्षादानं नैवेद्यादिदानोपलक्षणम् । यद्ब्रह्मपुराणम्—
" विप्रेभ्यश्चाथ तद्देयं ब्रह्मणे यन्निवेदितम् ।
वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शांभवम् ॥
सौरं गोभ्यश्च शाक्तेभ्यो देवीभ्यो यन्निवेदितम् ।

---

१ क. °युताम् । अ° । २ ख. ग. °त् । स्व° । ३ क. °य्यः सर्ग° । ४ क. °मं सदा । भि° । ख. °मं फलम् । भि° ।

**अतिथित्वे तु वर्णानां देयं शक्त्याऽनुपूर्वशः ॥**

ब्राह्मणादीनां वर्णानामतिथिभावे सति ब्राह्मणादिक्रमेण ते भोजयितव्याः, यदि शक्नुयात् । अशक्तस्य ब्राह्मणातिथिभोजनं नियतम् । यदाह बौधायनः—

" अथातः पञ्च महायज्ञास्तान्येव महासत्राणि, देवयज्ञः पितृयज्ञो ब्रह्मयज्ञो भूतयज्ञो मनुष्ययज्ञ इत्यहरहर्देवेभ्यः स्वाहा कुर्यादाकाष्ठादथैनं देवयज्ञं समाप्नोति । अहरहः पितृभ्यः स्वधा कुर्यादोदपात्रादथैनं पितृयज्ञं समाप्नोति । अहरहः स्वाध्यायमधीयीताऽऽ प्रणवादथैनं ब्रह्मयज्ञं समाप्नोति । अहरहर्भूतेभ्यो बलिं हरेदा पुष्पेभ्योऽथैनं भूतयज्ञं समाप्नोति । अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादा मूलफलशाकेभ्योऽथैनं मनुष्ययज्ञं समाप्नोति " ।

अतश्चातिथिपूजाया अकरणे निन्दा ब्राह्मणातिथिपूजनाकरणविषयैव । यदाह विष्णुः–" अतिथिर्यस्य भग्नाशो गृहस्थस्य तु गच्छति ।
तस्मात्सुकृतमादाय दुष्कृतं तु प्रयच्छति " ॥

अत एव मनुः क्षत्रियादीनामिच्छयाऽऽतिथ्यं कार्यमित्याह—

" यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ।
भुक्तवत्सु तु विप्रेषु कामं तमपि भोजयेत् ॥
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ ।
भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजयन् " इति ॥

आनृशंस्यमनैष्ठुर्यम् ॥

**अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥ १०७ ॥**

सायमागतोऽतिथिरप्रणोद्योऽप्रत्याख्येयः । आशयितव्य इत्यर्थः ।
यदाह मनुः—"अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना ।
काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत् " इति ॥

अशनाभावे तु वाग्भूतृणोदकैरप्यप्रणोद्यः । अप्येतैरातिथ्यं कुर्यादित्यर्थः ॥
तथाचाऽऽपस्तम्बः—" काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयातामन्नाभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि " ॥ १०७ ॥

**सत्कृत्य भिक्षवे भिक्षा दातव्या सव्रताय च ॥**

---

१ ङ. °त्वेन व° । २ ग. °ह—गोवि(भि) लः । अ° । ३ ख. °र्यादातोद° । ग. °र्यादानोद° ।
४ ग. घ. °न्गृहे व । ५ ङ. °व्या सुव्र° ।

व्यासः—"अद्भिः प्राणान्समालभ्य नाभिं पाणितलेन च।
भुक्त्वा चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना॥
आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम्।
उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यते मही"॥

विष्णुपुराणे—"स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः।
अभीष्टदेवतानां तु कुर्वीत स्मरणं नरः॥
अग्निराप्याययन्धातुं पार्थिवं पवनेरितः।
दे[1]न्तावकाशं नमसा जरयत्वस्तु मे सुखम्॥
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च।
भवत्वेतत्परिणतौ ममास्तु विहितं सुखम्॥
प्राणापानसमानानामुदानव्यानयोस्तथा।
अन्नं पुष्टिकरं चास्तु ममास्तु विहितं सुखम्॥
अगस्तिरग्निर्वडवानलश्च भुक्तं मयाऽन्नं जरयं[2]त्वशेषम्।
सुखं च मे तत्परिणामसंभवं यच्छन्त्वरोगो मम चास्तु देहे॥
विष्णुः समस्तेन्द्रियदेहमेदप्रधानभूतो भगवान्यथैकः।
सत्येन तेनान्नमशे[3]षमन्तरो[4]दारोग्यदो मे परिणाममेतु॥
विष्णुरत्ता तथैवान्नं परिणामश्च वै यथा।
सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा॥
इत्युच्चार्य स्वहस्तेन परिमृज्य तथोदरम्।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः॥
नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात्।
ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयाच्च मुक्तयोः॥
स्नात्वा दृष्ट्वा परेऽह्न्यद्याद्ग्रस्तास्तमितयोस्तथा"।

स्मृत्यन्तरम्—"भुक्त्वाऽङ्गुलितलं घृ[5]ष्ट्वा नेत्रयोर्यत्प्रदीयते।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति"॥

तथा—

"शर्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ।
भोजनान्ते स्मरेन्नित्यं चक्षूरोगैर्न बाध्यते"॥ १०६॥

---

१ ग. दत्तावकाशे न°। २ क. °यत्वशे°। ३ ग. °षमेतदारोग्यदं मे। ४ ख. घ. °राऽऽरो°। ५ ग. स्पृष्ट्वा।

**ब्रह्मपुराणे**—" यस्तु पाणितले भुङ्क्ते यस्तु फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यश्च तस्य गोमांसवच्च तत् ॥
नाजीर्णे भोजनं कुर्यात्स्याच्चेन्नातिबुभुक्षितः ।
हस्त्यश्वरथयानोष्ट्रप्रासादस्थो न भक्षयेत् ॥
श्मशानाभ्यन्तरस्थो वा देवालयगतोऽपि वा ।
शयनस्थो न भुञ्जीत न पाणि[1]स्थं न[2] चाऽऽसने ॥
नाऽऽर्द्रवासा नाऽऽर्द्रशिरा न वाऽयज्ञोपवीतवान् ।
न प्रसारितपादो न पादारोपितपादकः ॥
नावसक्थिकसंस्थश्च न च पर्य[3]ङ्किकास्थितः ।
न वेष्टितशिराश्चापि नोत्सङ्गकृ[4]तभाजनः ॥
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः ।
न चर्मोपरि संस्थश्च चर्मवेष्टितपार्श्ववान् ॥
ग्रासशेषं च नाश्नीयात्पीतशेषं पिबेन्न च ।
शाकमूलफलेक्षूणि दन्तच्छे[5]देन भक्षयेत् ॥
सेचयेन्नान्नमन्नेन विक्षिप्तं पात्रसंस्थितम् ।
बहूनां भुञ्जतां मध्ये न चाश्नीयात्त्वरान्वितः ॥
वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचिद्व्रजेत् " ।

**शङ्खः**—" नानियुक्तोऽग्रासनं गच्छेत् । नाग्रासनस्थः प्रथममश्नीयात् । नाधिकं दद्यान्न प्रतिगृह्णीयात् " ।

**बृहस्पतिः**—" न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादं न शिरो बस्तिं न पदा भाजनं स्पृशेत् " ॥

**आपस्तम्बः**—" मनाग्भुञ्जीत तथा प्रासादकृतभूमौ भुञ्जीत " ।

**देवलः**—" भुक्तोच्छिष्टं समादाय सर्वस्मात्किंचिदा[6]चमेत् ।
उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि " ॥

**अत्र मन्त्रः**—" रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम् ।
प्राणि[7]नां पूर्वभूतानामक्षय्यमुपतिष्ठताम् " इति ॥
" भुक्त्वाऽऽचामेद्यथोक्तेन विधानेन समाहितः ।
शोधयेन्मुखहस्तौ च मृदद्भिर्घर्षणैरथ " ॥

---

१ क. °णिस्थे न । २ ग. नवार्यने । ३ क. घ. °र्यङ्कका° । ४ क. ग. घ. °तभोज° । ५ क. ग. घ. °च्छेदैर्न भ° । ६ क. घ. °चरेत् । उ° । ७ क. °नां सर्वजन्तूना° । घ. °नां सर्वभू° ।

( गृहस्थधर्मप्रकरणम् ४)

“ न[1] गोब्राह्मणोपरागेऽश्नीयात् । न राजन्यसने प्रवसितश्चाग्निहोत्री यदाऽग्निहोत्रं हुतं मन्येत तदाऽश्नीयात् । यदा कृतं मन्येत वैश्वदेवमपि[2] पर्वणि च यदा पर्वकृतं मन्येत । नाश्नीयाच्चाजीर्णे नार्धरात्रे न मध्याह्ने न संध्ययोः । नाऽऽर्द्रवासा नैकवासा न नग्नो न भिन्नासनगतो न शयनगतो न भिन्नभाजने नोद्धृतस्नेहं न दिवा[3] धाना न रात्रौ[4] तिलसंबद्धं दधि[5] न सक्तून्न कोविदारवटपिप्पल[6]शणशाकं नादत्त्वा नाहुत्वा नाऽऽर्द्रपादो नानार्द्रकरमुखश्च नोच्छिष्टो घृतमाद्यात् । न चन्द्रार्कतारका निरीक्षेत न मूर्धानं स्पृशेत् । स्रग्व्यनुलिप्तश्च न निःशेषकृत्स्यादन्यत्र दधिमधुसर्पिःपयःसक्तुपललोदकेभ्यः।

नाश्नीयाद्भार्यया सार्धं नाऽऽकाशे[7] न तथोत्थितः ॥
बहूनां प्रेक्षमाणानां नैकस्मिन्बहवस्तथा ।
शून्यालये वह्निगृहे देवागारे कथंचन[8] ॥

ताम्ररजतसुवर्णशङ्ख[9]स्फटिकाश्मनां भिन्नमभिन्नमित्यदोषः ” ।

**मार्कण्डेयः**—“न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान्महामुने ।
शेषमुद्धृत्य भोक्तव्यं श्रूयतामत्र कारणम् ॥
विप्रुषां चोपसंस्पर्शः पादचैलरजस्त्वधः ।
मुखेन भुङ्क्ते विप्रोऽपि पित्र्यर्थे न तु लिप्यते ” ॥

**पैतृके भोजने भूमिपात्रप्रतिष्ठापनं न[10] लेपनीयमित्यर्थः ।**

**विष्णुपुराणे**—“ अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्तथा ॥
प्रा[11]ग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः ।
अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ” ॥

**शातातपः**—“ विद्यमानेन हस्तेन ब्राह्मणोऽज्ञानदुर्बलः ।
तोयं पिबति वक्त्रेण श्वाऽसौ जायेत नान्यथा ॥
उद्धृत्य वामहस्तेन यस्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥
हस्तौ प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
सदेवांश्च पितॄंश्चैव आत्मानं चैव घातयेत् ” ॥

**गण्डूषो भोजना[12]न्नचुलकः ।**

---

१ ग. न ब्रा° । २ ख. °मग्निप° । ३ ख. ग. °वा न रा° । ४ ग. °त्रौ न ति° । ५ क. घ. °धिस° । ६ ग. °लशाण° । ७ क. °काले न । ८ क. घ. न । पैठीनसिः—ता° । ९ क. घ. °ङ्खशुक्तिस्फ° । १० घ. न लेप° । ११ क. ख. प्राक्पूर्वं पु° । १२ क. ख. ग. °नाग्रचु° ।

जुहोति[1] श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय प्राणाय स्वाहा " ।

**अपाने व्यान उदाने समाने निविष्ट इत्यादि यथालिङ्गमनुषङ्गः ।**

" एवं पञ्चान्नेन तूष्णीं भूयो व्रतयेत् । प्रजापतिं मनसा ध्यायेत् ।

अथाप्युदाहरन्ति—आसीनः प्राङ्मुखोऽश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।

अस्कन्दयंस्तन्मनाश्च भुक्त्वाऽग्निं समुपस्पृशेत् ॥

सर्वभक्षापूपकन्दमूल[2]मांसानां दन्तैर्नावद्येन्ना[3]तिसुहितो[4]ऽमृता पिधानमसीत्युपरिष्टादपः पीत्वाऽऽचान्तो हृदयदेशमभिमृशति प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तर्गत(क)स्तेनान्नेनाऽऽप्यायस्वेति पुनराचम्य दक्षिणपादाङ्गुष्ठे पाणिं[5] स्रावयति—

अङ्गुष्ठमात्रः पुरुष अङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥ इति ।

हु[6]तानुमन्त्रणमूर्ध्वहस्तः समाचरेत् । श्रद्धायां निविश्यामृतं हुतं शिवो मा शिवमा(?)विश प्राणमन्नेनाऽऽप्यायस्व" ।

**श्रद्धायामपाने श्रद्धायां व्याने श्रद्धायामुदाने श्रद्धायां समाने निविश्येत्यादि यथालिङ्गमनुषङ्गः ।**

" ब्रह्मणि म आत्माऽमृतत्वायेत्यक्षरेणाऽऽत्मानं योजयेत् । सर्वत्र क्रतुयाजिनामात्मयाजी विशिष्यते । स एवमेवाहरहः सायं प्रातर्जुहुयादद्भिर्वा सायम्" ।

तथा—" ब्रह्मचारी गृहस्थश्च योऽनश्नंस्तु तपश्च[7]रेत् ।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः " ॥

"अन्यत्र प्रायश्चित्तात्प्रायश्चित्ते तदे[8]व विधान[9]म् " ।

**प्रायश्चित्ते तदेव विधानमिति, प्रायश्चित्ते कर्तव्यमित्यर्थः ।**

" अथाप्युदाहरन्ति—अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी भवति यो न भुङ्क्ते कदाचन " ॥

आपस्तम्बः–"आचम्य चोर्ध्वं पाणी धारयेदा प्रोदकीभावात् । ततोऽग्निमुपस्पृशेत्" ।

**प्रगतमुदकं याभ्यां तौ प्रोदकौ ।**

हारीतः—" न कार्ष्णायसे मृन्मये[10] वाऽश्नीयात् " ।

विष्णुः—

---

१ क. ग. घ. °ति प्रा° । २ क. ग. घ. °लमासा° । ३ ग. °न्नाभिसु° । ४ क. °तिसहि° । ५ क. घ. °णिं निस्रा° ६ घ. हुत्वाऽन्नम° । ७ क. घ. °श्चरन् । प्रा° । ८ घ. °व प्रधानमिति प्रायश्चित्तैक° । ९ क. °म् । इति प्रायश्चित्तं क° । १० ख. घ. °ये नाश्नी° ।

बालादीनतिथींश्च[1] भोजयित्वा भुक्तावशिष्टं दंपती भुञ्जीयाताम् । असामर्थ्याद्बालस्तथा वृद्धः, परिणीता कन्या पितृगृहे स्थिता[2] स्ववासिनी[3], गर्भपुष्ट्यर्थं गर्भिणी क्षीणत्वादातुरो वचनादतिथिर्गृहव्यापारसाधकत्वाद्भृत्याः ।

मनुः[4]—" सुवासिनीः कुमारीश्च रोगिणो गर्भिणीस्तथा ।
अतिथिभ्योऽग्र एवैतान्भोजयेदविचारयन् ॥
अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः ।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः " ॥

श्वभिर्गृध्रैश्चाऽऽत्मानं भक्ष्यमाणं न जानातीत्यर्थः । ततश्च बालप्रभृतिभिः सह भोजनं न प्रत्यवायायेति[5] ॥ १०५ ॥

**अपोशानेनोपरिष्टादधस्तांच्चैव[6][7] भुञ्जता ॥**
**अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ १०६ ॥**

अपोऽशानेत्युपनेता माणवकं प्रेष्यति । तेन च प्रैषेण[8] तदर्थोऽत्र लक्ष्यते—अपोशानेनेति । ततश्चापोशानेन भोजनादूर्ध्वं पुरस्ताच्च क्रियमाणेनान्नमनग्नममृतं च द्विजातिना कार्यम् ।

वृद्धशातातपः—" परिधानमपोशानं पूर्वमाच्छादनं परम् ।
भवत्यन्नमनग्नं हि सोत्तरीयं तथाऽमृतम् " ॥

बौधायनः—" उपलिप्ते समे स्थाने शुचौ श्लक्ष्णसमन्विते ।
चतुरश्रं[9] त्रिकोणं तु वर्तुलं चार्धचन्द्रकम् ॥
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् " ।

ब्रह्मपुराणे—" अन्नं दृष्ट्वा प्रणम्याऽऽदौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्याऽथ वन्दयेत् " ॥

बौधायनः—

" सर्वावश्यकावसरेषु प्रक्षालितपाणिपादोऽप आचम्य शुचौ संवृत्ते देशे प्राङ्मुख उपविश्योद्धृतमाह्रियमाणं भूर्भुवः स्वरोमित्युपस्थाय वाचं यच्छेन्न्यस्तं तु महाव्याहृतिभिः । प्रदक्षिणमन्नमुदकं परिषिच्य सव्येन पाणिनाऽविमुञ्चन्नमृतोपस्तरणमसीति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुती-

---

१ ङ. बालः सुवासिनी वृद्धो ग° । २ ख. °ता । सुवा° । ३ क. ख. घ. °नी च ग° । ४ क. ग. °नुः । स्ववा° । ५ ग. घ. °ति । आपो° । ६ ङ. °पोशने° । ७ ङ. °स्तादश्नता तथा । अ° । ८ ख. प्रेषणत° । ९ ग. °रस्रं त्रि° ।

अदेवमित्यन्तमेकं वाक्यम् । नास्ति चेदन्य इत्यपरम् ।

देवलः—" अघृतं भोजयन्विप्रः स्वगृहे सति सर्पिषि ।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥
मिष्टमन्नं स्वयं भुक्त्वा पश्चात्कदशनं लघु ।
ब्राह्मणं भोजयन्विप्रो निरयं चिरमावसेत् " ॥

शातातपः—" भूतयज्ञस्तथा श्राद्धं नित्यं त्वतिथितर्पणम् ।
क्रमेणानेन कर्तव्यं स्वाध्यायाध्ययनं सदा " ॥

नित्यमिति श्राद्धविशेषणम् ।

प्रचेताः—" नाग्नौकरणं नाऽऽवाहनं न पिण्डा न विसर्जनम् ।
अनुव्रज्या दक्षिणा च त्रिभ्यश्चातिथिकल्पनम् " ॥

त्रिभ्यश्चाधिकस्य विप्रस्या[1]धिगतस्यातिथित्वं कल्प्यम् ॥

मार्कण्डेयपुराणम्—" कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव वा " ॥

नारायणः—" नियुज्यैकमनेकं वा श्रोत्रियं प्राङ्मुखं सदा ।
निवीती तद्गतमना ऋषीन्ध्यायन्समाहितः ॥
आसनं चार्घ्यदानं च भुक्तवे[2]द्वाचनं ततः ।
स्वशक्त्या चान्नमुद्धृत्य हन्तेत्येवं प्रकल्पयेत् " ॥

**स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मने ॥ १०४ ॥**

स्वशाखाध्ययनं स्वाध्यायो न तु स्वशाखैव, तस्या अकार्यत्वात् । ततश्च स्वशाखाध्ययनमन्वहमनुदिनं कुर्यात् । ब्रह्मयज्ञस्यैतत्पुनर्वचनमन्वहमिति गुणविधानार्थम् । तथाऽऽत्मार्थमन्नं न पचेत् । अत्राऽऽत्मनः कैवल्यं विवक्षितम् । तेन देवादीनामात्मनश्च कृ[3]ते पाको न दोषाय । यदाह मनुः—

" देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति " ॥

एवं च—" अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् "

इति स्ववाक्येनाविरोधः । अत एव श्रुतिः—" केवलाघो भवति केवलादी " इति ॥ १०४ ॥

**बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ॥**
**संभोज्यातिथिभृत्यांश्च दंपत्योः शेषभोजनम् ॥ १०५ ॥**

---

१ क. ग. घ. °स्याऽऽग.° । २ क. 'वद्वचनं तथा । स्व' । ३ ग. कृतः पा° ।

अन्नहोमप्रभृति श्वादिभ्योऽन्नप्रक्षेपपर्यन्तं वैश्वदेवाख्यं कर्म सायं प्रातः कर्तव्यम् । यदाह मनुः—

" सायमन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ।
वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते " ॥

कर्तॄणां पुंसामलाभे पत्नी वैश्वदेवं मन्त्ररहितं कुर्यात् । बलिग्रहणं वैश्वदेवोपलक्षणार्थम् । तथा च गौतमः—

" सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च ।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् " ॥

तस्य प्रातरुपक्रमः सायमपवर्गः । यदाह लौगाक्षिः—

" दिवाचरेभ्यो भूतेभ्य इति दिवा । नक्तंचरेभ्यो भूतेभ्य इति नक्तम् " ॥१०३॥

## अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ॥

अन्नं पित्रादिभ्योऽन्वहं प्रतिदिनं देयम् । पुत्रिकापुत्रेण तु मातामहादिभ्यस्त्रिभ्यो ह्यामुष्यायणैस्तूभयेभ्यः ।

तदाह व्याघ्रः—" दद्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः ।
उभयोरथ संबन्धात्कुर्यात्स उभयोरपि " ॥

अस्यामुत्पन्नमपत्यं तव मम स्वधाकरं भवत्विति कन्यादातुर्वरेण सह संप्रतिपत्तौ कृतविवाहायाः पुत्र उभयसंबद्धः । मनुष्येभ्योऽतिथिभ्योऽन्वहं प्रतिदिनं देयम् । अन्वहमिति प्रत्येकमभिसंबध्यते । अन्नाभावे जलम् । अत्रान्वहमिति विधीयतेऽन्यदनूद्यते ।

मनुः—" कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमाहरन् " ॥

लघुहारीतः—" नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डादिवर्जितम् " ॥

मत्स्यपुराणे—" नित्यं तावत्प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ।
अदैवं तद्विजानीयात्पार्वणं पर्वसु स्मृतम् " ॥

कात्यायनः—" अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये ।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥
अभ्युद्धृत्य यथाशक्ति किंचिदन्नं यथाविधि ।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारं च कारयेत् " ।

---

१ क. घ. °त्नी मन्त्ररहितं सायं वैश्वदेवं कु° । २ क. ग. घ. °बन्धः । म. ।

प्रख्यापयति यो विप्रो नाभिमानश्च वेदयेत् ।
कितवो मद्यपश्चैव ऋतूनां क्रयविक्रयी ॥
वणिग्वार्धुषिको ग्रामप्रेषकः पिशुनस्तथा[1] ।
अगारदाही गरदः कुण्डाशी सोमविक्रयी ॥
सामुद्रकृच्छिद्रकृच्च तैलिकः कूटकारकः ।
गुरोश्चालीकनिर्बन्धी गुरोर्वञ्चयिता खलः ॥
मत्तश्चोज्झितवेदश्च घातको गुरुतल्पगः ।
संकरस्त्रीरतो बन्धुर्नारीणां लम्पटस्तथा ॥
निक्षेपहारी मायावी तथा कायचिकित्सकः ।
क्रीणन्यो निन्दते(ति) द्रव्यं विक्रीणंश्च प्रशंसति ॥
स्त्रीबालब्राह्मणानां च हन्ता गोघ्नः प्रपञ्चवान् ।
वर्णसंकरकृद्यश्च कारुकश्च विकर्मकृत् ॥
स्वजातिधर्मसंत्यागी परकर्म[2]रतश्च यः ।
पिबेच्छुक्रं च यः पुंसां स च दुष्टो मुखेभगः ॥
एते दैत्याः समाख्याता न तु सृष्टाः स्वयंभुवा ।
यज्ञेषु रक्षसां भागो देय इत्येव संस्मरन् ॥
विघ्नेभ्यो मूर्तिमद्भ्यश्च तेभ्यो दद्याद्गृहाद्बलिम् ।
ब्राह्मणः स्यात्कृतयुगं पितरस्तत्र देवताः ॥
त्रेतायुगं क्षत्रियश्च तत्र पूज्याश्च देवताः ।
विज्ञेयं द्वापरं वैश्यस्तत्र बुद्धस्तु पूज्यते ॥
शूद्रः[3] कलियुगं तत्र पूज्याः पाषण्डजातयः " इति ॥

भूतबलिदाने मन्त्रः—

" ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः ।
तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु " इति ॥

व्यासः—" ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ॥
वायसाः प्रतिगृह्णन्तु इमं पिण्डं मयाऽर्पितम् ।
श्वानौ द्वौ शाव(श्याम)शबलौ वैवस्वतकुलोद्भवौ ॥
ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ ।
दत्त्वाऽनेन विधानेन बलिं पश्चादुपस्पृशेत् " ॥

---

१ क. ग. °था । आगा° । २ क. घ. °रधर्म° । ३ ख. शूद्राः ।

( गृहस्थधर्मप्रकरणम् ४)

केशानङ्गं वासश्चाऽऽलभ्याप उपस्पृशेत् । आर्याधिष्ठिता वा शूद्राः संस्कर्तारः स्युः" ।

तथा-"परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तदेव पवित्रमित्याचक्षते" ।

दक्षः—"पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृदेवमनुष्याणां कीटानां चोपदिश्यते" ॥

व्यासः—"वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः ।
संस्कृतान्नैर्हविष्यैश्च हविष्यव्यञ्जनान्वितैः ॥
तैरेवान्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा ।
कृतापसव्यः स्वधया सर्वं दक्षिणतो हरेत्" ॥

आपस्तम्बः—

"बलीनां तस्यं देशसंस्कारो हस्तेन परिमृज्यावोक्ष्यं न्युप्य पश्चात्परिषेचनम्" ॥

**अन्नं भूमौ श्वचण्डालवायसानां विनिक्षिपेत् ॥ १०३ ॥**

श्वादीनामन्नं भूमौ निक्षिपेत् । चण्डालशब्दः पतितादिपरिग्रहार्थः ।

तथा च मनुः—"शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि" ॥

अत्र पतितग्रहणं कपालपाण्यादिपरिग्रहार्थम् । तथा च ब्रह्माण्डपुराणम्—

"पूर्वं देवैर्जिता दैत्याः सङ्ग्रामाच्च पराजिताः ।
कपालपाणयो जग्मुः केचिन्नग्नव्रतास्ततः ॥
केचिन्मुण्डास्त्वञ्जिताक्षाः कषायवसनास्ततः ।
सान्त्व(त्व)ताश्च दुराचाराः शौचाचारैर्बहिष्कृताः ॥
नरास्थिकेशसंछन्नाः केचिद्व्याजेन दानवाः ।
अनाश्रमी व्रतस्थश्च जटी मुण्डी वृथा च यः ॥
प्रायश्चित्तादिकं यश्च मूल्येन कथयेन्नरः ।
निर्घृणो भिन्नमर्यादो नास्तिको वेदनिन्दकः ॥
रोगिणां व्रतिनां यश्च सत्रिणां वाऽथ निन्दकः ।
ऋषीणामथ देवानां निन्दत्यात्मानमेव यः ॥

---

१ ख. °मग्निं सं° । २ ख. °थाऽऽहृतः । ३ ग. °स्य सं° । ४ ग. °क्ष्य प° । ५ ङ. °यसेभ्यश्च नि° । ६ क. घ. ब्रह्मपु° । ७ ग. °रविवर्जिताः । ८ क. घ. °संछिन्नाः । ९ क. घ. °ताधिकं । १० ख. °निन्दितः । रो° । ११ क. ग. योगिनां । १२ क. घ. °श्च मन्त्रिणां ।

कौशिकी दुर्गा । तायी बुद्धः ॥ १०१ ॥

ब्रह्मयज्ञमुक्त्वा महायज्ञानाह—

**बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ॥**
**भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ १०२ ॥**

बलिकर्म भूतयज्ञः । स्वधा पितृयज्ञः । पितृभ्योऽन्नादिदानं स्वधाशब्देनोपलक्ष्यते । लौकिकेऽग्नावु(वौ)पासने वा सायं प्रातरत्र होमो देवयज्ञः । स्वाध्यायोऽध्ययनविशेषो ब्रह्मयज्ञः । अतिथिपूजनं मनुष्ययज्ञः । एषामेव संज्ञान्वयमाह मनुः—

" अहुतं च हुतं चैव तथा प्रहुतमेव च ।
ब्राह्मं हुतं प्राशितं च पञ्च यज्ञाः प्रकीर्तिताः ॥
जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः ।
ब्राह्मं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् " ॥ १०२ ॥

**देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत् ॥**

देवेभ्योऽन्नेष्टौ *हव्यं हुतशेषादन्नाद्भूतेभ्यो बलिं हरेत् । अन्नमत्र पक्वम् । तथा—" शालाग्नौ विपचेदन्नं लौकिके वाऽपि नित्यशः ।
यस्मिन्नेव पचेदन्नं तस्मिन्होमो विधीयते ॥
लौकिके वैदिके वाऽपि हुतोत्सृष्टे जले क्षितौ ।
वैश्वदेवः प्रकर्तव्यः पञ्चसूनापनुत्तये " ॥

आश्वलायनः—" अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात् " ।

कात्यायनः—" हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन्सर्वालाभेऽपि वर्जयेत् " ॥

आपस्तम्बः—

" न क्षारलवणहोमो विद्यते । परान्नसंसृष्टस्य हविष्यस्य होमः । उदीचीनं भस्मापोह्य तस्मिञ्जुहुयात् । तद्धुतमहुतमग्नौ भवति " इति ।

तस्यार्थः—क्षारलवणपरान्नसंसृष्टहविष्येण होमोऽग्नौ न कार्यः ।

" आर्या अन्नसंस्कर्तारः स्युः । हासं श्वासं क्षवथुमभिमुखोऽन्नं वर्जयेत् ।

---

* हव्यं हुत्वा हुतेति पाठो युक्त इति भाति ।

---

१ ग. °पितृसुर° । २ ख. ग. °ध्यायाध्य° । ३ क. ख. ग. घ. देवतेष्टिद्व° । ४ ख. °तः समिद्ध° । ५ क. घ. °वकोरादीन्सर्वेला° । ६ क. घ. °ते । तथा प° । ७ क. घ. °चीनमुष्णं भ° । ८ क. °सं कासं । ख. °सं हासं ।

( गृहस्थधर्मप्रकरणम् ४)

अर्घ्यं चतुर्थ्यां दातव्यं पञ्चम्याऽऽचमनीयकम् ॥
षष्ठ्या स्नानं प्रदातव्यं सप्तम्या वस्त्रमेव च ।
यज्ञोपवीतमष्टम्या नवम्या त्वनुलेपनम् ॥
पुष्पं दशम्या दातव्यमेकादश्या तु धूपकम् ।
द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम् ॥
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणम् ।
अर्चयित्वा तु देवेशं षोडश्या च विसर्जनम् ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ।
षण्मासात्सिद्धिमाप्नोति एवमेव समर्चयन्[१] ॥
ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसंनिविष्टः ।
*केयूरवान्कनककुण्डलवान्किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः" इति ॥

**योगयाज्ञवल्क्यः**—" एवं संपूज्य देवेशं क्षणं ध्यात्वा निरञ्जनम् ।
ततोऽवलोकयेदर्कं हंसः शुचिषदित्यृचा ॥
स याति ब्रह्मणः सद्म स्नात्वे[२]क्षित्वा न यात्यधः " ।

**नरसिंहपुराणे**—" अष्टाक्षरेण देवेशं नरसिंहं तथा स्वयम् ।
गन्धपुष्पादिभिर्नित्यमर्चयेदच्युतं नरः ॥
सर्वार्थदायी मन्त्रोऽयं सर्वपापहरः परः ।
सर्वदुःखहरः श्रीमान्सर्वशान्तिकरः स्मृतः ॥
अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्मृतः[३] ।
छन्दश्च देवी गायत्री परमात्मा च देवता ॥
गन्धपुष्पादिसकलमनेनैव निवेदयेत् ।
प्रतिमाभ्यर्चितो विष्णुः प्रीतो भवति तत्क्षणात् ॥
किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्मखैः ।
ॐ नमो नारायणायेति मन्त्रः सर्वार्थसाधकः " ॥

**पुराणात्**—" शिवं भास्करमग्निं च केशवं कौशिकीमपि ।
तायिनं चार्चयेन्नैति देवलोकादधो गतिम् " ॥

---

* रवान्मकरकुण्डलेति पाठोऽपि प्रसिद्धः ।

---

१ क. घ. °र्चयेत् । ध्ये° । २ ख. ग. °त्वेक्षेता न यातु यः । न° । ३ क. स्वयम् ।

दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् " ॥

पूजायामसमर्थस्यैतत्।

ब्रह्मयज्ञानन्तरं नृसिंहपुराणे—

" ततोऽर्घ्यं भानवे दद्यात्तिल[1]पुष्पजलान्वितम्।
उत्क्षिप्य मूर्धपर्यन्तं हंसः शुचिषदित्यपि ॥
जले देवं नमस्कृत्य ततो गृहगतः पुनः।
विधेः पुरुषसूक्तस्य तत्र विष्णुं समर्चयेत् " ॥

हंसः शुचिषदिति वामदेव ऋषिः। जगती छन्दः। सूर्यो देवता।

तथा—" अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ॥
आप आयतनं तस्य तस्मात्तासु सदा हरिः।
तस्य सर्वगतत्वाच्च स्थण्डिले भावितात्मनः ॥
अ(आ)नुष्टुभस्य सूक्तस्य त्रिष्टुभ(ब)न्तस्य देवता।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ॥
पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत्।
सप्तमीं वामकुक्षौ तु अष्टमीं दक्षिणे न्यसेत् ॥
नवमीं नाभिमध्ये तु दशमीं हृदये[2] तथा।
एकादशीं कण्ठदेशे वामबाहौ तु द्वादशीम् ॥
त्रयोदशीं दक्षिणे तु आस्यदेशे चतुर्दशीम्।
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ॥
एवं न्यासविधिं कृत्वा पश्चाद्ध्यानं समाचरेत्।
आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ॥
द्वितीययाऽऽसनं दद्यात्पाद्यं चैव तृतीयया।

---

१ क. घ. °लदर्भसमन्वि°। २ क. ख. घ. °हौ ततः परम्। त्र°।

तथा—

" अनुतीर्थमप उपसिञ्चति ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधाः✻स्थ पितॄन्मे तर्पयत तृप्यत[1] तृप्यत " इत्यादि ।

पुराणात्पुनरेवसानाञ्जलिमन्त्रः—

" ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् " ॥

मत्स्यपुराणे—" देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥
जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः ।
तृप्तिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः ॥
नरकेषु च सर्वेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥
येऽबान्धवा[3] बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति " ॥

योगयाज्ञवल्क्यः—" कव्यवाडनलः सोमो यमश्चैवार्यमा तथा ।
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ॥
यदि स्याज्जीवपितृक एतान्विद्यात्तदा पितॄन् ।
येभ्यो वाऽपि पिता दद्यात्तेभ्यो वाऽपि प्रदापयेत् ॥
वसून्रुद्रांस्तथाऽऽदित्यान्नमस्कारस्वधान्वितान् ।
एतांश्चैव प्रमीतांश्च प्रमीतपितृको द्विजः " ॥

तर्पयेदिति शेषः । कव्यवाहमनलं तर्पयामीति प्रयोगः ।

असमर्थस्य संक्षेपतर्पणमाह विष्णुपुराणम्—

" आब्रह्म स्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् ।
दद्यात्पयोञ्जलींस्त्रींस्तु कुर्वन्संक्षेपतर्पणम् " ॥

योगयाज्ञवल्क्यः—" निष्पीड्य स्नानवस्त्रं तु प्रक्षाल्य प्रयतः शुचिः ।
देवानामर्चनं कुर्याद्ब्रह्मादीनाममत्सरः ॥
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥

✻ स्थ तर्पयत मे पितॄन् " इति पाठो बोधायनधर्मशास्त्रे दृश्यते ।

१ क. ग. घ. °त तृप्यत तृ° । २ क. घ. °रर्धस्नाना° । ३ क. ग. °वा अबान्धवा ये° ।

पूर्ववन्मन्त्रैः पूर्व(र्वे) याज्ञवल्क्यसंहितायां श्राद्धप्रकरण उक्तैः " विश्वे देवास आगत " " उशन्तस्त्वा " इत्याद्युक्तैः (द्भिः)।

" विश्वे देवास आगत शृणुता म इमं हवम्।
एदं बर्हिर्निषीदत " ॥
" उशन्तस्त्वा हवामह उशन्तः समिधीमहि।
उशन्नुशत आ वह पितॄन्हविषे अत्तवे " इति ॥

कात्यायनः—" देवांस्तु देवतीर्थेन तर्पयेदक्षतोदकैः " ॥

व्यासः—" एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रीन्स्त्रियस्त्वेकैकमञ्जलिम् " ॥

लिखितः—" उभाभ्यामपि हस्ताभ्यां संवृ[1]ताङ्गुष्ठकाभ्यां प्राङ्मुखो यज्ञोपवीती प्रागग्रैः कुशैर्देवतातर्पणं देवतीर्थेन कुर्यात् "।

योगयाज्ञवल्क्यः—" ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम्।
देवांश्छन्दांसि वेदांश्च ऋषींश्चैव तपोधनान् ॥
आचार्यांश्चैव गन्धर्वानाचार्यतनयांस्तथा।
सं[2]वत्सरं सावयवं देवीश्चाप्सरसस्तथा ॥
तथा देवान्नगान्नागान्सागरान्पर्वतांस्तथा।
सरितोऽथ मनुष्यांश्च यक्षान्रक्षांसि चैव हि ॥
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा।
वनस्पतींश्चौषधीश्च भूतग्रामं चतुर्विधम् " ॥

विष्णुसमुच्चयात्—" ततः कृत्वा निवीतं तु यज्ञसूत्रमतन्द्रितः।
प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत्पृथक् " ॥

कार्ष्णाजिनिः—" सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चाऽऽसुरिश्चैव वोढः पञ्चशिखस्तथा ॥
एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्तिताः " ॥

पद्मपुराणात्—" मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च " ॥

बौधायनः—" अथ दक्षिणतः प्राचीनावीती पितॄन्स्वधा नमस्तर्पयामि। पितामहान्स्वधा नमस्तर्पयामि। प्रपितामहान्स्वधा नमस्तर्पयामि। मातॄः स्वधा नमस्तर्पयामि " इत्यादि।

---

१ क. ग. घ. °वृत्ताङ्गु°। २ ख. सांवत्सरं।

( गृहस्थधर्मप्रकरणम् ४)

बृहस्पतिः—" स चार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रा[1]तराहुतेः ।
वैश्वदेवावसाने वा नान्यदेति निमित्ततः " ॥

सः, ब्रह्मयज्ञ इत्यर्थः ।

मनुः—" नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् " ॥

तथा—" वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि " ॥

वेदोपकरणं वेदाङ्गम् ।

आपस्तम्बः—

" अथ यदि वातो वा वायात्स्तनयेद्वा विद्योतते वा विस्फूर्जे[2]द्वैकामृचमेकं वा यजुरेकं वा सामाभिव्याहरेत् । भूर्भुवः स्वः सत्यं तपः श्र[3]द्धायां जुहोमीति वैतत्ते नो हैवास्यैतदहः स्वाध्यायतपासो भवति " ।

अत्र च वातो वायादित्याद्यनध्यायोपलक्षणम्[4] ।

ब्रह्मयज्ञानन्तरं देवादितर्पणं कार्यम् । तथा च बृहस्पतिः—

" ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाऽऽध्यात्मिकीं जपेत् ।
जप्त्वा वा प्रणवं वाऽपि ततस्तर्पणमारभेत् ॥
वसित्वा वसनं शुक्लं स्थले विस्तीर्[5]णबर्हिषि ।
विधिज्ञस्तर्पणं कुर्यान्न पात्रे तु[6] कदाचन ॥
पात्राद्वा मूलमादाय शुभे पात्रान्तरे क्षितौ ।
जलपूर्णेऽथ वा गर्ते न स्थले तु विबर्हिषि " ॥

योगयाज्ञवल्क्यः—" यद्युद्धृतं निषिञ्चेत तिलान्संमिश्रयेज्जले ।
अन्यथा वामह[7]स्ते तु ततस्तर्पणमाचरेत् " ॥

तथा—" अन्वारब्धेन सव्ये[8]न नाम्ना गोत्रेण चाप्यथ ।
आवाह्य पूर्ववन्मन्त्रैरास्तीर्[9]य च कुशाञ्शुभान् ॥
प्रागग्रेषु सुरान्[10]देवान्दक्षिणाग्रेषु वै पितॄन् ।
सव्यं जा[11]नु तथा[12]ऽन्वाच्य पाणिभ्यां दक्षिणामुखः " ॥

---

१ ख. प्राहुरा° । २ क. घ. °द्वैकं वाच° । ख. °द्वैकां वर्चमे° । ३ क. ग. घ. शुद्धायां । ४ ग. °म् । जपय° । ५ क. घ. °स्तीर्यं ब° । ६ क. घ. तु यथाविधि । पा° । ७ ग. °स्तेन ततस्त° । ८ क. घ. न पाणिना दक्षिणेन तु । आ° । ९ क. घ. °र्यं बर्हिषः शुभा° । १० ग. °न्देयाद्दक्षि° । ११ क. ख. घ. जान्वत° । १२ ग. °था द्वाभ्यां पा° ।

प्रक्षिप्य चाञ्जलिं सम्यगुदु[1] त्यं चित्रमित्यपि ।
तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि ॥
एवं जपेदूर्ध्वबाहुः सूर्यं पश्यन्समाहितः ।
गायत्र्या तु यथाशक्ति ह्युपस्थाय दिवाकरम् ॥
नोच्चैर्जप्यं[2] बुधः कुर्यात्सावित्र्या च विशेषतः " इति ।

बृहस्पतिः—"मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ॥
अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः " ॥ १०० ॥

ब्रह्मयज्ञमाह—

**वेदाथर्वपुराणानि सेतिहासानि शक्तितः ॥**
**जपयज्ञार्थसिद्ध्यर्थं[3] विद्यां चाऽऽध्यात्मिकीं जपेत् ॥१०१॥**

वेदानृग्वेदादीनथर्ववेदपुराणानीतिहासान्भारतादीन्विद्यामाध्यात्मिकीमध्यात्मसंबन्धिनीम् । उपनिषद्ग्रन्थमित्यर्थः । शक्तितो यथाशक्ति जपेत् । जपयज्ञार्थसिद्ध्यर्थं[4] ब्रह्मयज्ञसिद्ध्यर्थम् । अध्यात्मविद्यायाः पृथगुपादानं प्राधान्यार्थम्[5] । वेदेत्युक्तेऽथर्वग्रहणं वृत्तपूरणार्थम्[6] । तथाऽङ्गिरसामुपलक्षणार्थम् । श्रुतौ—"यदथर्वाङ्गिरसो मेदसः कुल्याः " इति श्रवणात् ।

मनुः—"अपां समीपे नियतो नैत्यकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वाऽरण्यं समाहितः ॥
आदावारभ्य वेदं तु स्नात्वोपर्युपरि क्रमात् ।
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः " ॥

शौनकः—

" प्राग्वोदग्वा ग्रामान्निष्क्रम्याप उत्प्लुत्य यज्ञोपवीत्यक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्योपस्थानं कृत्वा दक्षिणोत्तरौ पाणी संधाय सपवित्रपाणिर्द्यावापृथिव्योः संधिमीक्षमाणः संमील्य यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम् । ओंपूर्वा व्याहृतीः सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति तृतीयाम् " ।

युक्तः समाहितः ।

तथा[7]—" स यावन्मन्येत तावदधीत्य(त्यै)[8]तया परिदधाति नमो ब्रह्मण इति " ।

परिधानशब्दान्निरभ्यासो भवति ।

---

१ क. घ. त्वं मित्र° । २ क. ग. घ. °र्जपं बु° । ३ ङ. °यज्ञप्रसि° । ४ ग. °यज्ञसि° । ५ क. ख. घ. छ. ञ. °म् । अथ° । ६ क. ग. घ. छ. ञ. °म् । अथाङ्गि° । ७ ग. यथा । ८ ग. °धीयीत त° ।

मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः " ॥

**तथा**—" शं न आपस्तु द्रुपदादापोहिष्ठाघमर्षणम् ।
एतैश्चतुर्भिर्ऋग्मन्त्रैर्मन्त्रस्नानमुदाहृतम् ॥
अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत् ।
पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं भवेत् " ॥

**जाबालः**[1]—" अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कामिकम्[2] ।
आर्द्रेण वाससा वाऽपि मार्जनं दैहिकं[3] विदुः " ॥

**कात्यायनः**—" मासद्वयं[4] श्रावणादि सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥
धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः ॥
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ॥
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ।
स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले ॥
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः " ॥

**स्वर्धुनी गङ्गा ।**

**देवलः**—" राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु[5] ।
स्नानदानादिकं कुर्युर्निशि[6] काम्यव्रतेषु च ॥
नद्यामस्तमये स्नानं वर्जयेत्तु सदा बुधः[7] ।
नद्यां स्नात्वा नदीमन्यां न प्रशंसेत्तु धर्मवित् " ॥

**मनुः**—" न स्नानमाचरेद्भुक्त्वा नाऽऽतुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये " ॥

**नारायणः**—" उपवीती बद्धशिखः समागम्य[8] यथागमम् ।
पवित्रपाणिरोंकारं यज्ञेशं मनसा स्मरेत् ॥
प्रातःसंध्याविधानेन च्छन्द आर्षं च दैवतम् ॥
स्मृत्वा चाऽऽयम्य च प्राणानाचामेद्दर्भपाणिना ।
आपः पुनन्तु मन्त्रेण आपो हि ष्ठेति मार्जनम् ॥

---

१ ग. जाबालिः । २ क. ग. घ. कार्मिकं । ३ ग. घ. दैविकं । ४ क. घ. °सत्रयं । ५ क. घ. °वृत्तिषु । ६ क. घ. कुर्यान्निशि । ७ क. ग. घ. बुधैः । ८ क. °माचम्य ।

यत्स्नानवस्त्रेण मुखं विमृज्यते[1] स्नात्वा च यत्खादति दन्तधावनम् ।
अन्योन्यपृष्टेन यदोपलिप्यते(?) तदेति कृत्वा प्रजहाति लक्ष्मीः " ॥

सत्यव्रतः—" ऊर्ध्वपुण्ड्रो मृदा शुभ्रो ललाटे यस्य दृश्यते ।
चण्डालोऽपि स शुद्धात्मा पूज्य एव न संशयः " ॥

व्यासः—" आदाय परया भक्त्या गङ्गातीरोद्भवां मृदम् ।
यैश्चर्चयति[2] गात्राणि तस्य धर्मो महान्भवेत् " ॥

उशना—" स्नात्वा शिरो नावधुनेन्नाङ्गेभ्यस्तोयमुद्धरेत्[3] ।
न च पूर्वधृतं वासो न तैलं न वसां स्पृशेत् " ॥

योगयाज्ञवल्यः—" अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासा येन तद्भवेत् " ॥

कुतपः कम्बलः । उत्तरीयविषयमेतत् ।

तथा—" योऽसौ विस्तरशः प्रोक्तो स्नानस्य विधिरुत्तमः ।
असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥
स्नानमन्तर्जलं चैव मार्जनाचमने तथा ।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतदुपदिष्टं महात्मभिः " ॥

तथा—" असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥
आपोहिष्ठादिभिर्मान्त्रं मृदालम्बश्च पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण तद्दिव्यं स्नानमुच्यते ।
वारुणं चावगाहं तु (हस्तु) मानसं विष्णुचिन्तनम्[4] ॥
शास्तस्नानं समुद्दिष्टं मन्त्रस्नानात्क्रमेण तु ।
कालादेशादसामर्थ्यात्सर्वं तुल्यफलं स्मृतम् ॥

---

१ क. घ. विमृज्य° । २ ग. घ. यश्चार्च° । ३ क. घ. नाधुवने° । ४ ग. °म् । सप्तन्ना° ।

षट्त्रिंशन्मतात्—" गजाश्वरथपृष्ठे तु नाऽयङ्के चेष्टकाचिते ।
न तर्पयेत्पितॄन्देवान्न स्थलस्थः स्थले क्वचित् " ॥

हारीतः—" आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् " ॥

विष्णुः—" स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम् ॥
यत्राशुचि स्थलं वा स्यादुदके देवताः पितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् " ॥

कार्ष्णाजिनिः—"देवतानां पितॄणां च जले दद्याज्जलाञ्जलिम् ।
असंस्कृतप्रमीतानां स्थले दद्याज्जलं पुनः " ॥

ततश्च स्थलस्थितेनासंस्कृताय जलाञ्जलिर्देय इत्यपि ज्ञेयम् ।

" स्नानवस्त्रं ततः पीड्यं पुनराचमनं चरेत् ।
ये चैवास्मत्कुले जाता अपुत्रा गोत्रजा मृताः ॥
ते गृह्णन्तु मया दत्तं[1] वस्त्रनिष्पीडनोदकम् " ।

इति वस्त्रनिष्पीडनमन्त्रः ।

हारीतः—" जलार्द्रवासाः स्थलगो य आचामेन्नराधमः ।
वस्त्रनिश्चोतनं तस्य प्रेतास्तत्र पिबन्ति हि " ॥

दक्षः—" स्नात्वाऽऽचामेद्यदा विप्रः पादौ कृत्वा जले स्थले ।
उभयोरप्यसौ शुद्धस्ततः कार्यक्षमो भवेत् " ॥

व्याघ्रः—" जलाशयाद्व्रजेत्तीत्र[2]मापो अस्मानृचं पठन् ।
ततो वस्त्रद्वयं शुद्धं गृहीत्वा द्विरुपस्पृशेत् " ॥

जाबालिः[3]—" स्नात्वा संगृह्य वस्त्रं[4] च जङ्घे शोध्ये मृदम्भसा ।
स्नानं कृत्वाऽऽर्द्रवासास्तु विण्मूत्रं कुरुते यदि ॥
प्राणायामत्रयं कृत्वा पुनः स्नानेन शुध्यति " ।

गोबि(भि)लः—"स्नातो न मार्जयेदङ्गं[5] नापसव्येन पाणिना ।
न च निर्धु(धू)नयेत्केशानाचामेन्नैव[6] चोत्थितः " ॥

व्यासः—" न चानुलिम्पे[7]दस्नातो वासोऽप्येवं न निर्धुनेत् ।
आर्द्र एव तु वासांसि स्नात्वा सेवेत मानवः ॥

१ ख. ग. 'त्तं स्नाननि° । २ ग. °त्तीरमा° । ३ क. घ. °वालः—'स्ना° । ४ क. घ. वस्त्रे ।
५ क. घ. °ङ्गं स्नानं स° । ६ क. घ. °मेच्चैव नाङ्गतः । ७ क. घ. °लिप्सेद° ।

" बाहुं पूर्णं तिलैः कृत्वा जलस्थस्तर्पयेत्पितॄन् ।
स्थलस्थेन न कर्तव्यं पितॄणां तृप्तिमिच्छता ॥
मुक्तहस्तेन दातव्यं न मुद्रां तत्र दर्शयेत् ।

मुद्रा प्रदेशिन्यङ्गुष्ठाग्रसंयोगः ।

व्याघ्रः—" उभाभ्यामथ हस्ताभ्यामुदकं यः प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः " ॥

यमस्तु—" द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् " ॥

अत्र व्यवस्थामाह कार्ष्णाजिनिः—
" श्राद्धे विवाहकाले तु पाणिनैकेन दीयते ।
तर्पणे तूभयेनैव विधिरेष पुरातनः " इति ॥

अथवाऽऽश्वलायनीया दक्षिणेनैकहस्तेन कुर्युर्दक्षिणं प्रतीयादनादेश इति परिभाषाबलात् ।

गोबि(भि)लः—"शुक्लैस्तु तर्पयेद्देवान्मनुष्याञ्शबलैस्तिलैः ।
पितॄंस्तु तर्पयेत्कृष्णैस्तर्पयंस्तु सदा द्विजः ॥
अङ्गस्थैर्यस्तिलैः कुर्याद्देवतापितृतर्पणम् ।
रुधिरं तद्भवेत्तोयं प्रदाता किल्बिषी भवेत् ॥
रोमसंस्थांस्तिलान्कृत्वा यस्तु तर्पयते पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन च " ॥

ततश्चालोमकाङ्गस्थतिलैस्तर्पणं न दोषाय । स्थलतर्पणविषयमेतत् ।

मरीचिः—" तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥
सप्तम्यां रविवारे च गृही जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥
पक्षयोरुभयोर्जन्मसप्तम्यां निशि संध्ययोः ।
विद्यापुत्रकलत्रार्थी तिलान्पञ्चसु वर्जयेत् ।
निम्बस्य भक्षणं तैलं तिलैस्तर्पणमञ्जनम् ॥
सप्तम्यां नैव कुर्वीत ताम्रपात्रे च भोजनम् " ।

---

१ ग. बाहुपू° । २ क.ग.घ. °थाऽऽश्व° । ३ क. ग. घ. °लस्थत° । ४ क. घ. °त्रार्थान्न कु° । ५ क. घ. °त्रार्थास्तिला° ।

आपो अस्मानिति शेषः।

" या सूर्य इति समापयेत्। 'तरत्समन्दी' 'समुद्रज्येष्ठा' इति सूक्ताभ्यां यत्किंचेदमिमं मे गङ्ग इति पावनम् "।

कुशैरिति शेषः। तत्र—" एतो न्विन्द्रम् " इति ऋचस्तिरश्चीनाङ्गिरस इन्द्रोऽनुष्टुप्। शिवेन मा चक्षुषेत्यग्निः। आपो जगती। इदमाप इत्यम्बरीषः सिन्धुद्वीप आपोऽनुष्टुप्। आपो अस्मानिति वामदेव आपस्त्रिष्टुप्। याः सूर्यो रश्मिभिर्वसिष्ठ आपस्त्रिष्टुप्। [*तरत्समन्दीरिति गायत्री। समुद्रज्येष्ठा इति चतुर्ऋचं सूक्तम्। वसिष्ठ आपस्त्रिष्टुप्।] यत्किंचेदमिति वसिष्ठो वरुणस्त्रिष्टुप्। इमं मे गङ्ग इति सिन्धुक्षित्प्रैयमेधो नद्यो जगती। ततः—

" स्नात्वाऽऽचान्तो वारिमध्ये त्रिः पठेदघमर्षणम्। "

" ऋतं च " इति तृचा(चेना)घमर्षणम्। अस्या अघमर्षण ऋषिः। भाववृत्तम्। अनुष्टुप्।

चतुर्विंशतिमतात्—" स्नानादनन्तरं तावत्तर्पयेत्पितृदेवताः।
उत्तीर्य पीडयेद्वस्त्रं संध्याकर्म ततः परम् "॥

पुराणात्— " नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते।
तर्पणं[1] तु भवेत्तस्य अङ्गत्वेन प्रकीर्तितम् "॥

कार्ष्णाजिनिः–" नाभिमात्रे[2] जले स्थित्वा चिन्तयेद्गतमानसः "॥

तर्पयेच्चेति शेषः।

नृसिंहपुराणम्—" पित्रार्षि(तृषि)[3]गणदेवादीनद्भिः संतर्पयेत्ततः।
देवान्देवगणांश्चैव मुनीन्मुनिगणानपि॥
पितॄन्पितृगणांश्चैव नित्यं संतर्पयेत्ततः।
दद्यात्सर्वग्रहेभ्यश्च ऋषिभ्यश्च जलं ततः॥
कृतापसव्यः स्वधया पितृभ्यस्तदनन्तरम्। "

पुराणात्—" तर्पणं देवतानां तु कृत्वा वै प्राङ्मुखः शुचिः।
अधिकारी भवेत्पश्चात्पितॄणां तर्पणे सदा "॥

योगयाज्ञवल्क्यः–" अतोऽन्यथा चेत्सव्येन तिलान्कृत्वा विचक्षणः।
दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि "।

अतः स्थलस्थतर्पणात्। अन्यथा जलस्थतर्पण इत्यर्थः। तथा च स्मृत्यन्तरम्–

---

* एतच्चिह्नान्तर्गतग्रन्थः क. ग. पुस्तकयोर्न विद्यते।

---

१ ख. ग. घ. तर्पणे। २ ख. ग. घ. °मात्रं ज°। ३ ग. पित्रार्षि°।

मृत्तिके त्वां च गृह्णामि[1] प्रजया च धनेन च ॥
मृत्तिके ब्रह्मदत्ताऽसि काश्यपेनाभिमन्त्रिता ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् " ।

अश्वक्रान्त इत्यादीनां यज्वक ऋषिः । मृत्तिका देवता । अनुष्टुप्छन्दः ।

" पुनश्च गोमयेनैवमग्रमग्रमिति ब्रुवन् ।
अग्रमग्रं चरन्तीनामोषधीनां वने[2] वने ॥
तासामृषभपत्नीनां पवित्रं कायशोधनम् ।
त्वं मे रोगांश्च शोकांश्च पापं च नुद गोमय " ॥

अग्रमग्रमिति विश्वामित्र ऋषिः । गोमयो देवता । अनुष्टुप्छन्दः ।

" काण्डात्काण्डादिति द्वाभ्यामङ्गमङ्गमुपस्पृशेत् " ।

दूर्वयेति शेषः ।

" काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि ।
एवा नो दूर्वे प्र तनु सहस्रेण शतेन च ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि ।
तस्यास्ते देवीष्टके विधेम हविषा वयम् " इति ॥

अग्निर्ऋषिः । दूर्वा देवता । अनुष्टुप्छन्दः ।

तथा—" अपाछमयकिल्बिषमपकृत्यमपोरपः(?) ।
अपामार्ग त्वमस्माकमप दुःस्वप्न्यं(प्नियं)सुव "

इति च सिन्धुद्वीपदृष्टयाऽपामार्गदेवतयाऽनुष्टुभा मार्गेणाङ्गमङ्गमुपस्पृशेत् ।

शौनकः—" अथ हिरण्यशृङ्गयाऽऽपो देवीरप्स्वन्तरित्यप उपस्थाय सुमित्रा न इत्यपः स्पृष्ट्वा दुर्मित्रा इति बहिः क्षिपेत् " ।

हिरण्यशृङ्गयेति दीर्घतपा ऋषिः । इन्द्रो देवता । त्रिष्टुप्छन्दः । आपो देवीरुपह्वय[3] इति मेधातिथिर्ऋषिः । आपो गायत्री । अप्स्वन्तरिति शुनःशेपः, सुमित्रा न इति दुर्मित्रा इति च वामदेवः, आपो देवताः । यजुषी छन्दः ।

ततः—" इन्द्रशुद्धादयश्चापः प्रविश्य मनसा जपेत् ।
तत्रैव गायेत्सामानि अपि वा व्याहृतीर्जपेत् ॥
शिवेन मेति(मा) जपित्वेदमाप इत्यप आप्लवेत् " ।

---

१ घ. °मि पूजया शोध° । २ क. ग. घ. रसं । ३ ख. ग. °वीरप्स्वन्त इ° ।

शौनकः—" नदीतीरे शुचौ देश आहरेन्मृत्तिकां कुशान् ।
प्रयतो मृदमादाय दूर्वापामार्गगोमयान् ॥
एकदेशे ततः कुर्यान्मृदा[1] स्नानं ततः परम् " ॥

वसिष्ठः—" मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।
अधश्च तिसृभिः कायः षड्भिः पादौ तथैव च ।
क्षालयेत्सर्वकायं तु द्विराचम्य यथाविधि " ॥

शौनकः—" गायत्र्याऽऽदित्या अत्र हि ख्याताता देवा इति मृदमभिमन्त्रयेत्[2] " ।

गायत्र्या ऋष्यादि प्रसिद्धम् । आदित्या अत्र हि ख्यातेति त्रित ऋषिः । आदित्या देवता[3] । जगती छन्दः ।

"आदित्या अव हि ख्याताधि कूलादिव स्पशः । सुतीर्थमर्वतो यथाऽनु नो नेषथा सुगमनेहसो व ऊतयः सुऊतयो व ऊतयः " ।

अतो देवा इति मेधातिथिऋषिः । विष्णुर्देवता । गायत्री छन्दः ।
" अतो देवा अवन्तु नो यतो विष्णुर्वि चक्रमे । पृथिव्याः सप्त धामभिः " ।

ततः–'यत इन्द्र' 'स्वस्तिदा विशस्पतिः' 'वि रक्षो वि मृधः' 'इदं सु मे जनितः' इति मृदं प्रतिमन्त्रं प्रतिदिशं क्षिपेत्पूर्वादिक्रमेण । ततो यत इन्द्रेति भर्ग ऋषिः । इन्द्रो देवता । बृहती छन्दः ।

" यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि " ॥

स्वस्तिदा विशसो भारद्वाजऋषिः । इन्द्रो देवता । अनुष्टुप्छन्दः ।

" स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः " ॥
" वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः " ॥

इदं सु मे विमद ऋषिः । इन्द्रो देवता । त्रिष्टुप्छन्दः ।

" इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहन्ति ।
लोपाशः सिंहं प्रत्यञ्चमत्साः क्रोष्टा वराहं निरतक्त कक्षात् " ॥

वसिष्ठः—" ततः संमार्जनं कुर्यान्मृदा पूर्वं तु मन्त्रवत् ।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरा ॥
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ।

---

१ क. ग. घ. °न्मृदः स्ना° । २ क. घ. °ति । अत्रिऋ° । ३ ग. °ता गायत्री छ° ।

सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र क्रिया मता " ॥

स्नानमेतत् । क्रिया कार्यतया विहितेत्यर्थः[1] ।

" तत्र काम्यं तु कर्तव्यं यथावद्विधिचोदितम् ।
नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् ॥
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ।
स्नातस्य वह्नितप्तेन तथैव परवारिणा ॥
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्[2] ।
अद्भिर्गात्राणि शुध्यन्ति तीर्थस्नानाद्भवेत्फलम् ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
स्नानमेव क्रिया यस्मात्स्नानं पुण्यतमं स्मृतम् " ॥

दक्षः—" चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत् ।
तिलपुष्पकुशादीनि स्नानं वा कृत्रिमे जले ॥
मृत्तिका सप्त न ग्राह्या वल्मीके मूषिकास्थले ।
अन्तर्जले श्मशाने च वृक्षमूले सुरालये ॥
परस्नानावशिष्टा च श्रेयस्कामैः सदा बुधैः " ॥

अष्टधा विभक्तस्याह्नश्चतुर्थभागे मृदाहरणं कुर्यादित्यर्थः ।

शातातपः—" शुचौ देशे तु संग्राह्या शर्कराश्मादिवर्जिता ।
रक्ता गौरी तथा श्वेता मृत्तिका त्रिविधा स्मृता " ॥

योगयाज्ञवल्क्यः—" शृणुष्व वक्ष्यते स्नानं सर्वपापप्रणाशनम् ।
मृत्तिकां गोमयं दर्भान्पुष्पाणि सुरभीणि च ॥
आहरेद्यावदर्थानि स्नानार्थं प्रयतः शुचिः ।
गत्वोदकान्तं विधिवत्स्थापयेत्तु पृथक्क्षितौ ॥
त्रिधा कृत्वा मृदं तां तु गोमयं तु विचक्षणः ।
अधमोत्तममध्यानामङ्गानां क्षालनं तु तैः ॥
भागैः पृथक्पृथक्कुर्यात्क्षालने मृदसंकरः " ।

दक्षः—" मलापकर्षणं पार्श्वे मन्त्रतस्तु जले स्मृतम् ।
संध्यास्नानं तूभयतः स्नानदेशाः प्रकीर्तिताः " ॥

पार्श्वे तटे ।

१ क. °र्थः । °तीर्थाभावे तु । २ क. भवेत् ।

अत एव मनुः—

" बुद्धिवृद्धिकराण्याशु धन्यानि[1] च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्[2] ॥
वेदस्य पारं गत्वा तु भूयो भूयस्तमभ्यसेत् ।
शास्त्रं च विमलं कुर्यान्न चाधीत्य त्यजेत्पुनः " ॥

निगमाः पदार्थनिर्णयहेतवो निघण्टुप्रभृतयः ॥ ९९ ॥

## उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ॥

योगोऽपेक्षितलाभः, क्षेमस्तद्रक्षणम् । योगक्षेमार्थसिद्ध्यर्थमीश्वरं[3] तत्प्रयोजनसंपादनसमर्थमुपेयादुपगच्छेत् ।

गौतमः—" योगक्षेमार्थमीश्वरमधिगच्छेन्नान्यमन्यत्र देवगुरुधार्मिकेभ्यः " ।

मनुः—" दैवतान्यधिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान् ।
ईश्वरं[4] चैव रक्षार्थं गुरूनेव च पर्वसु " ॥

## स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ १०० ॥

मध्यंदिने यथाविधि स्नात्वा यथाविधि देवान्पितॄंस्तर्पयेत् । चकारादृषीन्मनुष्यांश्च । तथा देवादीनर्चयेत्पूजयेत् ।

शङ्खः—" नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं[5] षोढा स्नानं प्रकीर्तितम् ॥
अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥
चण्डालशवयूपादि[6] स्पृष्ट्वा[7]ऽस्नातां रजस्वलाम् ।
स्नानार्हस्तु यतः स्नाति स्नानं नैमित्तिकं हि तत् ॥
पुष्प(ष्य)स्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥
जप्तुकामः पवित्राणि अर्चिष्यन्देवताः पितॄन् ।
स्नानं समाचरेद्यस्तु(त्तु) क्रियाङ्गं तत्प्रकीर्तितम् ॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणार्था तु प्रवृत्तिस्तस्य नान्यथा ॥

---

१ क. ख. धान्यानि । २ क. घ. °न् । दक्षः । वे° । ३ क. घ. °श्वरमुक्तप्रयोजनस° ।
४ क. घ. °रं दैव° । ५ क. घ. °ष्ठं पौर्णस्ना° । ६ ग. °वधूमादि । ७ क. दृष्ट्वा ।

" पाणिग्रहणादि गृह्यं परिचरेत्स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा, "

तद्वैतानविषयेण[1] मानवेनं[2] न विरुध्यते । गृह्यविषयत्वात्तस्य । एवंमनाम्ना-(माम्ना)[3]तदक्षिणानि ऋत्विजैव कार्याणि । अनाम्नातदक्षिणानि[4] स्वयमपि ऋत्विजा ।

**कात्यायनः**—" असमक्षं तु दंपत्योर्होतव्यं नर्त्विगादिनां[5] ।
भवेदप्यसमक्षं तु तयोर्हुतमनर्थकम् " ॥

**वराहपुराणे**—" उदयान्निःसृतं सूर्यं यस्तु भक्त्या नरो द्विजः ।
दध्यक्षताञ्जलीभिस्तु तिसृभिः पूजयेच्छुचिः ॥
तस्य भावप्रसन्नस्य ह्यशुभं यत्समार्जितम् ।
तत्क्षणादेव निर्दग्धं भस्मी भवति तस्य तत् " ॥

**दक्षः**—" देवकार्यं ततः कृत्वा गुरुमण्डलँदर्शनम् ।
देवकार्यस्य सर्वस्य पूर्वाह्णस्तु विधीयते " ॥

**विष्णुपुराणम्**—" स्वाचारांश्च[8] ततः कुर्यात्पुमान्केशप्रसाधनम्[9] ।
आदर्शाञ्जनमङ्गल्यदूर्वाद्यालभनानि[10] च " ॥

**ब्रह्माण्डपुराणे**—" स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीवितम् ।

**कात्यायनः**—"पापिष्ठं दुर्भगं मत्तं नग्नमुत्कृत्तनासिकम् ॥
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ।
श्रोत्रियं सुभगं गां च ह्यग्निमग्निचितं तथा ॥
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते " ॥

**वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥ ९९ ॥**

वेदार्थानधिगच्छेदिति साध्यस्य निर्देशः । शास्त्राणि विविधानीति साधनस्य । शास्त्राण्यधिगच्छेद्वेदार्थानधिगन्तुमिति वाक्यार्थो भवति । एवं च वेदार्थाधिगमोपायभूतानामेव निगमनिरुक्तव्याकरणमीमांसादीनां शास्त्राणां परिग्रहो न बौद्धशास्त्रादीनाम् । अत एव तदधिगममुपपातकत्वेन वक्ष्यति । स्मृत्यर्थो[11] वेदार्थशब्देनैव गृहीतः । वेदार्थानुष्ठानत्वात्तदधिगमस्य वेदादिधारणमर्थसिद्धम् । अत एवोपपातकवर्गे " अधीतस्य च नाशनम् " इति वक्ष्यति ।

**दक्षः**—" वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा " ॥

---

१ क. ख. घ. °येन मा° । २ क. घ. °न वि° । ३ क. घ. °वचस्नात° । ४ क. अनाम्नातदक्षिणानि स्व° । घ. अस्नातदक्षिणानि स्व° । ५ क. ख. °णा स्व° । ६ क. घ. °ना । द्वयोरप्यसमक्षे तु भवेद्धुत° । ७ घ. °लवीक्षणम् । ८ ख. ग. °चारश्च । ९ ख. °सादन° । १० क. °नमाङ्ग° । ११ क. ग. घ. °त्यर्थश्च वे° ।

कात्यायनः—" यथाऽहनि तथा प्रातर्नित्यं स्नायादतन्द्रितः ।
दन्तान्प्रक्षाल्य नद्यादौ गेहे वै तदमन्त्रवत् " ॥

अमन्त्रवदिति मन्त्रविस्तरनिषेधपरम् । यतोऽयमेवाऽऽह—

" अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः ।
प्रातः संक्षेपतः स्नानं होमलोपो विगर्हितः ॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष दिवा रात्रौ प्रातःस्नानं विशोधनम् ॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् " ॥

विष्णुः—" य इच्छेद्विपुलान्भोगांश्चन्द्रसूर्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ " ॥

यमः—" प्रातःस्नायी च सततं द्वौ मासौ माघफाल्गुनौ ।
देवान्पितॄन्समभ्यर्च्य सर्वपापैः प्रमुच्यते " ॥ ९८ ॥

## हुत्वाऽग्नीन्सूर्यदै(दे)वत्याञ्जपेन्मन्त्रान्समाहितः ॥

श्रौतस्मार्ताग्निहवनं स्वशास्त्रानुसारेणानुष्ठाय स्वशाखाधीतान्[3]सूर्यदै(दे)वत्यान्मन्त्रान्समाहित एकाग्रमना जपेत् ।

नृसिंहपुराणे—" पूर्वां संध्यां सनक्षत्रामुपक्रम्य यथाविधि ।
सावित्रीमभ्यसेत्तावद्यावदादित्यदर्शनम् ॥
तत आवसथं प्राप्य होमं कुर्यात्सदा बुधः ।
संध्याकर्मावसाने तु स्वयं हो[4]मो विधीयते ॥
स्वयंहोमफलं यत्स्यात्तदन्येन न लभ्यते ।
ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ॥
एतैरेव हुतं यत्स्यात्तद्धुतं स्वयमेव तु " ।

विट्पतिर्जामाता । श्रौते त्वाधानर्त्विजां मध्य एकोऽन्तेवासी वा जुहुयात् । यथाऽऽहाऽऽश्वलायनः—

" स्वयं पर्वणि वा जुहुयात् । ऋत्विजामेक इतरं कालमन्तेवासी वा " ।

मनुः—" [5]नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नाऽऽर्तो नासंस्कृतस्तथा " ॥

यत्तु शौनकवचनम्—

---

१ ग. °न्त्रकम् । अ° । २ क. ग. °स्नानेन शुध्यति । प्रा° । ३ ख. °धीनान्सू° । ४ क. घ. °मो न विद्यते । स्व° । ५ ख. नैकक° ।

गर्गः—" दशाङ्गुलं तु विप्राणां क्षत्रियाणां नवाङ्गुलम् ।
अष्टाङ्गुलं तु वैश्यानां शूद्राणां सप्तसंमितम् ॥
चतुरङ्गुलमात्रं तु नारीणां नात्र संशयः ।
प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च ॥
दक्षिणेन तथा कुष्ठं पश्चिमेन पराजयः ।
उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च " ॥

विष्णुः—
" न पालाशं दन्तधावनमद्यान्न चैव श्लेष्मातकारिष्टविभीतकधवधन्वनजम् । न कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलुजम् । न बन्धूकनिर्गुण्ठीशिग्रुबिल्वकतिन्दुकजम् । न पारिभद्रवाल्मीकमोचक्यशल्मलीशणजम् । न मधुरं नाम्लं नोर्ध्वशुष्कम् । न सुशिरं न पूतिगन्धि न पिच्छिलम् " ।

मोचक्यं कदलीजमित्यर्थः ।

व्यासः—" प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् ।
पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखैस्तृणैश्च वा ॥
कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसंमितम् ।
कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृतकूर्चकम् ॥
दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा ।
शुद्ध्यर्थं प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥
श्राद्धे यज्ञे च नियमान्नाद्यात्प्रोषितभर्तृका " ॥

श्राद्धकर्तुर्निषेधोऽयं न भोक्तुः ।

" अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् " ॥

पुराणम्—" प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च ।
नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् " ॥

यमः—" चतुर्दश्यष्टमी दर्शः पूर्णिमा संक्रमो रवेः ।
क्षुरस्त्रीतैलमांसानि दन्तकाष्ठं विवर्जयेत् " ॥

उशना—" न दन्तकाष्ठं पाटयेन्नाङ्गुलीभिर्दन्तान्प्रक्षालयेत् " ।

स्मृत्यन्तरे—" पालाशं काकुभं दार्भं नैवाद्याद्दन्तधावनम् ।
अद्याचेन्निष्कृतिं तस्य वच्मि गामवलोकयेत् " ॥

---

१ ख. द्कार्ली° । २ ग. °चक्राशल्म° । ३ ख. घ. न प्रति° । ४ ख. घ. °म् । पूर्णे° ।

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ॥
प्रातःसंध्यामुपासीत दन्तधावनपूर्विकाम् ॥ ९८ ॥

शरीरचिन्तां शरीरस्य सामयत्वनिरामयत्वविषयां चिन्तां निर्वर्त्य कृतशौचक्रियो द्विजातिर्गृही प्रातःसंध्यां दन्तधावनपूर्विकामुपासीत । दन्तानां धावनं शोधनं तत्पूर्वं यस्याः सा दन्तधावनपूर्विका । अत्र ब्रह्मचारिणो विहिता संध्या गृहस्थं प्रत्यपि सा प्राप्ता । "उत्तरेषां चैतदविरोधि" इति ब्रह्मचारिधर्मातिदेशाद्गौतमवाक्यात् । तस्या दन्तधावनपूर्वकत्वमनेन विधीयते ।

**शङ्खः**—"ब्राह्मे मुहूर्ते तूत्थाय मूत्रपुरीषोत्सर्गं कुर्यात्" ।

**ब्रह्माण्डपुराणे**—"प्रतिश्रयाद्दक्षिणपश्चिमेन क्षिप्रं गत्वा क्षेपमात्रं[1] शरस्य ।
कुर्यात्पुरीषं तु शिरोऽवगुण्ठ्य न तु स्पृशेज्जातु शिरः करेण" ॥

**अङ्गिराः**—"कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितः ॥
उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम् ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन निष्ठीवोच्छ्वास[2]वर्जितः ।
कुर्यान्मूत्रपुरीषं तु शुचौ देशे समाहितः" ॥

**दक्षः**—"उषःकाले तु संप्राप्ते शौचं कुर्याद्यथार्थवत् ।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्" ॥

**वृद्धपराशरः**[3]—"मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात्सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" ॥

**कात्यायनः**—"उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥
आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं मे[4] देहि वनस्पते" इति ॥

**मार्कण्डेयः**—"प्रक्षाल्य भक्षयेत्पूर्वं प्रक्षाल्यैव च संत्यजेत् ।
उदङ्मुखः प्राङ्मुखो वा कषायतिक्तकण्टकम्[5] ॥
कनिष्ठाग्रसमस्थौल्यं[6] सुकूर्चं द्वादशाङ्गुलम् ।
प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम्" ॥

---

१ ख. °पणमा° । २ क. घ. °नष्ठीवनोच्छ्वा° । ३ क. घ. °वृद्धशातातपः । मु° ।४ क. घ. नो । ५ घ. °षायं त्यक्त° । ६ क. ग. °ल्यं सकू° ।

**कात्यायनः**—" निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत्कार्यवान्विप्रो वृथैव न चिरं क्वचित् ॥
मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः ।
उपविश्य शुचिः सर्वं यथाकालमुपाचरेत् " इति ॥

**हारीतः**—" नाग्निवेलयो[2]: प्रवसेत्पर्वसु च " । अग्निवेलयोरग्निहोत्रवेलयोरित्यर्थः । प्रायो[3]युकादिमधिकृत्य **लौगाक्षिः**—" सायमाहुतिं हु[4]त्वा तदैव प्रातराहुतिं जुहुयात् " ।

**मैत्रायणीयपरिशिष्टम्**—
" ऋषयो ह स्म प्रायो[5]युका आसंस्तेऽग्निहोत्रेणातप्यंस्ते समस्तहोमानपश्यन्नथो द्विरात्राय[6] त्रिरात्राय षड्रात्रायाष्टरात्रायार्धमासायाग्निहोत्रमाजुहुवुः । तस्माद्यायावर आमयाँ[7]व्यार्तो वाऽर्धमासायाग्निहोत्रं जुहुयात् । पक्षादौ[8] पर्वणोऽन्ते च सायं च प्रातरेव च चतुर्दश चतुर्गृहीतानि सकृदुन्नयनमेका समित्सकृ[9]द्धोमः सकृत्पाणिमार्जनमित्येवं प्रातः " ।

**अस्यार्थः**—ऋषयः प्रायो[10]युकाः प्रवासशीला अग्निहोत्रेण स्वकाले क्रियमाणेन हेतुर्ना[11]ऽर्ता[12](त)प्यन्नापद्धर्म[13]मपेक्षन्त ते समस्तहोमा[14]नेकदे[15]व प्रयोज्यानपश्यन् । तत्र पक्षान्त्यद्विरात्रे त्रिरात्रे षड्रात्रेऽष्टरात्रे पक्षेऽर्धमासकाले ये होमास्तान्सकृदेव जुहुवुः । तस्मादन्योऽपि प्रवासी व्या[16]ध्या[17]र्तो वाऽर्धमासहोमं कुर्यात् । तस्य प्रयोगः—पक्षादौ यजनीयेऽहनि सायं चतुर्दश चतुर्गृहीतानि सकृदुन्नयति । उपलक्षणार्थं चैतत् । यथाऽऽगामिनः पक्षस्यान्ते यथापार्वणमौप[18]वसथ्यमहस्ततः [19]पूर्वसायंकालहोमो[20]ऽन्तिमेन सायंहोमेन व्याप्तो भवति । तथा चतुर्गृहीतसंख्यं[21] संपादयेत् । एवमौप[22]वसथ्यस्याह्नः प्रातःकालस्य होमव्याप्तिसंपादिका चतुर्गृहीतसंख्या प्रातर्होमसमये[23] कार्या । प्रायेण चतुर्दशसंख्या तथा भवतीति तद्ग्रहणं[24] कदाचित्तु त्रयोदशसंख्या पञ्चदशसंख्या वा यथा स्यादित्युपलक्षणम् ।

प्रायो[25]युकमधिकृत्य **श्रुतिः**—"यावतीर्वाऽऽहुतीर्होष्यन्स्यात्तावन्ति चतुर्गृहीतानि सकृदुन्नयेत् " ॥ ९७ ॥

---

१ क. °त् । हारीतः । म° । २ ख. °योः प्राव° । ३ क. घ. °यायूका° । ४ क. घ. कृत्वा । ५ क. घ. °यायूका । ६ क. घ. °य प° । ७ ख. °यान्य(व्य)तोवारमा° । ८ क. घ. °दौ पार्वणान्ते । ९ ख. °कृत्पा° । १० क. घ. °यायूकाः । ११ ग. °नाऽप्यनाप° । १२ क. °तावन्ना° । १३ क. °मपेक्षन्ते स° । १४ ग. °मानने° । १५ क. ख. °व प्रायो° । १६ क. व्याध्यन्तो । १७ख. °ध्यान्तो वाऽ° । १८ ख. ग. °पस° । १९ ग. °पूर्वं सायंकालहोमातिक्रमेण सायंहोमे° । २० क. °होमेन । घ. °होमान्तिमेन व्या° । २१ क. घ. °संख्यां सं° । २२ क. ख. ग. °पस° । २३ ख. घ. समासे का° । २४ क. घ. °हणे क° । २५घ. °यायूक° ।

**कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ॥**
**दायकालाहृते वाऽपि श्रौतं वैतानिका[१]ग्निषु ॥ ९७ ॥**

स्मार्तं गृह्योक्तं कर्म वैवाहिके विवाहसंस्कृतेऽग्नौ कुर्वीत प्रत्यहं नित्यम् । गृही गृहवान् । गृहशब्दोऽयं भार्यामाचष्टे, न शालाम् । " विवाहाग्नौ " इति वदन्विवाहकर्मणाऽग्नौ कोऽप्यतिशयो गृह्यकर्मानुकूलो जायत इति दर्शयति । न ह्यन्यथा विवाहाग्नौ कर्मसंप[३]त्तिर्भवति । अग्नेः प्रतिक्षणं प्रध्वंसितत्वा(सित्वा)त् । विवाहसंस्कारस्य स्थायितया तद्विशिष्टो विवाहाग्निर्भवति स्थायी । ततश्च नष्टोऽसौ वैवाहिककर्मणोत्पाद्य इति सूचितं भवति । तत्र विवाहसंस्कारकारणान्याह कात्यायनः—

" विवाहाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ।
हो[४]मकालात्यये तस्य पुनराधानमिष्यते ॥
अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः ।
पालयेदुपशान्तेऽस्मिन्पुनराधानमिष्यते " ॥

मरीचिः—" दूर[५]स्थेऽपि य[६]दाऽकस्माद्धोमलोपः प्रजायते ।
कर्तव्यं पुनराधानं प्रायश्चित्तं न विद्यते " ॥

प्रव[७]सति यजमाने समारूढाग्निविषयमेतत् ।

बौधायनः—

" अमेध्यो[८]भ्याधाने समारोप्य निर्मथित्वा[९] पवमानेष्टिः " ।

वैतानाग्निविषयमेतत् ।

" विवाहाग्निश्चेदरणिमांस्तथा पूर्ववन्निर्मथ्य तदा[१०] पवमाने[११]ष्टिर्देवताभ्यश्च[१२]रून्पूर्णाहुतीर्वा कुर्यात् । अनरणिश्चेल्लौकिकमग्निमानीय चरुप्रवृत्तिं कुर्यात् " ॥

" अचोदितेन पाकेन कृतेनोद्धरणेन वा ।
लौकिकोऽग्निः स विज्ञेयः पुनराधानमर्हति ॥
दायविभागकालाहृते चाग्नौ [१३]गृह्यं कर्म कुर्वीत " ॥

दायः पितृधनम् । आहृत आहितः । श्रौतमग्निहोत्रादिकर्म वैतानिकेषु गार्हपत्यादिष्वग्निषु कुर्वीत । एतच्च कल्पसूत्रगृह्यशास्त्रेभ्यः प्राप्तमेवानूद्यते, धर्मशास्त्रपुराणविहितानां ग्रहयज्ञादिकर्मणां वैवाहिकश्रौता[१४]ग्निसंबन्धनिवृत्त्यर्थम् ।

---

१ क. ख. घ. °कादिषु । २ क. घ. °ग्नौ कर्म° । ३ ग. संप्रतिप° । ४ ख. ग. होमः का° । ५ क. ग. घ. °रस्थोऽपि । ६ ख. यथाऽक° । ७ क. °वसिते य° । ८ क. °मानरू° । ९ ग. °ध्याद्याधा° । १० क. ग. °त्वा पाव° । ११ क. ख °ष्टिदेव° । १२ क. ग. घ. °श्चरुः पूर्णा° । १३ क. घ. गृही कु° । १४ क. घ. °ग्निनि° ।

तस्या वर्णबाह्यत्वेनाजायात्वात्[1] । गुणापेक्षो विकल्प उदाहरणम् । उत्तमवर्णेन हीनवर्णायामुत्पन्ना सा(या) स्त्री सोत्तमवर्णादनिषिद्धमार्गेण स्त्रियं जनयति । साऽप्येवं साऽप्येवमिति सप्तमे स्त्रीपुंसयुगले जातमपत्यं समानवर्णं पित्रा भवति[2] ॥

## व्यत्यये कर्मणां साम्यम्

ब्राह्मणक्षत्रियादीनां यानि[3] वृत्तिरूपाणि कर्माणि तेषां व्यत्यये व्यतिक्रमे यथा ब्राह्मणस्य क्षत्रियवृत्तिं वैश्यवृत्तिं वोपजीवतो जाताः पुत्रपौत्रादयो यदि तामेव वृत्तिमुपजीवन्ति तदा सप्तमे पञ्चमे वा जातमपत्यमुपजीव्यमानसंबन्धि-वर्णात्मकं भवति ॥

## पूर्ववच्चोत्तराधरम् ॥ ९६ ॥

इति वर्णजातिविवेकप्रकरणम् ।

पूर्ववद्वर्णसंकरवद्वृत्तिसंकरस्याप्युत्तराधरं[6] वेदितव्यम् । भावप्रधानोऽयं निर्देशः । ततश्चोत्तरत्वमधरत्वं वा वेदितव्यमित्यर्थः । आनुलोम्येन वृत्ति-संकरस्योत्तरत्वम् । यथाऽऽह वसिष्ठः[7]—

" आजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन् " इति ।

वृत्तिसंकरे[8] प्रातिलोम्यमधरम् । यथा—वैश्यस्य क्षत्रवृत्त्युपजीवनं क्षत्रि-यस्य ब्राह्मणवृत्त्युपजीवनम् । अत एव " वृत्तिमातिष्ठेरन् " इत्यनुवृत्तौ[9] वसिष्ठः—" न तु कदाचिज्ज्यायसीं " इति ॥ ९६ ॥

[ इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादि-त्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धे वर्णजाति-विवेकप्रकरणम् ॥ ३ ॥ ]

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

# [ गृहस्थधर्मप्रकरणम् । ] ( ४ )

सभार्यस्य गृहस्थस्य धर्मेष्वधिकार इति भार्यापरिग्रहं सप्रसङ्गमभिधाया-धुना गृहस्थधर्मानाह—

---

१ ख. ग. 'त्वेन जा' । २ क. घ. वर्धयति । ३ ख. °नि नित्र्° । ४ क. घ. °नवृत्ति-संबन्धव° । ५ ङ. °वच्चाधरोत्तरम् । ६ क. घ. °धरत्वं वे° । ७ क. ख. घ. °ष्ठः । अजी° । ८ क. घ. °कटे प्रा° । ९ क. घ. °त्तौ न ।

( वर्णजातिविवेकप्रकरणम् ३)

ततश्च वर्णधर्मः प्रधानकर्म, स्वकर्म[1] स्वकीयवृत्तिः[2]। क्षत्रिया वैश्यान्मागधं जनयति, शूद्रात्क्षत्तारम् । वैश्या[3] स्त्री शूद्रादायोगवम् । एताभिः संज्ञाभिः शास्त्रान्तरे संव्यवहारः । तत्र मनुः—

" सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सनम् ।
वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥
मत्स्यघातो निषादानामायोगव्यस्य लक्षणम् । "

तथा—" ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतेः ।
स्त्रीबालाभ्यवपत्तौ च बाह्यानां सिद्धिकारणम् " ॥

उपस्कारो मूल्यग्रहणम् । अभ्यवपत्तिरनुग्रहः ॥ ९३ ॥ ९४ ॥

माहिष्येण करण्यां च रथकारः प्रजायते ॥

उक्तो माहिष्यः । वैश्याच्छूद्रायामुत्पन्ना करणी । तस्यां माहिष्योत्पन्नो रथकारो भवति । वैदिककर्माधिकारित्वादस्य संकीर्णयोनीनां मध्ये पृथगभिधानम् ।

तथा च शङ्खः—

" क्षत्रियवैश्यानुलोमानन्तरोत्पन्नजो रथकारस्तस्येज्यादानोपनयनसंस्कारक्रियाः । [+अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च " इति ॥]

असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥९५॥

हीनवर्णेनोत्कृष्टवर्णायां जनिताः प्रतिलोमजाः । उत्तमवर्णेन हीनवर्णायां परिणीतायामुत्पन्ना अनुलोमजाः । तत्र प्रतिलोमजा असन्तोऽसाधवः, वर्णबाह्या इत्यर्थः । अनुलोमजास्तु सन्तः साधवः, मातृसमानवर्णत्वात्क्षत्रियादिधर्माधिकारिणो भवन्ति ॥ ९५ ॥

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ॥

युगं जायापत्योर्युग्मम् । तत्र सप्तमे पञ्चमेऽपि वा पितृसमानवर्णभावो ज्ञेयः । एतच्चानुलोमजस्त्रीविषयम् । तस्यां भार्यात्वसंभवात्,न तु प्रतिलोमजाविषयम् ।

+ धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके न विद्यते ।

१ क. घ. स्वकी° । २ ग. °त्तिः । प्रधानकर्मोत्कृष्टजातिवृत्तिः । क्ष° । ३ क. घ. वैश्यस्त्री तु शू° । ४ ख. °नादयो° । ५ क. घ. °स्य का° । ६ ग. °स्कृतः । स्त्री° । ७ क. ग. घ. मूलग्र° । ८ ख. °मानुलोमान° । ९ क. घ. °वृत्ता च । १० ग. वा । व्यत्यये कर्मणा साम्यं पूर्ववच्चोत्तराधरम् । वर्णजातिविवेकप्रकरणम् । यु° ।

" सवर्णेभ्यः सवर्णासु " इत्यादिना य उक्तो विधिः स विन्नासु परिणीतासु स्मृतो मुनिभिः । अविन्नास्वपि जातानां क्षेत्रजादिपुत्राणां[1] वर्णत्वाभ्युपगमाद्विन्नास्विति शास्त्रविहितपुत्रोत्पत्तिप्रकारोपलक्षणार्थम् । यत एव तेषां ब्राह्मणत्वमस्ति अत एव—

" ब्राह्मणा ऋत्विजः" इत्यभिधाय[2] " शावलेयबाहलेयपुत्रिकापुत्रपरक्षेत्रसहोढकानीनानुजावर[3]द्विप्रवरान्परिह[4]ाप्य "

इति बौधायनः परक्षेत्रोत्पन्नानां पर्युदासमाह ।

यत्तु देवलेनोक्तम्—" द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवैरीट[5] इति ख्यातः शूद्रधर्मा स जातितः " ॥

तथा—" व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः "

इति, तच्छास्त्रस्वीकृतक्षेत्रजकानीनसहोढगूढोत्पन्नपौनर्भवव्यतिरिक्त[6]नियोगव्यभिचारोत्पन्नपुत्रविषयम् । एते च मूर्धावसिक्तादयो न क्षत्रियादिभ्यो भिन्नाः । किं तु तत्तद्ब्राह्मणादिजनितोपाधिभेदान्मूर्धावसिक्तादिनामभेदभाजो भवन्ति । यदाह शङ्खः " ब्राह्मणेन क्षत्रियायामुत्पन्नः[7] क्षत्रिय एव भवति । क्षत्रियेण वैश्यायां वैश्य एव । वैश्येन शूद्रायां शूद्र एव " इति ॥ ९२ ॥

प्रतिलोमजानां नामान्याह—

**ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा[8] ॥**
**शूद्राज्जातस्तु चण्डालः[9] सर्वधर्मबहिष्कृतः ॥ ९३ ॥**
**क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ॥**
**शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥ ९४ ॥**

ब्राह्मण्यां क्षत्रियवैश्यशूद्रेभ्यो यथाक्रमं सूतवैदेहचण्डाला भवन्ति । एषां मध्ये चण्डालः सर्वधर्मबहिष्कृतः । सर्वेषां वर्णानां ये धर्मास्ते सर्वधर्माः, तेष्व[10]नधिकारी, न पुनः सर्वेषु धर्मेष्वनधिकारीत्यर्थः । यत आह देवलः—

" स्वजातिशोधनं सर्वप्रणामस्तितिक्षा व्यवहारशुद्धिरपराव[11]मानं स्वभृत्यपोषणं स्वकर्मानुष्ठानं प्रधानकर्मवर्जनमिति चण्डालधर्माः[12] " ।

---

१ ग. °णां सव° । २ ग. °य गावलेयवा° । ३ ख. °रवद्वि° । ४ क. घ. °हास्येति । ५ क. घ. °वरेट । ६ ख. °रिक्तानि° । ७ क. घ. °मुत्पादितः क्ष° । ८ ग. ङ. °देहिक° । ९ ङ. चाण्डालः । १० क. घ. °ष्वधि° । ११ क. घ. °वसानं । १२ ख. °र्माः । प्र° ।

( वर्णजातिविवेकप्रकरणम् ३)

" ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ॥
रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः " ॥

ब्राह्मणविषयमेतत् ।

" अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् " ॥ ९० ॥

अनुलोमजानाह—

**विप्रान्मूर्धावसिक्तो हि क्षत्त्रियायां विशः स्त्रियाम्[१] ॥**
**अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा[२][३]॥९१॥**

ब्राह्मणात्क्षत्त्रियादिषु भार्यासु मूर्धावसिक्ताम्बष्ठनिषादसंज्ञकाः[४] पुत्रा भवन्ति । निषादस्य[५] पारशव इति च संज्ञा परा ।

गौतमः—

" अनुलोमानन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्मन्तपा[६]राशवाः । असवर्णभार्योत्पन्ना अनुलोमजाः[७] । ब्राह्मणस्यानन्तरा क्षत्त्रिया । तस्यां तेनोत्पन्नः सवर्णः । क्षत्त्रियादनन्तरायां वैश्यायामम्बष्ठः । वैश्यात्तदनन्तरायां शूद्रायामुग्रः । ब्राह्मणादेकान्तरायां वैश्यायां निषादः । क्षत्त्रियादेकान्तरायां शूद्रायां दौष्मन्तः । ब्राह्मणाद्व्यन्तरायां शूद्रायां पारशवः " इति ।

अत्र संज्ञाविकल्पे[८] न विरोधः कार्यः ।

विष्णुः—" समानवर्णासु पुत्राः समानवर्णा एव भवन्ति ।
अनुलोमास्तु मातृसवर्णाः " ॥ ९१ ॥

**वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ॥**
**वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥९२॥**

क्षत्त्रियाद्वैश्यायां जातो माहिष्यः । शूद्रायामुग्रः । वैश्याच्छूद्रायां करणः ।

---

१ ग. °षु ब्राह्म° । २ ख. °म् । जातोऽम्बष्ठस्तु शुद्रायां निषादः पार्शवोऽ° । ३ ग. °पार्षदोऽपि । ४ ख. °संज्ञा भ° । ५ क. घ. °स्य पर° । ६ ग. घ. °पारश° । ७ क. घ. °लोमाः । ब्रा° । ८ क. घ. °कल्पनविरोधः परिहार्यः ।

नुगुणः संस्कार आत्मन्याधीयते[2] । न च यजमाने पत्न्यां च वर्तमानः सोमयागसंस्कारः सांनाय्ययागोपयोगी, न चाभिनवा पत्नी तत्संस्कारवतीति नैव संनेयम् । यदैव पुनः सोमेन यजेताथ संनयेदिति ।

ततश्चोत्तरकर्मकर्तृत्वयोग्यतालक्षणसंस्काराधायकतया सोमयागतुल्यत्वाद्धोतृहोमान्वारम्भणीययोरेषैव कल्पना युक्ता । तस्मात्कृताग्न्याधाना मृता पत्नी वैतानैरग्निभिः संस्कार्या । अविद्यमानधर्मानुष्ठानयोग्यभार्यश्चेत्तद्योग्यभार्यान्तरमाहृत्याऽऽधानं कुर्यादितरस्त्वाधानमेवेति सिद्धम् ॥

यत्तु—" द्वितीयां वै तु भार्यां यो दहेद्वैतानिकाग्निभिः ।
तिष्ठन्त्यां प्रथमायां तु सुरापानसमं हि तत् " ॥

इति देवलवचनं, तदकृताग्न्याधेयद्वितीयाविषयम् । अन्यथाऽऽहिताग्निमग्निभिर्दहन्तीति श्रुतिविरुद्धमप्रमाणं स्यात् । न च श्रुतिगत आहिताग्निशब्दः स्मृतिवशाद्विशेषविषयो भवतीति वाच्यम् । उपात्तोद्देश्यसमर्पकत्वेन विशेषं प्रत्यनपेक्षितत्वात् । " ग्रहं संमार्ष्टि " इतिग्रहश्रुतिवत् ॥ ८९ ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धे विवाहप्रकरणम् ॥ २ ॥

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

---

## [ वर्णजातिविवेकप्रकरणम् । ] ( ३ )

उक्तविवाहासु पतिसवर्णासु तदसवर्णासु चोत्पन्नानां तथा स्वैरिणीषु प्रतिलोमोत्पन्नानां संव्यवहारोपयोगिसंज्ञापरिज्ञानाय प्रकरणमारभ्यते—

**सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ॥**
**अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः[10] ॥ ९० ॥**

सवर्णाभ्यां दंपतिभ्यां जनिताः पुत्रास्ताभ्यां समानजातयो भवन्ति । पुत्रग्रहणमपत्यमात्रपरम् । अनिन्द्येषु विवाहेषूढायामुत्पन्नाः पुत्राः संतानस्य ब्रह्मवर्चसादिगुणवृद्धिहेतवो भवन्ति । अत्र मनुः—

---

१ ग. °गुणात्संस्का° । २ क. घ. °ते । तेन य° । ३ क. घ. °वर्तीति । ४ ख. ग. °कर्तृकर्मत्व° । ५ क. घ. स्थितम् । ६ क. घ. भविष्यतीति । ७ ख. °मूतान्व° । ८ ख. °हारयो° । ९ क. घ. °रमते । १० क. घ. °र्धकाः । स° ।

( विवाहप्रकरणम् २)

[1]ननु च पुनराहृतानां दाराणामग्निहोत्राद्यधिकारोऽनुपपन्नो होतृहोमा[2]न्वारम्भणी[3]यजन्यसंस्कारविरहात् । न च संस्कारार्थमन्वारम्भणीयादिकं स्वातन्त्र्येण शक्नोति [4]भार्या कर्तुम् । तस्याः सहाधिकारनियमात् । नापि पतिः संस्कृतत्वात् । संस्कृतत्वं च तस्य संस्कारारम्भकाणामन्वारम्भणीयादीनां क्रत्वङ्गभूतानामनुष्ठितत्वात् । न ह्यन्वारम्भणीयादिसंस्कारवानन्वारम्भणीयादौ शास्त्रेण प्रयुज्यते । [*तस्मादपत्नी[5]केनैवाग्निहोत्रमाहर्तव्यम् । तथा च बह्वृचब्राह्मणम्–] " तस्मादपत्नीकोऽग्निमाहरेत् " इति । तदयुक्तम् । सर्वाः खलु श्रुतयः सपत्नीकस्याग्निहोत्रादि विदधति । बह्वृचब्राह्म[6]णं स्तुतिपरत्वेनाप्युपपद्यते । किं च रजस्वलायां सूतिकायां च पत्न्यामेतद्वचनम्—" अपत्नीकोऽग्निमाहरेत् " इति, न पुनरविद्यमानायां भार्यायाम् । एवं च सति न श्रुत्यन्तरविरोधः । नास्य वाक्यस्य विधायकत्वम् । तस्माच्छ्रुतिविरोधाभावात् " आहरेद्विधिवद्दारान् " इति स्मृतिवचनं प्रमाणमेव । ततश्चैतद्वचनसामर्थ्यात्पूर्वसंस्का[7]रापभ्रंशकल्पनयाऽन्वारम्भणीयादावस्ति भर्तुरधिकार इत्याश्रयणीयम् । अत एव बौधायनः पुनर्दारक्रियाविषयमाह—

> " ईजानस्य पुनरा[8]दधानस्य संनये[9]न्न संनयेदिति । संनयेदित्येक आहुः ।
> अथैक आहुर्न संनयेदिति [*शरीरसंस्पर्शी ह यज्ञो भवति । यदैव
> +पुनर्यजेताथ संनयेत् " इति । ]

अस्यार्थः-ईजानस्य कृतसोमयागस्य पत्न्यां मृतायामप्यन्यस्यां चाऽऽहृतायामग्नीना[10]दधानस्याऽऽहितवतोऽध्वर्युः संनयेन्न वेति संदेहमुपक्रम्य पूर्वपक्षमाह—संनयेदित्येक आहुः । तेषामभि[11]प्रायः—यद्यपि पत्न्याः सोमयागजन्यः सांनाय्याधिकारहेतुः संस्कारो नास्ति, तया सह सोमयागाकरणात् । तथाऽपि तस्या यजमानं प्रति गुणभावाद्यजमानस्य च संस्कारवत्त्वात्संनयेद्वेति । सिद्धान्तमाह—अथैक [12]आहुर्न संनयेदिति शरीरसंस्पर्शी ह यज्ञो भवतीति । शरीरशब्देन च श[13]रीर्यात्मा लक्ष्यते । यज्ञेन खलु सांनाय्यप्रयोगा-

* एतच्चिह्नान्तर्गतग्रन्थः ख. पुस्तके न विद्यते । * धनुश्चिह्नान्तर्गतग्रन्थो घ. पुस्तके न विद्यते ।
+ पुनः सोमेन यजेतेति पाठो युक्तः, अग्रिमप्रतीकानुरोधात्, इति भाति ।

१ क. घ. न च पुनरावृता° । २ ख. ग. घ. °मार° । ३ ख. ग. °णीयाज° । ४ क. ग. घ. भार्या । ५ख. घ. °केन नै° । ६ क. घ. °णं तु स्तु° । ७ क. घ. °स्कारमात्रं संक° । ८ ख. °ददान° । ९ ग. °येदिति । अस्या° । क. घ. °ये । सायंदोहप्रातर्दोहयोरग्निसमीपनयनं संनयनम् । न संनयेदिति । १० ख. °ददानस्य हि° । ११ ग. °प्रायोऽयम् । य° । १२ क. ग. घ. °आहुः । सं° । १३ क. घ. °रीरात्मा ।

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ॥
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ ८९ ॥

इति विवाहप्रकरणम् ।

यया सहाग्न्याधानं तामुक्तवृत्तवतीं मृतां पतिर्वैतानैरग्निभिर्यथाविधि दाहयित्वाऽसवर्णभार्यश्चेद्विधिवद्दारानाहरेत् । अग्नींश्चाविलम्बयन् । तत्र सवर्णदारालाभे शूद्रावर्जमसवर्णयाऽपि सहाऽऽधानादि कार्यम् ।

यदाह विष्णुः—" मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत्[1] ।
उपाधिनाऽपि तत्कर्म यावज्जीवं समापयेत् " ॥

अस्यार्थः—वैदिकैर्मृतां पत्नीं संस्कृत्य न तान्परि[2]त्यजेत् , पुनरादधीत । सवर्णदारालाभविषये[3] उपाधिनाऽपि असवर्णयाऽपि भार्यया यावज्जीवं कर्म समापयेदिति । न पुनरयमर्थो मृतायामपि भार्यायां वैदिकोऽग्निर्न त्याज्यः, न तेन तां दहेदिति । यतस्तथा सति—

" शवाग्नयो वै[4] एते भवन्ति ये मृतायां भार्यायां[5] भ्रियन्ते " ।

इति काठक[6]गृह्यश्रुतिविरोधो दुष्परिहा(ह)रः । तथा " उपाधिनाऽपि तत्कर्म " इत्यस्य कुशमय्या काञ्चनमय्या वा पत्न्या कर्मसमाप्तिः कार्येति नार्थः । पत्न्या अप्रतिनिधेयत्वात् । यदाह सत्याषाढः—

" न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्ने-
र्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिर्विद्यते " इति ।

पत्न्याः क्रत्वर्थकर्मकारि रूपं तद्यद्यपि शक्यं प्रतिनिधातुम् । तथाऽपि कुशादिमय्याः प्रतिकृतेस्तत्कार्यकारित्वाभावान्न तत्प्रतिनि[7]धित्वम् । न हि समीपस्थितिमात्रं पत्नीकार्यम् । किं तु फलीकरणाज्यावेक्षणादि तत्कार्यम् । तदाक्षिप्ता च समीपस्थितिः । तेन पूर्वोक्त एवास्यार्थो न्याय्यः ।

यत्पुनः—" अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपा[8]सन्ते× यावज्जीवमतन्द्रिताः " ॥

इति वचनं, तदग्निहोत्रस्तुत्यर्थमेव न स्वार्थविधायकमुक्ताद्धेतोः ।

---

× उपासीरन्न्येति पाठो युक्त इति भाति ।

---

१ ख. °त् । रूपादिना° । २ क. घ. °रिवर्जयेत् । पु° । ३ ख. घ. °षये रूपादिना° । ४ क. घ. वा च ते । ५ ख. °यां भ्रिय° । ६ क. घ. °कश्रु° । ७ क. घ. °निधातुम् । न° । ८ क. °पासीत या° ।

सवर्णायां सत्यां विद्यमानायां भार्यायामन्यामसवर्णां धर्मकार्ये न कारयेत्। तया सह धर्मं नाऽऽचरेदित्यर्थः। अभावेऽपि(वे तु) सवर्णाया इतरयाऽपि सहाऽऽचरेदित्यर्थसिद्धम्। अत एव शूद्रयैव सह धर्मानुष्ठाननिषेधमाह वसिष्ठः–"कृष्णवर्णा वै रामा रमणायैव न धर्माय" इति। कृष्णवर्णा शूद्रा ॥

**सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥ ८८ ॥**

सवर्णानेकत्वे तु ज्येष्ठायां चादुष्टायां तया विना नेतरया सह धर्ममाचरेत्। ज्येष्ठया तु सह कनीयस्योऽपि धर्मं कारयितव्याः।

तथा चाऽऽपस्तम्बः–"धर्मप्रजासंपन्ने दारे नान्यान्कुर्वीतान्यतरापाये तु कुर्वीत।
प्रागग्न्याधेयादाधाने हि सती कर्मभिः संबध्यते" इति।

बौधायनः—"पत्नीनां[1] सह संनहनमिति स ह स्माऽऽह बौधायन एकैकामेव[2]
संनह्येदेकैकां[3] गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेत्" इत्यादि।

कात्यायनः—"नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः।
अकृतं तद्विजानीयात्सर्वा *न(ना)न्वारमन्ति यत्"॥

तस्माज्ज्येष्ठैव सहधर्मचारिणी नेतरेति व्याख्यानं कल्पसूत्रधर्मशास्त्रविरुद्धत्वादनादरणीयम्।

यत्तु विष्णुवचनम्—"अग्निहोत्रादियज्ञेषु द्वितीयां न सहाऽऽचरेत्।
अन्यथा निष्फलं तस्य स्विष्टैः क्रतुशतैरपि"

इति, तदसवर्णद्वितीयाविषयं, सत्स्वग्निषु या परिणीता तद्विषयं वा। अग्निषु नष्टेषु पुनराधानं[4] तस्या अधिकर्तृत्वादग्निहोत्रादिषु[5] सहाधिकारः।

कात्यायनः—"अग्निशिष्टादिशुश्रूषां बहुभार्यैः[6] सवर्णया।
कारयेत्तद्बहुत्वे तु ज्येष्ठा याऽगर्हिता भवेत्॥
या वा स्याद्वीरसूरासामाज्ञासंपादिनी[7] च या।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत्॥
दिनक्रमेण वा कर्म यथाज्येष्ठमशक्तितः।
विभज्य सह वा कुर्युर्यथाज्ञानमशाठ्यतः"॥

दक्षः—"धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत्।
दोषे सति न दोषः स्यादन्या कार्या[8] गुणान्विता"॥ ८८॥

---

* परस्मैपदमार्षम्।

---

१ ख. °नां संन°। २ ख. °कैकमे°। ३ क. °कैकमा°। ४ क. घ. °धाने त°। ५ घ. अपि क°। ६ ख. °भार्यास°। ७ क. °पादनी। ८ ग. कार्यो।

विशेषविषयभेदे । ततश्च विशेषविषयया स्मृत्या स्वमूलभूता श्रुतिर्विशेषविषयैवानुमीयते। सा च सामान्यविषयश्रुतेर्बलीयसी सती तस्याः संकोचहेतुर्भवति ।

ननु च ब्राह्मण्या अन्वारोहणप्रतिषेधं स्मरन्ति, यथा तावत्पैठीनसिः—

" मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ।
इतरेषां तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः ॥
उपकारं यथा भर्तुर्जीवन्ती न तथा मृता ।
करोति ब्राह्मणी श्रेयो भर्तुः शोकवती सती " ॥

विराट्—" अनुवर्तेत जीवन्तं न तु यायान्मृतं पतिम् ।
जीव(वे)द्भर्तुर्हितं कुर्यान्मरणादात्मघातिनी " ॥

अङ्गिराः—" या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नाऽऽत्मानं न पतिं नयेत् " ॥

व्याघ्रपात्—" न म्रियेत समं भर्त्रा ब्राह्मणी शोकमोहिता ।
प्रव्रज्यागतिमाप्नोति मरणादात्मघातिनी " ॥

प्रव्रज्या मैथुनादिभोगत्यागः ।

सत्यमेवं स्मरन्ति किंतु स्मरणान्तरेणैतेषां विषयो व्यवस्थाप्यते । यथाऽऽहोशना —

" पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परः स्मृतः " इति ॥

ततश्च ब्राह्मण्यनुगमननिषेधः पृथक्चितिसमारोहणविषयः। अत एव रामायणादौ ब्राह्मण्यादीनां स्वभर्तृशरीरालिङ्गनपूर्वकं स्वशरीरदहनमुपाख्यायते । अत एव कल्पसूत्रकारः प्रेतस्योत्तरतः पत्न्याः संवेशनमविशेषेण नित्यवद्विदधाति । देवरादिना तूत्थापनं तस्याः पुत्रकामनायां वा जीवलोककामनायां वा सत्यामाहुः । किं च न ब्राह्मणीत्वेन निमित्तेनानुगमननिषेधो भवति । किं त्वसौ ब्राह्मण्याः शोकनिमित्तकः । यत्तु वैराजमाङ्गिरसं च वचनं ब्राह्मण्या अनुगमनमात्रप्रतिषेधकमिव प्रतिभाति । तद्विशेषविषयैः प्रतिषेधैरुपसंह्रियते । तस्माद्विधितः प्रवर्तमानाया ब्राह्मण्या अनुगमनाद्दोषो न विद्यते, शोकादिप्रवृत्तायास्तु भवत्येवेति ॥ ८७ ॥

## सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ॥

---

१ क. जीव्याद्भ° । २ क. ख. °ह्मणादी° । घ. °ह्मणीनां । ३ ख. ग. °ह्मण्यनु° । ४ ख. °षेधैः सं° ।

हा(ह)रः । यस्तु भर्तरि सुखसमवायः, स भर्तृगतादेव धर्मात् । तत्प्रतिबन्धकं पापं पत्नीकृतो धर्म उद्धरति[1] । न च प्रतिबन्धकोद्धारकः कार्यपरः । यस्तु पत्युः पापक्षयः पत्नीकृतस्य धर्मस्य फलमिति श्रूयते तस्यापि न मुख्योऽर्थः, किं तु गौणः, क्षय इव क्षयः पत्नीधर्मेण पतिपापस्यानन्तरं फल[2]दानप्रतिबन्धरूपः ।

बृहस्पतिः—" शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ।
अन्वारूढा जीवती(न्ती) च साध्वी भर्तुर्हिताय सा " ॥

अन्वारोहणं च काम्यत्वादनित्यम् ।

अत एव विष्णुः—" मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा " इति ।

न चान्वारोहणस्मृतीनां "तस्माद[3](द्)ु ह न पुराऽऽयुषः स्वःकामी प्रेयात् " इतिश्रुतिविरोधो वाच्यः । भिन्नविषयत्वात् । सामान्येन श्रुतिः स्वेच्छया मरणं [4]निषेधति । स्मृतिस्तु मृते भर्[5]तरि वह्निप्रवेशमरणविशेषं विधत्ते । अतो भिन्नविषयत्वादविरोधः । " स्वर्गकामो यजेत " " यावज्जीवमग्निहोत्रं जुहुयात् " इत्येवमादिकया श्रुत्या सामान्यविषयया न विरोधः ।

तथा च ब्रह्मपुराणम्—" मृते भर्तरि सत्स्त्रीणां न चान्या विद्यते गतिः ।
नान्यद्भर्तृवियोगार्तिदाहप्रशमनं भवेत् ॥
देशान्तरमृते तस्मिन्साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥
ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यह[6]च्छौचे तु निर्वृत्ते[7] श्राद्धं प्राप्नोति शा[8]श्वतम् " ॥

" इमा नारीरविधवाः " इत्यादयो वेदश्रुतयः । तस्मादेताः स्मृतयः प्रमाणम् । न च " न हिंस्यात् " इत्यनेनान्वारोहणं शक्यं निषेद्धुम् । अनेन हि हन्तुः सकाशादन्यस्य हन्तव्यस्य हिंसा प्रतिषिध्यते, न तु स्ववधरूपा । सा तु " तस्माद्ु ह न पुराऽऽयुषः " इत्यनेन निषिध्यते । इदं च सामान्यविषयत्वाद्विशेषवि[9]षयाऽन्वारोहणस्मृत्या तद्व्यतिरिक्तस्ववधनिषेधकत्वेन संकोच्यत इत्युक्तम् । न च सामान्यविषयश्रुतिविरुद्धा स्मृतिरप्रमाणमिति वाच्यम् । सामान्यविशेषरूपविषयभेदेन विरोधाभावात् । विषयाभेद एव हि विरोधो न तु

---

१ घ. °ति । य° । २ ग. °लवान्प्रति° । ३ क. ग. 'स्माद्हनपरा' । ४ क. घ. निषेधते । ५ क. घ. °हस्य श° । ६ क. घ. °हाशौचे । ७ ख. °ते शास्त्रं प्रा° । ८ ख. ग. शास्त्रवत् । ९ क. ग घ. °षया° ।

अस्तमिते प्रभौ भर्तरि, कं गते स्वर्गं गते मृते भर्तरि ।

हारीतः—" मृते भर्तरि या नारी धर्मशीला दृढव्रता ।
अनुगच्छति भर्तारं शृणु तस्यास्तु यत्फलम् ॥
तिस्रः कोट्योऽर्धकोटी[1] च यानि लोमानि मानवे ।
तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥
मन्त्रग्राही यथा सर्पं बलादुद्धरते बिलात् ।
तद्वद्भर्तारमादाय मृतं याति तपोबलात् ॥
* मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।
कुलत्रयं पुनात्येषा भर्तारं याऽनुगच्छति " ॥

व्यासः—" पूर्वं मृता हरेदग्निमन्वारूढा हरेदघम् ।
भर्तुर्धनमभावे तु जीवन्ती सत्सु बन्धुषु ॥
ब्रह्मघ्ने वा कृतघ्ने वा मित्रघ्ने यच्च दुष्कृतम् ।
भर्तुः पुनाति सा नारी तमादाय मृता तु या " ॥

आदायाऽऽलिङ्ग्येत्यर्थः । अत एव कल्पसूत्रकारो भर्तृशरीरेण सह संवेशनमाह—" उत्तरतः पत्नीं[2] सह संवेशयन्ति " इति ।

" दयितं याऽन्यदेशस्थं वृत्तं श्रुत्वा पतिव्रता ।
समारोहति दीप्तेऽग्नौ तस्याः शक्तिं निबोधत " ॥

वृत्तं मृतमित्यर्थः ।

" यदि प्रविष्टो नरके[3] बद्धपाशैः सुदारुणैः ।
संप्राप्तो यातनास्थानं गृहीतो यमकिंकरैः ॥
तिष्ठते विवशो दीनो वेष्टयमानः स्वकर्मभिः ।
व्यालग्राही यथा सर्पं बिलादुद्धृत्यशङ्कितम्[4] ॥
तद्वद्भर्तारमादाय दिवं याति तपोबलात् ।
तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः ॥
मोदते +पतिना सार्धं यावदिन्द्राश्चतुर्दश " ।

मोदते पतिना सार्धमिति वचनात्सह पत्या स्वर्गोपभोगः[5] पत्नीगाम्येव फलमिति तत्कृतस्याग्निप्रवेशस्य फलमकर्ता भर्ता भुङ्क्त इति विरोधः[6] सुपरि-[7]

---

* इत आरभ्य तस्मादेताः श्रुतयः प्रमाणमित्यन्तं ग्रन्थव्यत्यासः क. घ. पुस्तकयोः ।
+ आर्षः प्रयोगोऽयम् ।

---

१ ख. ग. कोट्यर्ध° । २ क. ग. घ. पत्नीस° । ३ क. °रकं ब° । ४ क. ग. घ. °ङ्कितः । त° । ५ क. घ. °शधर्मस्य । ६ ग. विशेषः । सप° । ७ क. घ. °धः स प° ।

( विवाहप्रकरणम् २)

कन्यां कुमारीं पिता रक्षेत् , पालयेत् । विन्नां परिणीतां पतिः । वार्द्धके तु पुत्रः । तेषां पित्रादीनामभावे ज्ञातयो बान्धवा रक्षेयुः । एवमुक्तेऽपि पारतन्त्र्ये यः स्वातन्त्र्यनिषेधः सोऽसत्सु[1] ज्ञातिषु राजपारतन्त्र्यविध्यर्थः । तथा च स्मृत्यन्तरम्—

" पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रियाः ।
स तस्या भरणं कुर्यान्निगृह्णीयात्पथश्च्युताम् " इति ॥ ८५ ॥

पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ॥
हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥८६॥

भर्तारं विना वर्तमाना पित्रादीनामन्यतमेन रहिता न स्यात् । यदि स्याच्छिष्टगर्हणीया भवेत् । पूर्वेण वाक्येन पित्रादिभिः स्त्रीरक्षा कार्येत्युक्तम् । अनेन भर्तुरसंनिधौ पित्रादिरहिता स्त्री न भवेदिति विधीयते ॥ ८६ ॥

उक्तानां स्त्रीधर्माणां फलमाह—

पतिप्रियहिते युक्ता स्वाचारा संयतेन्द्रिया[2] ॥
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥ ८७ ॥

प्रियं च हितं च प्रियहिते[3] । या पत्युः प्रियहितयोरुद्युक्तोक्तस्त्रीधर्मचारिणी संयतेन्द्रिया च साऽत्र लोके कीर्तिमती भवति, प्रेत्य च सर्वोत्कृष्टां लोकगतिमवाप्नोति । समनन्तरसुखदं कर्म प्रियम् । परिणतिसुखदं हितम् ।

अत्र मनुः—" दानात्प्रभृति या तु स्याद्यावदायुः पतिव्रता ।
सा भर्तृलोकमाप्नोति यथैवारुन्धती तथा " ॥

बृहस्पतिः—" आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता " ॥

मृते मरणं तेन सहाग्निप्रवेशनेनैव । यथाऽऽहाङ्गिराः—

" सर्वासामेव नारीणामग्निप्रपतनादृते ।
नान्यो धर्मो हि विज्ञेयो मृते भर्तरि कर्हिचित् ॥
यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात्कथंचन ॥
सद्वृत्तभावाश्रितभर्तृकाणां स्त्रीणां वियोगैक्षतकातराणाम्[4] ।
तासां प्रभावस्तमिते गते कं नाग्निप्रवेशादपरोऽस्ति मार्गः " ॥

---

१ ग. सोऽन्यास्वपि ज्ञा° । २ ङ. °या । सेह । ३ क. ख. घ. °हितं या । ४ ख. °गक्षत° ।

शङ्खः—"नानुक्ता गृहान्निर्गच्छेत् । नानुत्तरीया । न त्वरितं व्रजेत् । न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः । न नाभिं दर्शयेत् । आ गुल्फाद्वासः परिदध्यात् । न स्तनौ विवृतौ कुर्यात् । न हसेदनपावृतं, न भर्तारं न तद्बन्धून्वा विद्विषेत् । न गणिकाधूर्ताव्यभिचारिणीप्रव्रजितेक्षणिकामायामूलकुहिकाकारिकादुःशीलादिभिः सहैकत्र तिष्ठेत् । संसर्गेण हि चारित्रं दुष्यतीत्यादिशन्ति" इति ।

व्यासः—" द्वारोपवेशनं नित्यं गवाक्षावेक्षणं तथा ।
असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् " ॥

मनुः—" पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहे वासश्च नारीसंदूषणानि षट् " ॥ ८३ ॥

किं च—

**क्रीडाशरीरसंस्कारं समाजोत्सवदर्शनम् ॥**
**हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ ८४ ॥**

क्रीडा द्यूतादिक्रिया, शरीरसंस्कारः स्नानानुलेपनादिः । समाजो जनमेलकः । उत्सवः कौमुदीप्रभृतिः । तयोर्दर्शनम् । हास्यं परगृहे यानमेतत्सर्वं प्रवसिते भर्तरि त्यजेत् ।

अत्र शङ्खलिखितौ—

" प्रेङ्खाताण्डवविहारचित्रदर्शनाङ्गरागोद्यानयानविवृतासनोत्कृष्टपानभोजनकन्दुकक्रीडनगन्धमाल्यालंकारदन्तधावनाञ्जनादर्शप्रसाधनानामस्वतन्त्राणां प्रोषितभर्तृकाणां कुलस्त्रीणामनारम्भः " ।

" विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः " ॥

जीवनार्थं वृत्तिं विधाय प्रोषिते भर्तरि सति तद्भार्या तया वृत्त्या स्वल्पाहाररूपं नियममास्थाय जीवेत् । तामविधाय प्रोषिते जीवेच्छिल्पैरगर्हितैरिति । येन गर्हा जायते तैरेव शिल्पैर्जीवेदित्यर्थः ॥ ८४

**रक्षेत्कन्यां पिता विन्नां पतिः पुत्रस्तु वार्धके ॥**
**अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित्स्त्रियाः ॥८५॥**

---

१ ग. °कादुः° । २ क. ख. घ. °रहेऽट° । ३ ग. °हारादिचि° । ४ क. ग. घ. °ममास्थि° । ५ ख. °या प्रवृ° । ६ ङ. °षां न स्वातन्त्र्यं परं स्त्रि° ।

( विवाहप्रकरणम् २)

भर्त्रादिभिर्भूषणवस्त्रान्नदानैः स्त्रियो माननीयाः । एतच्चाऽऽवश्यकम् । अस्याकरणे प्रत्यवायमाह मनुः—

" यत्र नार्यः प्रपूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥
जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः " इति ॥

जामयो भगिन्यः । एतच्च स्नुषादुहित्राद्युपलक्षणम् । यदाह बृहस्पतिः—

" भर्त्रा पत्नी समभ्यर्च्या वस्त्रालंकारभूषणैः ।
उत्सवे पितृमातृभ्यां श्वश्रूश्वशुरबन्धुभिः " ॥

भूषणादीनां समुच्चयो भर्तृ[1]विषय इतरविषयौ तु विकल्पसमुच्चयौ यथासामर्थ्यम् ॥ ८२ ॥

स्त्रीधर्मानाह—

**संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ॥**
**कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परा ॥ ८३ ॥**

उपस्करो गृहोप[2]करणं दर्वीपिठि(ठ)रादिः । संयतः संक्षिप्त उपस्करो यया सा संयतोपस्करा, दक्षा शीघ्रकारिणी, हृष्टा यथोत्पन्नेन द्रव्येण संतुष्टा, असव्ययपराङ्मुखी च भवेत् । श्वश्रूश्वशुरयोश्च पादवन्दनं कुर्यात्प्रत्यहम् । भर्तृतत्परा भर्तृप्रधाना ।

अत्र विष्णुः—

" [3]अथ स्त्रीधर्माः । भर्तुः समानव्रतचारित्वं श्वश्रूश्वशुरगुरुदेवतातिथीनां पूजनं सुसंयतोपस्करताऽमुक्तहस्तता सुगुप्तभाण्डता मूलक्रियास्वनभिरतिर्मङ्गलाचारतत्[4]परता " ।

मूलक्रिया वशीकरणम् ।

तथा पृथ्वीं प्रति लक्ष्मीवाक्यम्—

" नारीषु नित्यं सुविभूषितासु पतिव्रतासु प्रियवादिनीषु ।
अमुक्तहस्तासु सुतान्वितासु सुगुप्तभाण्डासु बलिप्रियासु ॥
[5]सुस्पष्टवेशा(षा)सु जितेन्द्रियासु कलिव्यपेता[6]स्वविलोलुपासु ।
धर्मव्यपेक्षासु दयान्वितासु स्थिता सदाऽहं जगतां विधात्रि " ॥

---

१ ख. °विशेषः । इ° । २ क. ग. °पस्कर° । ३ ख. अत्र । ४ क. घ. °त्परा । मू° । ५ क. ग. सुस्पृष्ट° । ६ ख. ग. °तासु वि° ।

* एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ।
त्रिंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ” ॥

एषा च दिनसंख्या स्नानदिनपूर्विका । “ स्नातायाः ” इति वचनात् ।

यत्तु—“ चतुर्दशदिनादर्वागशुचित्वं न विद्यते ”

इति स्मृत्यन्तरं, तेन सहर्तुप्रवृत्तिस्वभाववशाद्व्यवस्थामाश्रित्याविरोधः कार्यः । पुंसा स्वस्य बलाधानमपि कर्तव्यम् । यथाऽऽह बृहस्पतिः—

“ स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान्पुंसोऽधिके भवेत् ।
तस्माच्छुक्रप्रवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत् ॥
लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतम् ” ॥ ८० ॥

अधुनाऋ(ऽनृ)तुगमननिमित्तमाह—

**यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ॥**
**स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥ ८१ ॥**

स्त्रीणां काममिच्छामनतिक्रमन्ननृतावपि गच्छेत् । यतः स्त्रीणामिन्द्रदत्तो वरः । उक्तमिन्द्रं स्त्रियश्च प्रकृत्य तैत्तिरीयके—

“ ता अब्रुवन्वरं वृणामहा ऋत्वियात्प्रजां विन्दामहै काममा विजनितोः संभवामेति तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममा विजनितोः संभवन्ति वारेवृतं ह्यासाम् ” इति ।

स्वदार(रा)व्यभिचारी भवेत् । स्त्रियो व्यभिचाराद्रक्षणीया यतः स्मृताः । तद्रक्षणं च पत्युरव्यभिचारित्वेन[३] स्त्रीषु यथाकामित्वेन च भवति । वाशब्दोऽनृतुगमनं वैकल्पिकमाह । ततश्चागच्छतोऽपि स्त्रीरक्षणसामर्थ्यं यस्यासावृतावेव गच्छेत् । तस्य च फलातिशयं वसिष्ठ आह—

“ ऋतौ च गच्छन्विधिवच्च जुह्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ” इति ।

इतरस्तु यथाकामी भवेत् ॥ ८१ ॥

**भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ॥**
**बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ ८२ ॥**

---

* इत आरभ्य न विद्यत इत्यन्तग्रन्थो ग. पुस्तके न विद्यते ।

---

१ क. घ. °तोऽन्वहम् । २ क. ग. °ऽादान° । ३ °त्वे भवति । वाशब्द ऋतु° ।

आपस्तम्बः—" मिथुनीभूय च तया सह[1] न रात्रिं शयीत " ।

वृद्धशातातपः—ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम्[2] ।
अनृतौ तु[3] स्त्रियं गत्वा स्नानं मूत्रपुरीषवत् ॥
द्वावेतावशुची स्यातां दंपती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्[4] " ॥

भर्तुः शौचमापादयन्तीति शेषः । गौतमः—" न मिथुनीभूय शौचं प्रति विलम्बेत " ॥ ७९ ॥

**एवं गच्छन्स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।**
**सुस्थ[5] इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥ ८० ॥**

आहारलाघवादिना स्त्रियं क्षामां कृत्वा मघामूले विहाय नक्षत्रान्तरे सुस्थे चन्द्र उक्तप्रकारेण सकृदृतौ गच्छन्प्रशस्तलक्षणयुक्तं पुत्रं जनयेत् । चन्द्रसौ[6]-स्थित्येन च ज्योतिःशास्त्रयुक्तं पुत्रजन्मप्रदं तत्कालीनं ग्रहसंस्थानं लक्ष्यते ।

प्रसङ्गाद्रजस्वलाव्रतानि कथ्यन्ते । तत्र पैठीनसिः—

" त्रिरात्रं मलवद्वस्त्रधारणम् । न स्नायान्नाभ्यञ्ज्यान्न नखा-न्निकृन्तेन्न रज्जुं सृजेन्न दन्तान्धावेन्न[7] स्रजं धारयेन्न गन्धान्सेवेत न वृष्याणि न खर्वेण पिबेत् " इति ।

वृष्याणि वीर्यवर्धकानि द्रव्याणि । खर्वो वामहस्तः ।

वसिष्ठः—

" त्रिरात्रं रजस्वलाऽशुचिर्भवति । सा नाञ्ज्यान्नाभ्यञ्ज्यान्नाप्सु स्नायादधः शयीत न दिवा स्वप्यात् । नाग्निं स्पृशेत् । न रज्जुं सृजेन्न मांसमश्नीयान्न ग्रहान्निरीक्षेत न हसेन्न किंचिदाचरेन्न खर्वेण नाञ्जलिना पिबेत् । पात्रिकम् । अञ्जलिना वा पिबेदिति श्रुतेः । लोहितायसेन वा " ।

लोहितायसं ताम्रम् । एतच्च व्रतजातं त्रिरात्राशौचनिमित्तायां रजःप्रवृत्तौ द्रष्टव्यं न रजोमात्रप्रवृत्तौ । तत्र या रात्रिस्त्रि[8]रात्राशुचित्वनिमित्तं भवति, तामाहात्रिः—

" रजस्वला यदि स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥

---

१ क. घ. °ह सर्वां रा° । २ क. घ. °थुननिःसृत° । ३ क. घ. तु सदा कार्यं शौचं मू° । ४ ग. °न् । ततः शौ° । ५ क. ग. घ. स्वस्थे । ६ ग. °सौस्थ्येन । ७ ग. °न्धावयेन्न स्र° ८ ख. रात्रीस्त्रि° ।

तथा च मनुः—" तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा ।
त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः " ॥

एकादशीत्रयोदश्यावृतोर्न पक्षस्य ।

अत्र शङ्खलिखितौ—" न दिवा मैथुनं व्रजेत्क्लीबा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च । तस्मादेतत्परिवर्जयेत् " इति ।

अनृतावप्येतत् । यदाहाऽऽपस्तम्बः—

" गृहमेधिनो व्रतम्—अहन्यसंवेशनम्[1] । नाष्टमीचतुर्दशीपञ्चदशीषु स्त्रियमुपेयात् । न श्राद्धे भुक्त्वा न दत्त्वा नोपनिमन्त्रितः श्राद्धे न व्रती न दीक्षितश्च । न देवायतनश्मशानशून्यालयेषु न वृक्षमूलेषु न दिवा न संध्ययोर्न मलिनां न मलिनो नाभ्यक्तां नाभ्यक्तो न रोगार्तां न रोगार्तो[2] न हीनाङ्गीं[3] तथैव च[4] वयोधिकां नोपेयाद्गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः " ॥

व्रतं प्रायश्चित्तम् । गर्भिण्यामिच्छन्त्यां न दोषः । तथा च वसिष्ठः—

" अपि च काठके प्रवचने विज्ञायते । अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयतामिति स्त्रीणामिन्द्रदत्तो वरः " इति ।

बौधायनः[5]—" यस्तु पाणिगृहीताया आस्ये गच्छति मैथुनम् ।
तस्येह निष्कृतिर्नास्तीत्येवमाह प्रजापतिः "(?) ॥

हारीतस्तु चतुर्थ्यां गर्भाधानमिच्छति—

" चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भाधानवदुपेतब्रह्मगर्भं[6][7] स ददाति " इति ।

ततश्च विहितप्रतिषिद्धत्वाच्चतुर्थ्यां ऋत्वुपगमनं वैकल्पिकम् । व्यवस्थितविकल्पश्चायम् । रजोनिवृत्तौ चतुर्थ्यां विधिः । तदनिवृत्तौ प्रतिषेधः ।

तथा च मनुः—" रजस्युपरते साध्वी स्नानेन[8] स्त्री रजस्वला " इति ।

साध्वी गर्भाधानादिविहितकर्मयोग्येत्यर्थः ।

देवलः—" यौगपद्ये तु तीर्थानां विप्रादिक्रमशो[9] व्रजेत् ।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा " ॥

योनिशब्दलक्षितस्यर्तोरनेकभार्यासु यौगपद्ये वर्णक्रमेण वा विवाहक्रमेण वा भार्यां संगच्छेदपुत्रां वाऽग्रं[10] इत्यर्थः ।

---

१ क. घ. °म् । विष्णुः । ना° । २ ख. °लिनो नाभ्यक्तो । ३ क. घ. °ङ्गीं नाधिकाङ्गीं त° । ४ ख. ग. च नो° । ५ ग. वृहस्पतिः । ६ क. घ. °र्भादान° । ७ ग. °र्भं संदधाति° । ८ ग. स्नायेत । ९ ख. ग. °धेन च° । १० क. °ग्रत इ° ।

( विवाहप्रकरणम् २)

तत्र लोकप्राप्त्यानन्त्यप्राप्तिद्युप्राप्तयो यथासंख्यं पुत्रपौत्रप्रपौत्रकैर्भवन्ति । यस्मादेवं तस्मात्पुत्रादिहेतवः स्त्रियः सेव्या ऋतुकाले कर्तव्याश्च सुरक्षिताः । व्यभिचारपरिहाराय रक्षाविधानाच्च गमयति व्यभिचारोत्पन्नैर्नैतत्फलं जन्यत इति ।

तथा च श्रुतिः–“ अप्रमत्ता रक्षथ तन्तुमेतमा वः क्षेत्रे परे बीजान्यवाप्सुः ।
जनयितुः पुत्रो भवति सांपराये मोघं वेत्ता कुरुते तन्तुमेतम्”इति॥

द्युशब्दश्चात्र सूर्यलोके वर्तते । तथा च मनुः—

“ पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ” ॥

ब्रध्नः सूर्यः । पितरं प्रति विवाहितायाः पुत्रोत्पत्तेस्तत्पितृपितामहगामि फलमिदं श्राद्धस्येव पुत्रं प्रति विहितस्य पित्रादितृप्तिः ॥ ७८ ॥

एवं पुत्रस्य श्रेयस्करत्वेऽभिहिते तज्जननोपायमाह—

**षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ॥**

रजोदर्शनप्रभृतिषोडशाहोरात्रात्मकः स्त्रीणामृतुर्गर्भग्रहणकालः । तं कालं प्रसिद्धमनूद्य विदधाति—“ तस्मिन्युग्मासु संविशेत् ” इति । संविशेत्पुत्रं जनयितुम् । “ लक्षण्यं जनयेत्सुतम् ” इति वाक्यशेषात् ।

तथा च मनुः—“ युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ” इति ॥

**ब्रह्मचार्येव पर्वण्याद्याश्चतस्रस्तु वर्जयेत् ॥ ७९ ॥**

ब्रह्मचार्येव मैथुनविमुख एव पर्वणि पञ्चदशीद्वये भवेत् । “ ऋतुकालाभिगामी स्यात् ” “ यथाकामी भवेद्वाऽपि ” इति प्रसक्ते ह्युपगमने पर्वपर्युदासोऽयम् । ब्रह्मचार्येव पर्वणीति पर्वग्रहणं तिथ्यन्तराणि शास्त्रान्तरपर्युदस्तानि संगृह्णाति ।

तत्र मनुः—“ अमावस्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ” ।

अत्रामावास्याशब्दसाहचर्याच्चतुर्दश्यष्टमीशब्दौ सितासितपक्षयोश्चतुर्दश्यष्टम्यावाहतुः, न त्वृतौ । अपिशब्दादनृतावप्येतास्तिथयो वर्ज्याः । तथा, ऋतोराद्याश्चतस्रो रात्रीर्वर्जयेत् ।

---

१ ग. घ. °त्रकै° । २ ख. °प्रपुत्रकै° । ३ ख. °स्य पुत्रे' । ४ क. घ. तं लोकप्र° । ५ क. ग. घ. °त्वृतोः । अ° ।

आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ॥
त्यजन्दाप्यस्तृतीयांशमद्रव्यो[1] भरणं स्त्रियाः ॥ ७६ ॥

आज्ञाकारित्वादिगुणोपेतां भार्यां परित्यजन्धनस्य तृतीयांशं तस्यै दाप्यः। राज्ञेति सामर्थ्याद्गम्यते । भरणमात्रपर्याप्तधनस्तु भरणमात्रम् । स्त्रिया इति चतुर्थ्यर्थे षष्ठी ॥ ७६ ॥

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ॥

भार्याभिर्भर्तृवचसोऽर्थः कार्यः । तत्करणं दृष्टप्रयोजनायोपयोगतां[2] साधयति, स्वयं धर्मश्च भवति । नचान्यैः स्त्रीधर्मैस्तुल्योऽयम् । येन तैर्विकल्पेत । किं तु तत उत्कृष्टस्तेनैतदनुरोधेनैवान्यधर्मकरणम्[3] । अत एव तद्विरोधिनोऽधर्मान्निषेधति[5] मनुः—

"नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते" इति ॥

भर्तृशुश्रूषणेनाविरुद्धं व्रतादि पत्यनुज्ञया कार्यम् ।
यदाह शङ्खः—"कामं भर्तुरनुज्ञया व्रतोपवासादीनामारम्भः" इति ।
एतदप्रोषितभर्तृकाविषयम् । यतः प्रोषितभर्तृकां विष्णुधर्मेषु स्त्रियमधिकृत्य—

"भर्तर्येवं[6] प्रवसिते त्यक्तव्या[7] +पतिना शुभा ।
कुर्वीताऽऽराधनं नारी उपवासादिना हरेः"

इति श्रुतादि[8] दृश्यते । शुभाऽस्खलितचरित्रा ॥

आ शुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ॥ ७७ ॥

पतिश्चेन्महापातकी तदा प्रायश्चित्तापवर्गं[9] यावत्प्रतीक्ष्यः । महापातकयुक्तो न शुश्रूष्य इत्यर्थः । एतच्च विवाहोत्तरकालं भर्तुः पातित्ये सति द्रष्टव्यम् । विवाहात्पूर्वं पतितेनोढाऽपि न भार्या शास्त्रीयोद्वाहाभावात् ॥ ७७ ॥

लोकानन्त्यदिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ॥
यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः॥७८॥

लोकाश्चाऽऽनन्त्यं च द्यौश्चेति समाहारे द्वन्द्वः । ततः षष्ठ्येकवचनम् ।

---

+ आर्षश्चायं प्रयोगः ।

---

१ क. °द्रव्यभ° । घ. °द्रव्यं भ° । २ क. घ. °योगिनीं सा° । ग. °योगितां । ३ क. घ. °वा धर्मकार° । ४ ग. °धर्मः कार° । ५ ख. ग. °पेवते । म° । ६ क. ख. भर्तुर्ये° । ७ क. घ. त्यक्ता वा प° । ८ क. श्रुत्यादि । ९ ख. ग. °र्गे ताव° ।

यत्तु विष्णुवचनम्—" अग्निहोत्रादियज्ञेषु द्वितीया[1] न सहाऽऽचरेत् ।
अन्यथा निष्फलं तस्य स्विष्टैः क्रतुशतैरपि "

इति, तज्ज्येष्ठायामदुष्टायां सत्यां केवलद्वितीयासहाधिकारविषयम् । असवर्णद्वितीयाविषयं वा । यद्वाऽऽहिताग्निपरिणीतद्वितीयाविषयम् । एतद्विषयमेतदपि—

" प्रथमा धर्मपत्नी स्याद्वितीया रतिवर्धिनी ।
दृष्टमेव फलं तत्र नादृष्टमुपपद्यते " इति ॥

यत्तु द्वितीयभार्या[2]परिग्रहे पुनराधानवचनं, तत्पूर्वभार्यायामधर्मसंपन्नायां मृतायां वेति वेदितव्यं, न तु द्वितीयविवाहमात्र इति ।

मनुः—" अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ।
सा सद्यः संनिरोद्धव्या त्याज्या वा कुलसंनिधौ " ॥

पित्रादिकुलसंनिधावित्यर्थः ॥ ७३ ॥

**अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ॥**

स्वगृहे पितृगृहे वा वसन्तीति शेषः ॥

**यत्राऽऽनुकूल्यं दंपत्योस्त्रिवर्गस्तत्र वर्धते ॥ ७४ ॥**

धर्मार्थकामास्त्रिवर्गः । स दंपत्योरानुकूल्ये[3] संप्रतिपत्तौ वर्धते, अतस्तदर्थं यतितव्यमिति तात्पर्यार्थः । मोक्षो ब्रह्मज्ञस्यैव गृहस्थस्य न सर्वस्येत्यभिप्रायेणोक्तं—त्रिवर्ग इति ॥ ७४ ॥

**मृते जीवति वा पत्यौ या नान्य[4]मुपगच्छति ॥
सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥ ७५ ॥**

वाशब्दः समुच्चये । अतिरोहितमन्यत् । नित्य[5]स्यापि पत्यव्यभिचार[6]स्याऽऽनुषङ्गिकं फलमेतदुच्यते । पतिरपि भार्या [7]न व्यभिचरेदिति मनुराह—

" अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः ।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः " इति ॥

उभयोरव्यभिचारविधिर्नित्यः । तदतिक्रमे प्रायश्चित्तस्मरणात् ॥ ७५ ॥

---

१ ख. ग. °तीयां न । २ ख. ग. °तीयाभा° । ३ ग. °ल्येन सं° । ४ ङ. °न्यमधिग° । ५ क. घ. नियतस्या° । ६ ख. °स्यापतिव्य° । ७ ख. °रस्य फ° । ८ क. घ. न तु व्य° ।

व्यमिति यावत् । ] सुरापी मद्यपी । सुराशब्देनात्र मद्यं प्रतिपाद्यते न सुरा। तत्पानं हि महापातकत्वात्त्यागस्यैव हेतुः स्यात्, नाधिवेदनमात्रस्य । अत एव मनुः—

" मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता चाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा " ॥

व्याधिता दीर्घरोगा । धूर्ता प्रतारिका । वन्ध्याऽनपत्या । अर्थघ्नी, अर्थनाशिका । अप्रियंवदा परुषभाषिणी । स्त्रीजननी चाधिवेत्तव्या । एतासु विद्यमानास्वपि भार्यान्तरं परिणेयमित्यर्थः । अत्र मनुः—

" वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी " ॥

तथा—" या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ।
साऽनुज्ञाप्याधिवेत्तव्या नावज्ञेया कथंचन " ॥

रोगिणीग्रहणमप्रजसं स्त्रीप्रजां चोपलक्षयति । अत एव स्मृत्यन्तरम्—

" व्याधितां स्त्रीप्रजां वन्ध्यामुन्मत्तां विगतार्तवाम् ।
अदुष्टां लभते त्यक्तुं तीर्थतो न तु धर्मतः " ॥

तीर्थं योनिः । एतच्चाकामविषयम् । यत्पुनरापस्तम्बेनोक्तं—

" धर्म[2]प्रजासंपन्ने दारे नान्यान्कुर्वीत । अन्यतरापाये कुर्वीत । प्रागग्न्या[3]धेयाद[4]धाने हि सती कर्मभिः संबध्यते "

इति, तत्र प्रागग्न्याधेयादिति न विधिः । किं त्वौचित्यप्राप्तानुवादः ।

अत एवाऽऽह बौधायनः—" एतयैव यजेत दा[5]रव्यतिक्रम ऋत्विग्व्यतिक्रमे च " इति ।

एतया पवित्रेष्ट्या शास्त्रीयाधिवेदननिमित्तमन्तरेण यदधिवेदनं स दारव्यतिक्रमः । तस्मिन्नेव निमित्ते यजेत न[6] चैतत्प्रागग्न्याधेयादुपपद्यते । त्रेतासाध्यत्वात् । तेनाऽऽहिताग्नेरधिवेदनमस्तीति सि[7]द्धम् । प्रागग्न्याधेयादधिवेदने द्वितीया[8]दिका[9]ऽप्यग्निहोत्रादिभिः कर्मभिरधिकारितया संबध्यते ।

यदाहाऽऽपस्तम्बः—" [10]आधाने हि सती कर्मभिः संबध्यते " इति ।

---

१ ख. °नने स° । २ क. घ. °र्मे एव प्र° । ३ ग. °ग्न्याधानादादाने । ४ ग. °दाने । ५ क. घ. दानव्यतिक्रमे । ६ ख. न च त° । ग. न च ततः प्रा° । ७ क. घ. सिद्धः । ८ क. घ. °याऽधिका° । ९ ग. °कार्या । अग्नि° । १० ग. आदाने हि सति क° ।

गर्भे त्यागो विधीयत इति शूद्रगर्भविषयम् ।

यदाह वसिष्ठः—" ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण संगताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः " इति ॥

स्वस्य गर्भस्य भर्तुर्वा वधे भर्त्रा बन्धुभिश्चाऽऽसां त्यागः कार्यः । चकारः शास्त्रान्तरोक्तत्यागहेतुसंग्रहार्थः ।

अत्र मनुः—" ऋतुस्नाताऽथ या नारी भर्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् " ॥

वसिष्ठः—" चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या " ॥

शिष्योऽत्र भर्तृशिष्यः । गुरुः पिता । जुङ्गितः पतितः, प्रतिलोमजो वा ।
" त्रीणि स्त्रियाः पातकानि लोके धर्मविदो विदुः ।
भर्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्य पातनम् " ॥

तस्यास्त्यागकारणेषु महापातकेषु स्त्रीपुरुषसाधारणेषु[2](?), प्रातिस्विकेषु तु स्त्रियास्त्यागहेतुषु[3] शिष्यगमनादिषु सर्वात्मना त्याग इति । अथ वाऽयमर्थः— व्यभिचारे सति यदि रजोदर्शनात्मकमृतुप्रवृत्त्या गर्भाभावनिश्चये शुद्धिः शुद्धिहेतुः प्रायश्चित्तक्रिया कार्या । गर्भे तु व्यभिचारनिमित्ते व्यभिचारिण्या-स्त्याग एव न प्रायश्चित्तम् । न केवलं तस्मिन्गर्भे किं तु स्वकीयस्य यथा-कथंचिदुपात्तस्य गर्भस्य स्वभर्तुश्च वधे त्यागो न प्रायश्चित्तम् । महापातके तु त्यागोऽभिहितो विशेष इति । महापातकेषु स्त्रीपुरुषसाधारणेषु सत्सु संभो-गसंस्पर्शसंभाषणसहाधिकारविषयस्त्यागः कार्यः, न पुनर्गृहान्निर्वासनरूपः । यदाह मनुः—
" एतमेव विधिं कुर्याद्योषित्सु पतितास्वपि ।
वस्त्रान्नमासां देयं तु वसेयुस्तु गृहान्तिके " इति ॥ ७२ ॥

अधिवेदनीया आह—

**सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ॥**
**स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ७३ ॥**

[ *सुरापीप्रभृतयोऽधिवेदनीयाः । एवंविधासु भार्यासु भार्यान्तरं कर्त-

---

* एतच्चिह्नान्तर्गतग्रन्थः क. घ. पुस्तकयोर्न विद्यते ।

---

१ क. ग. °ता तु या । २ क.गं.घ.छ.ञ. °षु प्रातिद्विष्टिके° । ३ क. °तुकेषु । ४क. °णमहा° । ५ क. घ. °न्ध्या कु(दु)ष्टाऽप्रि° ।

स्त्रीणां पुनर्विवाहस्तु देवरात्पुत्रसंततिः ॥
स्वातन्त्र्यं च कलियुगे कर्तव्यं न कदाचन ।
यतः पातकिनो लोके नराः सन्ति कलौ युगे " इति ॥६८॥ ६९ ॥

व्यभिचारिणीं प्रति यत्कार्यं तदाह—

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ॥
परिभूतामधः शय्यां वासयेद्व्यभिचारिणीम् ॥ ७० ॥

धने च धर्मे च निरस्तैश्वर्यां मलिनशरीरवस्त्रां देहधारणसमर्थान्नमात्रोपजीविनीमवज्ञातां क्षितिशायिनीं च कृत्वा व्यभिचारिणीं गृहैकदेशे वासयेत् ।

अत्र मनुः—" विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि ।
यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥

नारदः—" व्यभिचारे स्त्रिया मौण्ड्यमधः शयनमेव च " ।

कृतप्रायश्चित्ता तु संव्यवहार्या भवति—

" कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित् " इति मनुवचनात् ॥ ७० ॥

स्त्रीप्रशंसामाह—

सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरम् ॥
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥ ७१ ॥

सोमो देवः स्त्रीणां शुचित्वं दत्तवान् । गन्धर्वश्च कल्याणीं गिरम् । पावकः सर्वयज्ञार्हत्वम् । अतो हि ता मेध्या यज्ञार्हा योषितः । हिशब्दः प्रसिद्धौ ॥ ७१ ॥

व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्तृवधे चाऽऽसां तथा महति पातके ॥ ७२ ॥

व्यभिचारे सत्यासां रजोदर्शने शुद्धिर्भवति । एतच्च मानसे व्यभिचारे । यदाह मनुः—"रजसा स्त्री मनोदुष्टा" इति । ततश्च रजोदर्शनात्प्रागसंव्यवहार्या । संव्यवहारार्थं प्रायश्चित्तं कारयितव्या ।

यदाह वसिष्ठः—" मनसा भर्तुरभिचारे त्रिरात्रं यावकं क्षीरौदनं वा भुञ्जानाऽधः शयीत । ऊर्ध्वं त्रिरात्रादप्सु निमग्ना गायत्र्या अष्टशतेन शिरोभिर्जुहुयात् । पूता भवतीति विज्ञायते " इति ।

---

१ ख. ग. °मनुज्ञा° । २ ख. स्त्रियं मौण्डम° । ग. स्त्रियो मौड्यम° । ३ क. °नां चैव । ४ ख. ग. °र्वसेव्यत्वं । ५ ङ. °चारादृतौ । ६ ङ. °वधादौ च त° । ७ क. ख. घ. चासौ त° । ८ घ. °य वा प्रा° । ९ ख. °रभीचा° । १० ख. ग. °न जुहु° ।

स्वैरिणी । स्वैरिणीग्रहणं तद्वैलक्षण्येन पुनर्भूज्ञानाय । तज्ज्ञापनं च पौनर्भवस्य भर्तुः पुत्रस्य च ज्ञापनार्थम् ॥ ६७ ॥

पुनर्भूप्रसङ्गात्क्षेत्रजपुत्रोत्पत्तिविधानमाह—

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ॥
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥ ६८ ॥
आ गर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ॥
अनेन विधिना जातः क्षेत्रजः स भवेत्सुतः ॥ ६९ ॥

मृते जीवति पत्यौ वा गर्भाधानाक्षमे स्त्रियमनपत्यां पुत्रकामां तदुत्पत्तियोग्यां गुरुभिः प्रजोपत्त्यर्थमनुज्ञातो भर्तुर्ज्येष्ठः कनिष्ठो वा भ्राता वा तदलाभे तत्सपिण्डः सगोत्रो वा तामत्य(भ्य)क्तसर्वाङ्ग ऋतुकाले गच्छेत् । गर्भे जाते निवर्तेत । उक्तप्रकारातिक्रमेण गच्छन्पतितो भवेत् । इत्थमुत्पन्नः पुत्रः क्षेत्रजसंज्ञो भवति ।

अत्र च बृहस्पतिः—" उक्त्वा नियोगो मनुना निषिद्धः स्वयमेव तु ।
युगह्रासादशक्योऽयं कर्तुं सर्वैर्विधानतः ॥
तपोज्ञानसमायुक्ताः कृते त्रेतायुगे नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्विनिर्मिता ॥
अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः " ॥

मनुः—" क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥
य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः ।
यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु " ॥

अथ ब्रह्मपुराणम्—" मृते भर्तरि या नारी त्यक्तवत्यथ तं स्वयम् ।
सवर्णाज्जनयेद्गर्भं भर्तुः पौनर्भवं सुतम् ॥
यदि सा बालविधवा बलात्त्यक्ताऽथ वा क्वचित् ॥
तदा भूयस्तु संस्कार्या गृहीता येन केनचित् ।
त्यक्त्वा भर्तृगृहं गच्छेद्यदि दोषं विना पुनः ॥
भर्त्रा सा संस्कृत(स्कर्त)व्या च प्रायश्चित्तादिभिः क्रमात् ।

---

१ ख. ग. °ङ्गात्पुत्रो° । २ क. °क्यो वा कर्तुं सर्ववि° । ३ घ. °यस्त्वसं° ।

दीर्घकुत्सितरोगित्वं व्यङ्गता च पूर्वदोषौ ॥

**अदुष्टां च त्यजन्दण्ड्यः ।**

अदुष्टां त्यागदोषरहितां कन्यां त्यजन्नुत्तमसाहसं वरो दण्ड्यः ।

अत्र नारदः—" प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेन्नरः[1] ।
विनेयः सोऽन्यकामोऽपि कन्यां तामेव चोद्वहेत् " ॥

विनेयो दण्ड्यः ॥

**दूषयंस्तु मृषा शतम् ॥ ६६ ॥**

अशस्तेयं कन्येति मिथ्या वदन्पणशतं दण्ड्यः । यत्तु विष्णुनोक्तम्—" अदुष्टां दुष्टामिति ब्रुवन्नुत्तमसाहसं दण्ड्यः " इति तदपरिणेयत्वापादकदोषाभिधानविषयमिति ॥ ६६ ॥

पुनर्भूलक्षणमाह—

**अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ॥**

या कृतविवाहा सती क्षतयोनिरक्षतयोनिर्वा कौमारेण भर्त्रा भर्त्रन्तरेण वा यथाविधि पुनरुह्यते सा पुनर्भूः । यथाऽऽह मनुः—

" सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा ।
पौनर्भवेन भर्त्राऽसौ पुनः संस्कारमर्हति " ॥

अस्यार्थः—क्लीबपतितोन्मत्तादिपरिणीतेषु जीवत्स्वदुष्टे वा भर्तरि मृते यमन्यं पतिं विन्दते स पौनर्भवो भर्ता । तेन पुनर्वैवाहिकविधिसंस्कृता पुनर्भूः । यद्वा[2] क्लैब्यादिदोषरहितं पोषणादिसमर्थं कौमारं पतिमुत्सृज्यान्यैः सह सुरतमाचर्य पुनः पूर्वमेव पतिं परिगृह्णाति सा गतप्रत्यागता[3] क्षतयोनिश्च । स च भर्ता पौनर्भवः ।

पुनर्भूद्वयस्य चास्य स्वरूपं वसिष्ठ आह—

" पुनर्भूर्या कौमारं भर्तारमुत्सृज्यान्यैः सह चरित्वा पुनस्तस्यैव कुटुम्बमाविशति सा पुनर्भूर्भवति । या वा क्लीबं पतितमुन्मत्तं भर्तारमुत्सृज्यान्यं पतिं विन्दते[4] । मृते वा सा पुनर्भूर्भवति " इति ।

तस्मात्पुनःसंस्कृतत्वं पुनर्भूलक्षणम् ॥

**स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥ ६७ ॥**

या पतिं परित्यज्य सवर्णमन्यं रागतो विवाहं विनैवोपभोगायाऽऽश्रयेत्सा

---

१ क. °त्सृजन्° । २ क. ग. °द्वा क्लीबादि° । ३ क. घ. °ता च क्ष° । ४ क. ग. घ. विन्देत ।

( विवाहप्रकरणम् २)

वाग्दत्ताविषयमेतद्वाक्यद्वयम् । रक्तागमो रजोदर्शनम् ।

" प्रदाय गच्छेच्छुल्कं यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः " ॥

एतदपि प्राग्विवाहाद्द्रष्टव्यम् ।

वसिष्ठः—" अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ वरो यदि ।
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा " इति ॥

न च मन्त्रोपनीता मन्त्रवता विवाहकर्मणोपनीता प्राप्ता, संस्कृता न भवतीत्यर्थः ।

कात्यायनः—" पूर्वदत्ता तु या कन्या अन्येनोढा यदा भवेत् ।
संस्कृताऽपि प्रदेया स्याद्यस्मै[1] पूर्वं प्रतिश्रुता " ॥

चेद्गुणवत्तर इति शेषः ॥ ६५ ॥

## अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ॥

कन्याप्रदः कन्यादोषं स्वयं जानन्वरेणाविदितं तस्य च प्रत्यक्षायोग्यमकथयित्वा तस्मै यदि प्रयच्छति तदाऽसावशीतिपणसहस्रं दण्ड्यः ।

कन्यादोषं नारद आह—

" दीर्घकुत्सितरोगार्ता व्यङ्गा[2] संस्पृष्टमैथुना[3] ।
धृष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः " ॥

सुमन्तुः—" कन्या कुत्सिताऽन्यजातिकर्मशीला व्याध्युपहता परिणीता
यद्यक्षतयोनिः स्यात्परित्यक्तव्या " ।

क्षतयोनिस्तु भर्तव्या पोषणीयैव ।

यत्तु नारदेनोक्तं—" यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।
तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम् "

इति, एतत्त्यागनिमित्तदोषव्यतिरिक्तविषयम् । पणशतद्वयं सप्तत्यधिकं पूर्वसाहसः ।

अत्र मनुः—" विधिवत्परिगृह्यापि त्यजेत्कन्यामनिन्दिताम् ।
व्याधितां विप्रदुष्टां च च्छद्मना चोपपादिताम् " ॥

विविधं प्रकर्षेण च दुष्टां विप्रदुष्टाम् । वरत्यागहेतून्दोषानाह नारदः—

" उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः ।
कन्यादोषौ च यौ पूर्वावेष दोषगणो वरे " ॥

---

१ ख. °स्मै सर्वं । २ क. घ. व्यङ्गसं° । ३ ग. संसृष्ट° । ४ घ. °तान्त्यजा° ।

अत्र मनुः—" अलंकारं नाऽऽददीत पित्र्यं कन्या स्वयंवरा ।
मातृकं भ्रातृदत्तं वा स्तेयं स्याद्यदि तं हरेत् " ॥

वरमपि प्रति स एवाऽऽह—
" पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् " ॥

शुल्कं मूल्यम् ॥ ६४ ॥

**सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ॥**
**दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥ ६५ ॥**

पित्रादिना कन्या सकृदेव देया तां दत्त्वाऽपहरन्वक्ष्यमाणेन कन्यास्तेयदण्डेन युज्यते । यस्मै वाचा दत्ता ततोऽन्यश्चेत्प्रशस्ततरो[1] लभ्यते ततस्तस्मै देया न तु पूर्वस्मै ।

अत्र गौतमः—" प्रतिश्रुत्याधर्मसंयुक्ताय न देयात् " इति ।

नारदः—" स्त्रीपुंसयोश्च संबन्धाद्वरणं प्राग्विधीयते ।
वरणाद्ग्रहणं पाणेः संबन्धोऽयं त्रिलक्षणः " ॥

वरणं पाणिग्रहणमुपभोगश्चेति त्रिविधः संबन्धः ।
" तयोरनियतं प्रोक्तं वरणाद्दोषदर्शनात् ।
पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ॥
तेषां निष्ठा तु विद्वद्भिर्विज्ञेया सप्तमे पदे " ॥

अस्यार्थः—तयोः कन्यावरयोरनियतं[2]मनियमः । वृताऽपि[3] न परिणीयते वाग्दत्ताऽपि न प्रदीयत इत्येवंरूपः, तस्य कालं कारणं च वक्तुमुक्तम्—वरणाद्दोषदर्शनादिति । वरणादूर्ध्वं कन्यावरयोरन्योन्यदोषदर्शनादनियमो भवति । वरणादिति सावधारणं[4] वचनम् । वरणादेवोर्ध्वं न विवाहादित्यर्थः । अत्र हेतुः—पाणिग्रहणिका मन्त्रा इति । तैर्मन्त्रैरुत्पादितभार्यात्वरूपसंस्कारायाः परित्यागो न युक्त इति ।

तथा—" प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्समतिक्रम्य कन्याऽन्यं वरयेद्वरम् " ॥

कात्यायनः—" वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा ।
रक्तागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् " ॥

---

१ घ. °स्तवरो लभते । २ क. घ. °तनि° । ३ ख. ग. °पि प° । ४ क. ख. ग. साध्वा° ।

( विवाहप्रकरणम् २)

**अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥**

कन्यायाः प्रदाताऽधिकारी तामददद्गर्भहत्यां प्रत्युत समाप्नोति संपूर्णां प्राप्नोति ।

यत्तु मनुप्रवचनं—“ काममा मरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
न त्वेवैनां प्रयच्छेत्तु गुणहीनाय कर्हि चित् ” ॥

इति, तद्गुणवद्वरसंभवे गुणहीनाय न दातव्येत्येवंपरं न तु कन्यर्तुदर्शनमदोष इत्येवमर्थम् । तथा हि सति वचनान्तरविरोधः ।

तथा च काश्यपः—“ पितुर्गेहे तु या कन्या रजः पश्येदसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ” ॥

वृषली धर्मानधिकारिणी ।

“ यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ” ।

कन्यया चाहमृतुमतीति बान्धवेभ्यो निवेदयितव्यमित्याह[1] नारदः—
“ कन्या नर्तुमुपेक्षेत[2] बान्धवेभ्यो निवेदयेत् ।
न चेत्प्रदद्युस्तां भर्त्रे ते स्युर्ब्रह्महभिः[3] समाः ” इति ॥

अत्र संवर्तः—“ माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ” ॥

**गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् ॥ ६४ ॥**

दातॄणां पित्रादीनामभावे स्वयमेव कन्या गम्यं गमनार्हं सवर्णमुत्कृष्टवर्णं वा पातित्यादिदोषरहितं वरं भर्तारं कुर्यात् । एतच्च प्राग्रजोदर्शनात् । दृष्टे तु तस्मिन्पित्रादिषु सत्स्वपि स्वयमेव कन्या वरं कुर्यात् । न पित्रादिशासनमपेक्षेत[4] । यदाह बौधायनः—

“ त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने(ने) सदृशं(शे)गुणहीनमपि व्रजेत् ” ।

सदृशो गुणवान् । यत्तु विष्णुनोक्तम्—
“ ऋतुत्रयमपास्यैव कन्या कुर्यात्स्वयं वरम् ”

इति, तद्गुणवद्वरलाभे सति द्रष्टव्यम् । तदलाभे तु वर्षत्रयमुपासनीयम् ।

---

१ ख. ग. घ. 'वेदित' । २ ख. न तमु° । ३ घ. स्युर्भ्रूणह' । ४ ख. पित्र्यादि° ।

इति, तत्पैशाचस्य ब्राह्मणादन्येषां वर्णानामत्यन्तापद्यनुग्रहार्थम् । तस्माद्ब्राह्मणस्याऽऽपद्यपि पैशाचानुग्रहो नास्तीति सिद्धम् ॥ ६१ ॥

**पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया[1] शरम् ॥**
**वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ ६२ ॥**

सवर्णायामुह्यमानायां वरेण तस्याः पाणिर्ग्राह्यः । क्षत्रिया ब्राह्मणेनोह्यमाना शरं गृह्णीयात् । य(त)था तस्याः पाणिमिव तं शरं वर उपाददीत । वैश्या तु विप्रेण क्षत्रियेण वा परिणीयमाना प्रतोदं बलीवर्दखेदनमाददीत । अग्रयजन्मशब्द उत्कृष्टवर्णमात्रपरः । मनुः—

" वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने " ॥ ६२ ॥

कन्याप्रदानाधिकारिणस्तत्क्रमं चाऽऽह—

**पिता पितामहो भ्राता सकुल्यो जननी तथा ॥**
**कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥**

पित्रादीनां क्रमपरिपठितानां पूर्वस्य पूर्वस्याभावे स[2]त्यप्रकृतिस्थत्वे तु(चो)त्तर उत्तरः प्रकृतिस्थः कन्याप्रदो भवति । अविप्लुतबुद्धिः प्रकृतिस्थः । अप्रकृतिस्थेन पित्राऽपि कृतं कन्याप्रदानमकृतमेव,

यदाह नारदः—" स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः " ॥

स्वतन्त्रोऽपि पितृत्वादिना स्वातन्त्र्यार्होऽपि यद्यप्रकृतिस्थत्वेन परतन्त्रो भवति तदा तत्कृतं कार्यं वाग्दत्तादिकर्माकृतं वेदितव्यम् ।

तथा—" पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
मात्र(ताऽ)भावे तु सर्वेषां प्रकृतौ यदि वर्तते ।
तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः " ॥

विष्णुः—" पिता पितामहो भ्राता सकुल्यो मातामहो माता च ।
इति कन्याप्रदाः पूर्वाभावे प्रकृतिस्थः परः परः " इति ॥ ६३ ॥

---

१ क. ग. घ. °ह्णीत क्षत्रि° । २ क. ग. सति प्र° ।

कन्यामुपयच्छेत स्वी कुर्यादिति तस्यार्थः । ततोऽत्र दानं न विद्यते विवाहस्तु भवति । अस्य च विवाहान्तरेभ्यो भेदको धर्मः कन्यावरयोर्मिथः संप्रतिपत्तिः । एवं राक्षसपैशाचयोरपि विवाहत्वं कन्यादानरहितमेव द्रष्टव्यम् । युद्धं छलनं च तयोर्भेदकौ धर्मौ । तदाह—

" हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यश्च हरेत्स राक्षसः " ।

तथा पैशाचमपि मनुराह—

" सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपैयच्छति ।
स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः " ॥

एवमुपयमनपाणिग्रहणशब्दवत्परिणयनशब्दोऽपि दण्डिन्यायेनैव कर्मसमुदाये शास्त्रेषु प्रयुज्यते ।

एषां विवाहानां मध्येऽयमस्य धर्म्यो वर्णस्यायमधर्म्य इत्याह मनुः—

" षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् " ॥

ब्राह्मादीन्गान्धर्वपर्यन्तान्विवाहान्षड्ब्राह्मणस्य धर्मादनपेतान्विद्यात् । अवरान्पश्चादुक्तानासुरादीन्पैशाचान्तांश्चतुरो विवाहान्क्षत्रियस्य । वैश्यशूद्रयोरपि तानेव राक्षसवर्जितान्विद्याज्जानीयादित्यर्थः ।

एषामपि मध्ये प्रशस्तानाह—

" चतुरो ब्राह्मणस्याऽऽद्यान्प्रशस्तान्कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः " ॥

ब्राह्मो दैव आर्षः प्राजापत्यश्चेति चत्वारो विवाहा ब्राह्मणस्य प्रशस्ताः । आसुरगान्धर्वौ तु न प्रशस्तौ, न निन्दितौ । क्षत्रियस्य पुना राक्षस एकः प्रशस्तः । आसुरगान्धर्वौ तु पूर्ववत् । वैश्यशूद्रयोस्त्वासुर एकः प्रशस्तः । गान्धर्वस्तु पूर्ववत् । पैशाचः पुनः सर्ववर्णानां निन्दित एव ।

" स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः " ।

इत्यविशेषस्मृतेः ।

यत्तु मनुनैवोक्तं—" क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् "

१ क. घ. °नं वि° । २ क. ख. °हाभ्यन्त° । ३ क. ख. °पगच्छ° । ४ क. ख. ग. °वत्पाणिग्रहणश° । ५ क. घ. दण्डन्या° । ६ ग. °र्व्यान्विप्र° । ७ घ. °स्तौ । वि° ।

गान्धर्वः समयान्मिथः ॥

कन्यावरयोरन्योन्यसमयात्त्वं मे भार्या त्वं मे पतिरित्येवंरूपाद्दाननिरपेक्षाद्यः कन्यास्वीकारः स गान्धर्वो विवाहः ॥

राक्षसो युद्धहरणात्

युद्धेन कन्याबन्धूञ्जित्वा यत्कन्याहरणं कन्यास्वीकारः स राक्षसो विवाहः॥

पैशाचः कन्यकां[1] छलात् ॥ ६१ ॥

कन्यकां[2] छलादपहृत्य यत्स्वी करोति स पैशाचो विवाहः । केचित्पठन्ति " कन्यकाछलात् " इति । तस्यार्थः—कन्यकाछलनात्तत्स्वीकारः पैशाचो विवाह इति । एतेऽष्टौ विवाहाः । विवाहशब्दो यद्यपि कन्यायाः[3] सप्तपदातिक्रमेण(मणे)[4]मुख्यस्तथाऽपि ऋत्विज्या*यात्तत्तद्गृह्यादिशास्त्रविहितभार्यात्वसाधके[5] कर्मसमुदाये वर्तते । स च समुदाय उपाधिभेदाद्ब्राह्मादिव्यपदेशं लभते । तदुपाधित्वेनैव दानविवाहशब्दयोः सामानाधिकरण्यम् ।

यथा—" अलंकृत्य कन्यामुदकपूर्वं दद्यादेष ब्राह्मो विवाहः " इति[6] ।

न पुनरेव विवाहशब्दार्थः । तथा सति हि—

" उदगयन आपूर्यमाणे पक्षे कल्याणे नक्षत्रे
चौलकर्मोपनयनगोदानविवाहाः "

इत्युक्त्वा यदुक्तं—

" तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहयात् "

इति, तन्नोपपद्यते । न हि कन्यादानात्पुरस्तादेता आहुतयः सन्ति । तस्माद्दानविवाहयोर्भेदात्तदभिधानयोः[7] पदयोः सामानाधिकरण्यमुपचारेणैव व्याख्येयम् । यत एव दानं न विवाहोऽत एव गान्धर्वादिषु विवाहेषु दानमन्तरेणैवोपयमनं कन्यास्वीकारात्मकं विवाहत्वेनाऽऽह शौनकः—

" मिथः समयं कृत्वोपयच्छेत स गान्धर्वः " ।

मिथः परस्परं कन्यावरावहं ते भर्ता त्वं मे भार्येति संप्रतिपत्तिं कृत्वा

---

* ऋत्विक्प्रयुक्ततत्तादिति पाठो युक्त इति भाति ।

---

१ क. ङ. 'न्यकाछ' । २ क. °कां बला' । ३ ग. °न्याया दानपरस्तथाऽपि स° । ४ ग. °मेणैव मुख्य ऋत्विक्प्राया° । ५ घ. 'ह्रिते भा° । ६ घ. 'ति पुनर्दानमेव । ७ क. ग. °हशब्दयो° ।

सुकृतं विहितकरणं प्रतिषिद्धवर्जनं चोच्यते ।
आश्वलायनः—" तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयतः" इति ॥५८॥

## यज्ञस्थऋत्विजे दैवः

विवाह इत्यनुवर्तते, दीयते शक्त्यलंकृतेति च । ऋत्विजे यज्ञं कुर्वते दक्षिणात्वेन यथाशक्त्यलंकृत्य कन्या दीयत एष दैवो विवाहः ॥

## आदायाऽऽर्षस्तु गोद्वयम् ॥

वराद्गोमिथुनं गृहीत्वा तस्मै यथाशक्त्यलंकृत्य कन्या दीयत इत्येष आर्षो विवाहः । शौनकः—" गोमिथुनं दत्त्वोपयच्छेत स आर्षः " इति ॥

अनयोः फलमाह—

## चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ५९ ॥

प्रथमविवाहजातो दैवविवाहोत्पन्नः सप्त पूर्वान्सप्तावरान्पुरुषान्पुनाति । उत्तर आर्षो विवाहस्तज्जस्त्रीन्पूर्वांस्त्रीनवरानित्येवं षट्पुरुषान्पुनाति ॥ ५९ ॥

## *सहोभौ चरतां धर्ममित्युक्त्वा दीयतेऽर्थिने ॥
## स कायः

उभौ सह धर्मं चरतामित्येवं कन्यावरावुक्त्वा यथाशक्त्यलंकृत्य कन्या कन्यार्थिने दीयते यत्स कायः प्राजापत्यो विवाहः ॥

तस्य फलमाह—

## पावयेत्तज्जः षड्वंश्यान्सह चाऽऽत्मना ॥ ६० ॥

तस्यां जातः षट्पूर्वान्षडपरान्पुरुषानात्मानं च त्रयोदशं पावयेत् ।
अत्र देवलः—" एते विवाहाश्चत्वारो धर्म्यास्तोयप्रधानिकाः ।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् ॥
चतुर्ष्वेतेषु दत्तायामुत्पन्नास्तनयाः स्त्रियाम् ।
दातुः प्रतिग्रहीतुश्च पुनन्त्यासप्तमं कुलम् " इति ॥ ६० ॥

## आसुरो द्रविणादानात्

वराद्द्रविणमादायाऽऽत्मार्थं कन्यार्थं च पित्रादिभिर्यत्कन्यार्पणं क्रियते स आसुरो विवाहः ॥

---

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके–" इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने " ।

---

१ क. घ. °ज्ञस्थायर्त्विजे । २ ख. छ. °प्रदानि° ।

ते च स्वा चैव राज्ञः स्युस्ताश्च[1] स्वा चाग्र्यजन्मनः ॥
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः " इति ।

कामतः प्रवृत्तानां न धर्मतः, अत एव ता जघन्याः । क्रमशो न व्युत्क्रमेण, व्युत्क्रमे च दोषो मनुना दर्शितः—

" शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः " इति ॥

अत्रिगौतमयोरिदं मतं शूद्रावेदी पतति वेदनमात्रेणैव । शौनकस्य सुतोत्पत्त्या, तस्यापत्येनेति भृगोः । तच्च व्युत्क्रमेणेति द्रष्टव्यम् । इतरथा—

चतुस्त्रिद्व्येकभागी ना वर्णशो ब्राह्मणात्मजा " ।

इति भागविभागौ[2] न स्याताम् । न च तत्प्राधान्यं श्राद्धादिदानेषु कार्यम् ।

" दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितरस्तस्य न च स्वर्गं स गच्छति "

इति वचनात् ॥ ५७ ॥

विवाहानाह—

**ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता ॥**
**तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ ५८ ॥**

ब्राह्मो नाम विवाहो ब्राह्मणानामुचित इति । तस्मिन्नाहूय पूर्वोक्तलक्षणं वरं वरो(रे) वरयितव्यः अ(व्ये ऽ)र्थित्वे ज्ञाते शक्त्याऽलंकृत्य कन्या दीयते ।

मनुरपि—" आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः " इति ॥

देवलोऽपि—" ततो विनीतां कल्याणीं कन्यां कुलवयोन्विताम् ।
अलंकृत्याहिते दद्याद्विवाहो ब्राह्म उच्यते " ॥

यमश्च—" अद्भिर्या दीयते कन्या ब्रह्मदायेति तां विदुः " ।

ब्रह्मदायेतिसंज्ञा[3] श्राद्धे पङ्क्तिपावनत्वव्यवहारार्थम् । तस्यां जातः पुनात्युभयत्र मातापितृकुले पुरुषानेकविंशतिम् । यदि यथोक्तकारी भवति । तथा च गौतमः—" पुनन्ति साधवः पुत्राः " इति ।

अत्र मनुः—" दश पूर्वापरान्वंश्यानात्मानं चैकविंशकम्[4] ।
ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन् " ॥

---

१ ख. स्वाश्चाग्र्य° । २ ग. घ. °भागो न स्यात् । न° । ३ ग. °ज्ञा प° । ४ ग. घ. °शतिम् । ब्रा° ।

[ *एतेभ्यः पूर्वज्ञातेभ्यो न कन्या देया ( +यदि त्वज्ञानाद्दद्याचिकित्स्येषु चिकित्सां यावत्प्रतीक्षेत ।] अचिकित्स्यत्वे दत्ताऽऽच्छिद्यान्यस्मै देया।) युवा न वृद्धः। धीमानभ्रान्तचित्तः। सर्वस्य चित्तमूलत्वात्। अत एव "बुद्धिमते कन्यामुपयच्छेत्" इत्युक्तम् । जनप्रियो न विरक्तजनः । दृष्टादृष्टस्य तन्मूलत्वात् । गौतमोऽपि—" विद्याचारित्रबन्धुशीलसंपन्नाय दद्यात्" इति ॥ ५५ ॥

किं च—

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ॥
नैतन्मम मतं यस्मात्तत्राऽऽत्मा[१] जायते स्वयम् ॥५६॥

यदुच्यते चतस्रो भार्या ब्राह्मणस्य तिस्रो राज्ञो द्वे वैश्यस्येति शूद्राद्दारोपसंग्रहः । नैव मम तन्मतम् । किमिति । यस्मादयं तत्र जायते स्वयं तस्माज्जाया भवति । " यदस्यां जायते पुनः " इति श्रुतेः ।

मनुरपि—" हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् " इति ॥

तथा—" शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते " इति ॥

यत्पुनरुक्तं—" न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते " ॥

इति, तत्तयोरत्यन्तप्रतिषेधार्थं न वैश्यादिप्राप्त्यर्थम् ॥ ५६ ॥

अनुकल्पक्रममाह—

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ॥
ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः ॥ ५७ ॥

यदा पुनरुक्तलक्षणा सवर्णा नास्ति पूर्वा[२] च विनष्टा[३][न] चानाश्रमिणा स्थातव्यं न[४] चाऽऽश्रमान्तरेऽधिक्रियते सामर्थ्याद्बहुधनो बालापत्यश्च तदा तस्यामवस्थायां तिस्रो द्वे एका च ब्राह्मणक्षत्रियविशां भार्या वर्णानुपूर्व्येण स्वा शूद्रस्य सवर्णा पुनश्चतुर्थी मुख्या स्थितैव । यथाऽऽह मनुः—

" शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः[५] स्मृते ।

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके न विद्यते ।+एतच्चिह्नान्तर्गतग्रन्थः क. घ. पुस्तकयोर्न ।

---

१ ग. घ. ङ. °त्रायं जा° । २ क. ग. घ. शूद्रदा° । ३ क. घ. °ष्टा च न चाऽऽश्रमिणां स्था° ; ग. °ष्टा तदा नाऽऽश्र° । ४ ग. नवाऽऽश्रमान्तरो विधीय° । ५ क. विशिष्यते । ते ।

चतुर्दशविधः षण्डः[1] शास्त्रे दृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥
निसर्गपण्डो वध्रश्च पक्षपण्डस्तथैव च ।
अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च ॥
ईर्ष्यापण्डश्च सेव्यश्च वातरेता[2] मुखेभगः ।
आक्षिप्तमोघबीजौ[3] च शालीनोऽन्यापतिस्तथा ॥
तत्राऽऽद्यावप्रतीकारौ पक्षाख्यं[4] मासमाचरेत् ।
अनुक्रमात्रयस्यास्य कालः संवत्सरः स्मृतः ॥
ईर्ष्यापण्डादयो येऽन्ये चत्वारः समुदाहृताः ।
त्यक्तव्यास्ते पतितवत्क्षतयोन्याऽपि च स्त्रिया ॥
आक्षिप्तमोघबीजाभ्यां कृतेऽपि पतिकर्मणि ।
पतिरन्यस्ततो नार्या वत्सरार्धं प्रतीक्ष्य तु ॥
शालीनस्यापि धृष्टस्त्रीसंयोगाद्भ्रश्यति द्वि(ध्व)जः ।
तं हीनविषयं तु स्त्री वर्षं क्षिप्त्वाऽन्यमाश्रयेत् ॥
अन्यस्यां यो मनुष्यः स्यादमनुष्यः[6] स्वयोषिति ।
लभेत साऽन्यं भर्तारमेतत्कार्यं प्रजापतेः ॥
अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति " ॥

सुबद्धं सुश्लिष्टं, जत्रु ग्रीवास्कन्धयोः संधिः । घाटा ग्रीवापश्चाद्भागः । निसर्गपण्डो लिङ्गवृषणहीन एवोत्पन्नः[7] । वध्रश्चालिताण्डः[8] । पक्षपण्डो यस्य पक्षान्तरिता रतिशक्तिः । गुरोरभिशापादेव, देवक्रोधादेव[9] देवनिन्दाजनितक्रोधात् । ईर्ष्यापण्डः स्वस्त्रीविषय ईर्ष्यास्तम्भितरेताः । सेव्यः स्त्रिया बहुप्रकारं सेव्यमानो जातरिरंसः । वातरेता यस्य रतान्ते लिङ्गेन वातनिःसरणमात्रम् । मुखेभगः, यः परमुख एव भगकार्यं करोति । आक्षिप्तरेता विसर्गसमये यस्य रेतः प्रत्यक्प्रवर्तते । मोघबीजो यस्य गर्भाधानसमर्थं रेतो न भवति । शालीनो यस्य[10] धृष्टस्त्रीसंनिपाताल्लिङ्गपातो[11] भवति । अन्यापतिः–यस्य भार्याव्यतिरिक्तायामेव योषिति पुंस्त्वम् । मासमाचरेत्, मासं यावत्प्रतीक्षेत ।

---

१ ग. षण्ढः । २ ख. °रेतो मु° । ३ क. घ. °बीजौंशं शा° । ४ क. पक्षक्षेमा° । ५ घ. °क्षाक्षेमा° । ६ ख. °ष्यः सुयो° । ७ क. घ. °न्नः । नध्रो गालि° । ८ ख. वध्रः शालि° । ९ क. घ. °धानिन्दादेवज° । १० क. घ. °स्य धृष्ट° । ११ क. घ. °ङ्गसंनिपातः । अ° ।

( विवाहप्रकरणम् २)

मिति । तस्मात्सप्त पितृतः परीक्ष्य पञ्च मातृतो नग्निकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत । तस्मात्कुलनक्षत्रविज्ञानोपपन्नां वरयेत् " ।

आमयावि अत्रोक्तेतरसंचारिरोगवत् । अत्र च श्वित्र्यादीनि षड्वर्जनीयानि । अत्र हेतुः—कुलानुरूपाः प्रजा भवन्तीति । अनार्षेयमस्मर्यमाणगोत्रप्रवरम् । तस्य च वर्ज्यत्वमयज्ञियत्वात् । अयज्ञियत्वं च यज्ञेष्वस्मर्यमाणगोत्रप्रवरस्यानधिकारात् । अब्रह्माविद्यमानवेदाध्ययनम् । तद्वर्ज्यत्वे हेतुः—अदैवत्वादिति, दैवकर्मशून्यत्वात् । " नग्निका दशवर्षा " इति भविष्यत्पुराणम् ।

यमश्च—" चतुर्दश कुलानीमान्यविवाह्यानि निर्दिशेत् ।
अनार्षेयं ब्राह्मणानामृत्विजां च विवर्जयेत् ॥
अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत् ।
हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च ॥
श्वित्रिकुष्ठिकुलादीनां कुर्याद्विपरिवर्जनम् ।
सदा कामकुलं वर्ज्यं लोमशानां च यत्कुलम् ॥
अपस्मारिकुलं यच्च यच्च पाण्डु कुलं भवेत् " ।

ऋत्विजोऽत्र निन्द्ययाजकाः । कामकुलं कामप्रधानकुलम् । अतिवर्णमतिकृष्णमतिगौरं वा ॥ ५४ ॥

किंच—

**एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ॥**
**यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः ॥ ५५ ॥**

एतैरेव गुणैः पूर्वोक्तैर्युक्तो दोषैश्च वर्जितो वरो भवति । सवर्ण उत्कृष्टो वा यदि श्रोत्रियो भवति । यत्नात्परीक्षितः पुंस्त्वे पुरुषार्थस्य तन्मूलत्वात् । परीक्षा च नारदोक्ता—

" परीक्ष्यः पुरुषः पुंस्त्वे निजैरेवाङ्गलक्षणैः ।
पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ॥
सुबद्धजत्रुजान्वस्थिसुबद्धांसशिरोरुहः ।
स्थूलघाटस्तनूजत्वगविलम्नगतिस्वरः ॥
रेतोऽस्य प्लवते वाऽप्सु ह्रादि मूत्रं च फेनिलम् ।
पुमान्स्याल्लक्षणैरेभिर्विपरीतस्तु पण्डकः ॥

---

१ ख. ग. °माणम् । प्र° । २ क. घ. °कारणात् । अ° । ३ ख. ग. °कुष्ठकु° । ४ ख. दि श्रो° । ५ घ. °ङ्गदर्शनैः । पु° । ६ क. घ. °नूरुत्व° । ७ क. ग. घ. °तोऽप्सु प्लवते मास्य ह्रा° ।

मातृगोत्रग्रहणं पितृसगोत्रवन्निराकरणार्थम् । जन्यजनकसंबन्धस्योभयस्यो-भयत्राविशिष्टत्वात् ।

शातातपोऽपि—" एकगोत्रां विवाह्यैव समानप्रवरां तथा ।
मातुलस्य सुतां चैव भुक्त्वा चान्द्रायणं चरेत् " इति ॥

यदा चेत्थं तदा न कुतश्चिद्भ्रान्तिबुद्धिर्व्याख्यानात्तत्प्रवृत्तेर्वा संदेहः कार्यः शास्त्रस्य विविक्तत्वात् ॥ ५३ ॥

**दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ॥**
**स्फीतादपि न संचारिरोगदोषसमन्वितात् ॥ ५४ ॥**

दश पूरुषा मातृतः पञ्च पितृतश्च ख्याता यस्मिन्कुले तस्मात्कन्या ग्राह्येति नियम्यते ।

यथाऽऽश्वलायनः—" कुलमग्रे परीक्षेत मातृतः पितृतश्च " इति ।

इदमपरं विशेषणं श्रोत्रियाणां महाकुलात् । " श्रोत्रियंश्छन्दोऽधीते [ पा० सू० ५-२-८४ ] " इत्यध्ययनेनश्रुतेन श्रोत्रियो भवतीति श्रुतं लक्षयति । महाकुलात्पुत्रपौत्रपशुदासीग्रामादिसमृद्धादिति । एवं सर्वप्राप्तौ सत्यामपवाद-माह–स्फीतादपि न ग्राह्या संचारिरोगान्वितात् । संचारिणः शुक्रशोणितानुयाता रोगाः कुष्ठार्शःप्रभृतयः[तैः], दोषैश्च निष्पुरुषत्वादिभिरन्वितात् । अत एव मनुः—

" महान्त्यपि समृद्धानि गोजाविधनधान्यतः ।
स्त्रीसंबन्धे दशेमानि कुलानि परिवर्जयेत् " इति ॥
" हीनक्रियं निष्पुरुषं निश्छन्दोलोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च " इति ॥

हीनक्रियं यथाविहितगर्भाधानादिक्रियारहितम् । निष्पुरुषं कन्याजन्मादि-बहुलम् । निश्छन्दो वेदाध्ययनरहितम् । लोमशमत्युल्बणलोमयुक्तम् । अर्श-समर्शोव्याधियुक्तम् ।

हारीतोऽपि—

" श्वित्रिकुष्ठ्युदरियक्ष्मामयाव्यल्पायुरनार्श(रर्श)स(सा) [नार्षेया]ब्रह्मसमानार्षेयं चेत्येतान्यपतितान्यपि कुलानि वर्जनीयानि भवन्ति ।कुलानुरूपाः प्रजाः संभवन्ती-त्यादितः षट् । अयज्ञियत्वादनार्षेयम् । अदैवत्वादब्रह्म । एककुलत्वात्समानार्षेय-

---

१ क. ग. घ. °यत्रा°। २ क. घ. °द्भ्रान्तबु° । ३ क. ख. °त् । हीनाद°। ४ क. ख. °यनं श्रु° । ५ ग. °माभिस° । ६ ख. घ. °न्दोरोम° । ७ ख. °मार्षसः । ब्र° । ८ क. घ. °नार्शसब्रह्मसमानार्षे° ।

र्तन्ते । गौतमग्रहणमेकवाक्यप्रतिपादनार्थम् । अनिराकरणात् । तथा च वसिष्ठः—"देशकुलाचारा आम्नायाविरुद्धाः प्रमाणम्" इति । आम्नायो वेदः । तदविरोधोऽस्तीति चेत्, नैतत् । भगिन्यादिगमनेऽपि तदविरोधदर्शनादतिप्रसक्तेः । तस्मान्नान्धपरम्परया न्यायागतस्य व्यवहारस्य प्रामाण्यम् ।

यदपि—"आयाहीन्द्र पातीभिरीळितेभिर्यज्ञमिमं नो वाजसातौ जुषस्व ।
तृप्तां जहुर्मातुलस्येव ते तव भागः पैतृष्वसेयीमपामिवौघः" ॥

इति, तन्मन्त्राणामविधायकत्वे सत्यपि परिणयननिराकरणं द्योत्यते । कथम् । कश्चित्प्रार्थयते । आयाहीन्द्रास्मदीयं यज्ञमन्यैरपि सोमपतिभिरीळितेभिः स्तोत्रार्हैः सह । आगत्य च वाजसातौ सोमरूपान्नभोजनप्रस्तावे जुषस्व । सोममिति संबध्यते । एवं प्राथ्र्येन्द्रस्तुत्यर्थं स्वरूपानुवादं करोति—ये ते सोमपतयो भवता सहाऽऽयातास्ते सकृत्सोमपानेन तृप्ताः सन्तः सोमं जहुस्त्यक्तवन्तः । किमिव, यथा पैतृष्वसेयीं भगिनीं भार्यात्वेनात्यन्तानभि[1]लषणीयां त्यजन्ति स्वकीयमातुलस्य संबन्धायोग्यतया, तद्व[2]द्रवदुद्देशेन सोमं त्यक्तवन्तो निराकाङ्क्षतया । तव पुनरयं सोमभागोऽपामिवौघः सातत्येना[3]ऽऽ कर्मसमाप्तेरिति । ततश्चानेन प्रतिषेधो दर्शितः । यदपि श्रुतौ "तृतीयं पुरुषं गच्छामहे" इति । तदपि स्रुग्व्यूहनपरत्वेनान्यार्थत्वा(च)त् । अपि च "प्रजापतिः स्वां दुहितरमभिध्यायत तस्यां रेतोऽवाकिरत्" इत्यादिश्रवणादतिप्रसक्तिं[4] करोति । प्रायश्चित्तदर्शनाच्च—

"पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भ्रातु[5]राप्तां च गत्वा चान्द्रायणं चरेत्" इति ॥

भगिनीग्रहणं संदेहनिरासार्थम् । न चापरिणीताविषयत्वमाशङ्कनीयम् । येनानन्तरं वक्ति—

"एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः" इति ॥

तथा कन्यादातुरपि नियमोऽस्ति । यथाऽऽहाऽऽपस्तम्बः—

"सगोत्रेभ्यो दुहितरं न प्रयच्छेन्मातुश्च योनिसंबन्धेभ्यः पितुश्च सप्तमात्" इति ।

प्रायश्चित्तस्मरणाच्च—

"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत्" इति ॥

---

१ क. घ. °भिलाष° । २ ख. तदुद्र° । ३ क. घ. °त्येन क° । ४ क. घ. °क्तिं प्राप्नोति ५ क. घ. °राप्तस्य ग° ।

पैठीनसिश्च " असमानार्षेया[1] कन्यां वरयेत् । पञ्च मातृतः परिहरेत् । सप्त पितृतः । त्रीन्मातृतः पञ्च पितृतो वा " इति ।

अत्र च समानजातीये पञ्च । असमानजातीये त्रीनिति व्यवस्थितो विकल्पः । न च सप्तमे पञ्चमे वा भवति विवाह्या । यथा—

" सप्तमे पञ्चमे चैव येषां वैवाहिकी क्रिया ।
ये च संतानजास्तेऽपि पतिताः शूद्रतां गताः " इति विष्णुः ॥

किं च यद्यसमानगोत्रत्वान्मातुलसुतापरिणयनं तदा मातृष्वसा-(स्र)दुहितुरपि स्यात् । समानन्यायात् । एतद्यदि स्मृतीनामेव केवलानां प्रामाण्यम् । यावता शिष्टस्यापि प्रामाण्यम् । यथाऽऽह मनुः—

" वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनां वेदवित्स्मृतिशील[2]ता " ।

व्यतिरेकेण साधू[3]नामाचारं दर्श[4]यति येन तस्य शास्त्रविरोधेऽपि प्रामाण्यं स्यात् । इतरथा शीलं चेष्टितमाचारश्चैव साधूनामिति भेदेन ग्रहणं न स्यात् । साधवश्च दर्शिताः—" न्यायेनाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः " इति ॥

न च तत्र वेदविदो न सन्ति न च तैरेतन्न चरितम् । यथा च बौधायनेन स्पष्टमेवंविधस्याऽऽचारस्य प्रामाण्यं दार्शितम्—

" पञ्चविधा विप्रतिपत्तिः । दक्षिणतोऽनुपनीतेन भार्यया च सह भोजनं पर्यु-षितभोजनमुच्छिष्टभोजनं पितृष्वसा(स्र)मातुलदुहितृपरिणयनमिति । तथोत्तरतः पञ्च । ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयान-मिति । इतर इतरस्मिन्कुर्वन्दुष्यतीतर इतरस्मिन्देशे प्रामाण्यादित्याचारबले-नैव प्रामाण्यमुक्तं स्यात् । एतद्यद्यनन्तरं न ब्रूयान्मिथ्यैतदिति गौतमः । उभयं त्वेतन्नाऽऽद्रियेत । शिष्टस्मृतिविरोधात् " इति ।

स्मृतिविरोधश्च दार्शितः—"ऊर्ध्वं मातृबन्धुभ्यः पञ्चमात्" इति । शिष्टविरो[5]धश्चा[6]-विगमात् । यत्पुनरुक्तं "न तत्र शिष्टा न सन्ति" इति, तदसंबद्धम् । "शिष्टः पुन-रकामात्मा " इति वसिष्ठस्मरणात् । न शिष्टाः काम[7]कारेण शास्त्रविरोधे प्रव-

---

१ ख. ग. 'नार्षीयां क' । २ ख. ग. 'लव्य' । ३ ख. ग. 'धूनां द' । ४ घ. 'यन्ति च । ये' । ५ ख. 'रोधाश्चा' । ६ क. घ. 'धश्च विज्ञानात् । य' । ७ ग. 'मचारे' ।

सीम्" इत्युक्तम् । न । एतत्तत्संततिजाया निराकरणार्थम् । इतरथाऽसमानार्षगोत्रजा[1] तत्स्त्रीसंततिजा[2] परिणेया भवेत् । एषा चासपिण्डतां[3] मातृपक्षेऽपि वेदितव्या । यथाऽऽह मनुः—

"असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" ॥

नैव सपिण्डा मातुर्या । चकारात्पितुश्च । "असगोत्रा च या" इत्येतावत्युच्यमाने यत्पितुर्ग्रहणं करोति तत्क्षेत्रिकापुत्राभिप्रायेण[4] । अन्यथा—

"यस्य ते बीजतो जातास्तस्य[5] ते नेतरस्य तु"

इति तत्सगोत्राया विवाह्यत्वं स्यात् । सा प्रशस्ता, क्व, दारकर्मणि, यद्दारैर्विना न भवति । तच्च वचनादेव मा भूदित्याह—मैथुने[6], मिथुननिर्वर्त्ये यदेकैकस्य निर्वर्त्यं न भवति पाकयज्ञादिकम् । अत एवाऽऽपस्तम्बः—"पाणिग्रहणाद्धि सहत्वं कर्मसु" इति । सहग्रहणं[7] बलीवर्दवत्समानाधिकार इति दर्शनार्थम् । ततश्च भर्त्राऽसौ[8] भर्तव्याऽहं दानादिकं निर्वर्तयामि त्वमपि संकल्पं कुर्विति, तयाऽपि तथैव कार्यमन्यथा दोष इति सहाधिकारः । अतश्चैकफलभोक्तृत्वं फलान्तरोद्भूतिबाधश्च । "असपिण्डा च या मातुः" इति मातुलादिसुतापरिणयनिषेधः । मातुः सपिण्डत्वात् ।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा,

इति मातृकुलान्मातामहप्रभृतीन्पञ्च पुरुषानतीत्योद्वाहः *कार्यः कर्तव्य इत्यर्थः । एवं[9] सप्त पितृकुलात् । अत्र 'न भार्यां विन्देत' इत्यधिकारे विष्णुः—"मातृतस्त्वा पञ्चमात्पुरुषात्पितृतश्चाऽऽ सप्तमात्" इति । ननु "असपिण्डाम्" इत्युक्तमेव किमर्थं पुनरुच्यते "सप्तमात्पितृतः" इति । सत्यम् । किंतु[10] बैजिनोऽपि सप्तमादिति नियमार्थम् । यथाऽऽह गौतमः—"ऊर्ध्वं तु सप्तमात्पितृबन्धुभ्यो[11] बैजिनश्च मातृबन्धुभ्यः पञ्चमात्" इति ।

नारदोऽपि[12]—"सप्तमात्पञ्चमादर्वाग्बन्धुभ्यः पितृमातृतः[13] ।
अविवाह्या सगोत्रा च समानप्रवरा तथा" ॥

---

* कार्य इत्यधिकम् ।

---

१ ख. ग. °त्रजां त° । २ क. घ. °तिप° । ३ क. °ता सामान्यप° । ४ क. घ. °पुत्रिकाप्रा° । ५ क. घ. जातस्त° । ६ ग. °नेऽपि मि° । ७ ग. °णं न व° । ८ ख. ग. भर्ताऽसौ । ९ क. घ. °वं मातृपि° । १० घ. °तु बीजि° । ११ क. घ. °भ्यो बीजि° । १२ग. °पि पञ्चमात्सप्तमादर्वाग्बन्धुभ्यो मातृपितृतः । १३ घ. °तृजः । अ° ।

" यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया " ॥

इत्यनेन गुप्ताऽपि पुत्रिका भवति । न केवलं[1] या परिभाष्य दीयते—
" अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति "

इति रतिपुत्रफला भार्या यदि पुत्रोऽन्यस्य भवति तदैकाङ्गवैकल्यम् । पुत्रिकां वक्ष्यति। असमानार्षगोत्रजामित्य[समानार्षजाम(?)]समानगोत्रजामिति [च(?)]वेदितव्यम् । ततश्च सगोत्रायाः सगोत्रत्वेनैव निषेधो न समा-[2]नार्षापेक्षया । एवं समानार्षाऽपि स(न) गोत्रमपेक्षते । अत एव गौतमः—" असमानप्रवरैर्विवाहः[3] " इति[4] । समानता च नामतः संख्यातश्च समुच्चयेन भवति न तद्वैषम्ये[5] । यत्रापि संख्यासाम्य[6] एकस्य द्वयोर्वाऽन्यत्वं तत्राप्यसमानतैव । यत्र पुनराङ्गिरसाम्बरीषयौवनाश्वेति[7] मान्धाताम्बरीषयौव-नाश्वेति[8] विकल्पेन ऋषयो भवन्ति तत्रापि वर्ज्या[9] । समत्वस्य पाक्षिकत्वात् । न[10] चासमानार्षग्रहणं गोत्रविशेषणम् । " असमानप्रवरैर्विवाहः " इति भेदस्म-रणात् ।

" परिणीय सगोत्रां तु समानप्रवरां तथा ।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् "

इति पृथक्प्रायश्चित्ताच्च । त्यागश्चोपभोगस्य न तु तस्याः । यथाऽऽह सुमन्तुः– " मातुलसुतां पैतृष्वसेयीं समानार्षगोत्रां च परिणीय चान्द्रायणं चरेत् । परि-त्यज्यैनां बिभृयात् " इति, एतच्चामतिपूर्व(र्वे) वेदितव्यम् ।

" सगोत्रां चेदमत्योपयच्छेद्[11] मातृवदेनां बिभृयात्प्रजाता चेत्कृच्छ्राब्दपादं[12] चरेत् " इति बौधायनः । मतिपूर्वे गुरुतरम् । यथाऽऽह गौतमः—" मातृपितृयोनिसंबन्धा-[13]गस्तेननास्तिकनिन्दितकर्माभ्यासि[14]पतितात्यागयपतितत्यागिनः पतिताः " इति ।

मनुरपि—" ज्ञातित्वेनानुपेयास्ताः[15] पतति ह्युपयन्नधः " इति ।

ततश्च पतितोत्पन्नः पतितो भवतीति लभ्यत एव । ननु सगोत्रनिराकर-णेनैव सपिण्डनिषेधे प्राप्ते किमिति भेदेनाधस्तने श्लोके " असपिण्डां यवीय-

---

१ क. घ. °वले या । २ ग. °मानगोत्रापेक्षा । ए° । ३ क. घ. °र्विवरैर्विवा° । ४ ग. °ति । सगोत्रतश्च । ५ क. ग. °षम्यं य° । ६ ग. साम्ये समानता नामतः संख्यैक° । ७ क. घ. °नराङ्गि° । ८ ग. °ति ऋ° । ९ क. घ. वर्ज्यं स° । १० क. घ. न च स° । ११ क. घ. मन्येत प्रय° । १२ क. घ. °कृच्छ्पा° । १३ क. घ. °बन्धाग° । १४ क. ग. घ. °भ्यासप° । १५ ग. °नाभ्युपे° । घ. °नान्वयेया° ।

( विवाहप्रकरणम् २)

न च तत्र दानं निवृत्तमित्याशङ्कनीयम् ।

अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ वरो यदि ॥
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ”

इति वसिष्ठस्मरणात् । एवं बलादपहृतायामपि वेदितव्यं,

“ बलादपहृता कन्या मन्त्रैरपि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ”

इति तेनैवोक्तत्वात् । एतच्च प्रायश्चित्तोत्तरकालं वेदितव्यम् । कान्तां स्नातकस्य कमनीयत्वान्मनोनयनानन्ददायिनीम् । एतच्च मङ्गलादिनिराकरणेन विधीयते । “ यत्र मनःसक्तिस्तामुद्वहेत् ” इति विधानात् । असपिण्डानां सापिण्ड्यं वक्ष्यति । यवीयसीं जन्मतः प्रमाणतोऽपीत्येके ।

वसिष्ठः—“ गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षे[1]यीमस्पृष्टमैथुनामवरवयसं सदृशीं भार्यां विन्देत ” ॥

गृहस्थ इति भाविनि भूतवदुपचारस्तद्धर्म[2]प्राप्त्यर्थः । तेनाकृतदारोऽपि गार्हस्थ्यसंकल्पवानाश्रमान्तरान्निवृत्तो गृहस्थधर्मेष्वधिक्रियते । न च—

“ ब्रह्मचारी भूत्वा गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत् ”

इति नियम्यते[3] । अनियमेनाऽऽश्रमान्तरस्वीकारदर्शनात् । तथा च नृसिंहपुराणम्—

“ गुरवे दक्षिणां दत्त्वा सा(स) यमिच्छेत्तमावसेत् ।
विरक्तः प्रव्रजेद्विद्वान् ” इति ॥

विष्णुपुराणं च—“ गृहीतविद्यो गुरवे दत्त्वाऽथ गुरुदक्षिणाम् ।
गार्हस्थ्यमिच्छन्भूपाल कुर्याद्दारपरिग्रहम् ॥
ब्रह्मचर्येण वा कालं कुर्यात्संकल्पपूर्वकम् ।
गुरोः शुश्रूषणं कुर्यात्तत्पुत्रादेरथापि वा ॥
वैखानसो वाऽपि भवेत्परिव्राडथ वेच्छया ” इति ॥५२॥

विशेषान्तराण्याह—

**अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥**
**पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥**

अरोगिणीमदीर्घरोगोपसृष्टाम् । भ्रातृमतीं पुत्रिकात्वभयात् । यथाऽऽह मनुः—

---

१ ख. ग. °नार्षीयी° । २ क. घ. °स्तदर्थप्रा° । ३ क. घ. °म्य नि° ।

प्रसाद्भक्षीदित्यत्राविप्लुतब्रह्मचर्य[१] इति पदं पूर्वत्र[२] स्नानकर्तुर्विशेषणीयम् । लक्षणैर्युक्ताम् । लक्षणानि बाह्याभ्यन्तराणि । बाह्यानि कायस्वरादिगतानि । यथाऽऽह मनुः—" अव्यङ्गाङ्गीं सौम्यनाम्नीं[३] हंसवारणगामिनीम् ।
तनुलोमकेशदशां[४] मृद्वङ्गीं चारुभाषिणीम् " इति ॥

दशां दशनामित्यर्थ इति । लक्षण्यामित्येतस्मादेव विपरीता तु त्याज्या, यथा—

" नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोम्नीं न वाचाटां न पिङ्गलाम् " इति ॥

तथा नामतोऽपि वर्ज्या[५], यथा वा—

" देवनाम्नीं नदीनाम्नीं शैलगन्धर्वनामिकाम् ।
ऋक्षवृक्षनदीनाम्नीं दारार्थे परिवर्जयेत् " इति ॥

यथा—" नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिपुष्यनाम्नीं न विभीषणनामिकाम् " ॥

यदा पुनरभ्यन्तराणि सूक्ष्माणि भवन्ति तदाऽऽश्वलायनोक्ता परीक्षा कार्या, तत्र "बुद्धिरूपलक्षणसंयुक्ताम्[६]" इत्युक्त्वा स्वयमेव चोद्यं कृतं " लक्षणानि दुर्ज्ञानानि " इति, तस्योत्तरम्—

" अष्टौ पिण्डान्कृत्वा, ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितम् । यदि च कुमार्यभिजाता तदियमिह प्रतिपद्यतां[७] यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । क्षेत्राच्चेदु[८]भयतः सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात् । गोष्ठात्पशुमती । वेदिपुरीषाद्ब्रह्मवर्चस्विनी । अविनाशिनो ह्रदात्सर्वसंपन्ना । देवनात्कितवी । चतुष्पथाद्द्विप्रव्राजिनी । इरिणादधन्या । श्मशानात्पतिघ्नी " इति ।

अनन्यपूर्विकां नैवान्यस्मै या पूर्वं दत्ता । एतच्च वाग्दत्ताविषयं वेदितव्यं न संस्कृताविषयम् । तस्याः पुनर्भूत्वात्[९] । यथाऽऽह मनुः—

" यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो[१०] विन्देत देवरः ॥

१ क. घ. °चर्या इ° । २ क. घ. पूर्वं स्ना° । ३ ग. °ङ्गीं नाधिकाङ्गीं न रोगिणीम् । त° । ४ क. घ. °दशनां मृ° । ५ क. ग. घ. °ता वर्ज्या । य° । ६ क. घ. °संपन्नामुपयच्छेतेत्युक्त्वा । ७ क. घ. °पद्यतां । ८ क. ख. °त्राश्चेदु° । ९ क. घ. °भूतत्वा° । १० ग. °न द्विजो ।

तं स्नातकं दारसंग्रहाभिमुखतया प्रतीतं पितुर्ब्रह्मदायहरं, ब्रह्म वेदः । अनेन तस्याध्ययनयोगः ख्याप्यते । दायो रिक्थम् । अनेन तस्य योग्यत्वमुच्यते । अन्यथा सवर्णापुत्रो[१]ऽप्यन्यायवृत्तो न लभते[२] केषामिति तदभावः । पितुर्द्रव्याभावे प्रतिग्रहादिना[३]ऽप्यन्नाप्य पाणिग्रहणं कर्तव्यं पाणिग्रहणादि गृह्यं परिचरेत् ।अन्यथा पाकयज्ञादेरसिद्धिः । तस्य द्रव्यमूलत्वात् । अत एव गौतमः— " द्रव्यादानं विवाहसिद्ध्यर्थम् " इति । स्रग्विग्रहणं विभूषणप्राप्त्यर्थम् । तल्पं शयनम् । तत्रस्थमर्हयेत्पूजयेत्प्रथमं गवा । गोशब्देन मधुपर्कं लक्षयति । " ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे च " इति स्मरणात् ।

स च गां वेदयते कुरुतेति कारयिष्यन्नुत्सृजतेत्युत्प्रे[४]क्षन्निति द्विधा भवति ।

स्नातकश्च नवधा भिद्यते । संकल्पभेदात् । यथाऽऽह मनुः—

" सांतानिकं यक्ष्यमाणमध्वगं सर्ववेदसम् ।
गुर्वर्थपितृमात्रर्थस्वाध्यायार्थ्युपतापिनः ॥
नवैतान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभै[५]क्षुकान् " ॥ ५१ ॥

ततः किमित्याह—

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥५२॥**

नैव विप्लुतं ब्रह्मचर्यं यस्य । विप्लुतिः स्खलनम् । तत्संभवे तु प्रायश्चित्ती न[६] त्वविवाह्यः किं त्वयं विशेषः । यदि स्नानादधो विप्लुतस्तदाऽवकीर्णिप्रायश्चित्तम् ।

" अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् " ।

इति स्मरणात् । स्नानादूर्ध्वं यदि पुनस्तदा सामान्यम् ।

" मद्यपाऽसत्यवृत्ता च प्रतिकूला[७] च या भवेत् ।
व्याधिता चाधिवेत्तव्या " ॥

तथा—" भार्यायै पूर्वमारि[८]ण्यै दत्त्वाऽग्नीनन्त्यकर्माणि ।
पुनर्दारक्रियां कुर्यात् " ॥

इत्यादिस्मरणदर्शनात्[९]प्राप्तस्य पुनर्विवाहस्य विप्लुतब्रह्मचर्य[१०]त्वापत्तेरप्राप्तिर्मा[११]

---

१ क. ग. °वर्णपु° । २ ख. लभेत कैषा° । ३ क. °नाऽपि वाऽस्य पाणिग्रहणं । ४ क. ख. घ. °त्प्रेक्ष्यन्नि° । ५ क. ग. °भैक्षका° । ६ क. घ. न तु वि° । ७ क. घ. °लाशया । ८ क. °मारण्यै । ९ ग. °नात् । अप्राप्त° । १० ग. °चर्याप° । ११ गं. °र्मा काङ्क्षी° ।

वणाद्विना[1] न भवति । तस्य कर्मक्रमाद्यवबोधमात्रापेक्षित्वात्[2] । यदि शास्त्रान्तरश्रवणाद्विना सर्वत्र नाधिक्रियते, तदाऽग्निकार्यादावप्यनधिकारो ब्रह्मचारिणः स्यात् । तेन यद्यत्करोति तत्तज्ज्ञात्वा न युगपज्ज्ञात्वेति । तस्माज्ज्ञात्वा चानुष्ठानमित्ययमपि विधिः परिगृहीतो भवति । कथं स्नायादित्याह— गुरवे पूर्वोक्ताय वरमभिलषितं कात्यायनाद्युक्तं—

" गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्य "

इत्यादि गुर्वर्थाहरणशक्तादिविषयं[3], तदन्यादिविषयं[4]—

" धान्यं वासांसि शाकं च गुरवे प्रीतिमाहरेत् "

इत्यादि मन्वादिलक्षितं वा दत्त्वा, तदनुज्ञया वाऽदत्तवरोऽपि । अत एव गौतमः—"विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृतानुज्ञात[5](न)स्य वा स्नानम्" इति । वेदपारनयनं समुच्चय एव वेदाध्ययनस्य तदर्थज्ञानेन सह । अत एव " वेदमधीत्य च्छन्दोविषयानर्थान्बुद्ध्वा स्नायात् " इति स्मर्यते ।

मनुरपि—" तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना " इति ॥

अधिगन्तव्यो ग्रन्थतोऽर्थतश्चेति दर्शयति । व्रतैश्च पूर्वोक्तै[6]र्वर्जयेन्मधुमांसगन्धमाल्यानी(सानी)त्यादिप्रतिपादितैः । ततश्च[7] यदुक्तं भट्टेन—

" तस्माद्गुरुकुले तिष्ठन्मधुमांसादि वर्जयन्[8] ।
जिज्ञासिताविरुद्धत्वाद्धर्ममित्यवगम्यते "

इति, तदनेन विरुध्यते । तेषां समावर्तनाधिकत्वात् । अत एव—

" अग्नीन्धनं भैक्षचर्य[9]मधःशय्यां गुरोर्हितम् ।
आ समावर्तनात्कुर्यात्कृतोपनयनो द्विजः " इति नियम्यते ।

नच—" गुरुगेहादनावृत्तः स्नातको हि न कथ्यते "

इति स्नाने समावर्तनभ्रान्तिः कार्या ।

" गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् "

इति भेदस्मरणात् । स्नातकश्च मन्वादिभिः प्रदर्शितः—

" तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं गवा " इति ॥

---

१ क. घ. °ना स° । ग. °ना भ° । २ ग. °क्षितत्वा° । ३ क. घ. °यं धा° । ४ ख. °दन्यादि° । ५ ख. कृत्वानु° । ६ ग. °क्तैस्त्यजेन्म° । ख. °क्तैर्जयेन्म° । ७ क. °ख. साधव° । ८ ग. °र्जयेत् । जि° । ९ ग. ग. °चर्याम° ।

अधीतश्रुतसंयुक्तं तथा श्रेष्ठं न केवलम्।
पाठमात्रा[1]र्दितान्नित्यं द्विजातींश्चार्थवर्जितान्॥
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्च[2]येत्।
ऋक्पादमप्यधीत्याऽऽदौ न्यायतस्तु तदर्थवित्॥
विशिष्यते श्रुतं यस्माद्गरीयो धर्मसाधनम्"।

श्रुतिश्च—"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा"॥

शुष्कवृक्षं स्थाणुमाहुः। स यथाऽऽरोपिततृणादिभाराक्रान्तो भवति, न च[3] भरभृतिं भारभोगं वा चेतयमानो लभते, केवलं भाराधारभावाज्जन्तुरेव भारभाग्भवति, तथाऽयं भवति—यो वेदाध्ययनेन धारणावसानेन कदर्थितात्माऽपि तदभिधेयं कर्मावबोधादि प्रधान[4]प्रयोजनानुर[5]ञ्जितविध्यर्थवादमन्त्रनामधेयादिविभागेन न जानाति तज्ज्ञानेऽप्य[6]ध्याप्ययतमानः। य इदानीं निष्पन्नार्थावबोधः सोऽधिकृतत्वात्कर्मपारिपूर्ण्यात्प्रमादेषु प्रायश्चि[7]त्तजागरणाच्च स्व[8]कर्मनैपुण्या[9]च्च साकल्येन पुण्यफलं कुशलं दृष्टमश्नुते। नाकं च सत्यलोकान्तमदृष्टपुष्ट्या प्राप्नोत्यर्थज्ञानजनितानुषङ्गिकधर्मांशेन क्षपितदृष्टादृष्टगतपरिप[10]न्थिना[11]शनादिदोषदूषकोपात्तदुरित इति।

तथा[12]—

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः"॥

अस्यार्थः-अपि खल्वेकः पश्यन्नपि न पश्यति, अपि खल्वेकः शृण्वन्नपि न शृणोति, एनामविद्वान्वाचं महार्थाम्। उतो त्वस्मै तन्वं विसस्रे तनुं विवृणुते जायेव पत्य उशती सुवासाः। तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग्वाग्विदे स्वमात्मानं विवृणुते।

मनुश्च—"यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" इत्यादि॥

अपि च स्मार्तस्य गृह्यादिपरिज्ञानमात्रापेक्षि[13]त्वान्नच तत्परिज्ञानमन्यशास्त्रश्र-

---

१ क. °त्रार्पिता°। २ ग. नार्थये°। ३ ग. च भारभृ°। ४ क. घ. °नप्रायो°। ५ ग. °रञ्जनवि°। ६ क. °प्यध्याप्य°। ७ क. घ. °श्चित्तिजा°। ८ ग. स्वधर्म°। ९ क. घ. °ण्यात्तद्वैगुण्यानृण्याच्च। १० ख. °पन्थनना°। घ. °पन्थना°। ११ ग. °दिदू°। १२ ग. श्रुतिरन्या च "उ°। १३ ग. घ. °क्षितत्वा°।

इत्यादिदर्शनाज्ञार्यया विना न भवन्ति । सा च स्नानोत्तरकालभाविनीत्याह—

गुरवे तु वरं दत्त्वा स्नायाद्वा तदनुज्ञया ॥
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥५१॥

पूर्वोक्तेन न्यायेन वेदं व्रतान्युभयं वा पारं नीत्वा समाप्य स्नायात् । एतेषां[1] च पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था । यदि भिक्षाटनाद्यशक्तो व्याधिततया राजदै[2]विकाद्यभिभवासमर्थः, तदा वेदं केवलं व्रतान्येव वा केवलानि समाप्य स्नायात् । अत एव विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति त्रैविध्यं स्मर्यते । अतस्तस्य स्नानपरिणयनोत्तरकालमध्ययनसमापनं तदर्थज्ञानं वा । अत एव वक्ष्यति—

" कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही " ।

इति प्रक्रम्य—

" वेदार्थानधिगच्छेत्तु शास्त्राणि विविधानि च " इति ।

वेदार्थज्ञानं चावश्यं कार्यम् ।

तथा च व्यासः—" न वेदपाठमात्रेण संतोषं कारयेद्विजः ।
पाठमात्रावसानो हि पङ्के गौरिव सीदति ॥
यथा पशुर्भारवाही न तस्य[3] लभते फलम् ।
द्विजस्तथाऽर्थानभिज्ञो न वेदफलमश्नुते ।
वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ॥
अजानतोऽर्थं तत्सर्वं तुषाणां ख(क)ण्डनं यथा ।
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ॥
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ।
अधीत्य यत्किंचिदपि वेदार्थाधिगमे रतः ॥
स्वर्गलोकमवाप्नोति धर्मानुष्ठानविद्धि सः ।
श्रुतहीनमधीते[4] यन्नेह नामुत्र तद्भवेत् ॥
श्रुतं तु केवलमपि समुद्धाराय कल्पते ।
समुचितं[5] स्तोकमपि श्रुताधीतं विशिष्यते ॥
त्रयाणामपि वर्णानां केवलाध्ययनाद्विजात् ।
ज्ञानं[6] कर्म च संयुक्तं मुक्त्यर्थं कथितं यथा ॥

१ ख. च कालानां श° । २ क. घ. °जदेवि° । ३ क. घ. °स्य भजते । ४ ग. °धीतं य° । ५ ग. °तं केवलम° । ६ क. घ. ज्ञानकर्मशंसं यु° ।

न च विवाहादिकारिणामनाश्रमिणामेव जपतपःपरायणानामप्यवस्थानमुचितमित्याह दक्षः—

" अनाश्रमी नैव तिष्ठेदब्दमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन्प्रायश्चितीयते हि सः ॥
जपे होमे तथा दाने स्वाध्याये च रतः सदा ।
नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः " ॥

आश्रमादाश्रमान्तरगमनेनोत्तरं परिगृह्य पूर्वं[2] न परिगृह्णीयादिति स एवाऽऽह—

" त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तमः " इति ॥ ५० ॥

इति श्रीविद्याधरवंशप्रभवश्रीशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतश्रीमदपरादित्यदेवविरचिते याज्ञवल्कीयधर्मशास्त्रनिबन्धे[3] ब्रह्मचारिकाण्डं ( प्रकरणं ) समाप्तम्* ॥ १ ॥

---

अथ सटीकयाज्ञवल्क्यस्मृतौ

---

# विवाहप्रकरणम् । ( २ )

सर्वसाधारणत्वेन ब्रह्मचारिप्रकरणमुक्तम् । अधुनाऽवसरप्राप्ता गृहस्थधर्मा उच्यन्ते[4] । ते च—

" अपत्नीको नरो भूप कर्मयोग्यो न जायते ।
ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽपि वा नृप ॥
पत्नी धर्मार्थकामानां कारणं प्रवरं नृणाम् "

---

* एतदग्रे ख. पुस्तके —
" आदौ कर्मकथाङ्कितं प्रकरणं यद्ब्रह्मचारिव्रत-
प्रोद्यद्रम्यमहर्षिवाक्यमहितं ग्रन्थेऽपरार्काभिधे ।
तद्धर्माधिगमार्थमद्य लिखितं श्रीशंकरेण स्वयं
दृष्ट्वैतत्सदसत्प्रमाफलावोधिं प्रज्ञाविवेकोदयात् " ॥
इत्यधिको ग्रन्थः ।

---

१ क. ग. घ. °श्रमे नै° । २ क. ग. घ. °र्वे प° । ३ ख. °बन्धने ब्र° । ४ ख. ग. °न्ते । तथा । अ° ।

निष्ठावेत् । विविधचरुई(ह)विर्दानविशेषैराग्नेयैरग्निमहरहरिन्धेताऽऽमन्त्र्य गच्छेदाहृत्य[1] निवेदयेत्तन्मनाः[2] शरीरोपरमान्ते ब्रह्मणः सायुज्यं गच्छति "।

वसिष्ठः—

" ब्रह्मचार्याश्रमं[3] परिचरेदा शरीरविमोक्षणात् । आचार्ये च प्रेतेऽग्निं परिचरेत्संयतवाक्चतुर्थषष्ठाष्टमकालभोजी भैक्षे गुर्वधीनो जटिलः शिखाजटो वा तथा त्रिरह्नोऽभ्युपेयादपः "।

देवलः—

" सकृद्भोजनं सकृदप्स्ववगाहनमुभयकालमग्निहोत्रं संध्योपासनमलुप्तचर्मकेशनखत्वग्गन्धमाल्यस्नेहाभ्यञ्जनाञ्जनवेषालंकारच्छत्रोपानद्वाहनलङ्घनप्लवनधावनचिकित्साज्योतिर्लक्षणवास्तुविद्यामङ्गलपौष्टिकशान्तिकर्मगान्धर्वसङ्गसमयबन्धनशिल्पलेख्यलेखनकारुकर्मवेश्मक्षेत्रद्रव्यधनधान्यपरिच्छदशस्त्रद्यूतव्यवहाराङ्गभावलीलापरिहासप्रणयकुहकविस्मापनविडम्बनविवादोत्सेकपरिवेदनरोदनवस्तिनस्यपादोद्वर्तनवर्जम् । गुरोः पूर्वोत्थानं जघन्यसंवेशनं प्रणामसंदिष्टकरणमिष्टशुश्रूषा नित्योपासनमपचितिस्तदभावे तत्पुत्रे दारेषु वा तद्वृत्तिरा मरणात् "।

[4][5][6][7][8][9][10]

यद्यापदि क्षत्रियादिर्गुरुर्भवति तदा तत्र नाऽऽत्यन्तिकवासः । तथा[11] ब्राह्मणेऽप्यध्यापनमकुर्वाणे । यदाह मनुः —

" नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननूचाने[12] काङ्क्षन्गतिमनुत्तमाम् " ॥

न ब्रह्मचर्यस्मृतेरग्निहोत्रादिगृहस्थधर्मविधायकश्रुतिविरोधो वाच्यः । भिन्नविषयत्वात् । यो हि स्त्रीरागवशात्कृतविवाहस्तद्विषयाऽग्निहोत्रादिश्रुतिः । ब्रह्मचर्यस्मृतिस्तु वैराग्यादन्धत्वादिदोषाद्वा[13] विवाहानधिकृतपुरुषविषया । अत एव पाक्षिकत्वेन नैष्ठिकत्वमाह मनुः—

" यदि त्वात्यन्तिकं वासो रोचयेत गुरोः कुले ।
युक्तः परिचरेदेनमा शरीरविमोक्षणात् " इति ॥

तथा च विष्णुः—" कुब्जवामनजात्यन्धक्लीबपङ्ग्वार्तरोगिणाम्[14] ।
व्रतचर्या भवेत्तेषां यावज्जीवमनंशतः " इति ॥

---

१ क. घ. °दावृत्य । २ ग. घ. °न्मनः श° । ३ क. ग. घ. °ह्मचर्या° । ४ क. घ. °ध्योपस्थान° । ५ क. घ. °स्रके° । ६ क. °नहोद्वर्तनल° । ७ ग. °नाविचि° । ८ ग. °पविद्याल° । ९ क. घ. °त्रव° । १० क. घ. °ज्ञाताव° । ११ ग. °था ब्रह्मपुराणेऽपि । अध्यापनमकुर्वाणो य° । १२ क. घ. °नधीयाने । १३ क. °दनुबन्ध° । १४ ख. °ङ्ग्वान्तरो° ।

( ब्रह्मचारिप्रकरणम् १)

नैष्ठिको ब्रह्मचारी च वसेदाचार्यसंनिधौ ॥
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ ४९ ॥

उपकुर्वाणकब्रह्म[1]चार्याश्रमं यमिच्छेत्तमावसेत् । तत्र यदि ब्रह्मचर्याश्रममिच्छेत्तदा नैष्ठिकब्रह्मचारी भवेत् । निष्ठा शरीरपातः, तदवधिके ब्रह्मचर्ये संकल्पः कृतो येन स नैष्ठिकब्रह्मचारी । स पुनराचार्यस्य संनिधौ वसेन्न समावर्तेत । आचार्याभावे तत्पुत्रस्य तदभाव आचार्यपत्न्यास्तदभावेऽग्नेः ॥४९॥

तत्र वसतो यत्फलं तदाह—

अनेन विधिना देहं साध[2]यन्विजितेन्द्रियः ॥
ब्रह्मलोकमवाप्नोति न चेहा[3]ऽऽजायते पुनः ॥ ५० ॥

इति ब्रह्मचारिप्रकरणम् ।

अनेन पूर्वोक्तेन ब्रह्मचर्यचरणेन देहं देहवन्तमात्मानं साधयन्ब्रह्म[4]प्राप्तियोग्यं कुर्वन्विजितेन्द्रियो वशी चतुर्मुखलोकमवाप्नोति नेह संसारे पुनराजायते[5] । अपुनरावृत्तिलक्षणं फलं ब्रह्मोपासकस्य सतो भवति न केवलकर्म[6]णः । तदुक्तमाश्रमान्प्रकृ[7]त्य च्छान्दोग्ये—

" सर्वं एते पुण्यलो[8]का भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति " इति ।

अस्यार्थः—सर्वे एते[9] ब्रह्मस्कं[10]न्धाश्चत्वारोऽप्याश्रमिणः पुण्यलोका भवन्ति । एषां मध्ये यो ब्रह्मसंस्थो ब्रह्मनिष्ठः सोऽमृतत्वमपुनरावृत्तिलक्षणमेतीति ।

हारीतः—

" द्विविधो ब्रह्मचारी, उपकुर्वाणो नैष्ठिकश्च । तयोरुपकुर्वाणको व्याख्यातः । निष्ठां चेद्गच्छेदा शरीरनिपाताद्गुरावासीत तदभावे गुरुपत्न्यां तदभावे गुरुपुत्रं(त्रे) गुरुपुत्राभावेऽग्निमेवोपचरेत् । यज्ञियाः समिध आहृत्य संमार्जनोपलेपनोद्बोधनसमूहनसमिन्धनपर्यग्निकरणपरिक्रमोपस्थानहो[11]मस्तोत्रनमस्कारादिभिराग्निं परिचरेन्नाग्निमधितिष्ठेन्न पद्भ्यां कर्षेन्न मुखेनोपधमेन्नापश्चाग्निं च युगपद्धारयेन्नाजीर्णभुक्त उच्छिष्टो वाऽ*भ्यादध्यां[12]न्नो(न्ना)भ्यादधेद्वाऽतिक्रामेन्न

* अभ्यादध्यात्स्वी कुर्यात् । अभ्यादधेत्परितोऽभ्याधानं कुर्यात् । अभ्याधानं स्रुक्स्रुवयोः संस्कारविशेषः । अतिक्रामेत्, उल्लङ्घयेत् । निष्ठीवेत्, मुखत उच्छिष्टकफादि निःसारयेत् । अग्निमिति सर्वत्र संबध्यते ।

१ क. °ह्मचर्या° । २ ग. °धयित्वा जि° । ३ क. ग. घ. चेह जा° । ४ ग. °ह्मलोकप्रा° । ५ क. घ. °ते । न पु° । ६ क. घ. °कर्मिणः । ७ क. ख. ग. °कृत्या छान्दो° । ८ क. ख. ग. °ल्लोके भ° । ९ क. घ. °ते धर्मस्कन्दाश्च° । १० ग. °स्कन्दाश्च° । ११ ख. ग. °होमास्तत्र । १२ क. घ. °ध्यान्नेधानोभ्यादध्द्वा° ।

[1]वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ॥
इतिहासांस्तथा [2]विद्यां योऽधीते शक्तितोऽन्वहम् ॥ ४५ ॥
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ॥
करोति तृप्तिं च तथा पितॄणां मधुसर्पिषा ॥ ४६ ॥

[3]वाकोवाक्यं प्रश्नप्रतिप्रश्नरूपो वेदभागः । पुराणं प्रसिद्धम् । नाराशंस्य ऋ[4]ग्वेदखिलग्रन्थाधी[5]ताः " इदं जना [6]उपश्रुत " इत्याद्यास्तिस्र ऋचः । गाथिका इन्द्रगाथाद्याः । इतिहासा भारताद्याः । विद्या मधुविद्याद्याः । एतद्यः प्रत्यहं यथाशक्त्यधीते स मांसक्षीरौदनमधुभिर्देवतर्पणं मधुसर्पिषा च पितृतृप्तिं करोति ॥ ४५ ॥ ४६ ॥

ते तृप्तास्तर्पयन्त्येनं सर्वैः कामफलैः शुभैः ॥

ते देवाद्या उक्तेन प्रकारेण तृप्तास्तर्पयितारं सर्वैः काम्यमानैः फलैस्तर्पयन्ति ॥

यं यं क्रतुमधीयीत तस्य तस्याऽऽप्नुयात्फलम् ॥ ४७ ॥

क्रतुप्रतिपादको वेदभागः क्रतुस्तं योऽधीते स तस्य क्रतोः फलं प्राप्नोति ॥ ४७ ॥

त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ॥
तपसश्च परस्येह नित्यं स्वाध्यायवान्द्विजः ॥ ४८ ॥

धनपूर्णस्य सकलभूमिदानस्य [8]त्रिरभ्यस्तस्य परस्य तपसः फलं तदनवरत-स्वाध्यायवान्द्विजो लभते । मधुना पयसेत्यादीनां प्रत्यक्षैव श्रुतिर्मूलम् । सा च ब्रह्मयज्ञाध्ययनविध्यर्थवादभूतेति ब्रह्मयज्ञविधिरत्र कल्प्यः । तेन विनाऽर्थवा-दानर्थक्यात् । स च ब्रह्मचारिणोऽपीति तत्प्रकरणे वाक्यारम्भः ।

" अपां समीपे नियतो नैत्यकं विधि[9]माश्रितः ।
सावित्रीमप्यधीयीत गत्वाऽर[10]ण्ये समाहितः " ॥

इति । ततश्चासम[11]र्थः सावित्र्या ब्रह्मयज्ञं कुर्यात् । समर्थ ऋगादिभिः ॥ ४८ ॥

द्विविधः खलु ब्रह्मचारी उपकुर्वाणो नैष्ठिकश्च । तत्रोपकुर्वाणस्य धर्मा उक्ताः । नैष्ठिकस्येदानीमाह—

---

१ क. ग. घ. वाक्योवा° । २ ङ. विद्याः शक्त्याऽधीते तु योऽन्व° । ३ क. ग. घ. वाक्योवा° । ४ क. ग. घ. °ग्वेदाखि° । ५ ख. °धीतैः । इ° । ६ ख. °नातप° । ७ क. घ. उपाश्रु° । ८ क. त्रिभ्यस्तप° । घ. त्रिभ्यस्तस्य त° । ९ क. ग. घ. °मास्थितः । १० ग. °रण्यं स° । ११ क. °मर्थमृगा° । ग. °मस्त ऋ° । घ. °मर्थाङ्गादि° ।

वेदस्य नि[१]र्धारणमनुपपन्नमिति वेदशब्देन वेदाध्ययनं लक्ष्यते । तस्य च युक्तं यज्ञादीनां मध्ये परत्वं निःश्रेयसकरत्वान्निःश्रेयसकरबोधकत्वाच्च ।

तथा च मनुः—

" आ ह वै स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् " ॥

आ नखाग्रेभ्यः परमं तपस्तप्य[२]ते हेत्यन्वयः ।

तथा—" वेदमेव जपेन्नित्यं यथाकालमतन्द्रि[३]तः ।
तं ह्यस्याऽऽहुः परं धर्ममुपधर्मोऽन्य उच्यते " ॥ ४० ॥

अ[४]त्र हेतुमा[५]ह—

**मधुना पयसा चैव सदेवांस्तर्पयेद्द्विजः ॥**
**पितॄन्मधुघृताभ्यां च ऋचोऽधीते हि योऽन्वहम् ॥ ४१ ॥**

यो द्विजः प्रत्यहमृचोऽधीते स मधुपयोभ्यां देवान्मधुघृताभ्यां च पितॄं[६]स्तर्पयति ॥ ४१ ॥

**यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः ॥**
**प्रीणाति देवानाज्येन[७] पितॄंश्च मधुना द्विजः ॥ ४२ ॥**

यो यजूंषि यथाशक्त्यधीते स घृतामृतैर्देवानाज्यमधुभ्यां च पितॄन्प्रीणाति ॥ ४२ ॥

**स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् ॥**
**सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ४३ ॥**

योऽन्वहं सामानि पठेत्स सोमघृतैर्देवान्मधुसर्पिभ्यां च पितॄंस्तर्पयेत् ॥ ४३ ॥

**मेदसा तर्पयेद्देवा[८]न्पितॄंश्च मधुसर्पिषा ॥**
**संतर्पयेद्यथाशक्ति योऽथर्वाङ्गिरसीः पठेत् ॥ ४४ ॥**

यो यथाशक्त्यथर्वाङ्गिरसीः पठेत्स मेदसा पश्वादिशरीरधातुविशेषेण देवान्मधुसर्पिर्भ्यां च पितॄंस्तर्पयति ॥ ४४ ॥

---

१ क निरावर । घ. निवार° । २ क. ग. घ. °प्यत इत्य । ३ क. घ. °तः । ते ह्य° । ४ ग. तत्र । ५ ख. °माहुः । म° । ६ क. ग. °र्पयेदिति । य° । ७ ङ. °न मधुना च पितॄंस्तथा । यो । ८ ङ. °वानथर्वाङ्गिरसः पठन् । पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः । यो° ।

" औपनायनिकः कालः परः षोडशवार्षिकः ।
द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः ॥
ब्राह्मणक्षत्रियविशां कालश्चेदत्यगादयम् ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः " ॥ ३७ ॥

अतिक्रान्तोपनयनकालानां यद्भवति तदाह—

**अत ऊर्ध्वं[1] त्रयोऽप्येते यथाकालमसंस्कृताः ॥**
**सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥ ३८ ॥**

द्विजातयोऽनुपनीता यथासंख्यं षोडशद्वाविंशतिचतुर्विंशतिवर्षेभ्य ऊर्ध्वं व्रात्यस्तोमाख्यं क्रतुं[2] विहाय सर्वधर्मानधिकारिणो भवन्ति । सावित्रीपतिता व्रात्या इति तेषां संज्ञा । व्रात्यस्तोमो नाम व्रात्यानां प्रायश्चित्तक्रतुः । तेन चोद्दालकव्रतादिना[3] कृतप्रायश्चित्ता उपनीता धर्माधिकारिणो भवन्ति, संव्यवहार्याश्चान्येषाम् । यदाह मनुः—

" नैतरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान्यौनांश्च संबन्धानाचरेद्ब्राह्मणः सह " ॥

अपूतैरिति वचनात्कृतप्रायश्चित्तैः सह संव्यवहारो न दोषायेति गम्यते । अत्र " सर्वधर्मबहिष्कृताः " इति तु पाठे धर्मशब्दो द्विजातिधर्माभिप्रायः, न वर्णधर्मविषयः । व्रात्यानां वर्णत्वानपायात् ॥ ३८ ॥

अत्र द्विजातिधर्मबहिष्कृतत्वे हेतुमाह—

**मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ॥**
**ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥ ३९ ॥**

मातृतो ब्राह्मणादयः प्रथमं जायन्ते । द्वितीयं मौञ्जिबन्धनात्[4] । तस्माद्विजा एते मन्वादिभिः स्मृताः । अत्र द्वितीयमिति क्रियाविशेषणम् । अतोऽनुपनीतत्वाद्व्रात्या न द्विजाः । तस्माद्विजातिधर्मा[5]नधिकारस्तेषामुक्तः ॥ ३९ ॥

**यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ॥**
**वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ ४० ॥**

यज्ञानां पञ्चयज्ञा[6]दीनां तपसां कृच्छ्रचान्द्रायणादीनामन्येषामपि शुभफलानां कर्मणां मध्ये वेद एव पर उत्कृष्टो निःश्रेयसकरः । यज्ञादिभ्यः कर्मभ्यो

---

१ ङ. °र्ध्वं पतन्त्येते सर्वक(ध)र्मबहिष्कृताः । २ ग. व्रतं । ३ क. घ. °दिप्रायश्चित्तान्तरमप्युपलक्ष्यते । ततश्च कृ° । ४ क. घ. °नाद्यस्मात्तस्मा° । ५ क. घ. °तिकर्मा° । ६ ग. °ज्ञानां ।

( ब्रह्मचारिप्रकरणम् १)

आचार्यस्य पुनराज्ञा पित्राज्ञातोऽपि गरीयसीत्याह मनुः—

" उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् " ॥

ब्रह्मद आचार्यः ॥ ३५ ॥

ब्रह्मचर्यकालस्य परिमाणमाह—

**प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ॥**
**ग्रहणान्तिकमित्येके ।**

उक्तं ब्रह्मचर्यं तत्प्रतिवेदं प्रतिशाखं द्वादश वर्षाणि पञ्च वा वर्षाणि वेद-स्वीकारान्तं[1] वा कर्तव्यम् ।

मनुः—" षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं[2] व्रतम् ।
तदर्धिकं पादिकं[3] वा ग्रहणान्तिकमेव वा[4] " ॥

आर्धिकपक्षे षड्वर्षाणि, पादिकपक्षे त्रीणि वर्षाणि, एकवेदब्रह्मचर्यम् ।

यमः—" गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः[5] ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते " ॥

**केशान्तश्चैव षोडशे ॥ ३६ ॥**

षोडशे वर्षे ब्राह्मणस्य केशान्तो नाम संस्कारः कर्तव्यः । क्षत्रियवैश्ययोस्तु मनूक्तः—

" केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः " इति ॥

जन्मादिरेषा वर्षसंख्या, गर्भादिश्चेद्विवक्षिता स्याद्गर्भषोडश इत्यवक्ष्यत्, यथा गर्भाष्टम इति । केवलसंख्योपादाने तु जन्मैवावधिः, यथाऽष्टमे चाब्द इति ॥ ३६ ॥

**आ षोडशाच्चाऽऽ द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ॥**
**ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ ३७ ॥**

जन्मत आ षोडशाद्वर्षाद्ब्राह्मणस्योपनयनकालः,अत ऊर्ध्वं तत्कालो नास्तीत्यर्थः । एवमा द्वाविंशाद्वर्षात्क्षत्रियस्याऽऽ चतुर्विंशाद्वैश्यस्य । अभिविधौ चायमाकारः । यत आह व्यासः—

---

१ ग. °स्वीकरणान्तं । २ ख. त्रैवेदिकं । ३ क. घ. पाक्षिकं । ४ क. घ. वा । पाक्षिकपक्षे त्री° । ५ ख. °तः । तत्प° ।

यो यज्ञाधिकारिणा स्वयज्ञसिद्ध्यर्थं परिक्रीतः सन्यज्ञकृद्भवति स तस्य ऋत्विगित्युच्यते ।

मनुः—" अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते " ॥

स च त्रिविधः । यथाऽऽह हारीतः—"क्षीरहोता[1]ऽऽहार्यवृतो विशेषवृतः " इति ।
लक्षणान्याह—" यो यस्याग्नीना[2]दत्ते स तस्य क्षीरहोता " ।

अस्यार्थः—अग्न्या[3]धेयसंबन्धिनामृत्विजां मध्ये यः कश्चिदग्निहोत्र ऋत्विग्भवति स क्षीरहोतेति ।

तदाहाऽऽश्वलायनः—" स्वयं पर्वणि जुहुयादृत्विजामेक इत[4]रं कालम् " इति ।
" तस्यालाभे यमन्यं नित्यार्थं वृणीते स आहार्यवृतः । अथ यमन्यमुत्तरोत्तरेषु क्रतुषु वृणीते स विशेषवृतः " ।

ऋत्विग्लक्षणमिह प्रासङ्गिकम् । ब्रह्मचारिणं प्रति तस्यानुपयोगात् ॥

## एते मान्या यथापूर्वम् ।

एते गुर्वादयो मान्याः पूज्याः, यथापूर्वं पू[5]र्वमनतिक्रम्य, उत्तरोत्तरेऽभिवादनोपसंग्रहणादिभिर्मान्या इत्यर्थः ॥

## एभ्यो माता गरीयसी ॥ ३५ ॥

एभ्यो गुर्वादिभ्योऽत्यर्थं गौरवं मातैवार्हतीत्यर्थः । गौतमस्तु मातुराचार्यस्य गौ[6]रवमाह—" आचार्यः श्रेष्ठो गुरूणां मातेत्येके " । अत्र च गुरुशब्द औपचारिकः ।

पुराणात्—" द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः ।
तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ॥
अभाव एतयोः श्रेयान्गुरुः सम्यग्विचक्षणः ।
स्वतन्त्राः सर्व एवैते परतन्त्रेषु सर्वदा ॥
अनुशिष्टौ विसर्गे वा वि[7]क्रये चेश्वरा मताः "

एवं च सति पितुर्मातुराचार्यस्य[8] च विप्रतिषिद्धार्थविषयायामाज्ञायां पितुराज्ञा गरीयसी । तदभावे मातुस्तदभाव आचार्यस्य ।

---

१ क. ख. °ताऽऽर्य° । २ क. घ. °नाधत्ते । ३ क. घ. °ग्न्यादेय° । ४ क. घ. °तरकालमितरस्य ला° । ५ क. पूर्वपूर्वमनतिक्रम्य यथापूर्वमुत्तरोत्तराभि° । ६ क. घ. °रवे विकल्पमा° । ७ ग. विश्रये । ८ क. ग. घ. °स्य प्र° ।

देवलः—" उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ।
माता मातामही गुर्वी पितुर्मातुश्च सोदरा ॥
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः ।
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विधा "

इति, तदुपचार इति मन्तव्यम् । अत्र च गुरुवत्तेषु वर्तितव्यमिति फलम् । अत एवा[1]नुवर्तनमाह—

" अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः " इति ।

गुरोर्भार्या गुर्वी । मातृतः पितृत इति बाहुल्याभिप्रायम् । महीपतिप्रभृतीनां तदभावात् । मनुरपि पूज्यमात्राभिप्रायेणाऽऽह—

" अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया " ॥

## उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥ ३४ ॥

यस्तु शिष्यमुपनीय वेदमध्यापयति स आचार्य उक्तः । वेदशब्देनात्र विद्यान्तराण्यपि संगृह्यन्ते ।

तथा च मनुः—" उपनीय गुरुः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते " ॥

कल्पशब्देनेह व्याकरणादीन्यङ्गानि मीमांसान्यायविस्तराश्च प्रतिपाद्यन्ते । कल्पो वेदार्थं कल्पयति ।

तथा च व्यासः—" न वेदपाठमात्रेण संतोषं कारयेद्द्विजः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति " ॥

पाठमात्रावसानोऽर्थानभिज्ञ इत्यर्थः ॥ ३४ ॥

## एकदेशमुपाध्यायः ।

यस्तु वे[2]दार्थैकदेशमध्यापयति स तस्योपाध्यायः ।

मनुः—" एकदेशं तु वेदस्य वेदाङ्गान्यपि[3] वा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते " ॥

## ऋत्विग्यज्ञकृदुच्यते ॥

१ क. ख. घ. °वानन्तरमा° । २ क. घ. वेदैक° । ३ क. घ. °पि मानवः । योऽ° ।

हारीतः—" हयगजरथचैत्यवृक्षविशेष*मारोहणफलचयनसंधिसर्पणकूपा-
वरोहणमहानद्यर्णवप्रतरणमहासाहसानि वर्जयेत् "।

मनुः—" मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः ।
नैनं ग्रामेऽभिनिम्रोचेत्सूर्यो नाभ्युदियात्क्वचित् ॥[3]
चोदितो गुरुणा नित्यमप्रचोदित एव वा ।
कुर्यादध्ययने योगमाचार्यस्य हितेषु च " इति ॥ ३३ ॥

मान्यमाननं ब्रह्मचारिधर्मं वक्तुं मान्यानां लक्षणानि तावदाह—

**स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ॥**

गर्भाधानाद्या उपनयनान्ताः क्रियाः संस्कारिका यो यस्य करोति स तस्य गुरुः । एतावदेव गुरुलक्षणम् । तत्प्रसङ्गाद्ब्राह्मणं प्रति वेदमस्मै प्रयच्छतीति विध्यन्तरम् । निषेकादिक्रियानुष्ठानस्य वेददानस्य चार्थप्राप्तपौर्वापर्यानुवादकः क्त्वाप्रत्ययः । परमार्थतस्तु द्वे एवैते वाक्ये । अन्यथा क्षत्रियादेः स्वसुतं प्रति गुरुत्वं न स्यात् । वेददातृत्वाभावात् । इष्यते च क्षत्रियादेरपि स्वसुतं प्रति गुरुत्वम् । अन्यथा क्षत्रियादिसुतस्य पितृभार्यां गच्छतो गुरुतल्पगत्वं न स्यात् । + अत एव मनुर्गर्भाधानादिक्रियाकर्तृत्वं वेददाननिरपेक्षं गुरुलक्षणमाह—

" निषेकादीनि कर्माणि यः करोति यथाविधि ।
संभावयति चान्नेन स विप्रो गुरुरुच्यते " ॥

अत्राध्यन्नसंभावनमौचित्यप्राप्तमनूद्यते न गुरुलक्षणतया विधीयते । विप्रग्रहणं च प्रदर्शनार्थं न नियमार्थम् । तथा सति क्षत्रियादिर्न हि गुरुः स्यात् । यथाविधिग्रहणेन च शूद्रादेर्निषेकमात्रकारिणोऽपि गुरुत्वं दर्शयति । तस्य तावन्मात्रविधानात् । एवं क्षत्रियवैश्ययोरपि । पुंसवनादिषु कर्मसु कृतेषु प्रयच्छतीति वचनाद्ब्राह्मणः पितैव संभवे सत्याचार्यो भवेदिति गम्यते ।

अत एव बृहस्पतिः—" एवं दण्डादिभिर्युक्तं संस्कृत्य विधिवत्पिता ।
वेदमध्यापयेद्यत्नाच्छास्त्रं मन्वादिकं तथा " ॥

इति पितुरेवाधिकारमाह । पितृव्यतिरिक्तानां गुरुत्वं त्वौपचारिकमिति दर्शयितुं लक्षणाभिधानम् ।

---

* पसमेति पाठो युक्तः । + इत आरभ्य वेददाननिरपेक्षमित्यन्तग्रन्थो न विद्यते क. घ. पुस्तकयोः ।

---

१ क. घ. °ग्यवतरणप्र° । २ क. घ. °हसाविरुद्धानि । ३ क. घ. °चे सूर्यो नाभ्युदया° । ४ ग. °भ्युदये क्व° । ५ क. घ. चार्थावाप्तेः पौ° । ६ क. घ. °त्रास्यान्न° ।

( ब्रह्मचारिप्रकरणम् १)

लोभमोहवा[1]द्यवादनस्ना[2]नदन्तधावनहर्षनृत्तगीतपरिवादभयानि । गुरुदर्शने कण्ठप्रावृतावसक्तिकापादप्रसारणानि । नि[3]ष्ठ्यूतहसितविजृ[4]म्भितावस्फोटनानि च । स्त्रीप्रेक्षणालम्बने मैथुनशङ्कायां द्यू[5]तहीनसेवामद[6]त्तादानं हिंसामाचार्यतत्पुत्र[7]तद्दी[8]क्षितानि च । शुक्ता वाचो मद्यं नित्यं ब्राह्मणः " इति ।

अत्र[9] स्नानं भोगार्थम् । भयं परं प्रति । कण्ठप्रावृतं कण्ठप्रावर[10]णानि । अवसक्तिका जानुनोरुपरि[11] करबन्धः । अवस्फोटनमङ्गुल्याद्यङ्गस्फोटनम् । हीनसेवा मूत्रपुरी[12]षावमार्जनादिका । तां गुरोरपि वर्जयेत् । " अङ्गानि प्रक्षालयीताशुचिलिप्तानि गुरोरपि " इति दर्शनात् । शुक्ता वाचः परोद्वेगकराणि वाक्यानि । मद्यं प्रसिद्धम् । एतानि ब्रह्मचारी वर्जयेदिति संबन्धः । म[13]द्यं नित्यं ब्राह्मणः । नित्यमिति वचनान्मद्यं कृतयुगादावपि ब्राह्मणेन वर्ज्यम् । क्षत्रियवैश्याभ्यां तु कलावेव । यद्ब्रह्मपुराणम्—

" दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
सगोत्राद्वा सपिण्डाद्वा विवाहो गोवधस्तथा ॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः " इति ॥

नित्यं सर्वकालम् । अब्रह्मचार्यपि ब्राह्मणो मद्यं वर्जयेदित्यर्थः ।

तथा—" अधःशय्यासनी पूर्वोत्थायी जघन्यसंवेशी
सर्वत्राप्रतिहतवाक्योऽन्यत्र पातकात् " ॥

अधःशय्यादि गुर्वपेक्षया ।

आपस्तम्बः—" आ[14]त्मप्रशंसां परगर्हां च वर्जयेत् " इति ।

तथा—" उत्सन्नश्लाघोऽङ्गानि प्रक्षालयीताशुचिलिप्तानि । गुरोरसंदर्शने " ।

उत्सन्नश्लाघ उत्सन्नशोभो भवेदिति शेषः । यथा गुरुर्न पश्यति तथा प्रक्षालयीतेत्यर्थः ।

आपस्तम्बः—

" न प्रेक्षेत नग्नां स्त्रियम् । ओषधिवनस्पतीना[15]माच्छिद्य नो जिघ्रेत्[16] ।
न स्म[17]येत यदि स्मयेतापिगृह्य स्म[18]येत, इति ब्राह्मणम् " ।

अपिगृह्य मु[19]खं पिधाय स्म[20]येतेति ब्राह्मणम् ।

---

१ ख. °वादवा° । २ ख. °नस्नानह° । ३ क. ग. निष्ठूत° । ४ क. घ. °तजृ° ५ । क. घ. द्यूतं हनिसेवाप्रद° । ६ ग. °दत्तदा° । ७ क. घ. °त्रस्त्रीदीक्षितनामानि शु° । ८ ग. °तद्दीक्षि° । ९ ख. °त्र स्थानं । १० क. घ. °रणम् । अ° । ११ क. ग. घ. °रि परिक° । १२ क. घ. °रीषोपमार्जनादिकार्ये गु° । १३ क. घ. °द्यं ब्रह्मचारिणो नित्यं स° । १४ ग. आत्मोत्सन्नप्रशंसे च प° । १५ क. °नाच्छिद्य नोपजि° । १६ ग. व्रजेत् । १७ ख. स्मयीत यदि स्मयीता° । १८ ख. स्मयीतेति° । १९ क. घ. मुखमपिधायेति । २० ख. स्मयीते° ।

" उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं च " इति । शुक्तं परुषं वचोऽन्नं वा यत्कालवशादम्लं भवति । स्त्रीशब्देन स्त्रीविषये प्रेक्षणालम्बने लक्ष्येते । तदाह गौतमः—" स्त्रीप्रेक्षणालम्बने मैथुनशङ्कायाम् " इति । प्राणिहिंसनं प्राणिवधः । भास्करालोकनं* प्रसिद्धम् । अश्लीलं सभानर्हं वचः । परिवादः परनिन्दावर्जनेनात्र वर्जनविषयः । संकल्पो व्रतनियमादिशब्दवाच्यो लक्ष्यते । अत एवाऽऽह—" श्राद्धे व्रतमपीडयन् " इति ।

मनुस्तु—" सेवेतेमांस्तु नियमान्ब्रह्मचारी गुरौ वसन् ।
संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः " ॥

चकारः स्मृत्यन्तरोपात्तानामन्येषां ब्रह्मचारिधर्माणामुपसंग्रहार्थः ।

तत्र मनुः—" नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्चनं चैव समिदाधानमेव च ।
वर्जयेन्मधुमांसानि गन्धमाल्यरसान्स्त्रियः ।
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ॥
कामं क्रोधं च लोभं च नर्तनं गीतवादितम् ।
द्यूतं च जनवादं च परिवादं तथाऽनृतम् ॥
स्त्रीणां च प्रेक्षणालम्बमुपघातं परस्य च ।
एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ॥
कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमेव तु " ।

व्रतं ब्रह्मचर्यम् ।

यमः—" जितनिद्रो जितालस्यो जितक्रोधो जितात्मवान् । "
तथा—" खट्वासनं च शयनं वर्जयेद्दन्तधावनम् ।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्क्वचित् " ॥

गौतमः—
" वर्जयेन्मधुमांसं गन्धमाल्यं दिवास्वप्नाञ्जनाभ्यञ्जनोपानच्छत्रकामक्रोध-

* अत्र मिताक्षरायां भास्करस्योदयामस्तमयावलोकनमिति वर्तते ।

१ क. °ज्यं स्वोच्छिष्टमुच्छिष्टो° । २ क. घ. °न्नं यावत्का° । ३ क. घ. परिनि° । ४ क. घ. °शब्दं वा° । ५ ख. °वाच्यं ल° । ६ क. घ. एव श्रा° । ७ ख. स्नातः । ८ क. ग. °दिनम् । द्यू° । ९ क. घ. °तं स्मर° । १० क. °न्दयेद्रेतो ।

र्य(र्या)[1]संनिधावेतदग्निकार्यं संनिहिते त्वाचार्येऽग्निकार्यस्थाने भैक्षमाचार्यो भोजयितव्य इति तेनैवोक्तं हविषा संस्तुतमित्यादिना ।

अत्र मनुः—" समाहृत्य तु तद्भैक्षं यावदर्थममायया ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्त उदङ्मुखः " ॥

अस्यार्थः—यत्प्राङ्मुखो भुङ्क्ते तदायुष्यम् । आयुषे हितम् । एवं यशस्यम् । यः प्रत्यङ्मुखो भुङ्क्ते स श्रियं प्राप्नोति । यस्तूदङ्मुखः स ऋतं सत्यं यज्ञं वाऽऽप्नोति । एवं भोक्तुः प्राङ्मुखता नित्या काम्या च ।

" नोच्छिष्टं कस्यचिद्द्यान्नाद्या[2]देनमथान्तरा ।
न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद्व्रजेत् " ॥

संवर्तः—" सायं प्रातर्मनुष्याणामश[3]नं दैवचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः" ॥

वसिष्ठः— " अष्टौ ग्रासा मुनेर्भक्ष्यं षोडशारण्यवासिनः ।
[4][5]द्वाविंशतिर्गृहस्थस्य अमितं ब्रह्मचारिणः " ॥

आपस्तम्बः–' भुक्त्वा स्वयममत्रं प्रक्षा[6]लयेन्न चोच्छिष्टं कुर्यादशक्तो भूमौ निखनेदप्सु वा[7] प्रवेशयेदार्याय वा पर्यवद[8]ध्यादन्तर्धि(र्हि)[9]तेन वा शूद्राय'॥ ३१॥

**ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ॥**

ब्रह्मचार्यनापद्येकस्यान्नं नाश्नीयात् ॥

**ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ ३२ ॥**

ब्रह्मचारी ब्राह्मणश्चेत्तदाऽभ्यर्थितः सन्नेकान्नमनापद्यपि भुञ्जीत । स चेच्छ्रा[10]द्धे भुञ्जीत तदा व्रतपीडाकरं मधुमांसादि वर्जयित्वाऽश्नीयात् ॥ ३२ ॥

ब्रह्मचारिनियमानाह—

**मधुमांसाञ्जनोच्छिष्टं शुक्तस्त्रीप्राणिहिंसनम् ॥**

**भास्करालोकनाश्लीलपरि[11]वादांश्च वर्जयेत् ॥ ३३ ॥**

ब्रह्मचारी मध्वादिकं वर्जयेत् । मधु मांसं शिष्टभोजनीयमपि । अञ्जनं कज्जलम् । उच्छिष्टं स्वस्य परस्य च गुरुव्यतिरिक्तस्य । तथा च वसिष्ठः—

---

१ ग. °वेव त° । २ ख. देनं तथाऽ° । ३ क. घ. °नं चैव । ४ ग. द्वात्रिंशत्तु गृह° । ५ क. ख. °शतं गृह° । ६ क. घ. °लयीत न चो° । ७ क. घ. वा प्रवेशयेदाचार्या° । ८ क. ग. °दद्याद° । ९ क. घ. °न्तरिते° । १० क. घ. °च्छ्राद्धं भु° । ११ ङ. °वादादि व° ।

भैक्षप्रा[1]क्तनवाक्यं भैक्षचर्याशब्देन लक्ष्यते । तदादौ मध्येऽवसाने च स्त्रीलिङ्गसंबुद्ध्यन्तं(न्त)भवच्छ[2]ब्दयुक्तं ब्राह्मणस्य क्षत्रियस्य वैश्यस्य यथाक्रमं प्रयोक्तव्यं भवति । भवति भिक्षां देहीति ब्राह्मणस्य, भिक्षां भवति देहीति क्षत्रियस्य, भिक्षां देहि भवतीति वैश्यस्येति सिद्धम् ।

प्रथमभिक्षामधिकृत्य भविष्यत्पुराणम्—

" मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत प्रथमं भिक्षां या चैनं न विमानयेत् ॥
सुवर्णं रजतं[3] रत्नं सा पात्रेऽस्य विनिक्षिपेत् " ।

स्मृत्यन्तरं च—" भिक्षार्थं काञ्चनं वाऽपि पात्रं सव्येन राजतम् ।
पित्रा कृतोपनीते[4]ज्यो मधुपर्ककरस्ततः[5] " ॥

यमः—" हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च ।
भोक्ता त्वशुचितां याति दाता स्वर्गं न गच्छति " ॥

मनुः—" परिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं[6] यथाविधि " ॥ ३० ॥

## कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया[7] ॥
## आपोशा(श)नक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ ३१ ॥

कृतमग्निकार्यं येन स कृताग्निकार्यः । वाग्यतो मौनी[8] । आपोशा(श)नक्रियां कृत्वा सत्कृत्य पूजयन्नन्नमकुत्सयन्ननिन्दयन्गुर्वनुज्ञया[9] भुङ्क्त्वे(क्ष्वे)ति गुर्वनुमत्या भुञ्जीत । उपनयनकाल[10] आपोशा(श)नप्रैषोक्ता क्रियाऽऽपोशा(श)नक्रिया । भैक्षादेकदेशहोमोऽत्राग्निकार्यम् । तदाह पैठीनसिः—

" हविषो हुत्वा संतर्प्याग्निं समिधं दत्त्वाऽन्नं यदन्नमेभ्यच[11]मृतेन देवा यदन्नमाग्नि बहुधा विरूपमिति चोक्त्वाऽनुमन्त्रयेत्रिः । स्विष्टकृतमग्निकार्यं कृत्वाऽनुज्ञातो भुञ्जीत वाग्यतः " ।

तथा चाऽऽपस्तम्बः—" प्रोक्षिताद्भैक्षादग्नौ हुत्वा भुञ्जीत " । अतश्चाऽऽचा-

---

१ क. भैक्षं प्रार्थनावा° । घ. भैक्षे प्रार्थनावा° । २ क. घ. °च्छब्दार्थयु° । ३ क. °तं वाऽपि सा पात्रे तस्य निक्षि° । घ. °तं ताम्रं सा । ४ क. °पवीतेन मं° । घ. °पवीतेज्यो । ५ क. घ. °स्तथा । य° । ६ ग. °द्भैक्ष्यं य° । ७ क. घ. ङ. °या । अपो° । ८ क. घ. °नी । अपो° । ९ ग. °याऽनुमत्स्वेति गुर्वनुमत्वाभु° । १० क. घ. °यनापोशाप्रै° । ११ क. घ. °मश्नीत्युक्त्वा मन्त्रये° ।

व्रतानि सावित्र्यादीनि ।

" मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्राप्य विनष्टानि गृह्णीतान्यानि मन्त्रतः[1] " इति ॥

**ब्राह्मणेषु चरेद्भैक्ष[2]मनिन्द्येष्वात्मवृत्तये ॥ २९ ॥**

ब्राह्मणेष्वनिन्द्येष्वनभिशस्तादिषु भैक्षं प्राप्तं चरेत् । भिक्षितमन्नं भिक्षा, तासां समूहो भैक्षम् । आत्मवृत्तय आत्मन एव वृत्त्यर्थं न परस्य[3] गुरुव्यतिरिक्तस्य । गुरुस्तु शिष्यनिवेदितं भैक्षं समश्नीयादेव । यदाहाऽऽपस्तम्बः—

" भैक्षं हविषा संस्तुतम्[4] । तत्राऽऽचार्यो देवतार्थ[5] आहवनीयार्थे च तं भोजयित्वा यदुच्छिष्टं प्राश्नाति हविरुच्छिष्टमेव तत् " इति ।

मनुः—" उदकुम्भं सुमनसो गोशकृन्मृत्तिकां कुशान् ।
आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ॥
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु " ।

यत्तु—" मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं[6] या चैनं[7] न विमानयेत् " ॥

इति, तदुपनयनाङ्गभिक्षाविषयमिति गुरोः कुले न भिक्षेतेत्यनेनाविरुद्धम्[8] । नित्यभिक्षाविषयत्वादस्य ।

" अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ।
सर्वं वाऽपि चरेद्ग्रामं पूर्वोक्तानामसंभवे[9] ॥
अन्त्यवर्जं महाबाहो इत्याह भगवान्[10] विभुः " ।

अन्त्यः शूद्रः ।

" वाचं नियम्य प्रयत आमिषं चापि वर्जयेत् ।
चातुर्वर्ण्यं[11] चरेद्भैक्ष[12]मलाभे कुरुनन्दन " ॥

अलाभे त्रैवर्णिकानामिति शेषः ॥ २९ ॥

**आदिमध्यावसानेषु भवच्छब्दोपलक्षिताः[13] ॥**
**ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥ ३० ॥**

---

१ क. घ. °न्त्रवित् । इ° । २ ङ. 'द्भैक्ष्यम° । ३ क. घ. °स्य तु गु° । ४ ग. संप्लुत° । ५ क. घ. °तार्थमाहवनीयार्थे च । ६ ग. प्रथमां । ७ ग. °नं नावमा° । ८ क. घ. °म् । भविष्यत्पुराणम् । नि° । ९ क. घ. °वे । नियम्य प्रयतावाचमभिशस्तं विवर्जयेत् । अ° । १० ग. °वान्भृगुः । अ° । ११ क. °र्वर्ण्ये चरेद्भिक्षाम° । १२ ग. 'द्भैक्ष्यम° । १३ ग. ङ. °क्षिता । ब्रा° ।

" ऐणेय[1]मजिनमुत्तरीयं ब्राह्मणस्य रौरवं राजन्यस्याऽऽजं
गव्यं वा वैश्यस्य सर्वेषां वा गव्यम् । "

यमः—" सर्वेषां रौरवशाण[2]क्षौमाविकानि सामर्थ्यादधोवस्त्राणीतराणि[3] न " ।
गौतमस्तु सर्वेषां ब्रह्मचारिणां शाणादिभिर्विकल्पितं शुक्लकार्पासं वस्त्रमाह—
" सर्वेषां कार्[4]पासं वासोऽविकृतम् " इति । अविकृतं शुक्लम् ।

वसिष्ठः—
" शुक्लमहतं वासो ब्राह्मणस्य कार्पासं माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं वैश्यस्य सर्वेषां वा तान्तवमरक्तम् । शुक्लं कार्पासमेवाहतं क्षौमाद्यपि " ।

मनुः—" कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्[5] ।
शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकसूत्रिकम् " ॥

भृगुः—" ऊर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधो[6]वृतम् ।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते " ॥

त्रिवृतं नवसूत्रमित्यर्थः ।

" पृष्ठदेशे च नाभ्यां च य[7]द्वृतं विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् ॥
सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥
उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते " ।

बौधायनः—" कौशं सौत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतम् " ।

मनुः—" मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य[8] शणतान्तवी ॥
मुञ्जालाभे तु कर्तव्या कुशा[9]श्मन्तक[10]बल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा " ॥

यथार्षेयं ग्रन्थयः कार्या इत्यभिप्रायः ।

पैठीनसिः—"मौञ्जी मेखला[11]ऽऽश्मन्तकी ब्राह्मणस्य " ।

बौधायनः—" अथैनं मौञ्जीं मेखलां त्रिवृतं[12] त्रिः प्रद[13]क्षिणं परिव्ययति " ।

मनुः—" यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि " ॥

---

१ ख. ग. °यमु° । २ ख. °क्षौकिमावि° । ३ क ग. घ. °गि गौ° । ४ ख. °र्पासो वा° । ५ क °त् । शाण° । घ. °त् । पाण° । ६ ग. °धोमुखम् । त्रि° । ७ ग. यद्वृतं । ८ ख. °स्य षण° । ९ ख. °शाऽश्मातक° । १० क. ग. घ. °कबिल्व° । ११ ख. °लाऽश्मातकी । घ. °लाऽश्मान्त° । १२ क. ग. °वृतं त्रिः । १३ ख. ग. °क्षिणां प° ।

धर्मानतिक्रमेण गुरोरध्याप्या भवन्ति । अर्थप्रदं प्रत्येनेनाध्यापनं नाधर्मः । तस्य वृत्तित्वेन विहितत्वात् । भृतिसंप्रतिपत्तिपूर्वकमध्यापनं[2] प्रतिषिद्धम् । मनुस्त्वाचार्यपुत्रमप्याह—

" आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
शक्तार्थदाप्तः स्वः साधुरध्याप्या दश धर्मतः " इति ॥

यत्तु तेनैवोक्तम्—" धर्मार्थौ यत्र न स्यातां शुश्रूषा नापि तद्विधा ।
तत्र विद्या न दातव्या[3] शुभं बीजमिवोषरे "

इति, तद्धर्मानुष्ठानार्थदानशुश्रूषणानि[4] सति सामर्थ्ये यो न करोत्यध्याप्यगुणान्तरविरहे तद्विषयम् ॥ २८ ॥

उपनीतं प्रत्याह—

## दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ॥

दण्डादीनि स्वकार्यधारणीयानि । तत्र दण्डस्य कार्यमवलम्बनं गवादिनिवारणं तमोवगाहनमप्सु प्रवेशनमित्यादि । अजिनोपवीतमेखलानामदृष्टम् । अतस्तानि नित्यं धार्याणि । उपवीतं ब्रह्मसूत्रम् ।

मनुः—" ब्राह्मणो बैल्वपालाशौ क्षत्रियो वटखादिरौ ।
पैप्पलौदुम्बरौ वैश्यो दण्डानर्हति धर्मतः[5] " ॥

यमः—" एतेषामप्यलाभे तु सर्वेषां सर्वयज्ञियाः[6] " ।

मनुः—" ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥
केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः " ॥

तथा—" कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च " ॥

कृष्णमृगरुरुच्छागानामजिनानि ब्राह्मणादयो यथाक्रमं वसीरन्नाच्छादयेयुरुत्तरीयाणि कुर्युरित्यर्थः ।

तथा च पारस्करः—

---

१ क. घ. °त्यध्या° । २ ख. ग. °नं निषि° । ३ क. ग. घ. °व्या शुभं बी° । ४ ग. °श्रूषादीनि । ५ ख. ग. °तः । ए° । ६ क. ग. घ. °र्वयाज्ञि° ।

नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंयतः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ।
हीनान्नवस्त्रवेशः(षः) स्यात्सर्वदा गुरुसंनिधौ ॥
उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ।
प्रतिश्रवणसंभाषे शयानो न समाचरेत् " ॥

प्रतिश्रवणमङ्गीकारः ।

" नाऽऽसीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ।
आसीनस्य स्थितः कुर्यादभिगच्छेच्च गच्छतः ॥
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ।
पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ॥
प्रणम्य तु शयानस्य निर्देशे चैव तिष्ठतः ।
नीचं शय्यासनं चास्य सर्वदा गुरुसंनिधौ ॥
गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत् ।
नोदाहरेदस्य नाम परोक्षमपि केवलम् ॥
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ।
गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते ॥
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ।
दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ॥
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् " ॥ २७ ॥

प्रसङ्गाद्गुरुं प्रत्यध्याप्यानाह—

**कृतज्ञाद्रोहिमेधाविशुचिकल्याणसूचकाः ॥
अध्याप्याः साधुशक्ताप्तस्वार्थदा धर्मतस्त्विमे ॥ २८ ॥**

कृतज्ञ उपकर्तुः स्मर्ता । अद्रोह्यनपराधी । मेधावी धारणावान् । शुचिः प्रयतः । कल्याणसूचकः शुभलक्षणः । कल्यानसूयका इति तु पाठे कल्यो नीरोगः । अनसूयकोऽसूयारहितः । गुणेषु दोषाविष्करणमसूया । साधुर्धार्मिकः । शक्तो ग्रहणादिसमर्थः । आप्तोऽप्रतारकः । स्वो ज्ञातिः । अर्थदो गुर्वर्थप्रदाता । ज्ञानवित्तदा इति तु पाठे ज्ञानदो ज्ञानहेतुग्रन्थप्रदः । एते धर्मतो

१ क. घ. °नानुव° । २ क. घ. °थमे चा° । ३ ख. °गच्छंश्च ग° । ४ क. घ. °स्य विदे° । ५ ग. निर्देशे । ६ घ. तत्रापि° । ७ ङ. °ल्यानसूयकाः । ८ ङ. °ध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥२८॥ ९ ख. ग. घ. °त्तद इ° ।

" व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः " ॥

सव्यदक्षिणाभ्यां पाणिभ्यां सव्यदक्षिणौ पादौ गुरोः स्पृशेदित्यर्थः । श्रोत्रे संस्पृश्य[1] मनःसमाधानार्थमधस्तज्जान्वोरा पद्भ्याम् ।

गौतमः—" गुरोः पादोपसंग्रहणं प्रातर्ब्रह्मानुवचने चाऽऽद्यन्तयोः " ॥

ब्रह्म वेदः । अनुवचनमध्यापनम् । आद्यन्तयोरुपक्रमावसानयोः ।

आपस्तम्बः—

" उदिते त्वादित्य आचार्येण[2] समेत्योपसंग्रहणं
सदैवाभिवादनमुपसंग्राह्य[3]ाऽऽचार्य इत्येके " ।

गुरुरत्राऽऽचार्यः पिता वा ।

अत्रिः—" दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत् ।
श्रोत्रिये त्वञ्जलिः कार्यो गुरोः पादोपसंग्रहम् " ॥

अथ प्रकृतमुच्यते—अप्युपासीत स्वाध्यायप्राप्त्यर्थं परिचरेत् । गुरुमित्यनुवर्तते । समाहितोऽनन्यमनाः ॥ २६ ॥

## आहूतश्चाप्यधीयीत लब्धं[4] चास्मै निवेदयेत् ॥

गुरुणाऽऽहूतः पठेत् । लब्धं च गुरवे निवेदयेत् । उपसंग्रहणानन्तरं गौतमः[5]—
" अनुज्ञात उपविशेत्प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा । एतत्प्रत्यहमध्ययनारम्भे कार्यम् । प्रथमाध्ययने तु पाणिना सव्यं[6]मुपसंगृह्यानङ्गुष्ठमधीहि भो इति ब्रूयात् । तत्र चक्षुर्मनःप्राणोपस्पर्शनं दर्भैः[7] प्राणायामास्त्रयः पञ्चदश मात्राः प्राक्कूलेष्वासनं च, ॐ पूर्वा व्याहृतयः सप्त सत्यान्ताः " ॥

प्राणाः शीर्षण्यानि खानि । ह्रस्वमक्षरं मात्रा, तया कालो लक्ष्यते । कूलमग्रम् ॥

## हितं[8] चास्याऽऽचरेन्नित्यं मनो[9]वचनकर्मभिः ॥ २७ ॥

हितमायतावनुकूलमस्य गुरोराचरेत् । सर्वदा मानसवाचिककायिकव्यापारैरतिहितकारी गुरोरप्रतिलोमयन्वाचेति । चकारः शास्त्रान्तरोक्त[10]वचनसमुच्चयार्थः ।

तत्र मनुः—" शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठे[11]द्वीक्षमाणो गुरोर्मुखम् ॥

---

१ क. ग. घ. °श्यमानो मन्त्रोपदेशशिष्यसमाधानार्थमधस्ताज्जा° । २ ख. ग. °र्येणोपसंग्र° । ३ ग. °संगृह्याऽऽ° । ४ ङ. °ब्धं तस्मै । ५ ख. ग. °मः—आज्ञा° । ६ ग. °व्यमङ्गुष्ठमुपसंगृह्याधी° । ७ घ. °र्भैराचमनं । ८ ङ. °तं तस्याऽऽ° । ९ ङ. °नोवाक्कायक° । १० क. ख. घ. °क्तस° । ११ क. ग. °द्वीक्ष्यमा° ।

" नामधेयस्य ये केचिदभिवादं न जानते ।
तान्प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्वा[1]स्तथैव च " ॥

आपस्तम्ब—

" त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति । ज्ञायमा[2]ने च वा योनिविशेषे वृद्धतरायाभिवाद्यम् " ।

तथा—

" समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक्प्रातराशादभिवादयीत स्वर्गमायुश्चे[3]प्सन् । दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीत[4] । उरःसमं राजन्यः । मध्यसमं वैश्यः । नीचैः शूद्रः प्राञ्जलिस्तथा । विषमगताय गुरवे नाभिवाद्यमन्वारुह्याभिवादयीत । सर्वत्र तु प्रत्युत्थायाभिवादनम् । अप्रयतेन नाभिवाद्यम् " ।

तथा—

" अप्रय[5]तश्च प्रयता[6]य न प्रत्यभिवादयेत्[7] । पतिवयसः स्त्रियो[8]ऽवहितशिरा अवहितपाणि[9]र्वाऽभिवाद[10]यीत । सर्वा नाम्ना स्त्रियो राजन्यवैश्यौ च न नाम्ना मात रमार्यदारांश्चेत्येके " ।

सांख्यायनः—

" +अहरहराचार्यायाभिवादयेत् । गुरुभ्यश्च समेत्य श्रोत्रि[11]यस्य " ।

मनुः—" लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा ।
आद[12]दीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥
गुरोर्गुरौ सं[13]निहिते गुरुवद्वृत्तिमाचरेत् ।
न चानिसृष्टो गुरुणा स्वान्गुरूनभिवादयेत् " ॥

अनिसृष्टोऽननुज्ञापितः । स्वान्मातुलादीन् ।

**गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ २६ ॥**

गुरुं चैवाभिवादयेत् । वृद्धत्वादेव गुरोरभिवादने सिद्धे पृथग्वचनं शास्त्रान्तरोक्तेनोपसंग्रहणेन विकल्पार्थम् । उपसंग्रहणमाह मनुः—

+ इत आरभ्य तथाऽध्यात्मिकमेव वेत्यन्तग्रन्थो न विद्यते ग. पुस्तके ।

१ क. ग. सर्वास्त॰ । २ क. घ. ॰मानं च । ३ ग. ॰श्चेच्छन् । द॰ । ४ क. घ. ॰त । सर्व॰ । ५ क. ॰यता च अपूतयतश्च न प्र॰ । ६ ग. ॰य नाभि॰ । ७ क. ॰त् । प्रति॰ । ८ ग. स्त्रिया अव॰ । ९ क. ॰णिनाऽभिवादयेत् । स॰ । घ. ॰णिनाऽभिवादयते । स॰ । १० ग. ॰दयति । स॰ । ११ क. घ. ॰यस्याप्रोष्यप्रेत्य श्रोत्रियस्य । १२ क. ग. घ. ॰दधीत । १३ ख. ॰निवृत्ते गु॰ ।

( ब्रह्मचारिप्रकरणम् १)

अतश्चैवं प्रयोगो भवति—अभिवादये चैत्रनामाऽहमस्मि भो इति । अभिवादितेन च प्रत्यभिवादनं यथा कार्यं तथाऽऽह स एव[1]—

" आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्तर्वाच्यः[2] पूर्वाक्षरः प्लुतः " ॥

अत्र चाभिवादकनामसंनिविष्टान्तिमस्वरोपलक्षणार्थमकारग्रहणम् । ततश्च य एवास्ति स्वरोऽन्त्यः स प्लुतः कार्यः पूर्वाक्षर[3] इति वचनात् । पूर्वमक्षरं यस्य स पूर्वाक्षरः, पूर्वमभिवादकनामान्तर्वर्तिनः । तच्च सामर्थ्याद्व्यञ्जनं, स्वरस्य हि व्यञ्जनमेव[4] पूर्वम् । अतश्च पूर्वाक्षर इति विशेषणोपादानाद्व्यञ्जनसहित एव[5] स्वरः प्लावनीयः । न पुनरपूर्वो[6]ऽकारो नामान्ते विधीयत इति निश्चीयते ।

तथा च वसिष्ठः—

" आमन्त्रिते स्वरोऽन्त्यस्य प्लवते संध्यक्षरमप्रगृह्यमायात(उ)भावं च " इति ।

आमन्त्रितविभक्त्यन्तस्य नाम्नोऽन्ते यः स्वरः स प्लवते त्रिमात्रो भवति । तथा प्रगृह्यसंज्ञावर्जितं यत्संध्यक्षरमेकारैकाररूपमाँ[7]इभावस्तस्य कार्यः[8] । ओकारौकाररूपं चेत्तदा[9] तस्याऽऽउभावः कार्यः । अत्रोदाहरणानि—आयुष्मान्भवं[10] सौम्य यज्ञदत्त३ भद्रशर्मा[11]३[न] यज्ञभूता३इ चित्रगा३उ । "ज्यायांसमभिवादयन्" इत्युक्तम् । तत्र कियता कालेन ज्यायान्भवतीत्यपेक्षिते मनुराह—

" दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् ।
त्र्यब्दपूर्वं श्रोत्रियाणामल्पेनापि स्वयोनिषु " ॥

पुरवासिनो दशभिर्वर्षैः पूर्वैः[12] सखैव भवति , ततोऽधिकवर्षैस्तु[13] ज्यायान् । कलाभृतां शिल्पिनां गायनादीनां पञ्चाब्दपूर्वः सखा, ततोऽधिको ज्यायान् । त्र्यब्दापेक्षमल्पत्वम् । श्रोत्रियाणां त्र्यब्दपूर्वः सखा, ततोऽधिको ज्यायान् । तस्य च तारतम्यं गुणतारतम्यापेक्षम् । अपिशब्द एवकारार्थः ।

स्त्रियः कर्तव्यप्रत्यभिवादनानभिज्ञांश्च पुरुषान्प्रति तथाऽऽह मनुः—

---

१ क. घ. एवाऽऽह–आ° । २ ख. ग °म्नोऽन्ते वाच्यः । ३ क. °क्षरः प्लुत इ° । ४ ग. °नमव्यवहितपू° । ५ क. घ. °व सुरः । ६ क. घ. °पूर्वका° । ७ गं. °मायूभा° । ८ क. घ. °र्यैः । अत्रोका° । ९ ख. °चेदात्तस्याभावः । १० क. घ. °व सोम य° । ख. °व सोम्य । ११ क. घ. °र्मा चित्रगा ३ ज्या° । १२ क. घ. पूर्वैः । १३ क. °धिकैर्वर्षैस्तु ।

कात्यायनः—" यत्रोपदिश्यते कर्म कर्तुरङ्गं न [1]चोच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥
यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री [2]सौम्याऽपराजिता ॥
आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता " ॥

शातातपः—" नाभि[3]वाद्यास्तु विप्रेण क्षत्रिया[4]द्याः कथंचन ।
ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः ॥
ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः ।
सवर्णैस्तु सवर्णानां कार्यमेवाभिवादनम् " ॥

अङ्गिराः—" अप्रणामं गते शूद्रे स्वस्ति कुर्वन्ति ये द्विजाः ।
शूद्रोऽपि नरकं याति ब्राह्मणस्तदनन्तरम् " ॥

यम—" यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितम् ।
यस्मिन्सर्वे स्थिताः का[5]माः सा स्वस्तीत्यभिसंज्ञिता " ॥

तथा—" क्षत्रियस्त्रियुगं हन्ति वैश्यो हन्ति चतुर्युगम् ।
हन्त्येकविंशतियुगं शूद्रो ब्राह्मणमब्रुवन् " ॥

भविष्यत्पुराणात्—" अभीति गदितो विष्णुर्वादयामीति शंकरः ।
द्वावेव पूजितौ तेन यः करोत्यभिवादनम् ॥
सव्यापसव्यादिविधिर्यत्र नो विद्यते क्वचित् ।
यज्ञोपवीतिना तत्र भा[6]व्यं सर्वेषु कर्मसु " ॥ २५ ॥

अभिवादनविधिमाह—

**ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुव[7]न् ॥**

अग्निकार्यं कृत्वाऽसावहमिति ब्रुवञ्ज्यायसोऽभिवादयेत् । असावित्यस्य स्थाने प्रथमान्तं नाम कीर्तयेत् । तथाऽभिवादय इत्युक्त्वा वा ।

मनुः—" अभिवादात्परं विप्रो ज्यायांसमभिवा[8]दयन् ।
असौ नामाऽहमस्मीति स्वनाम परिकीर्तयेत् ॥
भोःश[9]ब्दं कारयेदन्ते स्वस्य नाम्नोऽभिवादने ।

१ ख. ग. शोच्यते । २ क. घ. सौम्यप° । ३ घ. °वाद्यस्तु । ४ क घ. °याद्यः क° । ५ क. घ. °माः सरव° ६ क. घ. भव्यं । ७ ख. 'न् । ज्या° । ८ क. घ. °दयेत् । अ° । ९ ख. घ. °ब्दं कीर्तये° ।

**यमः**—" अनागतां तु ये पूर्वामतीतां ये च पश्चिमाम् ।
विप्राः संध्यां न तिष्ठन्ति वृषलास्त उदाहृताः " ॥

**दक्षः**—" उपासते न यः संध्यां ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रत्वं मृतः श्वा चैव जायते ॥
संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् " ॥

## अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि ॥ २५ ॥

**तारकोदयात्सूर्यदर्शनाच्चोर्ध्वं संध्याकाले[1] प्रत्यासन्न एव काले स्वगृह्योक्तविधिना समिद्धोमं कुर्यात् ।**

**भविष्यत्पुराणात्**—" दूरादाहृत्य समिधः संनिदध्याद्गृहोपरि ।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः " ॥

**दूरादित्यपरिगृहीतदेशोपलक्षणार्थम्[2] । मान्त्रवर्णिकी चात्र देवता । जुहुयादिति वचनादग्निकार्यं होमादिकं[3] प्रतीयते । सायंप्रातश्शब्दाभ्यां रात्र्यह्नी उपलक्ष्येते[4] ।**

**बैजवापः**—

" पुराऽस्तमयात्प्रागुदीचीं दिशं गत्वाऽहिंसन्नरण्यात्समिध आहरेत् । शुष्का ब्रह्मवर्चसकामः[5] । आर्द्रा अन्नाद्यकाम[6] उभयीरुभयकामः " ।

**कात्यायनः**—" नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् ।
न वियुक्ता[7] त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना तथा न स्याद्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥
विशीर्णा[8] विदला ह्रस्वा वक्राः[9] ससुशि(षि)रास्तथा ।
न ग्राह्याश्च गुणैर्जुष्टाः[10] कर्मसिद्धिविनाशिकाः " ॥

**वायुपुराणात्**—" पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदलाभेऽर्कवेतसाः " ॥

---

१ क. घ. °कालप्र° । २ ख. ग. °क्षणम् । मा° । ३ क. °मात्मके प्र° । ४ क. घ. °ते बीज° । ५ ग. °कामा आर्द्रा अन्नाद्यकामा उभे उभयकामाः । कात्या° । ६ क. घ. °कामतोभयी उभय° । ७ क. °युक्तत्व° । ८ ग. °र्णा द्विद° । ९ ख. °क्राः ससुशि° । १० क. ग. घ. °र्जुष्टा कर्मसिद्धिविनाशिका । वा° ।

कृष्णा सरस्वती ज्ञेया संध्यात्रयमुदाहृतम् ॥
संधौ संध्यामुपासीत नास्तंगे नोद्गते[1] रवौ ।
संध्यात्रयं तु कर्तव्यं द्विजेनाऽऽत्मविदा सदा ॥
उभे संध्ये च कर्तव्ये ब्राह्मणैश्च गृहेष्वपि " ।

अतश्च वाक्यान्मध्याह्नसंध्या गृहे न कार्येति गम्यते ।

वसिष्ठः—" गृहे त्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्तं[2] विष्णुसंनिधौ " ॥

शातातपः—" अनृतं मद्यगन्धं च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्नं[3] बहिः संध्या ह्युपासिता ॥
बहिः संध्या दशगुणा गर्तप्रस्रवणादिषु[4] ।
ख्यातातीर्थे[5] शतगुणा साहस्रा[6] जाह्नवीजले " ॥

मनुः—" एतदक्षरमेतां[7] च जपन्व्याहृतिपूर्वकम् ।
संध्ययोरुभयोर्विप्रो वेदपुण्येन युज्यते " ॥

एतदक्षरं प्रणवः ।

यमः—" यदह्ना क्रियते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां संध्यां प्राणायामैश्च हन्ति तत् ॥
यद्रात्र्या क्रियते पापं कर्मणा मनसा गिरा ।
पूर्वां संध्यामुपासीनः प्राणायामैर्व्यपोहति ॥
संध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥
ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुवन्[8][9] ।
पूजां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च " ॥

विष्णुपुराणात्—" सर्वकालमुपस्थानं संध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौच[10]विभ्रमातुरभीतितः " ॥

पुलस्त्यः—" संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
सूतके मृतके चैव संध्याकर्म[11] न संत्यजेत् ॥
मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः " ।

---

१ क. घ. नोद्धृते । २ ख. °नन्ता शिवसं° । ३ ग. °न्नं सायं सं° । ४ ग. °षु खात° । ५ घ. ख्याताती° । ६ क. °हस्रं जा° । ७ ग. °मेनां च । ८ क. °संध्यात्वा° । ९ घ. °न् । प्रजामायुश्च । १० ग. °चसंभ्र° । ११ ख. संध्योपासित न ।

( ब्रह्मचारिप्रकरणम् १ )

यथाविधि प्राणानायम्य विधिवदापो हि ष्ठेति त्र्यृचेनाऽऽत्मानं संप्रोक्ष्य प्रत्यङ्मुखः सावित्रीं पूर्ववज्जपंस्तारकोदयं यावन्नद्यादावासीत[1]। उदयो दर्शनयोग्यता, उपासीतेत्यनुवृत्तौ शौनकः—" अर्धास्तमिते मण्डल आ नक्षत्रदर्शनात् " इति । अत्राग्निश्च मा मन्युश्चेत्यस्य, अग्निर्ऋषिः । अग्निमन्युमन्युपतयो देवताः[2]। प्रकृतिश्छन्दः । अपामूर्ध्वविक्षेपे विशेषो व्यासोक्तः—

" कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठेत्त्रिरूर्ध्वं संध्ययोः क्षिपेत् " ॥

मध्यंदिनसंध्यायाः समानमन्यत् । सायंसंध्याजपान्ते रात्र्युपस्थानम् । बौधायन आह—

" इमं म इति वारुणीभ्यां रात्रिमुपतिष्ठते" इति[3]। "इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः" इति ॥

शुनःशेप[4] ऋषिः । रात्रिर्देवता । पूर्वा[5] गायत्री, उत्तरा त्रिष्टुप् ॥ २४ ॥

प्रातःसंध्योपास्तिविधिमाह—

**संध्यां प्राक्प्रातरेवं हि तिष्ठेदा सूर्यदर्शनात् ॥**

प्राणायामप्रोक्षणगायत्रीजपा एवंशब्देन गृहीताः । प्राङ्मुखः सावित्रीं जपन्प्रातःसंध्यां सूर्यदर्शनकालं यावत्तिष्ठेत् । संध्यामिति " कालाध्वनोरत्यन्तसंयोगे " [ पा० सू० २-३-५ ] इति द्वितीया । तेन सकलसंध्याकालो जपेन व्यपनेयः । अत्र च " ॐपूर्वां गायत्रीं जपेत् " इतिश्रुतिविरोधपरिहारार्थं[6] जप एव प्राधान्येन विधेयः । स्थानासने तु तदङ्गतया । तेन जपन्नासीतेत्यासीनो जपेदित्यर्थः ॥

संवर्तः—" प्रातःसंध्यां सनक्षत्रामुपासीत यथाविधि[7] ।
सादित्यां पश्चिमां संध्यामर्धास्तमितभास्करात् " ॥

योगयाज्ञवल्क्यः—" ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् ।
संध्या मुहूर्तमात्रं तु ह्रासे वृद्धौ तु सा स्मृता ॥
पूर्वा संध्या तु गायत्री सावित्री मध्यमा स्मृता ।
या भवेत्पश्चिमा संध्या सा विज्ञेया सरस्वती ॥
*रक्ता भवति गायत्री सावित्री श्वेतवर्णिका ।

* इत आरभ्य द्विजेनाऽऽत्मविदा सदेत्यन्तग्रन्थः ख पुस्तके न विद्यते ।

१ ग. °दयाद्याव° । २ घ. °वता । प्र° । ३ क. घ. °ति । शु° । ४ ग. °शेफ ऋ° । ५ क. घ. °र्वार्धा गा° । ६ ग. °रार्थे ज° । ७ क. ग. विधिः । सा° । ८ क. ग. पूर्वसं° ।

योगयाज्ञवल्क्यः–" ध्यायेत मनसा मन्त्रं जिह्वोष्ठौ न च चालयेत् ।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत् ॥
न[1] चङ्क्रमन्न च हसन्न पार्श्वमवलोकयन् ।
नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पदमाक्रम्य न चैव हि तथाऽऽसनम् ।
न चासमाहितमना न च सं[2]श्रावयञ्जपेत् ॥
न क्लिन्नवासाः स्थलगो जपादीनाचरेद्बुधः ।
व्रतादृते नाऽऽर्द्रवासा नैकवासाः समाचरेत् ॥
न जीर्णेन न नीलेन परिक्लिष्टेन वा जपेत् ।
यक्षराक्षसभूतानि सिद्धविद्याधरा गणाः ॥
हरन्ति प्रसभं यस्मात्तस्माद्गुप्तं तु कारयेत् ।
जपकाले न भाषेत व्रतहोमादिके तथा ॥
एतेष्वेवावसक्तस्तु यद्यागच्छेद्द्विजोत्तमः ।
अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत् " ॥

अवसक्तोऽवहितः ।

" तूष्णीमासीत च जपंश्चण्डालपतितादिकान् ।
दृष्ट्वा तान्वार्युपस्पृश्याऽऽभाष्य स्नात्वा पुनर्जपेत् " ॥

उपस्पृश्याऽऽचम्य । आभाष्य संभाष्येत्यर्थः ।

" आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान्मन्त्रान्यथोत्साहं पावमानीश्च शक्तितः ॥
उपांशुजपयुक्तस्य शंस्याच्छतगुणो भवेत् ।
साहस्रो मानसः प्रोक्तो यस्माद्ध्यानसमो हि सः " ॥

शंस्य उच्चैर्जपः ।

" ओष्ठस्पन्दनमात्रं तु यत्रोपांशु तथाऽ[3]ध्वनि ।
कृत्वा जिह्वां निर्विकल्पां चिन्तयेत्तद्धि मानसम् ॥
नोच्चैर्जपं बुधः कुर्यात्सावित्र्यास्तु विशेषतः " इति ॥ २३ ॥

सायंसंध्योपास्तिमाह—

**प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु ॥**
**जपन्नासीत सावित्रीं प्रत्यगा तारकोदयात् ॥ २४ ॥**

---

१ ग. न च क्रम° । २ क. घ. संस्राव° । ३ ग. °ध्वनिः । जिह्वां कृत्वा नि° ।

ॐकारं पूर्वमुच्चार्य भूर्भुवः स्वस्तथैव च ।
गायत्री प्रणवश्चान्ते जपो ह्येवमुदाहृतः " ॥

यमः—" सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं तु जपेन्नित्यं सर्वपापप्रणाशिनीम् " ॥

कुर्यादित्यनुवृत्तौ योगयाज्ञवल्क्यः—

" गृहे त्वेकगुणं जप्यं नद्यां तु त्रिगुणं स्मृतम् ।
गवां गोष्ठे शतगुणमग्न्यगारे शताधिकम् ॥
सिद्धक्षेत्रेषु सर्वेषु देवतायाश्च संनिधौ ।
सहस्रशतकोटीनामनन्तं शिवसंनिधौ " ॥

तथा—" तिष्ठंश्चेद्वीक्ष्य(क्ष)माणोऽर्कं जपं कुर्यात्समाहितः ।
अन्यथा प्राङ्मुखं कुर्याद्वक्ष्यमाणक्रमेण तु ॥
प्राक्कूलेषु कुशेष्वेवमासीनश्चाऽऽसने शुभे ।
नात्युच्छ्रिते नातिनीचे दर्भपाणिः सुसंयतः ॥
स्फटिकेन्द्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः ।
अक्षमाला हि कर्तव्या उत्तमा ह्युत्तरोत्तरा ॥
कोट्याऽधिका भवेद्वृद्धिरक्षमाला विशेषतः ।
जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठा परा परा ॥
अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ।
जप एव हि कर्तव्य एकाग्रमनसा सदा " ॥

शङ्खः—

" कुशबृस्यां समासीनः कुशोत्तरायां वा हस्तोपयामैर्वा कुशपवित्रपाणिरुदङ्मुखः सूर्याभिमुखो वाऽक्षमालामादाय देवतां ध्यायञ्जपं कुर्यात् " ।

बृसी, आसनम् । कुशोत्तरा कुशच्छन्ना । सुवर्णमणिमुक्ताफलस्फटिकपद्माक्षेन्द्राक्षपुत्रजीवकानामन्यतमामक्षमालां कुर्यात् । कुशग्रन्थिकृतां वा हस्तोपयामैर्वा ।

" न तथाऽन्येन जप्येन पापं निर्दहति द्विजः ।
यथा सावित्रीजप्येन सर्वपापैः प्रमुच्यते " ।

---

१ ख. ग. °कारः पू° । २ ख. ग. °मग्न्यागा° । ३ क. ग. घ. °न्तं विष्णुसं° । ४ क. घ. °त्समन्ततः । ५ क. घ. °तः । स्फाटि° । ६ क. °ग्रगतमानसः । श° । घ. °ग्रगतमानसैः । श° । ७ ख. ग. वा कु° ।

तथा—" प्राणायामत्रयं कार्यं संध्यास्वथ तिसृष्वपि ।
प्राणस्याऽऽयमनं कृत्वा आच(चा)मेत्प्रयतोऽपि सन्[1] ॥
आन्तरं स्वि(खि)द्यते यस्मात्तस्मादाचमनं स्मृतम् ।
सायमग्निश्च मेत्युक्त्वा प्रातः सूर्यश्च मा पिबेत् ॥
आपः पुनन्तु मध्याह्ने ततश्चाऽऽचमनं चरेत् " ॥

आपः पुनन्त्विति सिन्धुद्वीप ऋषिः[2] । ब्रह्मणस्पतिर्देवता । अनुष्टुप्छन्दः । सूर्यश्च मेति अग्निर्ऋषिः । सूर्य[3][मन्यु]मन्युपतयो देवताः । अग्निश्च मेति विष्णुर्ऋषिः ।अग्निर्देवता[4] ।

" स्पृष्ट्वा चाभिष्टुतं तोयं मूर्ध्नि ब्रह्ममुखेन तु ।
आपो हि ष्ठेति सूक्तेन दर्भैर्मार्जनमाचरेत् " ॥

प्रणवो व्याहृतिः[5] सावित्रीति ब्रह्ममुखम् । तेन तोयं स्पृष्ट्वा तेन तोयेन मूर्ध्नि दर्भैर्मार्जनं चाऽऽपो हि ष्ठेति सूक्तेन कुर्यादित्यर्थः । आपो हि ष्ठेत्यस्य सूक्तस्याऽऽम्बरीषः सिन्धुद्वीप ऋषिः । आपो देवता । नवम्या उत्तराव(र्ध)र्चस्याग्निः । आद्यानां सप्तानां गायत्रीछन्दः, उत्तरयोरनुष्टुप् । मार्जने विनियोगः ।

कात्यायनः—" उत्थायार्कं प्रति क्षिपेत्त्रिकेणाञ्जलिमम्भसः " ।

प्रणवो व्याहृतयः सावित्रीति त्रिकम् । अथ स्वशाखाधीतैः सूर्यदेवत्यैर्मन्त्रैरादित्यमुपतिष्ठेत । ततः सावित्रीं जपेत् ।

तत्र व्यासः—" आवाहयेत्तु गायत्रीं सर्वपापप्रणाशिनीम् ।
आगच्छ वरदे देवि जप्ये[6] मे संनिधौ भव ॥
गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता " ॥

योगयाज्ञवल्क्यः—"श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलंकारैश्च भूषिता ॥
आदित्यमण्डलान्तःस्था ब्रह्मलोकनिवासिनी ।
अक्षसूत्रधरा देवी पद्मासनगता[7] शुभा ।
आवाह्य यजमानो हि ओजोऽसीति विधानतः ।
आवाह्य पूजयित्वा तु नमस्कृत्य विसर्जयेत् ॥

---

१ क. °न् । सा° । घ. °न् । अन्त° । २ क. ग. घ. °षिः । ब्राह्म° । ३ क. घ. सूर्यो मन्येप° । ४ ख. ग. °वता । अ° । ५ क. घ. °हृतित्रयं सावित्रीं चेति । ६ ग. जपे । ७ ख. °नसमागता । आ° ।

तेनोपात्तमतस्तस्य ब्रह्माऽऽर्षं च स्वयंभुवः ।
गायत्री च भवेच्छन्दश्चाग्निर्दैवतमुच्यते ॥
आदौ सर्वत्र युञ्जीत विविधेष्वे[1]ककर्मसु ।
विनियोगः समुद्दिष्टः श्वेतवर्ण उदाहृतः ॥
व्याहृतीनां च सर्वासामृषिर्ब्रह्मा प्रकीर्तितः ।
ततश्छन्दांसि[2] यान्यासां तानि सम्यक्प्रदर्शयेत् ॥
गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च ।
इ[3]न्द्रश्च विश्वे देवाश्च देवताः समुदाहृता[4]ः ॥
प्राणायामप्रयोगे च विनियोग उदाहृतः " ।

तथा—" सविता देवता यस्या मुखमग्निस्त्रिपा[5]त्तथा ।
विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते ॥
विनियोग उपनये प्राणायामे तथैव च ।
गायत्री वा इदं सर्वं ब्राह्मणं ब्राह्मणानि तु ॥
वेदेष्वन्यान्यनेकानि गायत्र्याः कीर्तितानि तु ।
ओमापो ज्योतिरित्येष मन्त्रो यस्तु प्रकीर्त्यते ॥
तस्य प्रजापतेरार्षं यजुश्छन्दोविवर्जितम् ।
ब्रह्माऽग्निर्वायुः सूर्यश्च देवताः समुदाहृताः ।
प्राणस्याऽऽयमने चैव विनियोग उदाहृतः " ॥

**पूरककुम्भकरेचकैः प्राणायामस्त्रिलक्षणो ज्ञेयः ।**

यथा—" नासिकाकृष्ट उच्छ्वा[6]सो ह्यन्तः पूरक उच्यते ॥
कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः ।
नीलोत्पलश्यामनिभं नाभिदेशे प्रतिष्ठितम् ॥
चतुर्भुजं महा[7]त्मानं पूरकेणैव चिन्तयेत् ।
कुम्भकेन हृदि स्थाने ध्यायेच्च कमलासनम् ॥
ब्रह्माणं गौरसर्वाङ्गं चतुर्वक्त्रं पितामहम् ॥
रेचकेनेश्वरं विद्याल्ललाटस्थं महेश्वरम् ।
शुद्धस्फटिकसंकाशं निर्मलं पापनाशनम् " ॥

---

१ ख. ग. °ष्वेव क° । २ क. घ. °सि न्यासानि ता° । ३ क. घ. इन्द्राश्च विश्वदे° । ४ क. घ. °ताः । त° । ५ ख. ग. °पाच या । वि° । ६ ख. घ. °सो हृतः पू° । ७ ग. °हाकायं पू° ।

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
सव्यापसव्यौ कुर्वीत सपवित्रौ[1] करौ बुधः ॥
ग्रन्थिर्यस्य पवित्रस्य न तेनाऽऽचमनं[2] चरेत् ।
आर्षं छन्दो दैवतं च विनियोगविधिं स्मरेत् ॥
स्मृत्वोंकारं च गायत्रीं निबध्नीयाच्छिखां ततः ।
पुनराचम्य हृदयं नाभिं[3] स्कन्धौ च संस्पृशेत् " ॥

तथा—" प्रणवाद्या व्याहृतीश्च सावित्रीं च जपेत्ततः ।
तयाऽभिमन्त्र्य[4] सलिलं संध्योपासनमाचरेत्[5] " ॥ २२ ॥

प्राणायामस्वरूपमाह—

**गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ॥
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ २३ ॥**

तत्सवितुरिति गायत्री । अस्या एव तैत्तिरीयकारण्यके प्राणायाममन्त्रत्वेनाऽऽम्नानात् । ॐ आपो ज्योतिरित्यादिकेन शिरसा सार्धं व्याहृतिपूर्विकां प्रतिप्रणवसंयुक्तां त्रिर्जपेत् । एष प्राणसंयमः प्राणायाम इत्यर्थः । भूराद्या व्याहृतयः सप्त सत्यान्ताः पूर्वा यस्याः सा तत्पूर्विका । प्रतिमन्त्रं प्रणवः प्रतिप्रणवः । मन्त्राश्च व्याहृतयः सावित्री शिरश्च । शिरसोऽन्तो[6] यः प्रणवः स शिरोन्तर्मन्त्रान्तर्गत एव ।

संवर्तः—" प्रणवेन तु संयुक्ता व्याहृतीः सप्त नित्यशः ।
सावित्रीं शिरसा सार्धं मनसा त्रिः पठेद्द्विजः " ॥

मनुः—" सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः[7] प्राणायामः स उच्यते " ॥

बृहस्पतिः—" बद्ध्वाऽऽसनं नियम्य स्वं स्मृत्वा चाऽऽर्षादिकं तथा ।
संनिमीलितदृङ्मौनी[8] प्राणायामं समभ्यसेत् " ॥

योगयाज्ञवल्क्यः—" ओंकारः[9] परमं ब्रह्म सर्वमन्त्रेषु नायकः ।
प्रजापतेर्मुखोत्पन्नस्तपःसिद्धस्य वै पुरा ॥

---

१ क. °वित्रकौ° । २ ख. °नं स्मृतम् । आ° । ३ क. °भिं संधौ । ४ क. ग. घ. तथाऽभि° । ५ क. ख. घ. °त् । आ° । ६ ग. घ. °सोऽन्ते यः । ७ ख. °यत्तप्रा° । ८ ग. °यम्यासुं स्मृ° । ९ क. घ. °कारं प° ।

कार्यम् । ब्रह्मचारिप्रकरणे विष्णुः—" अप्सु दण्डव[1]न्मज्जनम् " ।

कात्यायनः—" रक्षार्थं वारिणाऽऽत्मानं परिक्षिप्य समन्ततः ।
शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः " ॥

तत्राऽऽपोहिष्ठीयानामार्षादिकमाह योगयाज्ञवल्क्यः—
" सिन्धुद्वीपो भवेदार्षं गायत्रं छन्द एव च ।
आपश्च दैवतं प्रोक्तं विनियोगश्च मार्जने " ॥

व्यासः—" विप्रुषोऽष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय जित् " ।

आपो हि ष्ठेति तृ(त्र्यृ)चेन प्रतिपा[2]दं मार्जनं कार्यम् । तत्र यस्य क्षयाय जिन्वथेत्यधो भुवि क्षिपेत् ।

तथा—" मार्जनं जलमध्ये तु प्राणाया[3]मो यतस्ततः " ॥

जले वा स्थले वेत्यर्थः । अथ पवित्रकरणम्, तत्र कात्यायनः—
" अनन्[4]तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥
एतदेव कपिञ्जल्या लक्षणं समुदाहृतम् ।
आज्यस्[5]योत्पवनार्थं यत्तदप्येतावदेव तु ॥
एतत्प्रमा[6]णामेवैके कौशीमेवा[7]ऽऽर्द्रमञ्जरीम् ।
शुष्कां वा शीर्णकुसुमां पिञ्जलीं परिचक्षते " ॥

मार्कण्डेयः—" चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
ए[8]कै[9]कन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् " ॥
त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौ[10]ष्टिकं तथा ।
पि[11]ञ्जलैः सप्तभि[12]ः स[13]र्वं दैवं पित्र्यं विधीयते ॥
नीवीमध्ये तु ये दर्भा ब्रह्मसूत्रे च ये कृताः ।
पवित्रांस्तान्विजानीयाद्यथा का[14]यस्तथा कुशः ॥
जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥

---

१ क. ग. घ. °वन्मार्जन° । २ ख. °पादितं मा° । ३ क घ. °यामं य° । ४ ख. ग. °न्तगर्भि । ५ क. ग. घ. °स्योत्पाव° । ६ क. घ. °माणमे° । ७ ख. °वान्द्रम° । ८ ग. एकेन न्यू° । ९ ख. °कैके न्यू° । १० क. घ. °ष्टिके त° । ११ ग. पिञ्जूलैः । १२ ख. °भिः पूर्वं दैवपि° । १३ क. सर्वदैवपित्र्ये वि° । घ. सर्वदैवपि° । १४ क. काशस्त° ।

न बहिर्जानुर्न वेष्टितशिरा न बद्धकक्षो न त्वरमाणो[१] नायज्ञोपवीतो न प्रसारितपादः शब्दमकुर्वंस्त्रिरपो हृदयंगमाः पिबेत् " ॥

देवलः—" सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा द्विजः ।
उष्णीषी वाऽपि नाऽऽचामेद्वस्त्रेणाऽऽवेष्ट्य वा शिरः " ॥

आपस्तम्बः—" न वर्षधारास्वाचामेत् " ।

यमः—" अपः करनखस्पृष्टा य आच(चा)मति वै द्विजः ।
सुरां पिबति स व्यक्तं यमस्य वचनं यथा " ॥

तथा च ब्रह्माण्डपुराणात्—

" कण्ठं शिरो वा प्रावृत्य रथ्यापणगतोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् " ॥

मरीचिः—" न पादुकास्थो नाचित्तः शुचिः प्रयतमानसः ।
उपस्पृश्य द्विजो नित्यं शुद्ध एव भवेत्तु सः ॥
भुक्त्वाऽऽसनस्थोऽप्याचामेन्नान्यकाले कदाचन " ।

प्रचेताः—" नान्तर्वासा[२] न निर्वासा नाश्रु कुर्वन्नाचामेत्[३] " ।

आपस्तम्बः—" नाग्न्युदकशेषेण वृथा कर्माणि कुर्वीत । आच(चा)मेद्वा भूमौ[४] स्रावयित्वा वाऽऽच(चा)मेत् " ।

विष्णुः—" न स्पृशन्न हसञ्जल्पन्न श्वचाण्डालदर्शने ।
नापवित्रकरः कश्चिद्ब्राह्मणोऽप उपस्पृशेत् ॥
अपूतं तस्य तत्सर्वं भवत्याचमनेन[५] तथा " ।

यमः—" वामहस्तस्थिते दर्भे दक्षिणेनाऽऽचमेद्यदि ।
रक्तं तु तद्भवेत्तोयं पीत्वा चान्द्रायणं चरेत् " ॥ २० ॥ २१ ॥

उपनीतस्य क्रमप्राप्तां मध्यंदिनसंध्यां स्नानादिसहितामाह—

**स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ॥**
**सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ २२ ॥**

स्नानमाप्लावनम् , अब्दैवतैः, आपो हि ष्ठेत्येवमादिभिर्मन्त्रैः । मार्जनं स्वशिरःप्रोक्षणं, प्राणायामः, सूर्योपस्थानं गायत्रीजपश्चेति प्रत्यहं मध्यंदिने

---

१ क. ग. घ. °णोऽयज्ञोपवीतेन प्र° । २ क. घ. नानन्त° । ३ क. ग. घ. °न्नाचमे° । ४ क. ग. घ. °मौ श्राव° । ५ क. ग. घ °मनं त° ।

कनिष्ठाङ्गुष्ठयोः* श्रोत्रं नाभिमङ्गुष्ठकेन च[1] ।
तलेन हृदयं स्पृष्ट्वा सर्वाभिः शिर एव तु ।
बाहू चाग्रेण संस्पृश्य ततः शुद्धो भवेन्नरः " ॥

अङ्गुष्ठा[2]नन्तरा देशिनी । अनामिका, उपकनिष्ठिका[3] । तलं पाणिमध्यम् ।

**वैयाघ्रपद्यः**—" स्रोतःस्थानानि सर्वाणि स्पृष्ट्वा स्पृष्ट्वा विशुध्यति ।
आच(चा)मन्ब्राह्मणो नित्यमित्याह भगवान्भृगुः ॥
अङ्गुष्ठेन स्पृशेन्नाभिं संयुक्तेन कनिष्ठया ।
उरस्तलेना[4]ङ्गुलिभिः शिरः पश्चात्तु पञ्चभिः ॥
अंसौ स्पृष्ट्वा कराग्रेण तोयं स्पृष्ट्वा समाहितः ।
संस्मृत्य पद्मनाभं च विप्रः सम्यग्विशुध्यति " ॥

**भविष्यत्पुराणे** " अङ्गुष्ठोऽग्निर्महाबाहो प्रोक्तो वायुः प्रदेशिनी ।
अनामिका तथा सूर्यः कनिष्ठा चन्द्रमाः स्मृतः[5] ॥
प्रजापतिर्मध्यमा तु ज्ञेया[6] भरतसत्तम " ।

**यमः**—" तावन्नोपस्पृशेद्विद्वान्यावद्वामेन संस्पृशेत् " ॥

**जलमिति शेषः ।**

" वामे हि द्वादशाऽऽदित्या वरुणस्त्रिदशेश्वरः " ।

**व्यासः**—" अनुध्दृताभिराचामेत्कामं तिष्ठन्नपि द्विजः ।
आतुर[7]श्चेच्छयानोऽपि पश्यन्भीतो दिशस्तथा " ॥

**स्मृत्यन्तरम्**—" ताम्राश्मनारिकेला[8]ब्जवेणुकालाबुचर्मभिः ।
स्वहस्तेनापि चाऽऽचामेत्सर्वदा शुचिरेव सः " ॥

**न केवलमनिन्दितहस्तेनेत्यपिशब्दार्थः ।**

**बौधायनः**—

" पादप्रक्षालनाच्छेषेण न[9] चाऽऽचामेद्यद्याचामेद्भूमौ स्रावयित्वाऽऽचामेत् । न सबुद्बुदाभिर्न सफेनाभिर्नोष्णाभिर्न क्षाराभिर्न विवर्णाभिर्न कलुषाभिः । न हसन्न जल्पन्न[10] तिष्ठन्न विलोकयन्न प्रह्वो न प्रणतो न मुक्तशिखो नाबद्धकच्छो

* अत्र तृतीयार्थे षष्ठी बोद्धव्या ।

१ ग. च । भूतलं हृदये स्मृत्वा ततः° । २ क. ग. घ. °ष्ठा प्रदे° । ३ क. ग. घ. °निष्ठा पा° । ४ ख. ग. °रस्थले° । ५ ग. स्मृता । ६ क. घ. ज्ञेयो भ° । ७ क. आतर° । ख. आत्तर° । ८ क. ग. घ. °नालिकेनाब्ज° । ९ क. ग घ. न चाऽऽचमेद्भूमौ पूजयित्वाऽऽचमे° । ख. नचाऽऽचामेद्य° । १० क ग. घ. °न्न वि° ।

देवलः—" द्विस्तथाऽङ्गुष्ठमूलेन परिमृज्यात्ततो मुखम् ।
नाग्राङ्गुल्या न पृष्ठैर्वा परिमृज्यात्कथंचन " ॥

**अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ २० ॥**

**हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ॥**

**शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ २१ ॥**

अद्भिरविकृताभिः फेनबुद्बुदरहिताभिर्हृदयकण्ठतालुगामिनीभिर्यथासंख्यं ब्राह्मणक्षत्रियवैश्याः शुध्यन्ति । स्त्रीशूद्रौ तु मुखस्यान्तेनौष्ठद्वयेनैकवारं स्पृष्टाभिः । +तथा चाऽऽचमनीयं यथा हृदयंगमा भवन्ति ।

दक्षः—" प्रक्षाल्य हस्तौ पादौ च त्रिः पिबेदम्बु वीक्षितम् ।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् " ॥

अलोमकौ चौष्ठौ संवृत्येत्यर्थः ।

यमः—" रात्रावनीक्षितेनैव शुद्धिरुक्ता मनीषिणाम् ।
उदकेनाऽऽतुराणां च तथोष्णेनोष्णपायिनाम् " ॥

उष्णपायिनो दीक्षिताः ।

पुराणम्—" दक्षिणं तु करं कृत्वा गोकर्णाकृतिवत्पुनः ।
त्रिः पिबेदीक्षितं तोयमास्यं द्विः परिमार्जयेत् ॥
आदौ शिरस्तथाऽभ्युक्ष्य तिसृभिर्मुखमालभेत् ।
यथोक्तविधिना खानि ततः स्पृष्ट्वा तु शुध्यति " ॥

तिसृभिरङ्गुलिभिरित्यर्थः ।

मनुः—" त्रिराच(चा)मेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् ।
खानि चोपस्पृशेदद्भिरात्मानं शिर एव च " ॥

दक्षः—" मध्यमाभिर्मुखं पूर्वं तिसृभिः समुपस्पृशेत् ।
अङ्गुष्ठदेशिनीभ्यां च नासिके तदनन्तरम् ॥
अङ्गुष्ठानामिकाभ्यां च चक्षुषी समुपस्पृशेत् ।

---

+ तथाऽऽचमनीयं यथेति पाठो युक्त इति भाति ।

---

१ क. °हृद्दृष्टा° । घ. °कृन्मृष्टा° । २ ख. °गाभिर्य° । ३ क. ग. °नैव करं । ४ क. °म् । तदेकेनान्तरा° । ग. घ. °म् । तदेकेनाऽऽतुराणां च तथोष्णं नो° ।

( ब्रह्मचारिप्रकरणम् १)

अथ आच(चा)मेदित्यनुवृत्तौ वसिष्ठः—

" प्रदरादपि या गोस्तर्पणसमर्थाः ।
न गन्धरसदुष्टाभिर्याश्च स्युरशुभागमाः " ॥

प्रदरो गर्तः ।

प्रचेताः—" अनुष्णैर्हीनशीताभिः पूताभिर्वस्त्रचक्षुषा ।
हृद्गमाभिरफेनाभिस्त्रिश्चतुर्वाऽद्भिराचमेत् " ॥ १८ ॥

ब्रह्मतीर्थस्य लक्षणमाह प्रसङ्गात्तीर्थान्तराणां च—

**कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ॥**
**प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ १९ ॥**

कनिष्ठामूलं प्रजापतितीर्थम् । प्रदेशिनीमूलं पितृतीर्थम् । अङ्गुष्ठमूलं ब्रह्मतीर्थम् । हस्ताग्रं देवतीर्थं च जानीयात् । कनिष्ठा ह्रस्वाऽङ्गुलिः । देशिनी तर्जनी । अङ्गुष्ठः प्रसिद्धः ।

हारीतः—

" ब्राह्मेण तीर्थेन चाऽऽच(चा)मेत् । आवपनहोमतर्पणानि प्राजापत्येन कुर्यात् । मार्जनाचमनबलिकर्मभोजनानि दैवेन । पित्र्याणि पित्र्येण । प्रतिग्रहमाग्नेयेन " आग्नेयं पाणिमध्ये* । आवपनं निर्वापः । केशानां मार्जनं, न प्रोक्षणम् ।

मार्कण्डेयपुराणात्—" नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् ।
प्राजापत्येन तीर्थेन यच्च किंचित्प्रजापतेः " ॥

भविष्यपुराणे—" कमण्डलूपस्पर्शनं दधिप्राशनमेव च ।
सोमतीर्थेन राजेन्द्र सदा कुर्याद्विचक्षणः ॥
लाजहोमं तथा दोहं प्राजापत्येन कारयेत् " ।

योगयाज्ञवल्क्यः—" अङ्गुष्ठमूले ब्राह्मं स्याद्दैवं त्वङ्गुलिमूर्धनि ।
प्राजापत्यं तु मूले स्यान्मध्ये सौम्यं प्रतिष्ठितम् " ॥

मध्ये तलमध्य इत्यर्थः ॥ १९ ॥

**त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्[3] ॥**

त्रीन्वारानपः पीत्वा वारद्वयं मुखं संमृज्य च्छिद्राण्यद्भिः संस्पृशेत् ।

---

* पाणिमध्यामिति युक्तः पाठः ।

---

१ क. ग. घ. °ष्णफेन° । २ ख. ग. °र्वाभिरा° । ३ क. °त् । दे° ।

केशान्नीवीमधःकायमस्पृशन्धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत्करम् ॥
इत्येवमद्भिराजानु प्रक्षाल्य चरणौ पृथक् ।
हस्तावा मणिबन्धाभ्यां पश्चादासीत संयतः[1] ॥
अथाम्बु प्रथमात्तीर्थाद्दक्षिणात्रिः पिबेत्समम् ।
अशब्दमनवस्रावमबहिर्जान्वबुद्बुदम् " ॥

न हलन्न चलन्। मणिबन्धैः[2], ब्रह्मतीर्थमूलम्। प्रथमं तीर्थं[3] ब्राह्मतीर्थं, दक्षिणाद्दक्षिणात्करादित्यर्थः।

भारद्वाजः—" संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्ताङ्गुष्ठकनिष्ठे तु शेषेणाऽऽचमनं चरेत् ॥
माषमज्जनमात्रास्तु[4] संगृह्य त्रिः पिबेदपः ।
आयतं पूर्वतः कृत्वा गोकर्णाकृतिवत्करम् ॥ "

हारीतः—" आर्द्रवासाः स्थलस्थस्तु यद्याचामेन्नराधमः[5] ।
वस्त्रनिश्चोतनं तस्य देहात्प्रेताः पिबन्ति हि ॥
कुर्यादाचमनं नित्यं प्राङ्मुखो वाऽप्युदङ्मुखः ।
जलस्थो वा स्थलस्थो वा द्वयोर्वा समवास्थितः ॥
जलस्थो जलकार्येषु स्थलस्थः स्थलकर्मसु ।
उभयोस्तूभयस्थस्तु कर्मस्वधिकृतो भवेत् " ॥

गोवि(भि)लः—" जानुभ्यामूर्ध्वमाचम्य जले तिष्ठन्न दुष्यति[6] ।
ताभ्यामधस्तथा तिष्ठन्नाच(चा)मेन्न विचक्षणः " ॥

लिखितः—

" उद्धृत्य परीक्षिताभिरक्षाराभिरशृताभिरबुद्बुदाभिरशूद्राशुच्येकपाण्यावर्जिताभिराच(चा)मेत् " ।

अद्भिरिति शेषः।

आपस्तम्बः—

" भूमिगतास्वप्स्वाचम्य प्रयतो भवति । यं वा पूयते शुचाऽऽचमयेत् । न वर्षधारास्वाच(चा)मेत् । न प्रदरोदके " ।

---

१ क. संयुतः । २ ख. °न्धः, ब्राह्म° । ३ क. °र्थं वा ब्रह्म° । ४ क. ग. घ. °मात्रस्तु । ५ क. ग. घ. °द्याचमे° । ६ ग. °ति नाभ्या° । ७ क. °रसृता° । ८ ख. °शुच्येक° । ९ ग. घ. भवेदिति यं वा प्रयता आचमेत् । न व° ।

ब्रह्मपुराणात्[1]—“ आद्यन्तयोस्तु शौचानामद्भिः प्रक्षालनं स्मृतम् ।
अशेषलेपनाशाय भावशुद्ध्य[2] एव च ” ॥

आदिपुराणात्—“ स्त्रीशूद्रयोरर्धमानं प्रोक्तं शौचं मनीषिभिः ।
दिवाशौचस्य निश्यर्धं पथि पादो विधीयते ॥
आर्तः कुर्याद्यथाशक्ति शक्तः कुर्याद्यथोदितम् ” ॥ १७ ॥

**अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः ॥**
**प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥**

अनुपहते देशे प्राङ्मुख उदङ्मुखो वोपविश्यान्तर्जानु पाणिना ब्राह्मेण तीर्थेन द्विजन्मा सर्वदा[3]ऽऽचामेत् ।

गौतमः—
“ शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्या मणिबन्धनात्पाणी प्रक्षाल्य वाग्यतो हृदये स्पृशंस्त्रिचतुर्था[4] अप आचामेत् । पादौ चाभ्युक्षेत् । खानि चोपस्पृशेत् । शीर्षण्यानि[5] मूर्धनि च दद्यात् ” ।

आच(चा)मेदित्यनुवृत्तौ स्मृत्यन्तरम्—
“ कूर्परान्तः करौ कृत्वा प्राङ्मुखो वाऽप्युदङ्मुखः ।
पार्ष्णी चासंस्पृशन्नद्भिः प्रकृतिस्थाभिरेव च[7] ” ॥

कूर्परे[8] जानुनी ।

वृद्धपराशरः-“कृत्वाऽथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिख आसीनो द्विज आचाममाचरेत्[9] ॥
कृत्वोपवीतं सव्येऽसे वाङ्मनःकायसंयतः ” ॥

देवलः—“ प्रथमं प्राङ्मुखं स्थित्वा पादौ प्रक्षालयेच्छनैः ।
उदङ्मुखो वा[10] दैवत्ये पैतृके दक्षिणामुखः ॥
शिखां बद्ध्वा वसित्वा द्वे निर्णिक्ते वाससी शुभे ।
तूष्णीं[11] भूत्वा समाधाय[12] न क्रुध्यन्न विलोकयन् ॥
न गच्छन्न शयानश्च न ह्वलन्न परामृशन् ।
न हसन्नैव जल्पंश्च नाऽऽत्मानं चैव वीक्षयन् ॥

---

१ ख. ब्रह्माण्डपु° । २ ख. ग. °शुद्धाय । ३ क. ग. °र्वमाचरेत् । गौ° । घ. °र्वमाचामे° । ४ ग. °तुर्धा अ° । ५ क. ग. घ. शीर्षाण्यानि च मूर्धनि द° । ६ ख. °राक्तः क° । ७ ख. सः । ८ ख. °र्परो जा° । ९ ख. ग. °चमेत् । कृ° । १० क. ग. घ. वा देवेभ्यः पै° । ११ क. ग. घ. °ष्णीं कृत्वा । १२ क. ख. °मादाय ।

एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।
मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं भवेत्" ॥

**मनुः**—" एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश ।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद्वनस्थानां यतीनां च चतुर्गुणम् " ॥

**दक्षः**—" अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्धेन प्रकीर्तिता " ॥

**एवमपि गन्धलेपक्षयो यदि न भवेत्तदा मृदोऽधिका ग्राह्याः परिमाणतः संख्यातो वा,**

**तत्राङ्गिराः**—" प्रथमा प्रसृतिर्ज्ञेया द्वितीया तु तदार्धिका ।
तृतीया मृत्तिका ज्ञेया त्रिभागकरपूर्णी[१] " ॥

**वसिष्ठः**—" पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ।

**शङ्खः**—" मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्तिते ।
एकस्मिन्विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश " ॥

**मेहनः(नं) पायुः । ब्रह्मचारिविषयमेतत् ।**

**हारीतः**—" दश सव्ये षट् पृष्ठे सप्तोभाभ्यां तिसृभिः पादौ प्रक्षालयेत् " ।

**वृद्धपाराशरः**—" उपविष्टस्तु विण्मूत्रं कर्तुं यस्तन्न विन्दति ।
स कुर्यादर्धशौचं तु स्वस्य शौचस्य सर्वदा " ॥

**[ * गन्धलेपक्षये सत्यप्यर्धमिता संख्या पूरणीया । ] यदाह दक्षः**—
" न्यूनाधिकं न कर्तव्यं शौचशुद्धिमभीप्सता ।
प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते " ॥

**यथाविधिकृते शौचे गन्धश्चेन्नापगच्छति । तत्राऽऽह मनुः**—
" यावन्नापैत्यमेध्याक्तो[२] गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि चाऽऽदेयं सर्वासु द्रव्यशुद्धिषु " ॥

**मनसस्तुष्ट्यभावे तु देवल आह**—
" यावन्न शुद्धिं मन्येत तावच्छौचं विधीयते " ।

---

* एतच्चिह्नान्तर्गतग्रन्थः क. ग. घ. पुस्तकेषु न विद्यते ।

---

१ क. घ. °र्णीम् । व° । २ क. ग. °वन्नापैत्यमेध्योत्थाद्गन्धले° । घ. °वन्नोपैत्यमध्योक्ताद्गन्धले- पाच त° ।

शौचमाह—

**गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ॥**
**गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ १७ ॥**

यथा[1] मलसंसर्गो न भवति तथा वामहस्तेन शिश्नं गृहीत्वोत्थाय देशान्तर उपविश्य कमण्डल्वादिनोद्धृतजलैर्मृद्भिश्च[2] गन्धलेपक्षयकरं मलगन्धहरं शौचमनलसः[3] कुर्यात् ।

भारद्वाजः—"अथापकृष्य विण्मूत्रं काष्ठलोष्टतृणादिना ।
शौचं यथार्थवत्कुर्याद्दृढं विधृतमेहनः" ॥

मेहनं लिङ्गम् ।

पुराणात्—" मार्जनं वामहस्तेन वीरणाद्यैरयज्ञियैः " ।

देवलः—" आ शौचान्नोत्सृजेच्छिश्नं प्रस्रावोच्चारयोः स्वयम्" ।

विवस्वान्—" रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते[4] ।
पश्चात्तु शोधयेत्तीर्थमन्यथा न शुचिर्भवेत् " ॥

यमः—" नाऽऽहरेन्मृत्तिकां[5] विप्रः कूलात्ससिकतात्तथा[6] ।
तथा वापीतडागेषु नाऽऽहरेद्वाह्यतो मृदम् ॥
आहरेज्जलमध्यात्तु परतो[7] मणिबन्धनात् " ।

पुराणात्[8]—" वल्मीकान्मूषिकोत्खातान्[9]मृदमन्तर्जलात्तथा ।
शौचावशिष्टां गेहाच्च नाऽऽदद्याल्लेपसंभवाम् ॥
[+अन्तः प्राण्यवपन्नां च हलोत्खातां[10] न कर्दमात् " ॥

वापीकूपादिव्यतिरिक्तविषयोऽन्तर्जलमृत्तिकाप्रतिषेधः ] ।

भारद्वाजः—" नोषरान्न श्मशानाच्च न मृदं मूषकस्थलात् ।
न मार्गान्न जलाज्जातु नाऽऽदद्यात्कुड्यतः क्वचित् " ॥

देवलः—" धर्मविद्दक्षिणं हस्तं नाधःशौचे[11] नियोजयेत् ।
तथैव वामहस्तेन नाभेरूर्ध्वं[12] न शोधयेत् " ॥

शातातपः—" आर्द्रामलकमात्रास्तु ग्रासा इन्दुक्षये स्मृताः ।
तथैवाऽऽहुतयः सर्वाः शौचार्थे चैव मृत्तिकाः ॥

---

+ एतच्चिह्नान्तर्गतग्रन्थः कुड्यतः क्वचिदित्यनन्तरं वर्तते क. पुस्तके ।

---

१ ख. °था मूत्रसंसक्तो न । २ क. ग. घ. °श्च मलगन्धलेपक्षयकरं शौ° । ३ क. घ. °लसं कु° । ४ ग. °द्धृतैः । प° । ५ क. °कां वप्रात्कूलान्नं सि° । ६ क. ग. घ. °था । वापीकूपत° । ७ क. परितो । ख. परे तां म° । ८ क. ख. ग. °त् । वाल्मी° । ९ ख. °न्मूषको° । १० ख. °लोत्पातां । ११ क. ग. घ. °चेन यो° । १२ ख. °धनम् । शा° ।

" त्रिभ्य एव तु वेदेभ्यः[1] पादं पादमदूदुहत्[2] ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी[3] प्रजापतिः " ॥

तथा—" अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भोरिति ब्रूयाद्विरामोऽस्त्विति चाऽऽरमेत् ॥
अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमतन्द्रितः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः " ॥

ब्रह्माञ्जलिं स एवाऽऽह—

" संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः " ॥ १९ ॥

शौचात्प्राचीनमाचारं[4] तावदाह—

**दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥**
**कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ १६ ॥**

अहनि संध्ययोश्चोदङ्मुखो रात्रौ दक्षिणामुखो वाम(दक्षिण)कर्णारोपितयज्ञोपवीतो मूत्रपुरीषावुत्सृजेत् ।

मनुः—" तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्टं तृणानि वा ।
नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः " ॥

काष्ठादिभिर्भूमिमन्तर्धाय मलमुत्सृजेदित्यर्थः । संवीताङ्गः प्रावृताङ्गः । अवगुण्ठितः प्रावृतशिराः ।

यमः—" शिरः प्रावृत्य कुर्वीत शकृन्मूत्रविसर्जनम् ।
अयज्ञियैरनार्द्रैश्च तृणैराच्छाद्य मेदिनीम् ॥
प्रत्यङ्मुखस्तु पूर्वाह्णेऽपराह्णे प्राङ्मुखस्तथा ।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः " ॥

मनुः—" छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधभयेषु[5] च " ॥

अङ्गिराः—" उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम् ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन[6] ष्ठीवनोच्छ्वासवर्जितः ।
कुर्यान्मूत्रपुरीषे च शुचौ देशे समाहितः " ॥ १६ ॥

---

१ क. देवेभ्यः । घ. विप्रेभ्यः । २ क. घ. °त् । उदित्यृ° । ३ क. घ. परं चेष्टे प्र° । ४ क. ग. घ. °चादिप्रार्चानाचा° । ५ क. घ. °त्प्राणाबाधाभ° । ६ ख. °न निष्ठीवोच्छ्वा° ।

नादि कुर्यादिति गमयति। तस्य योग्यताविरहे चान्य आचार्यः स्यात्। उपनयनेन च शिष्यस्याऽऽचार्यं प्रति संबन्धविशेषात्मिका प्रत्यासत्तिः क्रियते । न तु देशसंनिकर्षात्मिकैव। उपनेतृगुणानाहाऽऽपस्तम्बः[1]—

"तमसो वा एष तमः प्रविशति यदविद्वानुपनयते[2] यश्चाविद्वानिति[3] ब्राह्मणानाम्। तस्मादभिजनविद्यासमुपेतं समाहितं संस्कर्तारमीप्सेत[4]"

यश्चाविद्वानुपनयते[5] सोऽपि[6] तमः प्रविशतीत्यर्थः। गायत्र्यादिप्रधानं चोपनयनम्। यदाह कात्यायनः—

"गायत्र्या ब्राह्मणमुपनयीत[7] त्रिष्टुभा राजन्यम्। जगत्या वैश्यं सर्वेषां वा गायत्रीम्"

अनुब्रूयादिति शेषः।

लौगाक्षिः—

"तत्सवितुर्वरेण्यमिति ब्राह्मणस्य। तां सवितुरिति राजन्यस्य। विश्वा रूपाणीति वैश्यस्य। ॐ भूर्भुवः स्वरित्युक्त्वा तत्सवितुर्वरेण्यमिति सावित्रीं त्रिराह[8] पच्छोऽर्धर्चशः सर्वामन्ततः* "

महाव्याहृतिसंख्यामाह मनुः—

"ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव सावित्री विज्ञेयं[9] ब्रह्मणो मुखम्"॥

मुखमारम्भः। ततश्च न[10] महाव्याहृतय एवाध्यापनारम्भे प्रयोक्तव्याः। किं तु प्रणवो गायत्री च। एतच्च प्रथमाध्यापन[11]मारम्भे न त्वहरहः। मुखमिति व्यपदेशात्।

प्रणवमहाव्याहृतित्रिकं च स्वरूपतो मनुराह—

"अकारं चाप्युकारं च मकारं च प्रजापतिः।
वेदत्रयान्निरवहद्[12]भूर्भुवः स्वरितीति च"॥

गायत्रीमपि विशेषत आह—

---

* एतदनन्तरं ख. पुस्तकातिरिक्तपुस्तकेषु अतिरिक्तोऽयं ग्रन्थः—ॐ तां सवितुर्वरेण्यस्य चित्रामाऽहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां पयसा महीं गाम्। ॐ विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे। वि नाकमक्षत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति" इति।

---

१ क. °म्बः–उपयामो वा। ग. घ. °म्बः। उपवासो। २ क. °ते। यश्चाविद्वानु°। ३ ग. यश्च विद्वानिति ब्राह्मणम्। त°। घ. यच्च विद्वानिति ब्राह्मणम्। त°। ४ ग. घ. °रमभीप्से°। ५ ख. यच्चावि°। ६ क. ग. घ. °पि चेतसः प्र°। ७ क. ग. घ. °नयेत। ८ क. ग. घ. त्रिरन्वाह। ९ ख. ग. घ. °यं ब्राह्म°। १० क. न व्या° ११। क. ग. घ. °पने त्व°। १२ ख. °रबृह°।

गौतमः—

" उपनयनमष्टमे पञ्चमे नवमे वा । काम्यं गर्भादिसंख्यावर्षाणामुपनयनस्याष्टमं वर्षं नित्यः कालो नवमं पञ्चमं च काम्यः " ।

आपस्तम्बः—

" सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नादिकाममेकादश इन्द्रियकामं द्वादशे पशुकामम् । "

अत्रोपनयीतेत्यनुषङ्गः ।

पुराणात्–" नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।
कर्तव्यं नोपनयनं नानध्याये गलग्रहे " ॥

राशेः प्रथमभागस्थितसूर्यो निरंशः । चतुर्थी सप्तमी नवमी त्रयोदशी गलग्रहः ।

" हस्तात्रये पुष्यधनिष्ठयोश्च पौष्णाश्विसौम्यादितिविष्णुभेषु ।
शस्ते तिथौ चन्द्रबलोपयुक्ते कार्यो द्विजानामुपनायनो विधिः " ॥

गोवि(भि)लः—

" यदहरुपोष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति । कुशली कारयन्ति । आप्लावयन्त्यलं कुर्वन्ति । अहतेन वाससाऽऽच्छादयन्ति " ।

प्रगे प्रातरित्यर्थः ।

शङ्खः—

" पयोयवाग्वाभिक्षाहारः क्रमशस्त्रयाणामुपनयनाद्धि गर्भाधानादिषु संस्कारेषु दश दश विप्रा भोज्याः " ।

यदाह कात्यायनः—

" गर्भाधानादिसर्वेषु ब्राह्मणान्भोजयेद्दश " ॥ १४ ॥

**उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ॥**
**वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ १५ ॥**

यथाविध्युपनयनकर्मणा शिष्यमनुशासनीयं प्रत्यासन्नं कृत्वा गुरुराचार्यो व्याहृतिपूर्वकं वेदमध्यापयेच्छौचाचारांश्च ग्राहयेत् । गुरुग्रहणात्पितैवोपनय-

---

१ क. घ. °र्भादिः सं° । २ क. ग. घ. °पङ्कामः । पु° । ३ ग. घ. °शी चतुर्दशी ग° । ४ ख. °भे च° श° । ५ ग. घ. °हर्भोज° । ६ ख. °तरेवेल° । ७ क. ग. घ. ग्राहयेत् । ८ क. ख. घ. °सन्नं कृ° । ९ क. ग. घ. °र्वको वे° ।

( ब्रह्मचारिप्रकरणम् १)

पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां विद्यां च विशेषतः ॥
एतेषामेव देवानां नाम्ना तु जुहुयाद्घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्तव्यं चात्र पूजनम् ॥
प्राङ्मुखो गुरुरासीनो वारुणाशामुखं शिशुम् ।
अध्यापयेत प्रथमं द्विजाशीर्भिः[1] सुपूजितम् ॥
ततः प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेत् ।
अष्टमीद्वितयं चैव पक्षान्ते च दिनद्वयम् ॥
अशौच इन्द्रयात्रायां भूकम्पे राहुदर्शने ।
व्यतीपाते चाहोरात्रमुल्कापाते[2] तथैव च ॥

स्मृत्यन्तरम्—" मातृकान्यासं[3] गणितं च कुमारं शिक्षापयेत् " ॥ १३ ॥

**गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ॥**
***राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १४ ॥**

उपनेतारं प्रत्युपनेयस्य[4] प्रयोजकव्यापार[5]+ उपनायनम्[6] । तच्चोपनयनादन्य-देव । अत एवाऽऽह बुधः—

" गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत् " इति ।

इममेव च विधिमाश्रित्य शौनको मन्त्रं विधत्ते—" जान्वन्वाच्योपसंगृह्याधीहि[7][8] भोः सावित्रीं भो अनुब्रूहि " इति । गर्भादष्टमो गर्भाष्टमः, गर्भसहचरितोऽब्दो[9] गर्भस्तद(म)पेक्ष्याष्टम इति ल्यब्लोपे पञ्चमी । उपनयनस्याप्ययमेव कालः शौन-केनोक्तः—

" अष्टमे वर्षे ब्राह्मणमुपनयेद्गर्भाष्टमे चैकादशे क्षत्रियं द्वादशे वैश्यम्" इति ।

अथ काम्या उपनयनकालाः—

तत्र मनुः—" ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे " ॥

ईहा चेष्टा ।

---

* इत आरभ्य बुध इत्यन्तं ग्रन्थव्यत्यासः क. पुस्तके । +मिताक्षरायां तूपनयनमेवोपनायनं स्वार्थेऽण् , वृत्तानुसारात् । आर्षं वा दीर्घत्वमिति व्याख्या वर्तते ।

---

१ ख. ग. घ. °र्भिः स्वपू° । २ क. ग. घ. चापि होत्र° । ३ क. ख. °तृकन्या° । ४ क. °पनयने° । ५ क. °पारतयोप° । ६ घ. °पनय° । ७ क. जानुनान्यो° । ८ ग. घ. °न्वनान्योप° । ९ ख. °रितेऽब्दे गर्भस्तदपेक्ष्याष्टम इ° ।

अश्विनीश्रवणस्वातिचित्रातिष्याः पुनर्वसुः ।
धनिष्ठारेवतीज्येष्ठा मृगहस्तेषु कारयेत् ॥
शुभेष्वंशककेन्द्रेषु शुभेषु करणेषु च ।
क्षौरं प्रातः प्रकुर्वीत आयुर्बलविवर्धनम् ॥
हस्तात्रयं मृगशिरः श्रवणात्रयं च
　पूषाश्वि[२]शक्रगुरुभानि पुनर्वसू च ।
क्षौरे तु कर्मणि हितान्युदयेक्षणे वा
　युक्तानि चोडुपतिना यदि शस्ततारा ॥ ११ ॥ १२ ॥

## तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः॥१३॥

**एता हि जातकर्माद्याः क्रियाः स्त्रीणाममन्त्रकाः। विवाहः पुनः समन्त्रकः। गृह्यविहितानां संस्काराणामिह परामर्शात्तत्र च तदङ्गानामप्युपदेशात्साङ्गानां तूष्णींभावो वेदितव्यः।**

**अत एव मनुः**—"अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
　संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥

**आवृत् क्रिया। अशेषतः साङ्गा। यथाक्रममिति वचनात्संस्कारेषु क्रमानतिक्रमो विधेय इति दर्शयति। तदतिक्रमे सर्वप्रायश्चित्तं कारयेत्।**

**कालातिक्रमे कात्यायन आह—**

" देवतानां विपर्यासे जुहोतिषु कथं भवेत् ।
सर्वं प्रायश्चित्तं हुत्वा क्रमशो जुहुयात्पुनः ॥
संस्का[३]राश्च वियुज्येरन्स्वकालश्च कथं चन ।
हुत्वा तदेव कर्तव्यं त[४]द्रूप पातयेदधः ॥

**सर्वप्रायश्चित्तं लौगाक्षिराह**—" सर्वाणि प्रायाश्चित्तानि मनोज्योतिरिति सप्तभिः । " **गोवि( भि )लश्चौलाधिकारे**—" एतयैवाऽऽवृ[५]ता स्त्रियास्तूष्णीं मन्त्रेण तु होमः "।

**मार्कण्डेयः**—" प्राप्तेऽथ पञ्चमे वर्षे अप्रसुप्ते जनार्दने ।
षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाऽष्टमीम् ॥
रिक्तां पञ्चदशीं चैव सौरभौमदिनं तथा ।
एवं सुनिश्चिते का[६]ले विद्यारम्भं तु कारयेत् ॥

१ ख. °त् । स्थानेष्वं° । २ क. °श्विशक्र° । ३ ख. °स्कारांश्च वियुज्येरन्स्वकालाच्चेत्कथं । ४ ख. तत्तूपपतयेदतः । स° । ५ क. °वृतस्त्रि° । ६ क. ग. कार्ये ।

सर्वैः स्वजन्मदिवसे[1] स्नातैर्मङ्गलवारिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीया विशेषतः ॥
स्वनक्षत्रं च पितरस्तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं यत्नात्[2]कर्तव्यश्च महोत्सवः ॥ ”

**पितृपूजा श्राद्धम् ।**

**विष्णुधर्मोत्तरे—**“ जन्मनक्षत्रगे सोमे शिरःस्नातेन[3] यत्नतः ।
पूजा सोमस्य कर्तव्या नक्षत्रस्य तथाऽऽत्मनः ॥
श्राद्धं कुर्यात्प्रयत्नेन वह्निब्राह्मणतर्पणम्[4] ॥
सुराणामर्चनं कार्यं केशवस्य विशेषतः ।
सर्वस्वालंकृत[5][6]स्तिष्ठेद्धौतवासाश्च मानवः ।
निर्मलानि च धार्याणि दन्तकेशनखानि च ” ॥

**चौले यमो विशेषमाह—**

“ तथा संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात् ” ॥

**शङ्खलिखितौ—**“ तृतीये वर्षे चूडाकर्म पञ्चमे वा ” ।

**लौगाक्षिः—**

“ तृतीयस्य वर्षस्य भूयिष्ठे[7] गते चूडाः कारयते[8] । दक्षिणतः कपूजा[9] वसिष्ठाना-मुभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूडा अङ्गिरसो वाजिमेक[10]मङ्गलार्थम् । शिखिनोऽन्ये यथाकुलधर्मं वा । शुद्धपक्षस्य पुण्याहे पर्वणि वा ” ।

**कपूजा[11] चूडा । वाजिः केशपङ्क्तिः ।**

**व्यासः—**“ नक्षत्रे[12]ऽपि न कर्तव्यं यस्मिञ्जातो भवेन्नरः ।
न भद्रपदयोः कार्यं नैवाऽऽग्नेयेषु भारत ॥
दारुणेषु च सर्वेषु दुष्टतारां[13] तु वर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि सर्वाणि कारयेत् ॥
वारं शनैश्चरादित्यभौमानां रात्रिमेव च ।
तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत् ॥

---

१ क. ग. घ. °वसैः स्ना° । २ ख. यत्नः कर्त° । ३ क. ग. घ. °स्नानेन । ४ ख. °णपूजनम् । ५ घ. सर्वास्वलं° । ६ क. ग. °र्वस्वलं° । ७ क. ग. °यिष्ठग° । ८ ख. कारयेत । ९ ख. कपुटाव° । १० क. °मेको म° । ग. घ. °मेके म. । ११ ख. कपुटा चू° । १२ क. ग. घ. °त्रेण तु क° । १३ क. घ. °तारं तु ।

कुमारस्तु स विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥
शिशोरभ्युक्षणं प्रोक्तं बालस्याऽऽचमनं स्मृतम् ।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः ” ॥

ब्रह्मपुराणे “ मातापित्रोरथोच्छिष्टं बालो भुञ्जन्भवेत्सुखी ” इति ।

दक्षः—“ जातमात्रः शिशुस्तावद्यावदष्टौ समा[1] गतः ।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्र[2]प्रकाशितः ॥
भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये तथाऽनृते ।
अस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते ” ॥

एतदभक्ष्यभक्षणापेयपानानुमननं मातापित्रोरुच्छिष्टमात्रविषयं न तु जातिभ्रंशकराद्यभक्ष्यापेयान्नपानविषयम् । संस्काराद्यनर्हत्वप्रसङ्गात् । दृश्यते हि स्मृतिषु प्राचुर्येण “ वसन्ते ब्राह्मणमुपनयीत[3] ग्रीष्मे राजन्यं शरदि वैश्यम् ” इत्यादिनाऽनुपहतजात्याद्याश्रयणेनैवोपनयनादीति ।

पुराणम्—“ चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ।
द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् ॥
चतुर्थे मासि कर्तव्यं तथाऽन्येषां मतं विभो ” ।

अन्नप्राशने विशेषमाह यमः—
“ ततोऽन्नप्राशनं षष्ठे मासि कार्यं यथाविधि ।
अष्टमे वाऽपि कर्तव्यं यद्वेष्टं मङ्गलं कुले ” ॥

शङ्खः—“ संवत्सरेऽन्नप्राशनमर्धसंवत्सर इत्येके ” ।

लौगाक्षिः—“ षष्ठे मास्यन्नप्राशनं दन्तेषु जातेषु ” ॥

मार्कण्डेयः—“ देवतापुरतस्तस्य[4] धात्र्युत्सङ्गगतस्य च ।
अलंकृतस्य दातव्यमन्नं पात्रेऽथ काञ्चने ॥
मध्वाज्यकनकोपेतं प्राङ्मुखं प्राशयेच्छिशुम्[5] ।
कृतप्राशमथोत्सङ्गाद्धात्री बालं समुत्सृजेत् ॥
देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः ।
शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम् ॥
प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा[6] ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥

---

१ क. °मासतः । २ क. ग. घ. व्यक्तमा° । ३ क. ग. घ. °नयेत । ४ क. °रतः स्थाप्य धा° । ग. °रतः स्थाप्य धा° । ५ ख. प्राशयेत्प्रथमं तु तम् । ६ क. ततः ।

एव । स्वगृह्यापेक्षया[१] चैतद्व्यवस्था । एवं च " अहन्येकादशे द्वादश्यां वाऽस्य कारयेत् " इत्यादि विवक्षितार्थमेव । नाशौचान्तोपलक्षणार्थम् । तेनाशौचेऽपि तत्कार्यम् ।

शङ्खलिखितौ—

" दशम्यामुत्थाप्य पिण्डवर्धनं पितॄणां तत्र सांनिध्यमिति श्रुतेर्ब्राह्मणोऽग्नावाहुतिं दत्त्वा पितॄननु[२]मान्य ब्राह्मणान्भोजयित्वा तद्द[३]हरेव नामकरणं कुर्यात् । अन्यो वा कुलवृद्धश्चतुरक्षरं द्व्यक्षरं वा घोषवदाद्यन्तरन्तस्थं पुंसामीकारान्तं स्त्रीणामेवं कृते नाम्नि शुचि तत्कुलं भवति " ।

सूतिकां पूर्वं शय्या[४]त उत्थाप्य दशम्यां तिथौ दशमेऽहनीत्यर्थः । पिण्डवर्धनं पूजा, तत्स्वरूपं च—ब्राह्मणः पूर्वमाहुतिं हुत्वा पितॄननुमान्याभ्युदयश्राद्धेन पूजयित्वा, कवर्गादीनां तृतीयादयो वर्णा यरलवहाश्च घोषवन्तः । तेषां मध्ये यकारादयश्चतस्रोऽन्तस्थाः । ते नाम्नो[५]ऽन्तर्मध्ये कार्याः । शेषास्तु घोषवन्तो नामादौ ।

वैजवापः—

" पिता नाम करोत्येकाक्षरं द्व्यक्षरं[६] त्र्यक्षरं चतुरक्षरमपरिमितं वा कृतं कुर्यान्न तद्धितम् । ईकारान्तं स्त्रियै " ।

यमः—" शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः ।
भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् " ॥

एतान्युत्तरपदानि समासरूपस्य नाम्नः कार्या[७]णि । पूर्वपदनियममाह मनुः—

" मा[८]ङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥

तथा—" स्त्रीणां[९] सुखोद्यमं क्रूरं विस्पष्टार्थं मनो[१०]हरम्[११] ।
माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् " ॥

निष्क्रमणे यमोक्तो विशेषः—

" ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् " ।

*वृद्धशातातपः—" प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।

---

* इत आरभ्य दन्तकेशनखानि चेत्यन्तं ग्रन्थव्यत्यासः ख. पुस्तके ।

---

१ ख. °या च त° । २ क. ग. °नुमन्य । ३ ख. °दहैनैव । ४ क. घ. °य्या उत्था° । ५ क. ग. घ. °म्नोऽन्ते मध्ये । ६ क. ग. घ. °रं च° । ७ ख. °नान्तः का° । ८ क. ख. घ. मङ्गल्यं । ९ क. घ. °णां मुखो° । १० क. °नोरमम् । मा° । ११ क. ख. घ. °म् । मङ्ग° ।

मोषधिं[1] नस्तः करोति । प्रजावज्जीवपुत्राभ्यां वै हेतुकप्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत । यत्ते सुसीमे हृदये[2] हितमन्तः[3] प्रजापतौ । मन्येऽहमन्तर्विद्वांसमाह पौत्रमघं नियाम् " इति ।

" अपश्यं त्वा मनसा दीध्यानः " इत्यादि **प्रजावान्मन्त्रः** । " अग्निरैतु प्रथमः " **इत्यादि जीवपुत्रा मन्त्राः** ।

" तृतीये मासि सीमन्तं तिष्ये वा श्रवणेन " इति[4] **सांख्यायनम्** ।

**जातकर्मणि ब्रह्मपुराणोक्तो विशेषः—**

" देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति यस्मात्तदहः पूज्यं पुण्यं च सर्वदा ॥
तत्र दद्यात्सुवर्णं च भूमिं गां तुरगं रथम् ।
छत्रं छागं च माल्यं च तिलान्वेश्म धनं बहु ॥
जातश्राद्धे[5] प्रदद्याच्च पक्वान्नं ब्राह्मणेष्वपि " इति ।

**एतच्च नाभिच्छेदात्प्राक्, नोर्ध्वम् ।**

**तथा च हारीतः—**

"जाते कुमारे पितॄणामामोदात्पुण्यं तदहस्तस्मात्तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणानाहूय पितृभ्यः स्वधां कुर्यात् । प्रजापतये च प्राङ्नाभिच्छेदात्संस्कार-पुण्यार्थान्कुर्वन्ति[6] । छिन्नायामशौचम् " इति ।

**ज्योतिःशास्त्रात्—**" मृदुध्रुवचरक्षिप्रभेषु वारत्रये शुभे ।
गुरौ शुक्रेऽथ वा केन्द्रे जातं कर्म च नाम च " ॥

**भानि नक्षत्राणि ।**

**भविष्यत्पुराणम्—**"नामधेयं दशम्यां च केचिदिच्छन्ति पार्थिव ।
द्वादश्यामपरे राज्यां मासे पूर्णे तथा परे ॥
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ।
पुण्ये तिथौ मुहूर्ते च नक्षत्रे च गुणान्विते " इति ॥

**गृह्यपरिशिष्टम्—**

" जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम्,
अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते " ।

**नायं नियमः** । "नामधेयं दशम्याम्" **इत्यादिवचनविरोधात्** । **अतो विकल्प**

---

१ ख. °धिं पूर्वान° । २ घ. °ये हृत° । ३ ग. हिमम° । ४ क. ग. घ. °ति संख्या° । ५ क. ख. °द्धेन द° । ६ क. °न्ति । भिन्ना° ।

कृतेषु संस्कारेषु एनः पापं बीजगर्भोत्थं[1] शाम्यति । बीजं शुक्रशोणितम् । गर्भो जठरान्तरस्थितो देहः । तेन जठरवासो लक्ष्यते । एनोऽत्राप्रायत्यं, मातुः पीताशनादेरुत्पन्नमित्यर्थः । एतच्च चातुर्वर्ण्याभिप्रायं, न द्विजातिमात्रविषयम् । तथा सत्युपनयनं विधाय वाच्यं स्यात् ।

देवलः—" चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः " ॥

अत एव मनुर्द्विजात्यभिप्रायेणोपनयनं विधायाऽऽह—
" गार्भैर्होमैर्जातकर्म[3]चौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते " ॥

एवमेनःशान्त्या प्रयुज्यमाना एते संस्काराः पुंसवनात्परे पित्रभावे पितृस्थानीयेन पितृव्यादिना कार्या इति सिद्धम् । अत्र गर्भाधानादिवद्दत्वादयः कालविशेषा अप्यनूद्यन्त इति शास्त्रविहितानां कालान्तराणां न निवर्तकाः किं तु तदुपलक्षकाः । तत्र शास्त्रान्तराणि विशेषाभिधायकानि लक्ष्यन्ते ।

तत्र हारीतः—" सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् " ॥

सीमन्तोन्नयने बैजवापगृह्यम्—
" आपूर्यमाणपक्षे यदा[4] पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् " ।
देवलः—" सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता " ।

अत एव पारस्करः—" अथ पुंसवनवत्सीमन्तोन्नयनं प्रथमगर्भे " इति । सीमन्तोन्नयनं प्रथमगर्भेऽभिधत्ते । पुंसवनं तु प्रतिगर्भमावर्तेत[6] । अथ पुंसवनानवलोभनं, तत्राऽऽश्वलायनगृह्यम्—

" उपनिषदि गर्भलम्भने पुंसवनमनवलोभनं च । यदि नाऽऽधीयात्तृतीये[10] गर्भे मासे तिष्येणोपोषितायाः स्वरूपवत्साया गोर्दधनि[11] द्वौ द्वौ माषौ यवं च दधिप्रसृतेन प्राशयेत् । किं पिबसि किं पिबसीति पृष्ट्वा पुंसवनमिति त्रिः प्रतिजानीयात् । एवं त्रीन्प्रसृतान् । अथास्य[12] मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजिता-

---

१ क. घ. °र्भोक्तं शा° । २ क. ग. घ. °ह–गर्भे° । ३ क. °चौडीमौ° । ४ ख. °दा चन्द्र° । ५ ख. प्रथमग° । ६ घ.° वर्तते । अ° । ७ क.ख.ग. °नाव° । ८ क. ग. घ. °म्भनमनवलोभनं पुंसवनं च । ९ क. ग. घ. °नादीया° । १० ख. °ये गर्भमासि ति° । ११ क. ग. घ. °नि द्वौ मा° । १२ क. °थाऽऽस्ये म° । ग. घ. °थास्यै म° ।

मात्रशब्दान्मन्त्राणां व्यावृत्तिः पूर्वसंस्काराणां वा। *तदा च विकल्पः। विहितत्वादपि तेषाम्।

जातूकर्ण्यः—"इष्टापूर्तौ द्विजातीनां धर्मौ सामासिकौ मतौ।
अधिकारी भवेच्छूद्रः पूर्तधर्मेण वैदिके"॥

महाभारतम्—"एकाग्निकर्म[1] हवनं त्रेतायां यश्च[2] हूयते।
अन्तर्वेद्यां च यद्दानमिष्टमित्यभिधीयते॥
वापीकूपतडागादि देवतायतनानि च।
अन्नप्रदानमारामः[3] पूर्तमित्यभिधीयते[4]"॥

अन्नदानग्रहणमयज्ञाङ्गोपलक्षणम्।

तथा च जातूकर्ण्यः—"ग्रहोपरागे यद्दानं सूर्यसंक्रमणेषु च।
द्वादश्यादौ च यद्दानं पूर्तमित्यभिधीयते"॥ १०॥

गर्भाधानादीन्संस्कारान्गृह्यविहितस्वरूपानपि कालविशेषसंबन्धितया सार्धश्लोकद्वयेनाधुना विधत्ते—

**गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा[5]॥
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च॥ ११॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः॥
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम्॥ १२॥
एवमेनः शमं याति बीजगर्भसमुद्भवम्॥**

गर्भ आधीयतेऽनेन कर्मणेति गर्भाधानम्, तदृतौ कार्यमित्यन्यतः सिद्धम्। एवं प्राग्गर्भचलनात्पुंसः सवनं पुंसवनाख्यं कर्म। षष्ठेऽष्टमे वा गर्भमासे सीमन्तः सीमन्तोन्नयनम्। एत आगते जातकर्म। अहन्येकादशे नाम धेयमिति शेषः। एकादशादिसंख्या[6] जन्मनः। तस्य प्रकृतत्वात्। चतुर्थे मासि †निष्क्रमणम्, सूर्याचन्द्रमसौ[7] द्रष्टुं बहिः प्रसरणम्। षष्ठे मास्यन्नप्राशनम्। चूडा शिखा सा येषां कुले यस्मिन्वर्षे तथा यत्संख्या कार्यतया स्मर्यते तदनतिक्रमेण कर्तव्या, यथाकुलधर्मं केशवेशान्कारयेदिति गृह्यप्रसिद्धा। एवं

---

* तथा च विकल्पः, विहितत्वादितरेषामिति पाठो युक्त इति भाति। † निष्क्रम इति पाठो भाति युक्तः।

---

१ क. °मेवहनं। २ ग. घ. यच हू°। ३ क. °रामाः पू°। ४ ख. पूर्तं मर्त्याः प्रचक्षते। ५ क. घ. °त्पुनः। प°। ६ क. ग. °ख्या जनात्मनः। ७ क. ग. घ. सूर्यच°।

(ब्रह्मचारिप्रकरणम् १)

अनाहिताग्नयो ये च केवलं वेदपारगाः ।
पञ्चैते वेदशास्त्रज्ञाः पर्षत्संज्ञा ह्युदाहृताः ॥
ये तु धर्मविदो विप्राः कार्याकार्यविचक्षणाः ।
प्रायश्चित्तप्रणेतारः सप्तैते परिकीर्तिताः ॥
एकविंशतिसंख्याकैः श्रुतिसन्न्यायपारगैः ।
वेदाङ्गकुशलैश्चैव पर्षत्त्वं[1] तु प्रकल्पयेत् ॥
यतीनां सत्यतपसां ज्ञानविज्ञानचेतसाम्[2] ।
शिरोव्रतेन स्नातानामेकोऽपि परिषद्भवेत्[3] ॥
ये तु पूर्वं मया प्रोक्ताः स्थिता यायावरे पथि ।
त्रयोऽपि परिषज्ज्ञेयाः सर्वपापापहारकाः ॥
एषा तु लघुकार्येषु मध्यमेषु तु मध्यमा ।
महापातकिशोध्येषु शतशो भूय एव च ” इति ॥

यतिशास्त्रप्रसिद्धं शिरोव्रतम् । एकोऽपि परिषत्कार्यकर[4] इत्यर्थः । यायावरो गृहस्थविशेषः । महापातकिनश्च ते शोध्याश्च महापातकिशोध्याः ॥ ९ ॥

धर्मान्वक्तुं तदधिकारिणो वर्णान्द्विजांश्चाऽऽह—

**ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ॥**

ब्राह्मणक्षत्रियवैश्यशूद्राः प्रत्येकं वर्णसंज्ञा भवन्ति । ब्राह्मणक्षत्रियवैश्यास्तु प्रत्येकं द्विजसंज्ञा ज्ञेयाः ॥

**निषेकाद्याः[5] श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥१०॥**

तेषां द्विजानां गर्भाधानाद्याः प्रेतकर्मपर्यन्ताः क्रिया मन्त्रैः कार्याः । शूद्रस्य तु यावदुक्तमुपनयनान्तसंस्कारानुवृत्तौ यमः—

“ शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।
न केन चित्समसृजच्छन्दसा तं प्रजापतिः ” ॥

सृष्टाऽनुपनीतवान् । अतो[6] नोपनेय इत्यर्थः । यच्छ्रुतिः—“ गायत्र्या ब्राह्मणमसृजत । त्रिष्टुभा राजन्यम् । जगत्या वैश्यम् । न केनचिच्छन्दसा शूद्रम् । असंस्कार्यो[7] विज्ञायते । ” असंस्कार्योऽनुपनेयः ।

ब्रह्मपुराणम्—“ विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा” ।

---

१ ख. °र्षदं तु । २ क. °नवादिनाम् । ३ ग. घ. °त् । यत्ते पू° । ४ ग. घ. °र्यकार । ५ ङ. °कादिश्म° । ६ ख. °तोऽनुप° । ७ ग. °संस्कृतो वि° ।

यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः[१] ” इति ।

**अनाम्नातेषु वाक्यपाठादेवानिर्णीयमानेष्वित्यर्थः[२] ।**

**अङ्गिराः**—“ चातुर्विद्यो वितर्की च अङ्गविद्धर्मपाठकः ।
त्रयश्चाऽऽश्रमिणो वृद्धाः पर्षदेषा दशावरा ॥
चतुर्णामपि वर्णानां पारगा ये द्विजोत्तमाः ।
यथाक्रमं विनोपाङ्गैश्चातुर्विद्यमिति स्मृतम्[३] ॥
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स वितर्की भवेद्द्विजः ॥
शब्दे छन्दसि कल्पे च शिक्षायां च सुनिष्ठितः[४] ।
ज्योतिःशास्त्रे च कुशलः स निरुक्तेऽङ्गविद्भवेत्[५] ॥
वेदविद्याव्रतस्नातः सत्यसंधो जितेन्द्रियः ।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ॥
ब्रह्मचर्याश्रमादूर्ध्वं वृद्धा आश्रमिणस्त्रयः ।
वदेयुस्तस्य ते धर्मं ते मया परिकीर्तिताः ” ॥

**मनुस्तु**—“ त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ” इत्याह ॥

**हेतुकोऽनुमानज्ञः । तर्कोऽस्यास्तीति तर्की । संशयकोटौ प्रामाणिकत्वारोपे कृते बाधकदर्शनाद्भवितव्यमत्र प्रमाणेनेति प्रत्ययस्तर्कः । स च वेदाविरोधी ग्राह्य इत्युक्तं तेनैव—**

“ आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ” इति ॥

**आर्षं स्मृतिपुराणादि । उपदेशो वेदः ।+तदविरोधिना वेदादि(वि)वर्जितेन तर्केण पूर्वोक्तस्वरूपेण । अनुसंधानमुपपादना । पूर्वे गृहस्थादयः । वृद्धा[६] वृद्धत्वोपेता हि, दशावरेति, दशभ्यो न न्यूना ।**

**अङ्गिराः**—“ चत्वारो वा त्रयो वाऽपि वेदवन्तोऽग्निहोत्रिणः ।
ब्राह्मणाः समवायस्थाः पर्षदित्यभिधीयते ॥

---

+ तदविरोधिनेत्यारभ्य पूर्वोक्तस्वरूपेणेत्यन्तग्रन्थः ख. ग. पुस्तकयोर्न विद्यते ।

---

१ ख. 'दतर्कित' । २ ख. 'र्णातेष्वि' । ३ ख. स्मृति' । ४ क. ग. घ. 'निश्चित' । ५ क. 'क्तेऽर्थवि' । ६ ख. ग. वृद्धत्वाद्वृद्धोपे' ।

( ब्रह्मचारिप्रकरणम् १)

" आराध्यते स्ववर्णोक्तधर्मानुष्ठानकारिणा ।
तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ॥[2]
तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने " ।

तथा च वसिष्ठः—

" यथाऽन्नं मधुसंपृक्तं मधु चाप्यन्नसंयुतम् ।[3]
एवं तपश्च विद्या च संयुक्तं भेषजं हि तत् "

इति, एवमादि मत्वोक्तवान्–'इज्याचारदमाहिंसा' इति । रागप्राप्तं कर्माऽऽश्रित्य शास्त्रेण पुरुषाभ्युदयाय विधीयमानोऽर्थ आचारः । यथा "प्राङ्मुखोऽन्नानि भुञ्जीत तूष्णीम् " इत्यादि । मनसो दमनं दमः । रागप्राप्तहिंसानिवृत्तिरहिंसा । स्वस्वत्वनिवृत्तिः परस्वत्वापत्तिर्दानम् । स्वाध्यायोऽध्ययनम् । कर्मशब्दः ...म्यव्यतिरिक्तानामन्येषामपि चोदितकर्मणां परिग्रहार्थः ॥ ८ ॥

यद्योगेनाऽऽत्मदर्शनं, न च तद्वाक्यार्थावधारणादेव सिध्यति । किं तु श्रवणमनननिदिध्यासनेभ्य इति कर्माधिकारिणो विदुषोऽपि कुतश्चित्कारणाद्धर्मसंशये पर्षदधीनो निर्णय इति तां तावदाह—

**चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ॥**
**सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥ ९ ॥**

( इत्युपोद्घातः । )

वेदः प्रसिद्धः । धर्मो धर्मशास्त्रम् । तदर्थज्ञाश्चत्वारो धर्मनिर्णयरूपकार्यकराः[6] पर्षदित्युच्यते । ऋग्यजुःसामवेदास्त्रैविद्यम् । तेन चात्र तदध्येतारस्त्रयो ब्राह्मणा लक्ष्यन्ते । सैषा त्र्यवरा पर्षदित्याह मनुः—

" ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
अवरा परिषज्ज्ञेया धर्मसंशयनिर्णये " ॥

अथ वाऽध्यात्मविदां श्रेष्ठ एकोऽपि यमर्थं धर्मतया ब्रूते स एव धर्मः । आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मम्[8] । बहूनां तद्विदां मध्ये सातिशयज्ञानोऽध्यात्मवित्तमः । परिषत्त्वं ब्राह्मणानामेव प्राथमकल्पिकम् ।

यदाह मनुः—" अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।

---

१ क. यत्नाः कर्तव्याः प° । २ ग. °तैर्वरैः । ३ क. चानेन सं° । ग. चान्नेन सं° । ४ क. °व प्रथ° । ५ क. ग. °प्राप्तिहिं° । ६ क. ग. घ. °र्यकाराः । ७ क. ग. घ. °त्मकम् । ८ ख. °तिरे-

लोऽपि ब्रह्मावर्ताचारो धर्मे प्रमाणं स्यात् । वेदमूलकोऽपि च देशान्तरवर्ती न स्यात् । वसिष्ठोऽपि—

" आर्यावर्तं प्रागादर्शात्पर्वतात्प्रत्यक्कालकाद्वनादुदक्पारियात्राद्दक्षिणेन हिमवन्तमुत्तरेण विन्ध्यं[1] ये धर्मा य आचारास्ते सर्वे प्रत्येतव्याः । न त्वन्ये प्रतिलोम[2]धर्माणः " इत्याह ।

अत्रापि सर्वशब्दो बाहुल्याभिप्रायेण । न त्वन्ये प्रतिलोमेति, अत्रापि देशान्तरीयाः[3] सर्वे धर्मा आचाराश्च न प्रत्येतव्याः । यतस्तेषु बाहुल्येन लोभादिपूर्वका आचाराः, केचिदेव श्रुतिपूर्वका इति तस्यार्थेऽनुसंधेयाः[4] अन्यथा देशान्तरावर्त्यसंभवाल्लोभादिमूल आचारो निर्मूलः स्यात् ।

मनुः—" श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।

अविरोधं[6] तु कर्तव्यं स्मार्तं वैदिकवत्सदा " ॥

वसिष्ठः—" श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणम् " इति ॥७॥

ननु यदि श्रुतिस्मृत्योर्धर्म एव प्रामाण्यं कथं तर्ह्यात्मज्ञानप्रधानयोः श्रुतिस्मृत्योर्धर्मप्रामाण्यनिर्वाह इति । न ह्यात्मज्ञानं धर्मः । अननुष्ठेयत्वात् । तत्त्वमसीत्यादिवाक्यार्थावधारणतस्तज्ज्ञायते, न तु वाक्यार्थमवधार्य यागादिवदनुष्ठीयत इत्याशङ्क्याऽऽह—

**इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ॥**
**अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥ ८ ॥**

इज्यादिधर्माणामितिकर्तव्यतात्मनां संबन्धी परमः प्रधानभूतोऽयं धर्मो यद्योगेन समाधिनाऽऽत्मदर्शनं नाम । आत्मशब्दोऽयं परमात्मनि वर्तते न जीवात्मनि, तस्येज्यादिकमन्तरेण समाधिं विनैव च प्राप्तत्वात् । " आत्मा वा अरे द्रष्टव्यः " इति तत्रोत्पत्तिविधिः । " ब्रह्मविदाप्नोति परम् " इत्यधिकारविधिः । अत्र हि परशब्देन परमात्माऽभिधीयते । तदाप्तिश्च तदात्मनैव क्षेत्रज्ञस्यावस्थानम् । तत्र ब्रह्मविदितिपदोपात्ता ब्रह्मविद्या करणं " विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इत्यत्र यज्ञेनेत्यादिश्रुतिः सकलनित्यनैमित्तिकवर्णाश्रमधर्मोपलक्षणार्थम् । अत एव विष्णुपुराणम्—

---

१ क. °न्ध्यं यावद्धर्मास्त आचारस्ते । ग. घ. °न्ध्यं यावद्धर्मा आचारस्ते २ । ख. °______ ग. °मजध° । ३ क. ग. घ. °रीयः स° । ४ ख. °संदेयाः । ५ ग. °न्तरवर्त्य° । घ. °न्° । ५ क. ६ क. ग. घ. °रोधे तु । ७ घ. °यधर्म° । ८ ग. घ. अध्वरे । ९ ख. °न " इत्यादि °

ह्यागमानुष्ठेयसामान्येन बाह्यागमैरेकार्थत्वमाशङ्कनीयम् । यत्रापि बाह्यागमा-नुष्ठेयसादृश्यमिव—

" अरूपामनुरूपां वा सुभगां दुर्भगां तथा[1] ।
सतीं वा असतीं वाऽपि अङ्गनां न जुगुप्सयेत् "

इत्यादि, तत्रापि देवीपुराणाद्युक्तदृशा दीक्षितस्यैवैते नियमा इत्यनुसंधेयम् । तस्माददूष्यत्वेनैव शैवादि प्रमाणमनुष्ठेयत्वे त्वङ्गत्वेन केनचित्कचिदंशेनाऽऽदेयं साकल्येन नानुष्ठेयमिति स्थितम् । तत्रापि यत्पौरुषेयं[2] न केवलमननुष्ठेयं तद्यावदप्रमाणमपीति हेयमपीति[3] सिद्धम् ॥

अत एवाऽऽहुराचार्याः—

" अनुष्ठेयं न भवति यच्छास्त्रं पुरुषैः कृतम् ।
तदप्रमाणं विज्ञेयं पुंबुद्धिप्रभवं हि तत् " ॥

अलमतिप्रसङ्गेन ।

सदाचारः शिष्टाचार इत्युक्तम् । तत्र हि शिष्टस्वरूपमाह बौधायनः—

" शिष्टाः खलु विगतमत्सरा[4] निरहंकाराः कुम्भीधान्याः ।
अलोलुपा दम्भलोभमोहक्रोधविवर्जिताः[5] ।
धर्मेणाधिगतो यैश्च वेदः सपरिबृंहणः ॥
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः " इति ॥

कुम्भीधान्या इति वृत्तिसंकोचोपलक्षणपरम् ।

" इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ "

इति मनुवचनादितिहासपुराणादि[6] वेदस्य परिबृंहणानि, अविनाभावाच्च व्याकरणादीनि । तदनुमानज्ञाः स्मृतिज्ञाः । स्मृतिर्हि तस्य वेदस्यानुमानं लिङ्गम् । श्रुतिप्रत्यक्षहेतवः श्रुतिः प्रत्यक्षहेतुर्येषां संमतस्ते तथोक्ताः । स्मृति-ज्ञानमाचारश्च प्रत्यक्षगामित्वात्प्रत्यक्षम्[7] । ब्रह्मावर्तादिषु बाहुल्येन वेदमूल आचार इति मत्वा मनुराह—

" यस्मिन्देशे य आचारः पारम्पर्यात्समागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते "

इति, न तु ब्रह्मावर्त एव सदाचार इति मत्वा[8] । तथा[9] सति लोभादिमू-[10][11]

१ क. ग. घ. यथा । २ क. ग. घ. °यं केवलमनुष्ठेयैत° । ३ क. ग. घ. °यमेवेति । ४ क. घ. °तमात्मना नि° । ५ ख. °म्भदर्पलो° । ६ ग. °णानि वे° । ७ ख. ग. °क्षगम्यत्वा° । ८ क. ग. घ. °त्वा । यस्मिंस्तथा । ९ ग. °था सन्निह लो° । १० क. °दिषु मू° । ११ ख. °मूलेऽपि ।

वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम्[1] ।
शतान्तैरध्यवसितै[2][3]र्मन्याश्रममिदं स्मृतम् ॥
मया पाशुपतं पूर्वं योगमुत्पादितं पुरा ।
अस्य चीर्णस्य सम्यग्यत्फलं भवति पुष्कलम् ॥
तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः ”

इति, तन्नाऽऽश्रमिणां पाशुपतशास्त्रानुष्ठापकत्वे लिङ्गं तत्फलै[4]साम्यमात्रस्यात्र विवक्षितत्वात् । सन्ति हि पाशुपताद्यागमेषु “ अग्निष्टोमफलं लभेत् ” इत्येवमादीनि वाक्यानि । न चैतावता तेषां तदधिकारः सिध्यति । नापि—

“ तदेतद्व्रतं भस्मनाऽङ्गानि संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षणाय ”

इति अथर्व[5]शिरउपनिषत्पाशुपतशास्त्रार्थानुष्ठापकत्वे लिङ्गं, भस्मनाऽङ्गसंस्पर्शमात्रस्य नियमस्यात्र श्रवणात् । न च स्मृतौ पाशुपतादिस्पर्शे सचैलस्नानश्रवणात्तच्छास्त्रस्य दू[6]ष्यत्वमाश्रमिणामभिप्रे[7]तमित्याशङ्कनीयम् । कृते सोमयागादावनेकमन्त्रसंस्कृतेष्टकाचित्यसंस्पर्शनेऽपि स्नानदर्शनात् । न च चित्यस्य किं दुष्टत्वादुत रुद्रनिर्माल्यवद[8]भ्यर्हितत्वादस्पृश्यत्वमित्येतावतीं विचारपदवीमवगाहितुं शास्त्रैकगोचरेऽर्थेऽस्मादृशां मतिः क्रमत इति केचित् । वस्तुतस्तु यथा[9]—

“ चातुर्वेदोऽपि यो विप्रो दीक्षितो न शिवाध्वरे ।
स तु शूद्रः प्रमन्तव्यो न देयं तस्य शासनम् ”

इत्यादिना शैवादयो दीक्षाविहीनानां त्रैविद्यवृद्धानामवंरवर्ण[10]वद्विजुगुप्सां कुर्वन्ति, तथा—

“ कापालिकाः पाशुपताः शैवाश्च सह कारुकैः ।
दृष्टाश्चेद्रविमीक्षेत स्पृष्टाश्चे[11]त्स्नानमाचरेत् ”

इति स्मृत्यन्तरदर्शनादन्त्यावसायिवद्दर्शनस्पर्शनयोर्दुष्टाः शैवादिशास्त्रप्रतिपन्नाः शैवादय[12]स्त्रैविद्यवृद्धैर्मन्यन्ते । एतदेवोपपन्नम् । शास्त्रं हि तथा । तस्मात्पुराणादियुक्तिपर्यालोचनेनैवानुष्ठानमादर्तव्यम् । न[13] च क्वचित्क्वचि-

१ क. ग. °म् । गता° । घ. °म् । गतान्तरैर्विवसितमद्याश्र° । २ ग. °सितं; सत्याश्र° । ३ क. °मत्याश्र° । ४ क. ग. घ. °लमा° । ५ ख. °र्वेशर° । ६ घ. दूपत्व° । ७ क.° प्रेत्यमि° ८ क. °दत्यार्ह° । ग. °दन्यर्चित° । घ. °दत्यर्हत° । ९ ख. °था चतु° । १० क. °वर्णवर्णव° । ११ ख. स्पृष्टश्चे° । १२ क. ग. घ. °दयः शैवादिशास्त्रैर्विद्यावृ° । १३ क. ग. घ. न तु क्वचित्क्वचिद्ब्राह्मागमानुष्ठानये° ।

( ब्रह्मचारिप्रकरणम् १)

केवलाध्ययनं स्वधर्मपरित्यागेन पर[1]धर्मसेवनम् । तादृशस्यानुष्ठानस्य

> " स्वधर्मं यः समुत्सृज्य परधर्मरुचिर्भवेत् ।
> चकोरनयने चौरः स शूद्रश्चन्द्रसंनिभे "

इत्यादिना स्कन्दपुराणादौ निन्दितत्वात् । वामदक्षिणादिज्ञानं च स्वशास्त्रापेक्षितस्य तच्छास्त्रोक्तस्याविरुद्धस्याङ्गस्य कस्यचित्स्वी[3]कारार्थं,

तत्राऽऽह मनुः—

> " सापेक्षत्वेऽप्यपेक्षैव मानं यावदपे[4]क्षते ।
> तावदेवान्यतः कार्यमन्यत्त्वेवानवस्थितेः " ॥

विरुद्धस्य तु त्याग एवेति । अत एव च धर्मसंकरपरि[5]हाराभिप्रायेण राजधर्मेषु महाभारतम्—

> " चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता ।
> धर्मसंकररक्षा हि राज्ञां धर्मः सनातनः " इति[6] ॥

न[7] च वाच्यम्—स्व[8]धर्मप्रतिष्ठादितन्त्रोपस्कारकर्तुः स्थापकादेर्वामदक्षिणा[9]म्नायज्ञानं त[10]दुक्तदीक्षाग्रहणपूर्वकमेव । स्मृत्यादिशास्त्रे तथाऽनङ्गीकारात् । [ * वामदक्षिणादिशास्त्रं ( स्त्रस्य ) च यथोक्तं स्थापकत्वादिप्रतिनियामकत्वासिद्धेः ] वामदक्षिणादिशास्त्रस्य तद्विवरणदर्शनादिपूर्वं स्वात्मना निरीक्षणे[11]नानेकविद्यास्थानोप[12]स्कारोपस्कृतमतित्वादस्य निःशेषावबो[13]धेन हेलामात्रेण स्वप्रतिष्ठातन्त्रा[14]द्युपस्कारमात्रनिर्वहणाच्च ।

यदपि भारतादौ दक्षं प्रतीश्वरवाक्यम्—

> " भूयश्च ते वरं दद्मि ख्यातं गृह्णीष्व सुव्रत ।
> प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ॥
> वेदात्षडङ्गादुद्धृत्य सांख्याद्योगा[15]च्च शक्तितः ।
> तपः सुतप्तं [16]विपुलं दुश्चरं देवदानवैः ॥
> अपूर्वं सर्वतोभद्रं विश्वतोमुखमव्ययम् ।
> अर्थैर्दशार्धैः संयुक्तं गूढ[17]मप्राज्ञनिन्दितम् ॥

* धनुश्चिह्नान्तर्गतग्रन्थः क. ग. घ. पुस्तकेषु न विद्यते ।

१ क. ग. घ °धर्मासे° । २ क. ग. घ. निर्मित° । ३ ख. °कारश्चाऽऽहुः । सा° । ४ ख. °पेक्ष्यते । ५ ख. °रिहरणाभि° । ६ ग. घ. °ति च न वा° । ७ क. नत्रा । ८ ख. स्वप्र° । ९ क. ग. घ. °णाद्याम्ना° १० ग. °दुक्तं । नदी° ११ ख. °विद्योपस्थानोपस्कारमा° । १२ क. °पस्करो° १३ ग. °बोधने हे° । १४ क. ग. °पस्कर° । १५ ख. °च्च युक्ति° । १६ ख. विमलं । १७ ग. °निर्मित° ।

यदपि देवीपुराणे—

“ वामदक्षिणवेत्ता यो मातृवेदार्थपारगः ।
स भवेत्स्थापकः श्रेष्ठो देवीनां मातरा(तृका)सु च ॥
पाञ्चरात्रार्थकुशलो मातृतन्त्रविशारदः ।
विष्णो[1]र्गृही सदा शस्तो ब्रह्मचारी च शान्तिदः ॥
शिवशासनवेत्ता यो ग्रहमातृगणार्थवित् ।
गृहस्थो ब्रह्मचारी वा स्थापकः कीर्तितः शिवे ॥
सौरार्थवेदकः सूर्ये स्थापकः पूजकः शुभः ”

इति, एतदपि न बाह्यागमानुष्ठानलिङ्गम्[2] । तदनुष्ठानस्य च मत्स्यपुराणे निषिद्धत्वात् । तथा च मत्स्यपुराणम्[3]—

“ स्थापकस्य समासेन लक्षणं शृणुत द्विजाः ।
सर्वावयवसंपन्नो वेदमन्त्रविशारदः ॥
पुराणवेत्ता धर्मज्ञो दम्भलोभविवर्जितः ।
कृष्ण[4]सारचरे देशे य उत्पन्नः शुभाकृतिः ॥
शौचाचारपरो नित्यं पाषा(ष)ण्डकुलनिःस्पृहः ।
समः शत्रौ च मित्रे च ब्रह्मोपेन्द्रहरप्रियः ॥
ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रस्य पारगः ।
आचार्यस्तु भवेन्नित्यं सर्वदोषविवर्जितः ॥
मूर्तिपास्तद्द्विधा[5]श्चैव कुलीना ऋजवस्तथा ” इति ॥

यथा च[6] पाञ्चरात्रसंहितायाम्—

“ चतुर्दश विद्यास्थानानि वेदितव्यानि[7] भवन्ति, तद्यथा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इतिहासपुराणं न्यायो मीमांसा शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषामयनं छन्दो[8]विचितिरित्यत्राप्यनधिकारः किं तु भवत्येवाधिकारः ”

इति त्रय्यादिज्ञानमेवोपादेयं, तथाऽत्रापि वामदक्षिणा[9]म्नायादिज्ञानमात्रमेवोपादेयम् । तथा च योगयाज्ञवल्क्यः—

“ आत्मज्ञाननिमित्तं हि सिद्धान्तानि* विचिन्तयेत् ।
केवलानि× यदाऽधीते वेदबाह्यो भवेद्द्विजः ” ॥

* “ न्तान्हि ” इति युक्तं भाति । + “ लान्हि ” इति युक्तं भाति ।

१ क. विष्णुगृही । २ क. ग. °ङ्गनम् । त° । ३ ग. °राणे । स्था° । ४ क. ग. घ. °ष्णशार° । ५ ग. °द्विदश्चै° । ६ क. ग. च पञ्च° । ७ क. ग. घ. °नि त° । ८ क. ग. घ. °विधिभिरि° । ९ ख. °णादि° ।

एवं प्रतिष्ठायामपि पुराणा[1]द्युक्तैवे[2]तिकर्त[3]व्यता ग्राह्या नान्या । तेषामेव व्यामिश्रधर्मप्रमाणत्वेन भविष्यत्पुराणे परिज्ञातत्वात् ।

तथा च भविष्यत्पुराणम्—

" अष्टादश पुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णश्च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
सौराश्च धर्मराजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम चैतेषां प्रवदन्ति मनीषिणः " इति ॥

तत्रा[4]पि " मद्यवर्जं सु[5]रां[6] भूप निनयेत् " इत्यादि स्मृतं कलियुगादन्यत्र मन्तव्यम्,

" दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
सगोत्राद्वा सपिण्डाद्वा विवाहो गोवधस्तथा ॥
नराश्वमेधो मद्यं च कलौ वर्ज्या द्विजातिभिः "

इत्यादिना मद्यादेर्ब्रह्मपुराणादौ सामान्यतो वर्ज्यत्वेनाभिहितत्वात् । एतेन चण्डिकाद्युपहा[7]रा व्याख्याताः ।

यदप्यञ्जनविधौ कालिकापुराणे—

" कपालसंपुटे कृत्वा महातैलघृ[8]ते तथा ।
चन्द्रसूर्योपरागे च कज्जलं *गृह्य बुद्धिमान् ॥
अञ्जयेदक्षिणी तेन वशी कुर्यात्पुरन्दरम् "

इत्यादि त[9]त्,

" अथ श[10]त्रुं मारयितुकामः श्मशानकाष्ठैरग्निं प्रज्वाल्य विषरुधिरमिश्रमाहुतिसहस्रं जुहुयात्सद्यः श[11]त्रुं मारयति "

इतिवत् " श्येनेनाभिचरन्यजेत" इतिवद्वाऽधर्म एव । हिंसादिवद्वशीकरणादेरपि तत्र तत्र निषिद्धत्वात् ।

तथा च—" हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च "

इति मनुना वशीकरणमुपपातकमध्ये परिगणितम् ।

---

* ल्यबार्षः ।

---

१ क. ग. घ. °राणोक्तै° ' २ क. °णेऽपि संख्यात्वात् । ३ ग. घ. °रिसंख्यत्वा° । ४ क. तथाऽपि । ग. घ. तथा म° । ५ घ. सुरारूपं नि° । ६ क. °रां रूप । ७ क. °हारो व्याख्यातः । य° । ८ ग. °तेन वा । च° । ९ क. तथा च । श° । १० ख. शक्रं । ११ ख. शक्रं ।

" निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कस्यचित् "

इत्यादिना मन्वादिभिः स्वशास्त्रेष्वधिकारस्य द्विजानामेव प्रदर्शितत्वान्न शैवादिशास्त्रे शैवब्राह्मणादीनाम् । अस्तु तर्हि शैवादिशास्त्रे शूद्रोऽधिकृतः । न । स्मृत्यादिशास्त्रेषु तथाऽनभ्युपगमात् । अपि च शैवो नाम जात्या न कश्चिदप्यस्ति यं प्रति शैवादिशास्त्रं स्यात् । अपि तु " तेन प्रोक्तम् " [ पा० सू० ४-३-१०१ ] इत्यणि कृते शिवेन प्रोक्तं शास्त्रं शैवम् । पुनश्च शैवशब्दात् " तदधीते तद्वेद " [ पा० सू० ४-२-५९ ] इत्युत्पन्नस्याणः " प्रोक्ताल्लुक् " [ पा० सू० ४-२-६४ ] इति लुकि कृते शैवं वेत्त्यधीते वा शैवः । एवं पाशुपतादिः । यस्मादेवं स्वभावतो नियतान्कांश्चिदनाश्रित्यैव शैवादिशास्त्रं प्रवृत्तं तस्मात्तदाकाशचित्रमिव प्राप्तम् । तथा च सत्यनुष्ठाने तद्धेयमेव । न चादूष्यागमप्रसिद्धेरेवाऽऽश्रमिणां तदनुष्ठानं स्यादिति वाच्यम् । न ह्यदूष्यत्वमात्रेण तेषां श्रुतिवत्स्वार्थानुष्ठापकत्वसामर्थ्यम् ।

" या वेदबाह्याः श्रुतयो याश्च काश्चित्कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रोक्तास्तमोभूता हि ताः स्मृताः "

इत्यादिना मन्वादिभिस्तदनुष्ठानस्यामुत्र वैफल्यापादकत्वादिना निषिद्धत्वात् । ततश्च देवपूजादौ नरसिंहपुराणादिप्रसिद्धैवेतिकर्तव्यता ग्राह्या नान्या। एवं दीक्षायामप्यवगन्तव्यम् । न हि पुराणप्रसिद्धायां दीक्षायां जातिशोधनमस्ति । शैवाद्यागमेषु तु—

" प्रथमं स्थावरा जातिस्ततः सारीसृपी मता ।
पक्षिजातिस्तृतीया तु चतुर्थी मृगजातिका ॥
पञ्चमी पशुजातिस्तु षष्ठी चैवान्त्यजा स्मृता ।
सप्तमी शूद्रजातिस्तु वैश्यजातिस्तथाऽष्टमी ॥
नवमी क्षत्रजातिस्तु दशमी विप्रसंज्ञिता ।
एतास्तु जातयः शोध्या जातीशेन शिवेन वा "

इत्यादिना तच्छोधनदर्शनाच्छ्रौतकर्मानधिकारित्वप्रसक्तिः । " ब्राह्मणोऽग्नीनादधीत " " राजा राजसूयेन यजेत " " वैश्यो वैश्यस्तोमेन यजेत " इत्यादिना जातिमन्तमेव प्रकृत्य वैदिकं कर्म प्रवृत्तम् । तत्कथं जातिनिवृत्तौ स्यात् ।

---

१ क. ग. घ. 'दिभिर्मन्वा° । २ क. ग. घ. °त्वात् । अ° । ३ ख. °श्रमवतां त° । ४ क. ग. घ. °ला: प्रेत्य तमो° । ५ क. घ. °व्यतां ग्रा° । ६ क. ग. घ. °वरी जा° । ७ ख. °कारप्र° ।

( ब्रह्मचारिप्रकरणम् १)

"वेदाः प्रमाणमिति निष्ठा। तत्र यानि श्रूयन्ते व्रीहियव[1]पश्वाज्यपयःकपालपात्रीसंबन्धान्युच्चैर्नीचैः कार्याणीति । तैर्विरुद्ध आचारो[2]ऽप्रमाणमिति मन्यन्ते" इति ।

ननु च—"अलाभे वेदमन्त्राणां[3] पञ्चरात्रोदितेन हि ।
आचारेण [4]प्रवर्तन्ते ते मां प्राप्स्यन्ति मानवाः ॥
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति"

इत्यादिना वराहपुराणे भगवद्वाक्येन पाञ्चरात्रस्य वेदप्रतिनिधित्वेन स्मरणाद्वेदेनाविशेषः पाञ्चरात्रस्य। सत्यमविशेषः । किं तु विषयविशेषाद्विशेषः । तथा हि—अस्य वाक्यस्य कुतश्चिद्दैवयोगादकृतप्रायश्चित्तव्रात्यविषयत्वाद विप्लुतब्राह्मणाद्यना[5]श्रयत्वम्, एवं हि सत्य[6]त्रालाभपदमुपपत्तिमत्स्यात् । तादृशानां व्रात्यानां वेद[7]परिप्राप्तेरभावात् । तथा च मानवम्—

"नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान्यौनांश्च संबन्धानाचरेद्ब्राह्मणः सह" इति ॥

एवं च पाञ्चरात्रे द्विजात्यधिकारो[8]ऽपि विचालित एव स्यात् । तस्माद्विधिवशादकृतप्रायश्चित्तव्रात्यविषयत्वादस्य वाक्यस्यास्ति विशेषो वेदपञ्चरात्रयोः ।

अत एव च योगयाज्ञवल्क्ये पञ्चरात्रस्य पाशुपतादिसमानं सिद्धान्तत्वेनाभिधानं वेदबाह्यत्वप्रतीतिकृदेव—

"एकमेव तु विज्ञेयं [9]प्रणवं योगसाधनम् ।
गृहीतसप्तसिद्धान्तैरन्यैर्ब्रह्मविदैस्तथा ॥
हैरण्यगर्भैः[10] कपिलैरपान्तरतमैस्तथा[11] ।
सानत्कुमारैर्ब्रह्मि[12]ष्ठैस्तथा पाशुपतैरपि ॥
पाञ्चरात्रैरपीत्येतैः सिद्धान्तैश्चैव सप्तभिः" इति ॥

एवं हि पञ्चरात्रस्या[13]दूष्यत्वेनैव प्रामाण्यं नानुष्ठेयत्वेनेति । ननु च यथैव नियतान्कांश्चिदधिकृत्य वेदादिशास्त्रं प्रवृत्तं, तथैव जातिमतः शैवादीन्प्रति शैवादिशास्त्रमस्तु । न ।

---

१ क. ग. घ. °वमध्वाज्य° । २ ख. °चारः प्र° । ३ ख. °णां पाञ्च° । ४ क. ग. घ. प्रपत्स्यन्ते । ५ क. ग. °श्रयात् । एवं । ६ क. ग. घ. °त्यला° । ७ क. ग. घ. °दप्रा° । ८ ख. °—ऽप्यविचलि° । ९ ग. प्रमाणं । १० क. ग. घ. छ. °भैः कापिलकैर° । ११ ग. °था । सन° । १२ ख. ग. घ. °रैर्ब्राह्मि° । १३ क. घ. °दूषत्वे° ।

विशेषाद्वेदस्यापीति । सत्यं, " द्रुतेन त्रपुणा " इत्यादिना वेदस्य शैवाद्यागमसदृशमेवादूष्यत्वमात्रेण प्रामाण्यम् ।

" पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।
अतर्क्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः "

इत्यादिना मन्वादिभिरैहिकामु[1]त्रिकार्थप्रकृष्टसाधकत्वं तु वेदस्यो[2]क्तं, न शैवादिशास्त्रस्य । प्रत्युत—

" ये वे[3]दमार्गनिर्मुक्तास्तेषां मोहार्थमेव च ।
सि[4]द्धान्तसंज्ञकं पूर्वं मया शास्त्रं प्रदर्शितम् ॥
पशुर्योऽपशुभावस्थः स यदा पतितो भवेत् ।
तदा पाशुपतं शास्त्रं ज्ञायते विश्वमोहकम् ॥
मयैव मोहितास्ते हि भविष्यन्तो जना द्विज ।
लौल्यार्थिनस्तु शास्त्राणि करिष्यन्ति कलौ नराः ॥
निःश्वाससंहिता या हि लक्षमात्रं प्रमाणतः ।
सैव पाशुपतो योगो भेदाः पाशुपतास्ततः ॥
एतया वेदमार्गा[5]दिर्यदन्यदिह जायते ।
तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् "

इत्यादिनाऽगस्त्यं प्रति रुद्रवचनेन वराहपुराणे तस्य विमोहकत्वेन विप्रलम्भकत्वमेव प्रतिपादितम् । सर्वजनविमोहकत्वाद्विप्रलम्भकमेव शैवादीति ।

भूयश्च तत्रैव श्रीरुद्रं प्रति जनार्दनवाक्यम्—

" एष मोहं सृजाम्याशु यो जनं मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय[6] ॥
अल्पायासं दर्शयित्वा फलं दीर्घं प्रदर्शय ।
कुहकाश्चेन्द्रजालानि विरुद्धाचरणानि च ॥
दर्शयित्वा जनं सर्वं मोहयाऽऽशु महेश्वर " इति ॥

अत एव च मनुः—

" उत्पद्यन्ते व्ययन्ते[7] च यान्यतो[8] यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च " इति ॥

अत एव च शैवादिशास्त्रोक्तस्याप्रामाण्यमाचारस्याऽऽहाऽऽपस्तम्बः—

---

१ क. °मुष्मिका°। २ क. °स्योक्ते° । न । ३ क. ग. घ. °दशास्त्रनि°। ४ क. °द्धार्थसं°। ५ ख. °र्गादि यद°। ६ ख.°य । स्वल्पायासान्दर्श°। ७ क. वियन्ते । ख. व्ययन्ते । ८ घ.°तोऽन्यानि का° ।

( ब्रह्मचारिप्रकरणम् १)

सांख्यं योगः[1] पाञ्चरात्रं वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि हेतुभिर्न विचारयेत् "

इति अदूष्यत्वेन[2] हेत्व[3]विचारणीयत्वेन च देवीपुराणे[4]योगयाज्ञवल्क्ययोर-×दूष्यत्वेन तस्य स्मरणात् । न चैतावता तदनुष्ठाने न दोषः कश्चिदिति वाच्यम्[5] । "यावद्वचनं वाचनिकम्[6] " इति न्यायेन न्यूनस्याधिकस्य वा परिग्रहस्य स्वोत्प्रेक्षामात्रेण कर्तुमनर्हत्वात् । सकलादूष्यागमानुष्ठानस्य च कर्तुमशक्यत्वात् ।

" दीक्षितस्य च वेदोक्तं श्राद्धकर्मा[7]तिगर्हितम् ।
इत्येवं वैदिकश्राद्धक्रिया नादीक्षितैरपि ॥
दीक्षितान्प्रति कर्तव्या द्वयोर्निरयदायिनी "

इत्यादिना शैवशास्त्रप्रतिपन्नस्य वैदिककर्मकरणे[8]न नरकदानादिदोषप्राप्तेः ।

" श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो[9]दयादपि "

इत्यादिना भारतादौ विकलस्यापि स्वानुष्ठानस्योत्कर्षदर्शने सत्यपि सक[10]लादूष्यागमानुष्ठानस्य च परस्परविरुद्धार्थत्वे ज्ञाननिष्ठाप्राप्त्यभा[11]वाच्च । तथा च शैवाः—प्रधानपुरुषयोरधिष्ठाता केव[12]लं निमित्तकारणमीश्वर इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति भेदेश्वरवादिनः । सांख्याः—निरीश्[13]वरवादिनः। योगाः[14] पातञ्जलास्तु–जगतामकर्ता क्लेशकर्मविपाकाशयैरपरामृष्टः सर्वशास्त्रवेतृत्वात्सर्वज्ञः पुरुषविशेष ईश्वर इति सेश्वरा[15]ः । पाञ्चरात्राः पुनः—शान्तोदितवि[16]वृत्ताव्यपदेश्यभिन्नतया चातुरात्म्येनावस्थितः परमा प्रकृतिर्भगवान्वासुदेव इत्यद्वैतभावेनेश्वरं मन्यन्ते । पाशुपताः पुनः—कार्यकारणयोगविधिदुःखा[17]न्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशवि[18]मोचनार्थमुद्दिष्टा इति भेदेश्वरवादमेवाङ्गी कुर्वन्ति । तदेवमनवस्थितत्वात्सर्वागमज्ञानस्य सर्वस्वीकारे संशयानिवृत्तेर्ज्ञानलाभो दुर्घट एव । वैकल्पिकाङ्गीकारे चोन्मत्ततुल्यता प्रसज्येत । ननु यथा शैवाद्याम्नाय[19]स्यैवादूष्यत्वमात्रेण प्रामाण्यम्, तथैवादूष्यत्वस्मरणा-

---

× अदूष्यत्वेनेत्येकवारमाधिकमिति भाति ।

---

१ क· ग. °गः पञ्च° । २ ग. घ. अदुष्टत्वे° । ३ घ. हेतुबालिवि° । ४ ख. °णया° । ५ ग. वाच्यः । ६ क. °निकं चेति । ७ घ. °र्मादि ग° । ८ ख. °णे नर° । ९ ग. °र्मो भयावह इ° । १० ग. घ. °कलदू° । ११ ख. °भावश्च । त° । १२ क. ग. घ. छ. ञ. °वलनिमित्तमात्रमी° । १३ ख. °श्वराः । यो° । १४ क. ख. ग. योगास्तु । १५ क. ख. °राः । पञ्च° । १६ क. ग. °वृत्ताव्य° । १७ ख. ग. °खार्ताः प° । १८ ख. °मोक्षायोपदिष्टा । १९ क. घ. °यस्यादूषत्व° ।

वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्मनीषिणाम् ॥
एतेभ्योऽपि यदन्यत्स्यात्किंचिद्धर्माभिधायकम् ।
तद्दूरतरतो विद्धि मोहस्तस्याऽऽश्रयो[1] मतः " ॥

न विचारयेत् , नाप्रमाणतया शङ्केत । एतेभ्यो धर्मशास्त्रादिभ्यो यदन्यत्पौरुषेयं तद्धेयम् । ननु च शैवपाशुपत[2]पाञ्चरात्रशास्त्रा[3]द्यपौरुषेयमेव, ततश्च तद[4]नुष्ठानाचरणेऽभ्युदय एव न दोषः कश्चित् , तस्य निःश्रेयस[5]हेतुत्वात् । मैवम्—

" आचम्य च पुरा ब्राह्मीं भजेत्संध्यां द्विराश्रमी ।
इतरस्तु विरक्तात्मा लौकिकार्थपराङ्मुखः ॥
ब्राह्मीं कुर्यान्न वा कुर्याच्छैवीमेव नियोगतः ।
अन्तः[6] शैवं बहिः कौलं लोकाचारे तु वैदिकम् ॥
सारमादाय तिष्ठेत्तु नारिकेलफलं यथा "

इति स्वायंभुवादिवचनेनानवक्लृप्तलोकानुरञ्जनापादकत्वेन प्रतिपादितवैदिककर्मवैफल्यदोषत्वात्सर्वात्मना श्रुतिस्मृतिविहितधर्मानुष्ठानैकपरमार्थस्त्रैविद्यवृद्धान्प्रति शैवाद्याम्नायस्यानुष्ठाने निःश्रेयसनिमित्तत्वासिद्धेः । नापि तेषां शैवादिशास्त्राननुष्ठाने काचित्क्षतिः । " यावज्जीवमग्निहोत्रं जुहुयात् "
" अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा "

इति श्रुतिस्मृत्युक्तैर्हि तेषामाश्रमकर्मभिः प्रयोजनं नान्यैः । श्रुतिस्मृत्यर्थातिक्रमे प्रत्यवायापत्तेः । तथा च श्रुतिः—" वीरहा वा एष देवानां योऽग्निमुत्सादयते " ।

स्मृतिरपि—" अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणः कामकारतः[7] ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् " इति ॥

न चाननुष्ठानमात्रेणैवार्थसिद्धं[8] दूषणमिति वाच्यम् ।

" द्रुतेन त्रपुणा पूर्णवक्त्रा[9]स्तिष्ठन्ति दुःखिताः ।
द्वेष्टारः[10] शिवशास्त्राणां ये च वेदविदूषकाः ॥

१ क. °श्रयो म° । २ क. घ. °तपञ्च° । ३ क. ग. घ. °स्त्रादि पौ° । ४ ख. °दर्थानु° । ५ ख. °सनिमित्तत्वा° । ६ ख. °न्तः कौलं बहिः शैवं लो° । ७ क. कारकामतः । ८ घ. °सिद्धिदू° । ९ ख. पूर्णा व° । १० घ. °रः सर्वशा° ।

( ब्रह्मचारिप्रकरणम् १)

संप्रति धर्मप्रमाणान्याह—

**श्रुतिस्मृतिसदाचाराः स्वस्य च प्रियमात्मनः ॥**
**सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥**

श्रुत्यादिकं प्रत्येकं धर्ममूलं धर्मनिश्चयस्य कारणम् । पुराणन्यायेत्यत्र [श्रु]तिस्मृत्योः सामान्यतो धर्ममूलत्वमुक्तम् । अत्र[1] तु निवार्य तन्मूलत्वमुच्यते । [अ]र्थादन्येषां विद्यास्थानानां[2] विद्यानुरोहकत्वम् । स्मृतेर्न व्याकरणादिवद्वेदा[नु]रोहकत्वं, किं तु तदनुमापकत्वमिति[3] पृथगुक्तिः । आचारादेः[4] पुनरत्रैव धर्म[मू]लत्वोक्तिरिति न पुनरुक्तता । श्रुतिर्वेदः । स्मृतिर्धर्मतो वेदमूलं शास्त्रं, सदाचारः शिष्टाचारः । स्वस्य स्वकीयस्याऽऽत्मनो मनसः प्रियं तुष्टिकरम् । आत्मशब्देनात्र मनो लक्ष्यते । प्रियशब्देन तुष्टिः । तेन मनस्तुष्टिरत्र चिकीर्षोपरमो निर्दिश्यते । समीचीनः शास्त्रार्थविषयोऽनेनेदं साधयामीति मनःकर्म संकल्पः । तज्जः कामो धर्मचिकीर्षा । एतत्सर्वं धर्मनिश्चये मूलं, कारणमित्यर्थः । धर्मेण तन्निश्चयो लक्ष्यते । तत्राग्निहोत्रादेर्निश्चयमूलं श्रुतिः, वर्णाश्रमधर्मादेः स्मृतिः, होलाकादेः[5] सदाचारः, यत्कर्म मनसस्तुष्टिपरिच्छि[न्न]तया विधीयते तस्य मनस्तुष्टिः । यथा—

" यस्मिन्कर्मण्यस्य कृते मनसः स्यादलाघवम् ।
तस्मिंस्तावत्तपः कुर्याद्यावत्तुष्टिकरं भवेत् " इति ॥

कालविशेषे संकल्पजः कामः, यथा—" यदैवैनं श्रद्धयोपनयेत्तदैवाऽऽदधीत[6] " [इ]ति[7] । अथवा " श्राद्धं प्रति रुचिश्चैव " इति ।

[व्या]सः—" धर्मशुद्धिमभीप्सद्भिर्न वेदादन्यदिष्यते ।
धर्मस्य कारणं शुद्धं मिश्रमन्यत्प्रकीर्तितम् " ॥

शुद्धिरसंकीर्णता । धर्मस्य धर्मनिश्चयस्येत्यर्थः । शुद्धमदुष्टम् । मिश्रं संभा[वि]तदोषम् ।

" अतः स परमो धर्मो यो वेदादधिगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः ॥
वेदार्थवित्तमैः कर्म यत्स्मृतं मुनिभिः पुरा ।
तद्यत्नेन समातिष्ठेत्तन्निषिद्धं तु वर्जयेत् ॥
ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया ।
प्रदिष्टवन्तो[8] यं धर्मं तं धर्मं न विचारयेत् ॥

---

१ क. अन्यत्र निर्वार्य । २ ख. 'नां वेदानु' । ३ ख. 'नुगमक' । ४ क.ग.छ ज. 'रादेर्धर्म' । ५ घ. 'तिर्होलाका' । ६ ख. 'येदथाऽऽधी' । ७ ख. ग. 'ति । यथा वा । ८ क. 'वन्तं यं ।

वयोवस्थादिभेदेन मन्वादिप्रणेतार एव द्रष्टव्याः । अविरोधित्वा[1]च्छ्रुतिस्मृ[2]त्युपबृंहकत्वाच्छिष्टपरिगृहीतत्वादाप्तोक्तत्वाच्च । चतुर्विंशतिमतपरिशिष्टाद्[3]यो़ऽपि धर्मशास्त्रत्वे[4]नैव ज्ञेयाः ॥ ४ ॥ ५ ॥

संप्रति यच्छास्त्रं शास्त्रान्तरनिरपेक्षं समग्रमर्थं न शक्नोत्यवगमयितुं तच्छास्त्रान्तरसापेक्षमेव धर्मे प्रमाणमिति दानमुदाहृत्याऽऽह—

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ॥
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ ६ ॥

देशे कुरुक्षेत्रादौ, काल उपरागादौ, उपायेनेतिकर्तव्यतया, द्रव्यं गवादि, श्रद्धया तथेति प्रत्ययेन समन्वितं, पात्रे वक्ष्यमाणलक्षणे, प्रदीयते ख्यात्याद्यनपेक्षि[5]त्वरूपेण प्रकर्षेण पात्रस्वीकारपर्यन्ततया त्यज्यत इत्येतत्प्रतिपादकं वाक्यं सकलं सर्वसा[6]धनोपेतस्येदंपर्यन्तविशेषवतो धर्मस्य बोधकं सर्वं धर्मलक्षणं धर्मे[7] प्रमाणं वेदितव्यम् । न पुनः सर्वप्रकारयुक्तस्य धर्मस्य बोधकं धर्मलक्षणम् ।

तथा च शङ्खः—

" देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति समस्तेषु धर्मोदयः साधारणो न्याय्योऽन्यथा विपरीतः " इति ।

साधारणो दानेन समा[8]नः । न्याय्योऽन्येषां यागादिधर्माणाम् । अन्यथा सा[9]मस्त्याभावे । विपरीतो धर्मस्यानुदय इत्यर्थः । सति सामर्थ्ये सर्वाङ्गानुष्ठानम् । असति तु काम्यं हेयम् । आवश्य[10]कं तु यथाशक्ति कार्यम् ।

यत्तु कात्यायनवाक्यम्—

" बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् ।
तस्य तावति शा[11]स्त्रार्थे कृते सर्वः कृतो भवेत् " ॥

इति, तन्निरपेक्षार्थाभिधायकस्वशास्त्रविषयम् । सापेक्षे तु स्वशास्त्रे शास्त्रान्तरोक्तं ग्राह्यमिति स एवाऽऽह—

" यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् " इति ॥ ६ ॥

---

१ घ. 'त्वात्प्रजापतिस्मृ' । २ ख °स्मृत्यर्थोप' । ३ क. ग. घ. 'यो ध' । ४ क. ग. घ. 'त्वेन ज्ञे' । ५ क. ग. घ. छ. ञ. °क्षितस्वरू° । ६ क. °साधारणोपे' । ७ क. 'र्मेण प्र' । ८ ख. °नः । अन्येषां यागादिकर्मणां न्याय्यः । अन्य' । ९ क. ग. घ. छ. ञ. सामस्त्येऽसर्वा' । १० ख. °कं य' । ११ क. ग. घ. छ. ञ. शास्त्रेऽर्थे ।

( ब्रह्मचारिप्रकरणम् १)

*मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरः+ ॥
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ ४ ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ॥
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः[1] ॥ ५ ॥

प्रयोजकाः प्रणेतारः । अतिरोहितमन्यत् ।

अत्र गौतमः—

" स्मृतिर्धर्मशास्त्राणि, तेषां प्रणेतारः—मनुविष्णुदक्षाङ्गिरोत्रिबृहस्पत्युशनआपस्तम्बगौतमसंवर्तात्रेयकात्यायनशङ्खलिखितपराशरव्यासशातातपप्रचेतोयाज्ञवल्क्यादयः "

इत्यादिशब्दं प्रयुक्तवान् । वेदमूलग्रन्थप्रणेतार आदिशब्देनात्र प्रगृह्यन्ते । तथा च मनुः—" वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् " इति ।

अत एवावशिष्टः श्रौतो वाक्यैकदेशः[2] । अङ्गिरःशब्दपर्यन्तः समाहारद्वन्द्वो नपुंसकलिङ्ग एकवचनान्तः[3] । अत एव भविष्यत्पुराणे गुह्येश्वरवाक्ये[4] स्मृतयः षट्त्रिंशदेवाभिहिताः—

" मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्तिताः ।
तासां[5] वाक्यानि क्रमशः समासेन ब्रवीमि ते " ॥

ताश्च मनुविष्णु[6]यमदक्षाङ्गिरोत्रिबृहस्पत्युशनापस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्तगौतमशातातपहारीतयाज्ञवल्क्यप्रचेतोबुधदेवलसोमजमदग्निविश्वामित्रप्रजापतिनारदपैठीनसिपितामहबौधायनच्छागलेयजाबालिच्यवनमरीचिकश्यपा इति षट्त्रिंशदेव स्मृत्यन्तरे पठिताः । एवं वृद्धमन्वादयश्च

---

* एतस्मात्पूर्वम् —" वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः ।
वसिष्ठदक्षसंवर्तशातातपपराशराः ॥
आपस्तम्बात्रिहारीताः कात्यायनबृहस्पती ।
गौतमः शङ्खलिखितौ व्यासोऽहमुशनास्तथा " ॥

इति ग्रन्थः ख. पुस्तकातिरिक्तपुस्तकेष्वधिको विद्यते । स चायुक्तः, तदङ्गीकारे पौनरुक्त्यापत्तेराग्रिमेण । + मिताक्षरायामुशनःशब्दान्तं द्वंद्वं स्वीकृत्याङ्गिरा इति पाठो गृहीतः ।

---

१ ग. °प्रवर्तकाः । २ क. ग. घ. °कदेशः । अ° । ३ ख. °नान्त एव च भ° । ४ ख. °वादे स्मृ° । ५ क. तेषां । ६ क. ग. घ, °ष्णुद° ।

शूद्रस्य वृत्तावनुग्रहमाह मनुः—

" एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः ।
शूद्रस्तु यस्मिंस्तस्मिन्वा निवसेद्वृत्तिकर्शितः " इति ॥ २ ॥

ज्ञानपूर्वमनुष्ठानं धर्मस्येति धर्मज्ञानोपायांस्तावदाह—

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ॥**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ३ ॥**

पुराणं ब्र(ब्रा)ह्मादि ।न्यायः सतर्कः । मीमांसा वेदवाक्यविचारः । धर्मशास्त्रं मन्वादिस्मृतिः । अङ्गैः षड्भिर्व्याकरणादिभिः सहिताश्चत्वारो वेदा ऋग्वेदादयः । एतानि चतुर्दश ज्ञानानां निमित्तानि, धर्मस्य च ज्ञानद्वारेण । एतदुत्पन्नस्यैव ज्ञानस्य धर्महेतुत्वात् । ततश्च प्रयोगपद्धत्यादिसमुत्थितं ज्ञानं न धर्महेतुरिति सिद्धम् ।

" एवं चतुर्दशैतानि विद्यास्थानानि सन्त्यथ ।
वेदान्तः पञ्चदशकं विद्या षोडशिका भवेत् "

इति ब्रह्मपुराणे यद्वेदान्तविद्ययोर्ग्रहणं तन्मोक्षसाधनविद्यास्थानाभिप्रायमितीहानुपयोगित्वान्नोक्तम् । वेदान्तः शारीरकम् । विद्या बृहदारण्यकादिरहस्यम् ।

यत्तु विष्णुपुराणम्—

" अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्या अष्टादशैव ताः "

तत्केवलं विद्यास्थानत्वाभिप्रायं, न धर्मस्थानत्वाभिप्रायम् । आयुर्वेदादीनां च धर्मस्थानत्वाभावात् । चतुर्दशग्रहणादृतेऽथर्ववेदसंग्रहो न स्यात् ॥ ३ ॥

इदानीं धर्मशास्त्राणां तदाभासेभ्यो विवेकाय तत्प्रणेतॄनाह—

---

१ ग. 'वृत्याऽनु॰' । २ क. ग. घ. छ. ञ. '॰श धर्मज्ञा॰' । ३ क. ग. घ. छ. ञ. '॰न्नस्य च ज्ञा॰' । ४ क. ग. घ '॰रीरिक॰' । ५ क. ग. घ. छ. ञ. '॰स्थानाभि॰' ।

( ब्रह्मचारिप्रकरणम् १)

कृष्णशब्दो हरिणवचनः । कृष्णाजिनं कृष्णविषाणो यावत्कृष्णमृगो विचरतीति प्रयोगदर्शनात् । स यस्मिन्देशे स्वभावाद्विच[1]रेत् । तत्र धर्माञ्श्रौतस्मार्तानन[2]नुष्ठेयतया हे मुनयो निबोधत निबुध्यध्वम् । कृष्णशब्दादर्थान्त[3]रावबोधो मा भूदित्युक्तं मृग इति । कृष्णमृगोपलक्षितश्च देशो ब्रह्मावर्तादिदेशासंभवे धर्मानुष्ठाना[4]ङ्गमिति मन्तव्यम् ।

तदाह मनुः—" सरस्वतीदृषद्वत्यो[5]र्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥
कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनजाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥
आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्[6]तः प्रकीर्तितः ॥
कृष्ण[7]सारस्तु चरति मृगो यत्र स्वभावतः ।
स देशो यज्ञियो ज्ञेयो म्लेच्छदेशस्त्वतः परः " ॥

अत्र च पूर्वः पूर्व उत्तरत उत्तरतः श्रेष्ठः । यदाह पुराणम्—

" ब्रह्मावर्तः परो देश ऋषिदेशस्त्वनन्तरः ।
मध्यदेशस्ततो न्यून आर्यावर्तस्त्वनन्तरः " ॥

विष्णुश्च—" चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते ।
तं म्लेच्छदेशं जानीयादार्यावर्तमतः परम् "

इत्यार्यावर्तस्य लक्षणान्तरमाह ।

ततश्च यत्र चातुर्वर्ण्यव्यवस्था कृष्णमृगश्च नास्ति स म्लेच्छदेशः । तदन्यो धर्मदेशः । ततश्च ब्रह्मावर्तादिदेशचतुष्टयालाभे यत्र चातुर्वर्ण्यं व्यवतिष्ठते कृष्णमृगश्च विचरति तत्र धर्मेच्छुभिः स्थातव्यम् । तदसंभवे चातुर्वर्ण्यव्यवस्थावति कृष्णमृगयुक्ते[8] वा देशे । धर्मान्निबोधतेति धर्मग्रहणादधर्मपरिहारे[9] देशे विशेषनियमो नास्तीति मन्तव्यम् ।

---

१ क. °चरते त° । २ क. °नुष्ठानत° । ३ ख. °न्तरं मा भूदिति मत्वोक्तं । ४ क. °नागतमि° । ५ ख. °त्योर्देवन° । ६ ख. °वर्तं प्रकीर्तितम् । कृ° । ७ क. ग. घ. छ. ञ. °ष्णशार° । ८ क. °क्तेन वा । ९ ग. घ. देशवि° ।

षाभिप्राये ह्यस्मिन्नुपनयनादौ गृह्योक्तहोमादि न कार्यं[1] स्यात् । वर्णाश्रमेतरसंबन्धोपाधिकानि त्रीणि धर्मसामान्यानि । धर्मान्ब्रूहीति प्रार्थितस्य च धर्मसंहिताकरणे तन्मध्येऽध्येतृसमवायिधर्मज्ञानमेव प्रायेण प्रयोजकम् । ततश्चाध्येतॄणामध्ययनप्रयोजकं[2] तदेव । न हि तेषामप्रयोजकमध्ययनं भवितुमर्हति । तस्माद्धर्मशास्त्राध्ययनं[3] धर्मशास्त्रत्वज्ञानप्रयुक्तमेव । याज्ञवल्क्यप्रणीतेऽप्यत्र श्लोके " याज्ञवल्क्यं संपूज्य " इति वचनं, तथोत्तरश्लोके—" योगीन्द्रोऽब्रवीत् " इति + प्रथमपुरुषप्रयोगश्च नायुक्तः । दृश्यते हि मानवे ग्रन्थे " मनुरब्रवीत् " इति प्रयोगः, बौधायने च " स ह स्माऽऽह बौधायनः " इति । न च " मनुरब्रवीत् " इति भृगोर्वचनमिदं[4] न मनोरिति वाच्यम् । यत एतदुत्तरकालमेव मनुराह—

" एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः ।
एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः " इति ॥

अधिजगेऽधीतवान् । अस्याश्च संहितायाः याज्ञवल्क्यः प्रणेतेति व्याख्यातॄणां स्मृतिरेव प्रमाणम् । न चार्थमेव याज्ञवल्कीयतया ते स्मरन्तीति वाच्यम् । ग्रन्थे हि प्रणेतृतया तस्यासाधारण्यं[5] संभवति न चार्थे द्रष्टृतया, मुन्यन्तरैरपि तस्य दृष्टत्वात् । असाधारण्येन च व्यपदेशो न साधारण्ये[6] घटते । असाधारण्येन हि व्यपदेशा भवन्ति ॥ १ ॥

## मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाऽब्रवीन्मुनीन् ॥

स मुनिर्धर्मान्ब्रूहीति प्रार्थितो मिथिलास्थत्वेन विशेषतः प्रशान्तः क्षणमात्रं वक्ष्यमाणं शास्त्रार्थं मुनीनां तच्छ्रवणयोग्यतां[7] [च] ध्यात्वा चिन्तयित्वा वक्ष्यमाणान्धर्मानब्रवीत् । याज्ञवल्क्यप्रणीततां शास्त्रे[8] वक्तुं स इत्युक्तम् । न[9] पुनरहमिति । न पुनरहंशब्दाद्याज्ञवल्क्यसंप्रत्ययः । स इति शब्दात्तु[10] प्रकृतवाचिनो[11] याज्ञवल्क्य एव प्रकृते बुद्धिरुपैतीति तमेव प्रयुक्तवान् । तत्सामानाधिकरण्याच्चाब्रवीदिति प्रथमपुरुष एव युज्यते । न पुनरब्रवमित्युत्तमः ॥

तत्र धर्मानुष्ठानस्य देशपरिग्रहपूर्वकत्वाद्धर्मकथनात्प्रागेव देशमाह—

## यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत ॥ २ ॥

---

+ एतदादिमनुरब्रवीदित्यन्तग्रन्थे बहुषु पुस्तकेषु व्यत्यासो विद्यते ।

---

१ ख. वार्यं । २ ख. °जकमपि त° । ३ ग. घ. °यने ध° । ४ ख. °दं म° । ५ क. तस्यां साधारण्यां सं° । ६ क. °रण्यं घटेषु सा° । ७ क. ग. घ. छ. ञ. °योग्यानां ध्या° । ८ ख. शास्त्रस्य । ९ क. स । १० क. ग. घ. °ब्दान्तप्र° । ११ क. ख. °कृतिवा° ।

( ब्रह्मचारिप्रकरणम् १)

“ प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम् ।
प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ” इति ॥

ईश्वरपदेन च यथावस्थितवेदवेदान्तबो[1]द्धृत्वं परमकारुणिकत्वं च सूच्यत इति तत्प्रणीतग्रन्थस्य प्रामाण्ये निश्चिते कथमप्रामाण्यशङ्कोदियात् । यज्ञवल्कस्यापत्यं याज्ञवल्क्यः । संपूज्य संमान्य । मुनयो महर्षयो वर्णादिधर्मानशेषतो निरवशेषतो नोऽस्मान्ब्रूहि बोधयेत्यब्रुवन् । वर्णा ब्राह्मणादयः । आश्रमशब्दो यद्यपि ब्रह्मचारिगृहस्थादिकर्मसु[2] वर्तते तथाऽपि तत्संबन्धिनां धर्माणामभावादाश्रमशब्देनाऽऽश्रमिणो लक्ष्यन्ते ।

अत एवाऽऽह वसिष्ठः—

“ चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः ” इति ।

केवलाद्वर्णत्वात्केवलाच्चाऽऽश्रमित्वा[3]द्व्यतिरिक्तानि विशेषरूपाणि तद्विशे[4]षस्था ये वक्ष्यमाणधर्माधिकारिणस्त इहेतरे । तानि च[5] विशेषा(षरूपा)णि— यथा तावद्ब्रह्मवत्पूर्वभिक्षाचर्याविधौ ब्राह्मणत्वसहितं ब्रह्मचर्यम्, एवं भवन्मध्यादितो भैक्षचर्याविधौ तदेव क्षत्रियाद्यपेक्षं, विवाहविधौ वनितारागः स्नातकत्वं च, जायोपगमनविधावृतुमद्दारत्वं संभोग[6]दारत्वं वा[7], स्त्रीधर्मेषु स्त्रीत्वं क्वचिज्जायात्वं क्वचित्प्रोषितभर्तृकात्वं क्वचिद्विधवात्वम्, द्रव्यशुद्धिविधौ शोध्यद्रव्यवत्त्वम्, प्रतिषेधे तु प्रतिषेध्यक्रियाप्रवर्तकपौष्कल्य[8]क्रियावत्त्वम् , श्राद्धविधौ श्राद्धकालावच्छिन्न[9]जीवनवतः प्रमीतपितृकत्वं, विनायकस्नपनविधौ विनायकोपसृष्टत्वं , ग्रहयज्ञविधौ श्रिया( श्या ) दिकामित्वं, राजधर्मविधौ क्षत्रियस्याभिषिक्तत्वं, निर्हरणादिविधौ मृत[10]सपिण्डत्वम्, आपद्धर्मविधौ दुर्गतत्वं , वनस्थ[11]विधौ वलीपलितत्वं जातपौत्र[12]त्वं, परिव्राजकविधौ वेदाध्ययनपुत्रोत्पादनयागानुष्ठानवतः संसारवैराग्यवत्त्वं, प्रायश्चित्तविधौ पापवत्त्वमित्यादीनि । एतद्विशिष्टा ये त इतरे । वर्णाश्चाऽऽश्रमाश्चेतरे च ते वर्णाश्रमेतराः । तेषां वर्णाश्रमेतराणाम् । अत्रेतरशब्दस्य “द्वन्द्वे च” इति सर्वनामसंज्ञाप्रतिषेधः । शास्त्रप्रमेयो निःश्रेयसकरो धर्मः । क्रत्वङ्गप्रतिषेधनमधर्मः । वक्ष्यमाणशास्त्रार्थनिरवद्यनिरवशेषोदीरणक्रियां प्रति अशेषत इति धर्मसामान्याभिप्रा[13]यसाकल्यवचनम् । निरवशे-

---

१ क. °बोध्यत्वं । २ ख. °हस्थवानप्रस्थपरिव्राजककर्मसु प्रव° । ३ ख. °त्वादति° । ४ क. °द्विषयस्था । ५ ख. °शेषणानि येषां ता° । ६ ख. °गकामदारवत्त्वं । ७ क. वा । रतिध° । ८ ख. °ल्यव° । ९ क. ग. घ. छ. ञ. °न्नत्वम्, जीवत्पितृकत्वं , प्रमी° । १० क. ग. घ. °तपि° । ११ख. °स्थत्ववि° । १२ ख. °त्रत्वं च । प° । १३ ख. °प्रायं वचनम् । विशे° ।

धर्मसंहितामारभमाणस्तस्याः पौ[1]रुषेयत्वसामान्याज्जायमानामप्रामाण्यशङ्कां महाजनस्य तदध्ययनधारणादिविषये[2] परिपन्थिनीमपनेतुमाह—

( अथ मूलारम्भः । )

ॐ योगीश्वरं याज्ञवल्क्यं संपूज्य मुनयोऽब्रुवन्॥
वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥ १ ॥

योगी संयमवान् । तत्रापि चेश्वरोऽणिमादिगुणशाली । एषां च गुणानामीश्वरशब्दप्रवृत्तिनिमित्तत्वं गम्यते मार्कण्डेयपुराणे—

" अणिमा[3] लघिमा चैव महिमा प्राप्तिरेव च ।
प्राकाम्यं च तथेशित्वं वशित्वं च तथा[4] परम् ॥
यत्र कामावसायित्वं गुणानेतानथैश्वरान् ।
प्राप्नोत्यष्टौ नरव्याघ्र परनिर्वाणसूचकान् ॥
सूक्ष्मात्सूक्ष्मतरोऽणीयाञ्शीघ्रत्वाल्लघिमा गुणः ।
महिमाऽशेषपूज्यत्वात्प्राप्तिर्नाप्राप्यमस्य यत् ॥
प्राकाम्यमस्य व्याप्यत्वादीशित्वं चेश्वरो यतः ।
वशित्वाद्वशिता नाम योगिनः सप्तमो गुणः ॥
यत्रेच्छास्थानमप्युक्तं यत्र कामावसायिता ।
ऐश्वर्यं कारणैरेभिर्योगिनः प्रोक्तमष्टधा ॥
*मुक्तिसंसूचकं रूपं परनिर्वाणचेतसः " इति ॥

एवं चाणिमादिगुणपर एवायमीश्वरशब्दः । ततश्च योगी चासावीश्वरश्च योगीश्वर इति मुख्यार्थोभयशब्दः कर्मधारयः । न तु योगिनामीश्वर इति षष्ठीतत्पुरुषः । षष्ठ्यर्थलक्षणाप्रसङ्गात् । योगीश्वर[5]शब्दप्रयोगवैयर्थ्यप्रसङ्गाच्च । न हि तदा यो[6]गि[7][8]नामणिमादिलक्षणमैश्वर्यं याज्ञवल्क्यस्योक्तं भवति । किं तु योगिनः सनकादीन्प्रति स्वामित्वम्[9] । तच्च प्रकृतानुपयोगि । कर्मधारयपक्षे तु यो[10]गनिमित्तमणिमाद्यैश्वर्यं ग्रन्थकारस्य गम्यते । ततश्च यो[11]गविरोधिनोऽज्ञानरागद्वेषा योगिपदेनार्थान्निरस्ताः । उक्तं च योगस्य तन्निरासकत्वं पुराणे—

---

* इदमर्धे न विद्यते क. घ. पुस्तकयोः । इदं चाधिकमिति भाति ।

---

१ क. घ. 'रुषत्वे सा° । ग. 'रुषत्व' । २ ख. 'ये प्रवृत्तिपारि' । ३ क. ग. घ. °मा महिमा चैव लघिमा प्रा° । ४ घ. ततः । ५ ख. 'यपदः क° । ६ क. 'रप्र' । ७ ख. योगजन्यम' । ८ ग. 'गिजन्यम' । ९ क. 'मित्वे त° । १० क. योगिनि° । ११ क. योगिवि° ।

ॐ तत्सद्ब्रह्मणे नमः ।

# अपरार्कापराभिधापरादित्यविरचितटीकासमेता

# याज्ञवल्क्यस्मृतिः ।

## आचाराध्यायः प्रथमः ।

---

## तत्र ब्रह्मचारिप्रकरणम् । (१)

( अथ टीकारम्भः । )

संसिद्ध्यर्थमिलत्सुरासुरनमन्मौलिस्थितप्रोल्लस-
त्सद्रत्नप्रभवप्रकृष्टविविधप्रेङ्खन्मयूखोज्ज्वलम् ।
श्रेयोविघ्नमहाभयप्रशमने दिव्यं यदेकौषधं
भूया[1]न्नो द्विरदाननाङ्घ्रिकमलद्वंद्वं तदिष्टाप्तये ॥ १ ॥
विश्वानुभूतिसंभूतिस्थितिसंहृतिमुक्तयः ।
प्रभवन्ति यतस्तस्मै परस्मै ब्रह्मणे नमः ॥ २ ॥
यो विश्वसर्गपरिपालनसंहृतीहो
ब्रह्मा हरिस्त्रिनयनश्च भवत्यमेयः ।
तं शुद्धबोधमभयं सुखसत्स्वभाव-
मात्मानमद्वयमनन्तमुपास्महेऽजम् ॥ ३ ॥

विश्वात्मनः शुक्लयजूंषि भानोरवाप्य यो[2] योगिगणाग्रवर्यः ।
तं याज्ञवल्क्यं मुनिवृन्दवन्द्यं नमामि तत्कीर्तितधर्मबुद्ध्यै ॥ ४ ॥
भक्त्या यस्य सविस्मय[3]ः स्मररिपु[4]र्बुद्ध्या च वाचस्पति-
र्विक्रान्त्या द्विषतां गणः शुचितया भास्वान्क्षमित्वेन भूः ।
जीमूतान्वयभूषणं[5] स विपुलां योगीश्व[6]रेणोदिते
शास्त्रे वाक्य[7]नयानुगां वितनुते व्या[8]ख्यां सतां संमताम् ॥ ५ ॥

---

१ ख. ग. घ. °याद्वो द्वि° । २ ख. यो यौगगणाग्रगण्यः । तं । ३ क. ग. घ. °यः पुर° । ४ ख. °पुर्मत्या च । ५ क. °णं स्वविपुले यो° । ख. ग. °णं च स्मृतिवियोगी° । ६ ख. °श्वरोदीरिते । ७ ख. °क्यपदानुगां विचिनु° । ८ क. ग. घ. वाचं ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्या अपरार्कापराभिधापरादित्यविरचितटीकासमेतयाज्ञवल्क्यस्मृतेः पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

क. इति संज्ञितम्—मूलं सटीकं पूर्णम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

ख. इति संज्ञितम्—मूलं सटीकमपूर्णम्, आचाराध्यायमात्रम्, एतत्पुस्तकं जयपुरनिवासिनां वे० शा० रा० रा० "भट्टनारायण" इत्येतेषाम् ।

ग. इति संज्ञितम्—मूलं सटीकमपूर्णम्, आचारव्यवहाराध्यायद्वयपरिमितम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

घ. इति संज्ञितम्—मूलं सटीकमपूर्णम्, आचाराध्यायः, त्रुटितव्यवहाराध्यायश्च, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

ङ. इति संज्ञितम्—केवलं मूलं पूर्णम्, एतत्पुस्तकमानन्दाश्रमसंस्कृतग्रन्थसंग्रहालयस्थम् ।

च. इति संज्ञितम्—मूलं सटीकमपूर्णम्, आचाराध्यायस्थश्राद्धप्रकरणमात्रम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

छ. इति संज्ञितम्—मूलं सटीकं पूर्णम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

ज. इति संज्ञितम्—मूलं सटीकमपूर्णं व्यवहाराध्यायमात्रम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

झ. इति संज्ञितम्—मूलं सटीकमपूर्णं व्यवहाराध्यायस्थदायविभागप्रकरणमात्रम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

ञ. इति संज्ञितम्—मूलं सटीकमपूर्णमाचाराध्यायमात्रम्, एतत्पुस्तकं दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थम् ।

*** एतद्ग्रन्थस्थविषयानुक्रमण्या अन्तिमभागेन सह मुद्रणं भवेदिति सा तत एव द्रष्टव्येत्याकलनीयं सुधीभिः ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४६

अपरार्कापराभिधापरादित्यविरचितटीकासमेता

# याज्ञवल्क्यस्मृतिः ।

तत्र प्रथमाचाराध्यायरूपः प्रथमो भागः ( १ ) ।

एतत्पुस्तकम्

आनन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२५

खिस्ताब्दाः १९०३



मूल्यं रूपकषट्कम् ( रु० ६ ) ।

